पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन आदर्शशोधसंस्थानमिति सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमदैतरेयोपनिषद्भाष्यम्

ताम्रपर्णीश्रीनिवासाचार्यविरचितभाष्यार्थरत्नमालया सहितम्

सम्पादकः
विद्वान् पि.वि. उपाध्यायः
ग्रन्थपालकः, पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूरु - २८

प्रकाशनम्
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन आदर्शशोधसंस्थानमिति सम्मानितम्

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमदैतरेयोपनिषद्भाष्यम्

ताम्रपर्णीश्रीनिवासाचार्यविरचितभाष्यार्थरत्नमालया सहितम्

सम्पादकः
विद्वान् पि.वि. उपाध्यायः
ग्रन्थपालकः, पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूरु - २८

प्रकाशनम्
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२०१०

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला – ७७

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितम्

# श्रीमदैतरेयोपनिषद्भाष्यम्

ताम्रपर्णीश्रीनिवासाचार्यविरचितभाष्यार्थरत्नमालया सहितम्

ISBN : 978-81-910246-5-4

सम्पादकः

विद्वान् पि.वि. उपाध्यायः

ग्रन्थपालकः, पूर्णप्रज्ञसंशोधनमन्दिरम् बेङ्गलूरु - २८

*This Publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan, (Deemed University) New Delhi**

प्रकाशनम् -

पूर्णप्रज्ञसंशोधनमन्दिरम्

पूर्णप्रज्ञविद्यापीठम्, कत्तरिगुप्पा मेन्रोड्, बेङ्गलूरु - २८

| | |
|---|---|
| पुटानि | : ४४ + ५१६ |
| प्रथममुद्रणम् | : २०१० |
| मुद्रितपुस्तकसङ्ख्या | : १००० |
| मूल्यम् | : २४० रूप्यकाणि |
| मुद्रणम् | : पूर्णप्रज्ञमुद्रणम्, बेङ्गलूरु |

POORNAPRAJNA SAMSHODHANA MANDIRAM

Recognised as 'Adarsha Shodha Sanstha' by Rashtriya Sanskrit Samsthan, (Deemed University), Ministry of H.R.D., Govt. of India, New Delhi

# ŚRI MAHAITAREYOPANIṢAD-BHĀṢYAM

Of

## Śri Madhvācārya

### With Bhāṣyārtha-ratnamāla of Tāmraparṇī Śrinivāsācārya

Editor :

**Vidwan P.V. Upadhyaya**

Curator, Poornaprajna Samshodhana Mandiram, Bangalore-28

**Publisher :**

Poornaprajna Samshodhana Mandiram. Poornaprajna Vidyapeetha, Bangalore -560 028

**2010**

Poornaprajna Samshodhana Mandiram Series No. 77

# ŚRI MAHAITAREYOPANIṢAD-BHĀṢYAM

## Of Śri Madhvācārya
## With Bhāṣyārtha-ratnamāla of Tāmraparṇī Śrinivāsācārya

ISBN : 978-81-910246-5-4

Editor : **Vidwan P.V. Upadhyaya**
Curator, Poornaprajna Samshodhana Mandiram,
Bangalore-28

Published by : **Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Katriguppa Main Road,
Bangalore -560 028

*This Publication is brought out by the generous financial help of*

**Rashtriya Sanskrit Samsthan,
(Deemed University ),
New Delhi**

Pages : 44+516

First Edition : 2010

Copies : 1000

Price : 240/-

Printed by : Poornaprajna Mudrana, Bangalore

# अनुग्रहसन्देशः

श्रीमदानन्दतीर्थभगवत्पादाचार्यप्रणीतभाष्येण, श्रीताम्रपर्णीश्रीनिवासाचार्य-कृतटिप्पण्या च समलङ्कृता ऐतरेयोपनिषत् पूर्णप्रज्ञसंशोधनमन्दिरद्वारा इदानीं प्रकाश्यतां नीयत इति नितरां वयं प्रमुदिता स्मः। कोऽयमैतरेयः ? केचन एवं सङ्गिरन्ते- शूद्रयोनावुत्पन्नायाम् इतरानाम्न्यां याज्ञवल्क्यभार्यायां जातो बाल्ये कञ्चित्कालं मूक इव स्थितः कदाचिन्मात्रा चोदितोऽध्वरं जगाम। तत्र पित्रा अग्रजैश्चोपेक्षितः, भूमिं विदार्य समागतया भूदेव्या प्रदत्तं रत्नसिंहासनमधि-रूढः वासुदेवद्वादशाक्षरमन्त्रबलेन चत्वारिंशदध्यायपरिमितान् मन्त्रान् उप-दिदेशेति। अनेन कश्चन ज्ञानी जीवोऽयमिति विज्ञायते।

परन्तु श्रीमदानन्दतीर्थभगवत्पादाचार्याणामभिप्राय इत्थं प्रचकास्ति। अयमैतरेयो न जीवः। किन्तु साक्षान्नारायणावतारः। उक्तं भागवते (१.३.८)-

‘तृतीयमृषिसर्गं देवर्षित्वमुपेत्य सः।
तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मणां यतः॥’ इति।

विवृतं च भगवत्पादैः-

‘अवतारस्तृतीयोऽस्य देवर्षिः प्रथितो दिवि।
महिदासस्त्वैतरेयो यस्तन्त्रं नारदेऽवदत्॥’ इति (ब्राह्मे)

अब्जजसुतस्य विशालनाम्नः पुत्रोऽयम्, इतरानाम्न्यां पत्न्यां प्रादुर्भूतः भगवानैतरेयः कश्चनाध्वरमाजगाम। तत्रत्याः ब्रह्मरुद्रादयः तदीयप्रभूत-प्रभाप्रतिहतेक्षणा अभवन्। ज्ञानार्थमर्थितश्चतुराननेन प्रीत्या तत्वमुपदिदेश भगवानैतरेयः। तदीयतत्वोपदेशेन सर्वे महान्तः ब्रह्मरुद्रादयोऽस्य दासतामापुः। अत एवास्य ‘महिदासः’ इति नाम।

भगवत्पादाचार्यैरस्या उपनिषदः सत्यतीर्थमुनीन् प्रति रहस्यप्रमेयप्रबोधनात्मकः त्रिवारमुपदेशोऽकारीति श्रूयते। तस्मात् श्रीमदानन्दतीर्थभगवत्पादाचार्याणाम् इयमुपनिषदतीव प्रियतमेति ज्ञायते।

'सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण ऋच इत्येव विद्यात्' इति परस्य विष्णोः सकलशब्दवाच्यतामावेदयन्तीयममुपनिषत् स्वयमेव भारद्वाजादिशब्दान् विष्णौ व्युत्पादयति- 'एष उ बिभ्रद्वाजः प्रजा वै वाजंस्ता एष बिभर्ति यद् बिभर्ति तस्माद् भारद्वाज इत्याचक्षते। एतमेव सन्तम्' इति। उपनिषदभिमानिनी सकलवाङ्मनोदेवता रमैवात्र महायोगं विद्वद्रूढिं च प्रदर्शयन्ती अनन्तशब्दवाच्यत्वेन अनन्तगुणपूर्णत्वं श्रीमन्नारायणस्य प्रतिपादयति। अनेन भगवत्पादानन्दतीर्थीयसिद्धान्त औपनिषद इति विज्ञायते।

सेयम् ऐतरेयोपनिषद् ताम्रपर्णीश्रीनिवासाचार्यकृतटीकासमलङ्कृता विस्तृत-प्रस्तावनया सहेदानीं प्रकाश्यते।

तदयं ग्रन्थः समेषां विदुषां ज्ञानाभिवृद्धये भवतु। ग्रन्थस्यास्य संशोधन-कर्मणि नियुक्तस्यास्मत्प्रियशिष्यस्य विदुषः श्रीवेङ्कटरमणोपाध्यायस्य कार्यमिदम् अभिनन्द्यास्मदुपास्यौ रामविठ्ठलाविमं समनुगृह्णात्वित्याशास्महे।

**श्रीश्रीविश्वेशतीर्थश्रीपादाः**

**श्रीपेजावर-अधोक्षजमठः**

**उडुपि**

## DIRECTOR'S NOTE

Aitareya Bhashya holds a pride of place in the Upanishad Prasthana of Sri Madhvacharya.

Sri Madhvacharya has declared that Narayana is supreme. quoting a number of quotations from Various Scriptures in support of his statement, there by correcting the wrong interpretations of other commentators. This upanishad, while describing the importance of Brhati Sahasra, highlights and stresses the many splendoured and mysterious creations of Sri Hari in a totally convincing way.

The Statement "Aham Brahmasmi" which looks as though it is the firm base of Advaita, is taken up for discussion and has been shown covincingly with the correct interpretation of the statement. It does not advocate any Advaita thought at all. Sri Madhva's interpretations are unique and totally convincing, totally avoiding any loose end. There has not been any self-contradiction anywhere.

Sri Madhva quotes of every step many quotations from Various scriptures, epics and history in support of his arguments. He has shown the hidden secrets of scriptures and the methodology to search the truth.

Tamraparni Srinivasacharya's commentary, is very useful for understanding the Upanishad-Bhashya. Sri Venkataramana Upadhyaya has ably edited this work. I heartily congratulate him while looking forward for his further contributions

The source of inspiration behind this useful venture is our founder H.H. Sri Sri Vishveshatirtha Swamiji. To him we owe all we have and all we shall have. How can we repay him for his support and encouragement except through our gratitude and Pranamas !

We are grateful to Prof. Radha Vallabh Tripathi, Vice-chancellor, Rashtriya Sanskrit Samsthan (Deemed University), New Delhi, for his help and guidance at every step of our activities.

I will be failing in my duty, if I do not express my thanks to Prof. Ramanuja Devanathan, Registrar of Rashtriya Sanskrit Samsthan, New Delhi for his anytime cooperation in all our venture.

I also thank Prof. D. Prahlada Char, Chairman, Poornaprajna Samshohana Mandiram Managing Committee, for his kind support in our academic activities.

I thank M/s. Poornaprajna Printers who have printed neatly in a short span of time. I hope they extend the same co-operation in future also.

**Dr. A.V. Nagasampige**
Director.

# ऐतरेयारण्यकोपनिषत्

**ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।**
**ऐतरेयश्च छान्दोग्यं बृहदारण्यकं तथा ।।**

इति प्रसिद्धश्लोकोक्तरीत्या दशोपनिषत्स्वन्यतमा ऋग्वेदसम्बन्धिनीयमुपनिषत् । यद्यपि कठिनतमवाक्योपबृंहितेयमुपनिषत् श्रीमदानन्दतीर्थभगवत्पादाचार्य-भाष्यसाहाय्येनाधीयमानाऽपूर्वान् अर्थविशेषान् प्रज्ञापयति । त्रिवारमियमुपनिषत् भगवत्पादाचार्यैः सत्यतीर्थयतीन्द्राणां पाठितेति मध्वविजये श्रूयते– **'यस्त्रिवार-मितरासुतशाखास्वर्थमग्र्यमभृणोत्पुरुसङ्ख्यात्'** (म.वि.६.५०) इति ।

केरलप्रदेशे विद्वत्सभायां नैकशास्त्रपारङ्गतैः विद्वन्मूर्धन्यैः प्रार्थितः श्रीमदानन्दतीर्थभगवत्पादाचार्यः तत्पृच्छाविषयम् ऐतरेयगं किञ्चन सूक्तं त्रेधा व्याचख्यावित्यपि मध्वविजये श्रूयते-

**'ऐतरेयमथ किञ्चन सूक्तं सूचयन् सदसि तत्र गरिष्ठः ।**
**श्रोतुमिच्छति सभा भगवद्भ्यः सूक्तभावमिति तावदुवाच ।।'** (म.वि. ६.१)

**औपनिषदी दृष्टिः**

'सर्वे वेदा यत्पदमामनन्ति' 'एकं सद् विप्रा बहुधा वदन्ति' 'यो देवानां नामधा एक एव' 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदारहन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यादि श्रुतिस्मृतिभिः विष्ण्वाख्यमेकमेव परमं तत्त्वं सर्वशब्दाभिधेयं स्फुटमवगम्यते । ब्रह्मसूत्रभाष्ये, 'ब्रह्मशब्दस्य विष्णावेव' इति वदद्भिः श्रीमध्वाचार्यैः विष्णोरेव सकलशब्दवाच्यत्वं विस्तरेणोपपादि-तम् । विष्णोः सकलशब्दवाच्यत्वरूपः प्रधानः प्रमेयः माध्वभाष्ये स्फुटं निरूपित इति औपनिषदी दृष्टिरत्र सर्वत्रोतप्रोता । सर्वैरनुसन्धेया वेदोक्ता अन्यत्रादृश्यमाना अपूर्वा विचारप्रणाली इह मध्वाचार्यैः प्रदर्शितेति अस्त्यस्य भाष्यस्य महद् वैशिष्ट्यम् ।

## ऐतरेयारण्यकोपनिषदः महत्त्वम्

क्वचिदियमुपनिषत् 'आत्मा वा इदमेक एव अग्र आसीत्' इत्यारभ्यमाणा अध्यायत्रयोपेता मुद्रापिता दृश्यते। आत्मोपनिषदित्यपि व्यवह्रियते। ऋग्वेद-सम्बन्धिनः चत्वारिंशद्ब्राह्मणग्रन्थाः प्रथिताः। तत्र चतुर्दशाध्यायाः आरण्यका इत्युच्यन्ते। चतुर्दशाध्यायेषु अन्ते भवाः नवाध्यायाः ऐतरेयोपनिषदिति व्यव-ह्रियन्ते। 'गवामयननामके वत्सरपर्यन्तानुष्ठेये यज्ञे अनुसन्धेयाः विधयः ब्राह्मणे निरूपिताः। तत्रापि अनुष्ठेयं प्रधानं महाव्रतम्। अत्र शंसनमन्त्राः षट्सु अध्यायेषु निरूपिताः। कालत्रये शंसनीयेषु शस्त्रमन्त्रेषु मध्याह्ने पठनीयमन्त्राः बृहती-शस्त्रमन्त्राः। अग्रेः पुरस्तात् सामगानपुरस्सरं ये ऋग्वेदसम्बन्धिनः मन्त्राः गीयन्ते ते स्तोत्रमन्त्रा इति कथ्यन्ते, विना सामगानं पठनीयाः मन्त्राः शस्त्र-मन्त्रा उच्यन्ते, इति तु भेदः। बृहत्या आध्यात्मिकमहत्त्वोपवर्णनं उपनिषदि दरीदृश्यते। षट्त्रिंशदक्षरमिता बृहती। यद्यपि बृहतीछन्दोनिबद्धाः सहस्रमन्त्राः विधायकग्रन्थे एकत्र नोपलभ्यन्ते। तथापि भिन्नानां ऋचां संयोजनेन सहस्रमन्त्राः सम्पाद्यन्ते। एषः क्रमः आरण्यके निरूपितः।

## उपनिषद आगतिक्रमः

उपनिषदः आगतिक्रममनुसृत्य अनेकधा कथाः श्रूयन्ते। हारीतमुनिवंशीयः माण्डूक्यनामधेयः कश्चन ऋषिः। तस्यां जातः ऐतरेयः वासुदेवद्वादशाक्षर-मन्त्रबलाद् उपनिषदः प्रवक्ता। प्रागयं मूक इव स्वात्मानं दर्शयामास। माण्डूकिः पिङ्गानाम्नीं द्वितीयामूढ्वा तस्यां चतुःपुत्रान् लेभे। ते च शास्त्रपारङ्गताः यज्ञादिकर्मणि व्यापृताः पितरं तोषयामासुः। पुत्रस्य (ऐतरेयस्य) बुद्धि-मान्द्येनासन्तुष्टा माता तं निनिन्द। तदा मौनमपहाय ऐतरेयः तस्यास्तत्वोपदेशं व्यधात्। तदनन्तरं वासुदेवरूपिणा भगवता प्रेरितः हरिमेधसो ब्राह्मणस्य यज्ञशालां प्रविवेश। स्वजप्तवासुदेवमन्त्रप्रभावेन ऐतरेयब्राह्मणमन्त्रान् संपठित्वा सर्वैः पूजां स्वीचकार। एवम् इतरापुत्रदृष्टानां मन्त्राणाम् ऐतरेयमन्त्रा इति प्रसिद्धिः समजनीति स्कान्दे कौमारिकाख्ये उपखण्डे श्रूयते।

सायणाचार्यकृत ऋग्भाष्यभूमिकायां तु किञ्चिद्व्यत्यासेन कथेयं श्रूयते- 'याज्ञवल्क्यमहर्षेः पत्नी इतरा वर्णावरा च । अस्यां जातः ऐतरेयः । बाल्ये रोदनावसरे मात्रा प्रतिरुद्धः मूक इव तस्थौ । कस्मिंश्चन अध्वरे पित्रा भ्रातृभिश्च अनादृतः वासुदेवमन्त्रानुग्रहबलात् चत्वारिंशदध्यायपरिमितान् मन्त्रान् उपदिदेश । तदा मह्या (भूदेव्या) दत्तासनः महिदास इति प्रथितः समभवत् । इयं च कथा ऐतरेयब्राह्मणसुखप्रदानामकव्याख्याने षड्गुरुशिष्यप्रणीते उपलभ्यते ।

श्रीमदानन्दतीर्थभगवत्पादाचार्यास्तु एवं व्याचक्षते । स्वायम्भुवेऽन्तरे चतुर्मुखब्रह्मणः विशालनामा पुत्रः समजनि । तस्य पत्नी इतरा । अस्यां भगवान् नारायणः ऐतरेयनाम्ना प्रादुर्बभूव । कचिदध्वरे रमाब्रह्मादीनां देवोत्तमानां उपदिदेश च इमां रहस्यविद्याम् । महान्तः ब्रह्मादयः यतः तस्य दासाः बभूवुः अतः अयं महिदास इति विख्यातः । तदुक्तमैतरेयभाष्ये -

'प्रादुर्बभूव भगवांस्तपसेतरायाः<br>
नारायणोऽब्जजसुतस्य विशालनाम्नः ।<br>
तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो<br>
निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ।<br>
तैः संस्तुतः स भगवान् गिरिशेन्द्रमुख्यान्<br>
सर्वानबोधयदजेन सहैव तेऽथ ।<br>
दासत्वमापुरत एव महत्सुराणां<br>
दासत्वतः स महिदास इति प्रसिद्धः ।<br>
शृण्वत्सु तेषु भगवानवदद् रमायै<br>
दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।<br>
सा बह्वृचैः प्रपठिता चतुराननास्याद्<br>
यस्यां रहस्यमुदितं परमं हि विष्णोः ।' इति ।

**सर्वाणि वचनानि विष्णुपराणि**

उपनिषदि आरण्यके वा कर्मदेवतास्वरूपप्रतिपादकानि बहूनि वचनानि

दृश्यन्ते। भगवदन्यत्र अन्यत्रैव वा प्रसिद्धानां तादृशशब्दानां भगवति समन्वयः नैव शक्यते सुखेन कर्तुम्। भगवत्याः श्रुतेस्तु नारायणस्य सकलशब्द-वाच्यत्वप्रतिपादनद्वारा गुणपूर्णत्वसमर्थन एव ऐदम्पर्यमस्तीति वैदिकानाम् अतिरोहितम्। अनया दृष्ट्या श्रीमध्वाचार्यैः अन्यपरतया प्रतीयमानानां शब्दानां भगवति समन्वयद्वारा अपूर्वः कश्चनार्थविशेषः उपवर्णितः। यथा- **'एष पन्था एतत् कर्म एतत् ब्रह्म एतत् सत्यं तस्मात् न प्रमाद्येत् तं नातीयात् नह्यत्यायन् पूर्वे येऽत्यायंस्ते परा बभूवुः'** (ऐ.उ.१.१.१) इत्यादि। भगवान् विष्णुर्हि स्वप्राप्तिहेतुत्वात् 'पन्थाः' इत्युच्यते। गुणपरिपूर्णत्वात् 'ब्रह्म' इत्युच्यते। साधुस्वरूपत्वात् 'सत्यम्' इत्युच्यते। तमेतं परमात्मानं धर्म-ज्ञान-वैराग्य-ऐश्वर्यविधुराः असुराः तत्यजुः। अत एव अन्धन्तमः विविशुः। देवाः ऋषयः मनुष्योत्तमाश्च तमुपास्य मुक्तिभाजो बभूवुः-

**'एष एव सदा पन्था भगवान् पुरुषोत्तमः।**
**नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः।**
**ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः।**
**क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत्।**
**पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः।**
**मुक्ताः श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका।'**

एवमेव द्वितीयप्रघट्टके **'एष इमं लोकं अभ्यार्चत्'** इत्यारभ्य 'शतर्चि-मध्यम-गृत्समद-विश्वामित्र-वामदेव-अत्रि-प्रभृतिशब्दाः भगवति नारायणे मुख्यया वृत्त्या विद्यन्त इति भगवती श्रुतिरेव प्रत्यपीपदत्। अनेन च भगवत्पादीया व्याख्या शुद्धवैदिकसम्प्रदायनिबद्धेति विदुषामतिरोहितम्। तत्र उपपादितमेतत् आनन्दतीर्थभगवत्पादाचार्यैः-

ऋग्वेदीयप्रथममण्डलऋषयः 'शतर्चिन' उच्यन्ते। अत एव शतर्चि-मण्डलमित्येव तद्विख्यातमस्ति। अत्र ऐतरेयोपनिषत् आदिशति - शतर्चिशब्दः

न केवलं ऋषिसमुदायवाचकः अपि तु विष्णुमेव मुख्यया वृत्त्या अभिधत्ते । 'तं शतं वर्षाणि अभ्यार्चत्' इत्युक्तदिशा शतंवर्षाणि मानुषेषु प्रविश्य तेषां शतवर्षपर्यन्तं जीवनहेतुत्वात् स एव शतर्चिशब्दाभिधेयः ।

ऋग्वेदीयद्वितीयमण्डलात् नवममण्डलपर्यन्तं मध्ये विद्यमानानां मन्त्राणां द्रष्टारः ऋषयः 'मध्यमा' उच्यन्ते । शरीरमध्ये हृदये नियामकतया स्थितस्य भगवत एव इदं नाम मुख्यं भवति । 'स इदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मात् मध्यमा इत्याचक्षते' इति

द्वितीयमण्डलऋषिः गृत्समदः । मुख्यया वृत्या अयं शब्दः विष्णुमेवाभि-दधाति । यतो हि सः सुषुप्त्यवस्थायां जीवस्य बाह्यप्रपञ्चविज्ञानं दूरीकृत्य स्वरूपभूतानन्दं अनुगृह्णाति इति धिया स एव गृत्समदः(ग्रसति+मदयति) ।

ऋग्वेदीयतृतीयमण्डलस्य ऋषयः विश्वामित्रप्रभृतयः । विश्वामित्रशब्दोऽपि न केवलं ऋषिमभिदधाति अपि तु समग्रस्यापि विश्वस्य हितकारिणं विष्णुं विश्वस्य मित्रमिति धिया विश्वामित्रशब्देन अभिधत्ते । 'तस्मात् विश्वामित्र इत्याचक्षते एतमेव सन्तम्' इति ।

वामदेवः ऋग्वेदीयचतुर्थमण्डलऋषिः । एषशब्दोऽपि 'वामः' अतिसुन्दरः 'देवः' क्रीडादिगुणविशिष्टः इति व्युत्पत्त्या विष्णुमेवाभिदधाति । विष्णोः सुन्दर-रूपवत्त्वं प्रमाणसिद्धम्- 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इति । अत एवाह ऐतरेयारण्यकश्रुतिः- 'तस्मात् वामदेव इत्याचक्षते एतमेव सन्तम्' इति ।

ऋग्वेदीयपञ्चममण्डलद्रष्टा अत्रिः । अत्रायत इति अत्रिः इति व्युत्पत्त्या संसारतारकत्वहेतुना विष्णुरेव अत्रिरुच्यते । न केवलं ऋषिनामानि विष्णोर्महिमानमावेदयन्ति अपि तु प्रगाथादिछन्दोवाचकशब्दा अपि विष्णोर्महिमानं व्याचक्षते । चत्वारिंशदक्षरपरिमितः 'प्रगाथा छन्दः' । एतादृशछन्दोनिबद्धमन्त्रद्रष्टॄणां ऋषीणां मण्डलस्यापि तथैव नाम प्रथितम् ।

भगवान् विष्णुरेव नियामकतया सर्वत्र प्रविष्ट इति 'प्रगाथा' उच्यते। तदुक्तं 'स इदं सर्वमभिप्रागात्' तस्मात् प्रगाथा इत्याचक्षते एतमेव सन्तम्' इति। अत्र श्रुतानि क्षुद्रसूक्त-महासूक्तनामान्यपि विष्णोर्महिमानमेवाचक्षते। स हि अणोरणीयान् भूत्वा क्षुद्र इव दृश्यते। महतो महीयान् भूत्वा महानपि कथ्यते। अतः तन्महिमाप्रतिपादकानि सूक्तानि तत्तन्नाम्ना भण्यन्ते। एवमेव सर्वेषामपि शब्दानां समन्वयः भगवति विष्णौ भगवत्या श्रुत्या निरूपितः। व्युत्पादितश्चायं क्रमः श्रीमदाचार्यैः।

## विष्णुरेव सर्वशब्दवाच्यः

अस्यामुपनिषदि 'ता वा एताः सर्वा ऋचः' 'सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण ऋच इत्येव विद्यात्' इति सर्वशब्दवाच्यत्वं प्राणस्याभिहितम्। 'स उ प्राणस्य प्राणः' इति केनोपनिषदुक्तदिशा 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति', 'मम योनिरप्स्वन्तःसमुद्रे', 'यमन्तःसमुद्रे कवयोऽवयन्ति', '....तदेव ब्रह्म परमं कवीनां', '... तन्नो विष्णुः' इत्यादि-श्रुत्या च परममुख्यवृत्त्या विष्णुरेव प्राणशब्दवाच्यः। अत्र श्रीमदानन्दतीर्थ-भगवत्पादाचार्याः श्रुतिगतप्राणपदं यथा विष्णुपरं तथैव अमुख्यया वृत्त्या समस्तकलिदोषविदूरं विशुद्धज्ञानस्वरूपं मुख्यप्राणं प्रतिपादयतीति तस्य अज्ञानाभिभवास्पृष्टत्वादिहेतुना सर्वशब्दवाच्यत्वं प्रत्यपीपदन्। तथाहि ऐतरेयभाष्योदाहृतानि प्रमाणवचनानि–

**'अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ।**
तदन्ये चेतनास्सर्वे प्राणाश्चाऽत्मान एव च।
अज्ञानाभिभवस्पृष्टाः तस्मात्ते ह्यधमाः स्मृताः।
मध्यमो वायुरेवैक उत्तमः केवलो हरिः।
**सर्वशब्दोदितौ तस्मात् एतौ द्वावेव नापरः।**
अन्ये चैव मितैः शब्दैः उच्यन्ते नामितैः क्वचित्।

**श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।**
**तस्मादमितनामानावपि तौ मितनामवत् ॥**
**श्रीश्च वायुश्च, विष्णुस्तु मुख्योक्तेरमिताभिधः ।**
**अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ॥ इति ।**

अत्र 'सर्वशब्दोदितौ तस्मात् एतौ द्वावेव नापरः' इति प्रमाणवचनमवलम्ब्य अर्वाचीनाः केचित् वायोः असङ्कुचितसर्वशब्दवाच्यत्वं व्याचक्षते । तत्तु प्रकरणविरुद्धं निरवकाशप्रमाणान्तरविरुद्धं चोपेक्षणीयमेव ।

(१) तथा हि- अत्रैव ऐतरेयभाष्ये उत्तरत्र भगवत्पादाचार्यैः वायोः सङ्कुचित-सर्वशब्दवाच्यत्वमेव स्फुटमभ्यधायि । एवं ताम्रपर्णीयव्याख्यानेऽपि । अत्रेदमवधेयम् 'यच्छब्दा योगवृत्तयः । अतोऽनन्तगुणं ब्रह्म' इत्यणुभाष्योक्तदिशा, 'इत्यशेषक्रियानामशब्दैरेको जनार्दनः । उच्यते मुख्यतो यस्मात् पदवर्णस्वरादिभिः । तस्मादनन्तगुणता श्रुति-तात्पर्यतोऽस्य हि' (ब्र.सू.अनु.१.४.१४) इत्यनुभाष्योक्तदिशा च विष्णोरनन्तकल्याणगुणपरिपूर्णत्वे सर्व (अनन्त) शब्दवाच्यत्वमेव प्रधानं निदानम् । यदि च वायौ सर्वशब्दवाच्यत्वमङ्गीक्रियते तदा तस्यापि अनन्तगुणपरिपूर्णत्वमापद्यते । एतच्च आकारग्रन्थविरुद्धम् । न चात्र परममुख्यवृत्त्या विष्णौ समेषां शब्दानां प्रवृत्तिः वायौ तु मुख्यवृत्त्या इति वायोरपि यथायोग्यगुणपूर्णत्वं आनन्त्ये तारतम्यञ्च अङ्गीक्रियत इति वाच्यम् । उपचारादेव भगवत्पादाचार्यैः भगवन्नाम्नां अन्यत्र प्रवृत्त्यङ्गीकारात् । 'मुख्यार्थस्य शब्दप्रवृत्तिनिमित्तातिरिक्तगुणयोगेन वृत्तिरुपचारः' इति कल्पनोपदेशाधिकरणटीकोक्तदिशा पैङ्गल्यादियुते माणवके अग्निशब्द इव मुख्यप्राणादावपि भगवन्नामप्रवृत्तिरङ्गीकृता । तदुक्तमाचार्यपादैः–

(२) 'यो गुणैः सर्वतो हीनः यश्च दोषविवर्जितः ।
हेयोपादेयरहितः स आत्मेत्यभिधीयते ।

एतदन्यस्वभावो यः सोऽनात्मेति सतां मतः ।
अनात्मन्यात्मशब्दस्तु **सोपचारः प्रयुज्यते** ॥' (ब्र.सू.भा.१.१.६)

(३) 'चेतनस्तु द्विधा प्रोक्तो जीव-आत्मेति च प्रभो ।
जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ।
इतरेष्वात्मशब्दस्तु **सोपचारः प्रयुज्यते** ।' (ब्र.सू.भा.१.१.७)

(४) 'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम् ।
न सम्भवन्ति यस्मात् **तैर्नैवाऽप्ता गुणपूर्णता**' (ब्र.सू.भा.१.३.१)

(५) 'चन्द्रसूर्यादयः शब्दाः विष्णावेव हि मुख्यतः ।
**उपचारात् तदन्येषां** विष्णुनैव कृताः पुरा ॥'
(ऐ.भा. २.४ - पृ.सं.३२६)

(६) एवं च मुख्यप्राणादौ उपचारादेव शब्दप्रवृत्तिमङ्गीकुर्वद्भिः तस्य गुणपूर्णत्वमसहमानैः श्रीमदाचार्यैः असङ्कुचितसर्वशब्दवाच्यत्वं प्रतिषिद्धम् । अत्रैव

'श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः ।
तस्मादमितनामानावपि तौ मितनामवत् ।
श्रीश्च वायुश्च, विष्णुस्तु मुख्योक्तेरमिताभिधः ।
अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः ॥'

इति श्रीमदाचार्यैः श्रीप्राणादौ मुख्यवृत्त्या शब्दप्रवृत्त्यभावान्मितनामभिर्देवैः तौल्यमेवोपपादितम् । एतच्च स्फुटीकृतं ताम्रपर्णीये–

'तर्हि तयोः साम्यमित्यत आह- **विष्णुवन्न तु मुख्यत इति** । सङ्ख्यातोऽर्थतश्च विष्णुवन्न मुख्यतोऽखिलवेदोक्ता, नारायणादिशब्दवाच्यत्वस्याभावात् । तद्वत्प्रवृत्तिनिमित्तपौष्कल्याभावेन लक्ष्म्यादिशब्दमुख्यार्थत्वाभावाच्चेति । नन्वेवं यदि श्रीवाय्वोरनन्तशब्दवाच्यत्वं तर्हि ग्रन्थान्तरेऽमितशब्दवाच्यत्वोक्तिः कथमित्यत आह- **तस्मा-**

**दिति ।** तौ श्रीवायू अमितनामानावपि तस्मादेव विष्णुवदखिल-नाममुख्यार्थत्वाभावादेव मितनामवत् मितनामभिर्देवैः तुल्यं ग्रन्थान्तरे उच्येते । 'तेन तुल्यं क्रिया चेद् वतिः' इति सूत्रात् । विष्णुस्तु मुख्योक्तेर्निःशेषैः शब्दैः मुख्यतयोक्तेरमिताभिधः ।' इति ।

अत्राऽऽचार्यैः, शब्दप्रवृत्तिपौष्कल्याभावाद् वायोः श्रियश्च मित-नामभिर्देवैस्तौल्यमेवाङ्गीकृतम् ।

अन्यव्यपेक्षया मुख्यप्राणे मुख्यवृत्त्या सर्वनामानि वर्तन्त इति वदद्भिराचार्यैः गौणी मुख्यवृत्तिरङ्गीकृतेति ज्ञायते । तदुक्तं 'अन्य-व्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते' इति । एतेन प्राणे समेषां शब्दानां मुख्यवृत्त्या प्रवृत्तिपरवचनानि समाहितानि वेदितव्यानि ।

(७) अत्रैव ऐतरेयभाष्ये आचार्यपादैः श्रियः प्राणस्य चोत्तरत्र कण्ठरवेणैव नारायणादिशब्दवाच्यत्वं प्रतिषिद्धम्– **'यो देवानां नामधा एक एव' इत्यवधारणान्नान्यस्य सर्वनामत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव । श्रियो वायोरपि न नारायणादिनामवत्त्वम् ।**

अत्र हि भगवत्पादाचार्यैः 'यो देवानां नामधा एक एव' इत्याद्येव-कारशिरस्कश्रुत्यानुगुण्येन विष्णोरेव सर्वशब्दवाच्यत्वं रमाप्राणयोः नारायणादिशब्दावाच्यत्वं च स्फुटं प्रतिपादितम् । अत्रैव ताम्रपर्णीये 'ननु श्रियो वायोश्च सर्वनामत्वप्रसिद्धेः कथमेक एवेत्यवधारणमित्याशङ्क्य तयोरपि 'पूर्वप्रसिद्धवर्ज्यम्' इति ऋग्भाष्योक्तदिशा पूर्वप्रसिद्ध-देवतातिरिक्तसङ्कुचितसर्वशब्दवाच्यत्वं स्फुटमुपपादितम् । तथा हि ताम्रपर्णीयवचनानि-

**ननु श्रियो वायोश्च सर्वनामत्वप्रसिद्धेः कथमेक एवेत्यवधारणमित्यत आह- श्रिय इति । तथा च तयोरपि पूर्वप्रसिद्धवर्जं सर्वनामविषयत्वेन प्रसिद्धिरुपपन्नेति भावः ।** (पृ.सं.१२६)

(८) अत्रैवोत्तरत्र अकारनामा विष्णुरेव, न ब्रह्मादयो देवाः अकारशब्दवाच्या इत्युक्तम् । यद्यपि नारायणादिनामानि नारायणस्मृतिसम्पादनार्थं पुत्रपौत्रादिषु सङ्केतितानि । तथाऽपि गुणपरिपूर्णत्वनिर्दोषत्वादि-महागुणसन्तत्यभिधायकः अकारस्तु न क्वापि नामक्रियासु निर्दिष्टः । ब्रह्मवायू अकारदेवते । न अकारवाच्यौ । विष्णुसूक्तेन केवलस्य विष्णोरभिधेयत्वेऽपि विष्णुसूक्तदेवतात्त्वं वेदाभिमानिनीनां विष्णोरव-राणां भारत्यादिदेवीनां यथोपपन्नं तद्वत् अकाराभिमानित्वमात्रं ब्रह्मादीनामुपपन्नं न तु अकारशब्दवाच्यत्वम् इति भगवत्पादैः अत्र प्रतिपादितम्–

'अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम् ।
ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः ।
वर्तन्ते न त्वकारोऽयं वर्तते केशवं विना ।
नारायणादिनामानि नृणां नामक्रियास्वपि ।
विहितान्यकारो नैवायं विहितस्तमृते प्रभुम् ।
वायुर्ब्रह्माऽपि चाकारदेवते न तु नामिनौ ।
यथा वेदाभिधेयोऽन्यः वेदाख्या देवता परा ।
एवं नामाभिमानी तु वायुर्वाच्यो जनार्दनः ।
तस्माद् इति नामैतद् विष्णोः केवलमेव हि ।' (पुट.२३८)

अत्रैव ताम्रपर्णीये 'अकारो ब्रह्मविष्णवीशकमठेषु' इति नानार्थ-रत्नमालोक्तेः ब्रह्मवाय्वोरपि अकारनामत्वमस्ति । अतः कथमेतत् विष्णोरेव नाम भवितुमर्हति इत्याशङ्क्य ब्रह्मादीनां तन्नामत्वमपि शब्दाभिमानित्वादेव न तु तत्र गुणसमर्पकत्वेनेति समाहितम् । तथाहि ताम्रपर्णीयवचनानि-

'ननु सर्वाणि पदानि हरिनामान्येव । किमकारस्य विशिष्य नामत्वमुच्यत

इत्यत आह- **अकारनामेति** । तदुपपादयति- **ब्रह्मेति** ॥ यानि ब्रह्मरुद्रादिविष्णुनामानि तानि ब्रह्मादिष्वपि अमुख्यतो वर्तन्ते । अयमकारः केशवं विना कुत्रापि न वर्तते । तदुक्तमुपपन्नमिति भावः । ननु 'ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' इत्यादिना नारायणादिनाम्नामन्यत्राऽवृत्तिः श्रूयत इत्यत आह- **नारायणादीति** । नारायणादिनामान्यपीत्यन्वयः । ननु ब्रह्मवाय्वोरप्यकारनामत्वं क्वचिदुच्यते । अतः कथं विष्ण्वेकनामत्वं तस्येत्यत आह- **वायुरिति** ॥ वाशब्देन शिवः । 'अकारो ब्रह्म-विष्ण्वीशकमठेषु' इति नानार्थरत्नमालायाम् । **ब्रह्मशिवनामत्वमपि तदभिमानित्वादेव न तु तत्र गुणसमर्पकत्वेनेति भावः ।' इति** ॥

(९) सत्तत्त्वरत्नमालायां ताम्रपर्ण्याचार्यैः विष्णौ प्रसिद्धसूक्तानि न मुख्यप्राणप्रतिपादकानीति स्फुटमभिहितम् । अष्टाक्षरात्मकोङ्कार-प्रतिपाद्यत्वं पराकृतं च । वर्णत्रयात्मकोङ्कारमात्रप्रतिपाद्यत्वादेव प्राणस्य तद्विवृतिरूपवेदप्रतिपाद्यत्वमभ्युपगम्य सकलवेदप्रतिपाद्यत्वं नास्तीति कण्ठत एवोक्तम्–

**'वेदवर्णपुराणादौ तत्तन्नामा ह्यवस्थितः ।**
**अनन्ताम्नायवेद्योऽसौ विना विष्णौ प्रसिद्धतः ॥**
**ओङ्कारवाच्यः प्राणोऽसौ वेदानुक्तगुणस्तथा ।'** (सत्तत्वरत्नमाला)

'अत्र हरौ रमायां च प्रसिद्धवेदभागातिरिक्तवेदप्रतिपाद्यता वायोः' इत्ययं विशेष ऋग्भाष्येऽभिहितः ।

'देवता सर्वविद्यानां स्वयं नारायणः प्रभुः ।
ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च ।
ऋते प्रसिद्धा ब्रह्मैव ..........'

ननु मातृकाष्टाक्षरादिमन्त्राणां पुरुषसूक्तादिवेदानां च तन्त्रसारोक्त-

क्रमेण ओङ्कारव्याख्यानरूपत्वात् वायोर्व्याख्येयोङ्कारप्रतिपाद्यत्वे तद्व्याख्यानाष्टाक्षरादिप्रतिपाद्यत्वं च प्राप्नोतीति 'ऋते तत्र प्रसिद्धा' इत्युक्तिविरोध इति चेन्न । **न हि अकाराद्यतिशान्तान्ताष्टाक्षरात्मक-समग्रोङ्कारमुख्यप्रतिपाद्यत्वं विरिञ्चस्योक्तम् । किन्तु अकारोकार-मकाररूपवर्णत्रयात्मकोङ्कारैकदेशामुख्यप्रतिपाद्यत्वमेव । उपक्रमे अकार उकारो मकार इति तावन्मात्रस्यैव प्रस्तावात् । तथा चाष्टाक्षरादीनां समग्रोङ्कारमुख्यव्याख्यानरूपत्वात् नोक्तविरोधः । विष्ण्वेकनिष्ठवेदभागपरित्यागेन, इतरवेदभागानां विरिञ्च-प्रतिपादकोङ्कारांशव्याख्यानरूपत्वमङ्गीक्रीयत इति समग्रस्य वेदादेः प्रणवव्याख्यानत्वोपपत्तिरिति ।'**

न केवलं प्राणस्य सकलवेदप्रतिपाद्यत्वं प्रतिषिद्धमपि तु सकलवेदाभि-मानित्वादेव सकलशब्दवाच्यत्वम् अभिमानिनयन्यायेन औपचारिकमेव प्रतिपादितम् । तथाहि तद्वचनानि–

**'अस्ति च चतुर्मुखस्य नारायणादिशब्दावयवार्थत्वाभावेऽपि 'स्वं रूपं शब्दस्य' इति न्यायेन नारायणादिशब्दाभिमानित्वेन अभिमान्यभिमन्यमानयोरेकनामत्वनिश्चयादेतद्विवक्षया नारायणादिशब्दवाच्यता ॥' इति ।**

श्रीमदाचार्यैः ऋग्भाष्ये भारत्यादिदेवीनां सकलवेदाभिमानित्वमुक्तम् । तत्तु न तत्प्रतिपाद्यत्वेनेति स्फुटम् । न हि भारती विष्णुसूक्तप्रतिपाद्या न वा अम्भृणीसूक्तप्रतिपाद्या । तथा चात्र विवक्षितं अभिमानित्वं गौणमेव इति विज्ञेयम् । अत एव ऋग्भाष्यटीकायां पूर्वप्रसिद्धदेवतासूक्तप्रतिपाद्यत्वं उत्तरेषां प्रतिषिद्धं न विस्मर्तव्यम् ।

(१०) अनुव्याख्याने सुधायामपि 'नामधा एक एव' इति एवकार-शिरस्कप्रमाणानुरोधेन विष्णोरन्यत्र नाम्नां प्रवृत्तिः प्रतिषिद्धा–

**अतो न मुख्यतो नाम तदन्यस्य हि कस्यचित्।** (अनु. पृ.सं.१०५८)

**सुधा-** 'यो देवानां नामधा एक एव' इति प्रतिषेधात् परमेश्वरादन्यस्य नामैव नास्ति। दूरे विष्ण्वादिनामेत्यर्थः। नामाभावे व्यवहारविलोपादि प्रसज्यत इत्यत उक्तम्– **मुख्यत इति।**

(११)ब्राह्मणशब्दसमन्वयावसरे चन्द्रिकाप्रकाशे एष एवार्थः निरूपितः।

**टीका-** 'स्वरव्यत्यासस्याधिकत्वात्'

**चन्द्रिका-** 'आधिक्येऽधिकमिव हरिणा सूत्रमीरितम्' इति ऋग्भाष्ये उक्तत्वात् ब्रह्मणः वेदेनोक्तत्वात् आधिक्यविवक्षायां दीर्घ इत्यर्थः।

**प्रकाशः- 'स्वरेति'**। आधिक्ये विवक्षिते शब्दे अधिकमिति महाव्याकरणसूत्रम्। **तेन योगस्य ब्रह्मादिषु अयोग्यतामभिप्रैति।**

(१२)समाकर्षाधिकरणतत्त्वप्रकाशिकागुर्वर्थदीपिकायामपि श्रीमद्वादिराज-पूज्यचरणैः सङ्केतादिनैव नारायणादिशब्दानाम् अन्यत्र प्रवृत्तिः प्रति-पादिता। तथा हि तद्वचनानि-

'एवञ्च परममुख्या वृत्तिर्भगवति। ततः सम्यगाकर्षणाद् अवान्तर-मुख्यावृत्तिर्जगति। लक्षणोपचारवृत्ती अमुख्ये। सङ्केतोऽपि रूढि-योगयोरभावात् रूढोपचारादावन्तर्भवति। सङ्केतोपचारादेर्बीजं तु भगवन्नामधारणं कार्यमित्यादिरूपा स्मृतिः। एवं रूढियोग-व्यतिरिक्तनिमित्तान्तरेण वृत्तिरमुख्या वृत्तिः। तच्च क्वचित् सादृश्यं, क्वचित्सम्बन्धः, क्वचिदुक्तविधया स्मृत्यादिकमिति न वृत्तीनां त्रित्वभङ्ग इति ज्ञेयम्। नारायणत्वं घटत्वं वा तत्तदसाधारणधर्मं निमित्तीकृत्य नारायणघटादिशब्दानामनादिकालं नारायणघटादावेव प्रयोगबाहुल्यं रूढिः। स चं नारायणादिपदानां - नारायणेऽस्ति। घटादीनां च

घटादिष्वप्यस्ति, नामधारके तु नास्त्येव। किन्तु सङ्केतमात्रेण तस्मिन् व्यवहार एवेति भावः।'

(समाकर्षाधिकरणतत्त्वप्रकाशिकागुर्वर्थदीपिका - पृ.सं.६०)

(१३)एवं ब्रह्मसूत्रभाष्यतत्त्वप्रकाशिकाभावदीपादौ सर्वेषां देवानां पूर्वप्रसिद्धदेवताप्रतिपादकसूक्तातिरिक्तमन्त्रप्रतिपाद्यत्वमेव स्फुटं प्रतिपादितम्—

मन्त्रादिवद्वाऽविरोधः - (ब्र.सू.३.३.५८)

**टीका** - यथा अग्न्याद्यधमदेवताविषयं मन्त्रविद्यादिकं ब्रह्माद्युत्तम-देवताविषयत्वेनाधीयतेऽध्येतृभिरुत्तमानां तत्प्रतिपाद्यत्वात्। एवमधम-गुणानामुत्तमेषूपसंहारे न कश्चिद्विरोधः। तेषु तद्गुणित्वादिति भावः। उक्तं चैतत्-

**'देवता सर्वविद्यानां स्वयं नारायणः प्रभुः।**
**ऋते तत्र प्रसिद्धाश्च देवता श्रीस्तथाऽत्र च।**
**ऋते प्रसिद्धा ब्रह्मैव ततस्तेन क्रमेण च।**
**पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः।'**

**भावदीपः**- तत्र भगवति प्रसिद्धाः सूक्तविद्याः 'ऋते' वर्जयित्वा अन्यासां विद्यानां श्रीश्च देवता। तथाऽत्र च श्रीदेव्यां प्रसिद्धाः विद्या अम्भृणी-सूक्ताद्या ऋते अन्यासां ब्रह्मैव देवता। ततः परं च तेन तत्र वक्ष्यमाणेन तारतम्यक्रमेणैव पूर्वप्रसिद्धवर्जं पूर्वस्यां देवतायां प्रसिद्धा विद्या वर्जयित्वा अन्यासां विद्यानां तु शक्रान्ता देवता मता इत्यर्थः।

(१४)एवमेव **'अखिलैः सुवाक्यैः आप्यतमम्'** इत्यनुव्याख्यानव्याख्यावसरे श्रीमन्न्यायसुधायाम् अखिलपदकृत्यं समर्थयद्भिः परिमलाचार्यैश्च विष्णुरमाप्रतिपादकसूक्तातिरिक्तसूक्तप्रतिपाद्यत्वमेव स्फुटमभिहितम्।

**श्रीसुधा-**अधिकृतत्वप्रदर्शनाय 'आप्यतमम् अखिलैः सुवाक्यैरिति'। अपिशब्दो वन्द्यत्वे हेतुसमुच्चयार्थः। अभिव्याप्तौ वा। अपौरुषयत्वेन तन्मूलत्वेन वाऽनाशङ्कितदोषत्वादिना शोभनानि वाक्यानि वेदादीनि ब्रह्मसूत्रादीनि च सुवाक्यानि। तैरखिलैराप्यतमम्। अतिशयेन प्रतिपाद्यम्। यदि व्याचिख्यासितेन ब्रह्ममीमांसाशास्त्रेण तन्निर्णेतव्यार्थेन वेदादिना च प्रतिपाद्य इति नारायणो वन्दनीयः हन्त तर्हि तत एव धर्मादिकं प्राणादिकं वा वन्दनीयं स्यात्। न स्यात्। अस्य नारायणप्रतिपत्त्यङ्गतया वेदाद्येकदेशप्रतिपाद्यत्वात्। अस्य पुनरनन्यार्थतयाऽखिलवेदादिवेद्यत्वात्। तथाविधमेव चाधिकृतमुच्यत इत्याशयवताऽऽप्यतममित्यखिलैरिति चोक्तम्।

**परिमले-** तमप्प्रत्ययाखिलशब्दापिपदानां कृत्यं व्यनक्ति- यदीत्यादिना। तस्येति॥ धर्मादेः प्राणादेश्चेत्यर्थः। 'अन्यार्थं तु जैमिनिः' इत्यादिना वक्ष्यमाणन्यायेन नारायणप्रतीत्यङ्गत्वं ज्ञेयम्। एतावता धर्मादेरधिकृतत्वं न निरस्तमिति वन्द्यत्वं प्राप्तमत आह- तथाविधमेवेति। अनन्यार्थतयाऽखिलवेदादिवेद्यमेवेत्यर्थः। अखिलैरिति चोक्तम्। अखिलैरपीति चोक्तमित्यभिव्याप्त्यर्थकमपिपदं च ध्येयम्। अन्यथा धर्मादेरखिलवेदाप्रतिपाद्यत्वेऽपि 'ता वा सर्वा ऋचः' इत्यत्रैतरेयभाष्ये सर्ववेदाभिधेयत्वं वायोरप्यस्तीत्युक्त्या **प्राणस्याप्यखिलवेदप्रतिपाद्यत्वात् अखिलपदं तद्व्यावर्तकं न स्यात्। व्यर्थं चाभिव्याप्तार्थकमपिपदं स्यात्। तस्मिन् सति तु 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मता' इति ऋग्भाष्योक्तदिशा 'मन्त्रादिवद्वा' इत्यत्रोक्तन्यायेन च विष्णुसूक्तपुरुषसूक्तलक्ष्मीसूक्ताद्यन्यत्रैव प्रतिपाद्यत्वाद् भवति व्यावर्तकमखिलपदम्।'**

(१८) 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः' इति पञ्चमप्रश्नोपनिषदं

व्याकुर्वद्भिः श्रीमट्टीकाचार्यैः विष्णुप्रतिमारूपस्य विरिञ्चस्य अमुख्यवृत्त्या प्रणवप्रतिपाद्यत्वमुक्तम्– **'यस्मात्प्रणवो मुख्यतः परमात्मनः प्रतिपादकः । यस्माच्च तत्प्रतिमात्वेनामुख्यतो विरिञ्चप्रतिपादकश्च'** इति ।

अत्रैव श्रीवादिराजतीर्थीयटिप्पण्यां गङ्गापदस्य तत्सम्बन्धिनि तीरे लक्षणया प्रवृत्तिरिव ब्रह्मान्तर्गतविष्णुवाचकप्रणवस्य लक्षणया विरिञ्चप्रतिपादकत्वं निरूपितम् । तथा हि तद्वचनानि–

'परं चापरं च' इत्यत्र 'परं' वैकुण्ठादिलोकस्थितमन्यानधिष्ठितं ब्रह्म । 'अपरं' चतुर्मुखाख्यप्रतिमान्तर्गतं ब्रह्म । तदिदमुक्तं टीकाकृता- **अमुख्यतो विरिञ्चप्रतिपादक इति** । गङ्गावाचकगङ्गापदस्य तत्सम्बन्धिनि तीरे अमुख्यप्रयोगवद् ब्रह्मान्तर्गतविष्णुवाचकप्रणवेन तत्सन्निधानात् तल्लक्षणया विरिञ्चेऽपि प्रयोग इति भावः । 'अहमेकोऽखिलगुणो वाचकः प्रणवो मम' इति स्मृतेः । 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति गीतोक्तेश्च । **नारायणादि नामवत् प्रणवस्याऽपि विष्ण्वसाधारणनामत्वादिति** भावः ।' इति

(१६) भागवततात्पर्ये एवं श्रीमद्यादवाचार्यकृतटिप्पण्यां च भगवन्मात्रवाचक-शब्दातिरिक्तशब्दवाच्यत्वमेव ब्रह्मणः प्रतिपादितमित्यपि तस्य असङ्कुचितसर्वशब्दवाच्यत्वाभावे लिङ्गम्–

**'स्वराः सप्त विहारेण भवन्ति स्म प्रजापतेः ।**
**शब्दब्रह्मात्मनस्तात व्यक्ताव्यक्तात्मनः प्रभोः ॥'** (भा.३.१३.४७)

**तात्पर्ये-** शब्दब्रह्मात्मको ब्रह्मा सर्वशब्दाभिधेयतः ।
ऋते नारायणादीनि नाम्नां स विषयो यतः ॥
व्यक्तं ब्रह्माण्डमुद्दिष्टम् अव्यक्तं महदादि च ।
तद्व्यापकत्वाद् ब्रह्मा तु व्यक्ताव्यक्तात्मकः स्मृतः ॥

**यादुपत्ये**- 'एवंविधस्य सृष्टिकर्तृत्वं ब्रह्मणो नासम्भावितम् । **तस्य भगवन्मात्रवाचकशब्दातिरिक्तसर्वशब्दवाच्यत्वात् ॥' इति ।**
अत्र विरिञ्चस्य सकलशब्दवाच्यत्वमभिधाय तदपि नारायणादि-शब्दातिरिक्तशब्दवाच्यत्वमेवेति विवृतमाचार्यपादैः ।

एवमेव मन्त्रार्थमञ्जर्यामपि उत्तमदेवताप्रतिपादकसूक्तानाम् अवर-देवताऽप्रतिपादकत्वम् अवरदेवतासु उत्तमदेवतागुणाननुसन्धानञ्च स्फुटमभिहितम्–
'मन्त्रादिवद्वाऽविरोधः' (ब्र.सू.३.३.५८.) इति गुणसूत्रे यथाऽ-धमदेवतापरमन्त्रास्तदुत्तमदेवतापरत्वेन ज्ञेयास्तथाऽधमदेवता-गुणास्तदुत्तमदेवतासु ज्ञेया ध्येयाश्च । उत्तमदेवतागुणा अधमदेवतासु न ज्ञेया न ध्येयाश्च । यथोत्तमदेवतापरत्वेन प्रतीता मन्त्रा अधम-देवतापरत्वेन न ज्ञेयास्तथा' इति ।'

अनेनेदमुदितं भवति-

मुख्यप्राणस्य असङ्कुचिसर्वशब्दवाच्यत्वप्रतिपादकमिव प्रतीयमान-मेकमेवाद्वितीयं प्रमाणम् ऐतरेयभाष्यगतम् । एतच्च सावकाशम् । ऋग्भाष्य-ब्रह्मसूत्रभाष्य-अनुभाष्य-भागवततात्पर्य-उपनिषद्भाष्यादि-गतानि प्रमाणवचनानि तु बहूनि निरवकाशानि च । निरवकाशबहु-बाधस्यान्याय्यत्वात् प्राणस्य असङ्कुचितसर्वशब्दवाच्यत्वपरमिव प्रतीयमानवचनं सङ्कुचितसर्वशब्दवाच्यत्वपरमिति अभ्युपगन्तव्यम् । 'विधिवचनान्निषेधवचनं बलीयः' इति पूर्वमीमांसान्यायानुरोधेन प्राण-स्यासङ्कुचितसर्वशब्दवाच्यत्वप्रतिषेधपरवचनानां बहुत्वाद्बलवत्त्वाच्च न तेषां गौणार्थ(अर्थान्तर) स्वीकरणं युज्यते ।

अत्रैके विद्वत्प्रवराः 'प्राणस्य नारायणादिशब्दवाच्यत्वप्रतिषेधपराणि

प्रमाणवचनानि रूढ्या तत्र प्रवृत्तिं पराकुर्वते । योगेन प्राणे समेषां शब्दानां प्रवृत्तिरभिमतैव । एवञ्च तस्य असङ्कुचितसर्वशब्दवाच्यत्वमुपपन्नम्' इति व्याचक्षते । अत्र अविद्वद्रूढेरप्रयोजकत्वात् विद्वद्रूढेश्च 'विद्वद्रूढिर्वैदिका स्यात् सा योगादेव गम्यते' इत्यनुव्याख्यानोक्तदिशा तस्याः योगमूलत्वात् विद्वद्रूढेः प्रतिषेधे मुख्यप्राणे योगेन शब्दप्रवृत्तिप्रतिषेध एव कृतो भवतीति नायं विरोधपरिहारक्रमः समीचीन इति भाति ।

इतोऽपि अत्र विमर्शः करणीयः

अपि च 'नारस्य' नरसमूहस्य नियामकतया अयं आश्रय इति यत्किञ्चित् प्रवृत्तिनिमित्तसद्भावात् नारायणादिशब्दानां प्राणे प्रवृत्त्यङ्गीकारे कस्मिंश्चन धनिकेऽपि नराणां जीविकाधनदातृत्वादिना अयनत्वरूपप्रवृत्तिनिमित्तमवलम्ब्य शब्दप्रवृत्तिरेष्टव्या । अतो नैषा प्रक्रिया प्रामाणिकी भवितुमर्हति । बहूनि प्रवृत्तिनिमित्तान्यवलम्ब्य नारायणे शब्दप्रवृत्तिः, प्राणे तु नारायणादिपदवाच्यत्वप्रयोजकीभूतानां केषाञ्चिदेव प्रवृत्तिनिमित्तानां सद्भावेन नारायणादिशब्दप्रवृत्तिरित्यङ्गीकारे, सर्वेषु देवेष्वपि केषाञ्चित् प्रवृत्तिनिमित्तसद्भावेन नारायणादिशब्दसमन्वयाङ्गीकारापत्तेः । नारायणशब्दप्रवृत्तिनिमित्तपौष्कल्यं प्राणेऽस्ति शिवादिषु तन्नास्तीति वैषम्यप्रदर्शनं तु न मनोरमम् । अवरदेवतापेक्षया रुद्रेऽपि प्रवृत्तिनिमित्तपौष्कल्यस्योपपादयितुं शक्यत्वात् । उभयत्र नारायणादिशब्दप्रतिषेधस्य समानत्वात् साधकान्तराभावाच्च । 'अल्पस्वे निःस्व' इति व्यवहारवत् नारायणादिशब्दप्रवृत्तिनिमित्तानां केषाञ्चित् प्राणादौ सत्त्वेऽपि निरवधिकपुष्कलशब्दप्रवृत्तिनिमित्तवत्त्वस्यात्र विवक्षितत्वेन प्राणादौ तादृशप्रवृत्तिनिमित्ताभावाच्च नासङ्कुचितसर्वशब्दवाच्यत्वं तस्येति विज्ञेयम् ।

**बृहतीसहस्रमहत्त्वम्**

महाव्रतयज्ञे बृहतीसहस्रमन्त्रा अवश्यं पठनीयाः । विश्वामित्रः

बृहतीसहस्रमन्त्रान् पपाठ। तत्रागते महेन्द्रे वायुविष्णू सन्निहितौ तच्छुश्रुवुः। त्रिवारं मन्त्रपठितुः विश्वामित्रस्य वरत्रयमन्वगृह्णत् विष्णुः। प्रथमेन वरेण निजसालोक्यं प्रददौ। द्वितीयेन वरेण नारायणपुरप्राप्तिमनुजग्राह। तृतीयेन च वरेण त्वामेव जानीयामिति विश्वामित्रेण पृष्टः विष्णुः, 'प्राणो वा अहमस्मि ऋषे प्राणस्त्वं प्राणः सर्वाणि भूतानि' इत्याह। अत्र जीवब्रह्मणोरभेदः प्रतिपादित इव दृश्यते। 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (१.३.१९)इति शारीरक-सूत्रव्याख्यानावसरे शङ्कराचार्यैरेवमुक्तम्- 'इन्द्रो नाम देवतात्मा स्वमात्मानं परमात्मत्वेनाहमेव परं ब्रह्मेत्यार्षेण दर्शनेन यथाशास्त्रं पश्यन्नुपदिशति स्म - 'मामेव विजानीहि' इति। यथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति' तद्वत्। 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' (बृ.१.४.१०) इति श्रुतेः। यत्पुनरुक्तं 'मामेव विजानीहि' इत्युक्त्वा विग्रहधर्मैरिन्द्र आत्मनं तुष्टाव त्वाष्ट्रवधादिभिरिति, तत्परिहर्तव्यम्' इति। अत्र शास्त्रदृष्टिर्नाम अभेददृष्टिरिति शङ्कराचार्यैः व्याख्यातम्।

श्रीमध्वाचार्यैः अत्र शास्त्रदृष्टिर्नाम अन्तर्यामिदृष्टिरिति भागवतसमाख्यया व्याख्यातं ब्रह्मसूत्रभाष्ये। तथा हि भागवतवचनम्- 'संवित् शास्त्रं परं पदम्' (भाग.१.६.१०) इति। अत्र हि शास्तीति शास्त्रं इति व्युत्पत्त्या विश्वनियन्ता भगवान् शास्त्रपदेन व्यपदिश्यते। अत्र इन्द्रे स्वीये सन्निधानविशेषं प्रकाशयन् विष्णुः स्वात्मानमेव प्राणशब्दवाच्यम् उपादिशत्। नात्राऽपातप्रतीतः अद्वैतः वाक्यार्थः भवितुमर्हति। यद्यपि विशिष्टाभेदः अत्र नाद्वैतिनामिष्टः। चिन्मात्रावशेषवादो वा निर्विशेषचितोरभेदवादो वा अत्र प्रतिपादित इति समर्थनं तु प्रकरणाननुगुणत्वादुपेक्षणीयम्। नात्र प्राणशब्देन शचीपतिरिन्द्रः प्रतिपादितः। न केवलं प्राणशब्दः इन्द्रे बाधितः अपि तु परमैश्वर्यवाची इन्द्रशब्दोऽपि प्रवृत्तिनिमित्ताभावात् इन्द्रे औपचारिक एव विज्ञेयः। विष्णुर्हि अत्र परमेश्वरः इन्द्रप्राणादिशब्दवाच्यः। 'यमिन्द्रमाहुर्वरुणं यमाहुः' 'इन्द्रं मित्रं वरुणमग्निं

आहुः' 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परमम् उदाहरन्ति' इत्यादि-श्रुतेः । भगवतः विष्णोः सर्वोत्तमत्वात् सर्वनियामकत्वाच्च सर्वस्वरूपत्वमुक्तं श्रुतौ । तथाहि -

**'स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात् ।**
**सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः'** ।। इति ।

'प्रतिषिद्धा च श्रुतावद्वैतभावना' 'आतृणात् आकरीषात् सर्वं भगवान् इति मिथ्यादृष्टिरेषा' इति । अत्र स्मृतिरपि प्रमाणम्–

**'सर्वान्तर्यामिको विष्णुः सर्वनाम्नाऽभिधीयते ।**
**एषोऽहं त्वमसौ चेति न तु सर्वस्वरूपतः ।।'** इति ।

एवञ्च बृहतीसहस्रप्रतिपाद्यस्य विष्णोः उपासनेन भगवत्सालोक्य-सामीप्यविज्ञानप्राप्तिरूपफलत्रयसद्भावात् बृहतीसहस्रमन्त्रैः विष्णोः आराधनं अवश्यं कर्तव्यम् । अत्र विष्णुः द्वासप्ततिसहस्रनाडीषु स्वरव्यञ्जनादिषु च द्वासप्ततिसहस्ररूपैः सन्निहित इति रहस्यमुद्धाटितं श्रीमध्वाचार्यैः । एवं मरणसूचकानां जाग्रत्कालीनस्वप्नकालीनानिष्टविशेषाणां प्रायश्चित्तरूपेण पठनीयाः 'यदन्ति' इत्यादिमन्त्रविशेषाः अत्र निरूपिताः । विस्तरस्तु तत्रैव द्रष्टव्यः । एवं दुर्गाभिमन्यमान-रात्रिसूक्तपठनस्य महत्त्वं फलनिरूपणं च कृतमिह न विस्मर्तव्यम् । यतिभिरपि रात्रिसूक्तं पठनीयम् ।

**वाक्सिद्धिमन्त्रः**

विद्वत्सभायां यत्र क्वापि अध्ययने अध्यापने वा प्रवृत्तः सिद्धिमन्विच्छन् साधकः अवश्यं मन्त्रमेतं जपेत् ।

**'ओष्ठा पिधाना न कुली दन्तैः परिवृता पविः ।**
**सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ।।'**

विवृतं चात्र भगवत्पादाचार्यैः - वागिन्द्रिये विष्णुः संस्थितः । स हि द्वाराविव

विद्यमानयोः ओष्ठयोः सन्निहितः। निर्दोषत्वात् स कुली उच्यते। सर्वपालकत्वात् सर्वोत्तमत्वाच्च एषः पविः इत्युच्यते। स्त्रीरूपिणमेनमुपास्य वाक्सिद्धिं साधकः लभते।

एवमत्र समग्रस्यापि वैदिकवाङ्मयस्य विष्णुशब्दव्याख्यानरूपत्वं निपुणतरमुपपादितमस्यामुपनिषदि।

**ताम्रपर्णीयव्याख्या**

ऐतरेयभाष्यस्य अतिगभीरस्य नैकापूर्वप्रमेयोपबृंहितस्य व्याख्या ताम्रपर्णी-वंशविभूषणैः श्रीमद्भिः श्रीनिवासाचार्यैः प्रणीता। ताम्रपर्णीवंशमूलपुरुषाः श्रीमन्तः नारायणाचार्याः, आर्याचार्या इति प्रथितानां नैकविद्वज्जनाराधितकमनीय-चरणानां नरसिंहाचार्याणां शिष्यप्रवराः। एते पुनः श्रीमदुत्तरादिमठाधीशानाम् अभिनवामृत-अभिनवगदा-अभिनवताण्डवकर्तॄणां श्रीमत्सत्यनाथतीर्थ-श्रीमच्चरणानां समकालीनाः । श्रीमुष्णाचार्यैरनुगृहीतास्त्रयः टिप्पणीकाराः ताम्रपर्णीयवंशे अतीव प्रसिद्धाः- विठ्ठलाचार्याः, आनन्दतीर्थाचार्याः, श्रीनिवासाचार्या इति । तत्र ऐतरेयभाष्यव्याख्यानकाराः श्रीनिवासाचार्याः श्रीमदुत्तरादिमठाधीशानां श्रीसत्यपूर्णतीर्थस्वामिनामनुग्रहभाज इति ग्रन्थारम्भ-कृतस्तवनेनैव विज्ञायते। एते तु पञ्चविंशत्यधिकप्रबन्धप्रणेतृत्वेन विख्याताः। एतेषां तन्त्रसारसङ्ग्रहव्याख्या अस्मन्निदेशकवर्यैः श्रीमद्भिः नागसम्पिगे आनन्द-तीर्थाचार्यैः संशोधिता महीशूरप्राच्यविद्यासंशोधनालयद्वारा प्रकाशिता।

इयं च ऐतरेयभाष्यव्याख्या, भगवतःसर्वशब्दवाच्यत्वविषये कर्मनिर्णयटीकां उल्लिखन्ती 'परो दिवा पर एना पृथिव्या' इति मन्त्रव्याख्यानावसरे तत्त्वप्रदीपिकां विमृशन्ती महाव्रतयागस्वरूपनिरूपणावसरे मीमांसाप्रक्रियाभिज्ञतां प्रदर्शयन्ती तत्र तत्र सन्न्यायरत्नावली-न्यायसुधादिग्रन्थोक्तप्रमेयानुसन्धानपरायणा च विदुषामतीव तोषदायिकेति नातीव प्रतिपादनीयम्।

## कृतज्ञतासमर्पणम्

ग्रन्थस्यास्य यथामति शोधने पेजावरमठाधीशानां श्रीश्रीमद्विश्वेशतीर्थ-श्रीमच्चरणानां परमानुग्रह एव प्रधानं कारणम्। पूर्णप्रज्ञविद्यापीठे मादृशानाम् आश्रयप्रदानेन द्विविधवित्तप्रदानेन नैकविधमन्त्रोपदेशेन च अनुग्राहकाणां गुरुचरणानां प्रणतिततिभिरेव केवलाभिः कार्तज्ञ्यं व्याहरामि। तपःशरीराणां लोकानुग्रहतत्पराणां गुरुचरणानां सर्वदाऽनुग्रहं सादरं प्रार्थये।

विद्यापीठे अस्माकं न्यायवेदान्तशास्त्रग्रन्थपाठकाः विद्वत्प्रवराः श्रीमन्तः प्राचार्याः डि. प्रह्लादाचार्याः अधुना संशोधनमन्दिरस्यास्य अध्यक्षपीठे विराजमानाः मार्गदर्शनेन मामन्वगृह्णन्। तेभ्यः प्रणतयः विज्ञाप्यन्ते।

संशोधनमन्दिरस्य निदेशकाः श्रीमन्तः डा.आनन्दतीर्थाचार्यनागसम्पिगे महोदयाः आन्तं ग्रन्थरत्नमिदमवलोक्य अक्षरदोषादिशोधने महान्तमुपकारम् आदधुः। तेभ्यः सादरं प्रणतयः। अस्माकं सहोद्योगिनौ डा. राङ्गनाथकट्टि एवं डा. शङ्करनारायण अडिगमहाभागौ ग्रन्थस्यास्य निर्दिष्टभागस्य अक्षर-दोषनिवारणे साह्यमाचरितवन्तौ। तयोरपि वन्दनानि समर्पये।

गुर्वनुग्रहात् लब्धविद्योऽहं यथामति ग्रन्थमेनं समशोधयम्। अज्ञानेन अनवधानेन चात्र दोषाः सम्भाविताः। श्रीमदानन्दतीर्थभगवत्पादाचार्याणां यथायोग्यसेवा मया कर्तव्येति धिया प्रवृत्तोऽहमस्मि। हंसक्षीरन्यायेन विद्वांसः गुणग्रहणपराः भवेयुरिति विज्ञापयामि।

इति विद्वज्जनविधेयः

**पि. वेङ्कटरमण उपाध्यायः**

ग्रन्थपालकः, पूर्णप्रज्ञसंशोधनमन्दिरम्,

बेङ्गळूरु

# विषयानुक्रमणिका

| विषयाः | पृ.सं. |
|---|---|

| विषयाः | पृ.सं. |
|---|---|

| विषयाः | पृ.सं. |
|---|---|

| विषयाः | पृ.सं. |
|---|---|

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# महैतरेयोपनिषद्भाष्यम्

**भाष्यम्-**

**(मङ्गलाचरणम्)**

नारायणं निखिलपूर्णगुणैकदेहं
सर्वज्ञमच्युतमपेतसमस्तदोषम् ।
प्राणस्य सर्वचिदचित्परमेश्वरस्य
साक्षादधीश्वरमियां शरणं रमेशम् ।।

**ताम्रपर्णीश्रीनिवासाचार्यविरचिता रत्नमाला व्याख्या**

श्रीमदानन्दतीर्थार्यहृदयामलमन्दिरम् ।
जानकीजानिमानन्दसान्द्रं वन्दे निरन्तरम् ।। १ ।।
श्रीपद्मनाभतीर्थादीन् वन्दे विज्ञानवारिधीन् ।
टीकाकृतश्च विश्वेशतीर्थान् वेदान्तकोविदान् ।। २ ।।
नारायणाचार्यमुखेन्दुबिम्बाद् गलत्सुतत्वामृतपानतृप्तम् ।
श्रीविठ्ठलार्याभिधभूसुरेन्द्रं परं गुरुं मे पितरं नमामि ।। ३ ।।
श्रीमदानन्दतीर्थार्यशास्त्राम्भोधिं विमथ्य यः ।
ददौ ज्ञानामृतं मह्यं तं तीर्थार्यं गुरुं भजे ।। ४ ।।
श्रीसत्यनूत्नाभिधपूर्णवारिधेर्जातः सुविद्योरुकलाभिपूर्णः ।
तापं हरन्नोऽमृतवीक्षणेन श्रीसत्यपूर्णेन्दुरहो विराजते ।। ५ ।।
महैतरेयभाष्यस्य गुरूक्तार्थोऽनुवर्ण्यते ।
टीकाऽस्पष्टः सङ्ग्रहेण कृपां कुर्वन्तु सज्जनाः ।। ६ ।।

अथ भगवान् सर्वज्ञमुनिः 'एष पन्थाः' इत्यादावधिकं विशिष्टमिष्टं नारायणं

ग्रन्थादावुपश्लोकयन् शरणं प्रार्थयते – **नारायणमिति** ।। अहं नारायणं साक्षात् प्रत्यक्षतः शरणमियां नत्वन्य इव पारोक्ष्येणेत्यन्वयः । इतरपरित्यागेन शरणप्राप्तौ वैशिष्ट्यमिष्टत्वं च निमित्तमिति भावेन साक्षात् प्राणस्य मुख्यप्राणस्याधीश्वरं रमेशमिति चोक्तम् । प्राणाधीश्वरत्वमात्रेण तस्य वैशिष्ट्यं कुत इत्यतः सर्वेत्यादि प्राणविशेषणम् । ननु प्राणो ह्यनन्येश्वरः प्रसिद्धः तत् कथं नारायणस्तदीश इत्यतश्चोक्तम्– **साक्षात् प्राणस्याधीश्वरमिति** ।। नारायणो हि साक्षादव्यवधानेन प्राणस्येश्वरः तदन्यस्तस्येश्वरो नास्ति । तदभिप्रायेणानन्येश्वरत्ववचनम् । 'अनन्येश्वरता प्राणे तदन्येश्वरवर्जनात्' इति वचनादिति भावः । रमाया ईशकोट्यन्तर्भावान्नानुपपत्तिः ।

तदनेन प्राणान्तरङ्गत्वस्य सर्वेष्टदातृरमेशत्वस्य चोक्त्या प्राणावतारस्य स्वस्य परमेष्टो रमापतिरिति सूचितम् । प्राणस्य सर्वोत्तमत्वं भगवतस्तदुत्तमत्वं च 'ता अहिंसन्ताहमुक्थमस्मि' इत्यादावुक्तम् । रमेशत्वं 'चानकाममार' इत्यादौ ज्ञेयम् । वैशिष्ट्योपपादनाय **निखिलपूर्णगुणैकदेहमपेतसमस्तदोषमिति** विशेषण-द्वयम् । के ते गुणा इत्यत उपलक्षणत्वेनोक्तम्– **सर्वज्ञमिति** ।। दोषाभावविवरणार्थम् **अच्युतमिति** ।। 'अनित्यत्वं देहहानिः' (गी.ता.उ.महावराहवचनम्) इत्युक्तरीत्या चतुर्विधनाशरहितमित्यर्थः । इदं च विशेषणद्वयं उपलक्षणत्वेनैतद् ब्रह्मैतत् सत्यमित्योक्तम् । [1]'ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः' इति वक्ष्यमाण-त्वात् । सार्वज्ञमेतत्कर्मेति कर्मशब्दार्थान्तर्गतम् । 'कर्तृत्वात् कर्म मातृतः' इति वक्ष्यमाणत्वात् । अच्युतत्वमपि सत्यशब्दार्थः । 'सदातनं सत्यमिति नित्यमेवोच्यते' इति वचनात् । च्युतेरसाधुत्वेन 'सत्यं साधुस्वरूपतः' इति तदभावरूपाच्युतत्वस्य सत्यशब्दार्थतया भाषितत्वाच्च । **अपेतसमस्तदोषम्** इत्यस्य 'अपेतः समस्तानां दोषः संसारलक्षणो यस्मात्' इत्यर्थाङ्गीकारे पन्था इत्येतदप्युक्ततात्पर्यम् । 'नित्यं स्वप्राप्तिहेतुत्वात् पन्थाः' इति वक्ष्यमाण-

१. 'ब्रह्मायं गुणपूर्णत्वात्' इति ह.ती.पाठः ।

त्वात् । उत्तरभाष्ये 'ब्रह्म पन्थाः सत्यं कर्म' इति नारायणस्य वासुदेवाद्याः क्रमेण चतस्रो मूर्तय इति वक्ष्यमाणत्वात् तदनुसारेण मूलरूपिनारायणप्रशंसनाय **नारायणमिति** विशेष्यं निरदिक्षत्। वासुदेवादिरूपाभिप्रायेण निखिलेत्यादिविशेषणानि चेति सर्वमवदातम् ।

**भाष्यम्-**

**(उपनिषद इतिहासः)**

प्रादुर्बभूव भगवांस्तपसेतराया
नारायणोऽब्जजसुतस्य विशालनाम्नः ।
तस्मिन् गतेऽध्वरमभूत् सुरविप्रसङ्घो
निश्चेतनस्तदनु पद्मभवोऽमुमस्तौत् ॥

तेन स्तुतः स भगवान् गिरिशेन्द्रमुख्यान्
सर्वानबोधयदजेन सहैव तेऽथ ।
दासत्वमापुरत एव महत्सुराणां
दासत्वतः स महिदास इति प्रसिद्धः ॥

शृण्वत्सु तेषु भगवानवदद् रमायै
दिव्यां श्रुतिं स परमोऽतिमुदैतरेयीम् ।
सा बह्वृचैः प्रपठिता चतुराननास्याद्
यस्यां रहस्यमुदितं परमं हि विष्णोः ॥

महाभूतिश्रुतिः सैषा महाभूतिर्यतो हरिः ।
विशेषेणात्र कथितः सर्वज्ञः शाश्वतः प्रभुः ॥ इत्यृक्संहितायाम् ॥

**टिप्पणी -**

ऋष्याद्यज्ञानेऽनर्थोक्तेर्महिदास ऋषिर्देवतेति च वक्ष्यति । महिदासश्च

न नारायणादन्यः येनास्या उपनिषदो ब्रह्मविद्यात्वं स्यादिति भावेनाऽह– **प्रादुर्बभूवेति** ॥ अब्जजसुतस्य सकाशात् । ननु नायं महिदासो नारायणः । महिनां पूज्यानां ब्रह्मादीनां दास इति तन्नामनिर्वचनादित्यतः सोपोद्घातं तन्नामान्यथा निर्वक्ति– **तस्मिन्निति** ॥ तस्मिन्नध्वरं गते प्रविष्टे निश्चेतनः तत्प्रभया धर्षितत्वात् कर्तव्यज्ञानहीनः नित्यं तद्रूपपरिचयवत्त्वाच्चित्तक्षोभरहितः पद्मभवस्तमस्तौत् । अत एव भगवत्प्रसादादेव । तदभावे वयं तव दासाः स्म इति स्वात्मसमर्पणेऽपि सामर्थ्याभावादिति भावः । यद्वा, यत एवं दासत्वमापुरिति पौराणिकी कथा अतो महिनो दासा यस्येति विग्रहमाश्रित्य महतां सुराणां तद्दासत्वत एव स महिदास इति प्रसिद्धः । नतु महिनां दास इति तत्पुरुषाश्रयेण तस्य तद्दासत्वादित्यर्थः ।

ऋषिदेवते आह– **शृण्वत्स्विति** ॥ तेषु ब्रह्मादिषु शृण्वत्सूपश्रोतृषु सत्सु दिव्यां मुख्यतो देवाधिकारिकाम् । इतरापुत्रेणोपदिष्टत्वात् तत्प्रतिपादकत्वाच्चैतरेयीमित्युक्तार्थप्रमापनाय विशेषणम् । ब्रह्माऽप्यवान्तरऋषि-रिति भावेनोक्तम्– **सेति** ॥ चतुराननास्यादुपदिष्टा सा बह्वृचैः पठितेति योज्यम् । विष्णोर्महिदासादिरूपिणः । 'आह मां देवेभ्यो वेद ॐ मद्देवान् वेद' इत्यादौ तदवगमात् । ननु तर्हि महती भूतिर्लक्ष्मीर्यस्यां प्रतिपाद्यते सा महाभूतिरित्यन्यत्र प्रसिद्धसञ्ज्ञैवास्याः श्रुतेर्लक्ष्मीपरत्वमवगमयति, तत् कथं विष्णुप्रतिपादकत्वमित्यत आह– **महाभूतिश्रुतिरिति** ॥ महती भूतिरैश्वर्यरूपो हरिर्यस्यां सा महाभूतिरिति व्युत्पत्त्याश्रयणेन यतो महाभूतिर्हरिरत्र कथितोऽत एवैषा महाभूतिश्रुतिसञ्ज्ञिताऽतो न विरोध इत्यर्थः । ग्रन्थान्तरसाधारण्यव्यवच्छेदायोक्तम्– **विशेषेणेति** ॥ लक्ष्मीप्राणादेरप्यत्र प्रतिपादनात् कथमेतदित्यतश्चोक्तम्– **विशेषेण मुख्यत इति** ॥ कथनप्रकारमाह– **सर्वज्ञ इति** ॥ प्रथमवाक्ये 'एतत्कर्म' इत्यनेन सर्वज्ञः 'सत्यम्' इत्यनेन शाश्वतः ब्रह्मेत्यनेन प्रभुः पूर्णश्च कथितः । 'भू बहौ बहुः पूर्णतायाम्' इति धातोरिति ज्ञेयम् ॥

**उपनिषत्-**

**(हरावनन्यविश्वासिनो नैव दुर्गतिः)**

एष पन्था एतत् कर्मैतद् ब्रह्मैतत् सत्यं तस्मान्न प्रमाद्येत् तं नातीयान्न ह्यत्यायन् पूर्वे येऽत्यायंस्ते ह पराबभूवुः ॥

**(विश्वस्यतां विष्णुरित्यार्षवाणी)**

तदुक्तमृषिणा- प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अन्या अर्कमभितो विविश्रे । बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आ विवेशेति ॥

**भाष्यम्-**

एष एव सदा पन्था भगवान् पुरुषोत्तमः ।
नित्यं स्वप्राप्तिहेतुत्वात् कर्तृत्वात् कर्म मातृतः ॥
ब्रह्मैष गुणपूर्णत्वात् सत्यं साधुस्वरूपतः ।
क्वापि तं विस्मरेन्नैव त्यक्त्वा तं नेतरं व्रजेत् ॥
पूर्वे नैनं तत्यजुर्हि ब्रह्माद्यास्तेन संसृतेः ।
मुक्ताः श्रीश्च तदत्यागान्नित्यमुक्ता गुणाधिका ॥

**टिप्पणी -**

जीवमोक्षार्थं प्रवृत्तैषैतरेयी श्रुतिः । मोक्षस्य भगवत्प्रसादसाध्यत्वाज्ज्ञानं विनाऽत्यर्थप्रसादाभावात् तस्य च तदुपासासाध्यत्वाद् ब्रह्मज्ञानायाऽदौ तदुपासां विधत्ते– **एष पन्था इति** ॥ तत्रैष इति परामर्शविषयो न प्रतीयते प्रसिद्धपथाद्यैक्यं च प्रतीयतेऽतो यथावद् व्याचष्टे भगवानाचार्यः– एष एवेति ॥ महाव्रते पूज्यत्वेन प्रकृत एवेत्यर्थः । 'तस्मान्न प्रमाद्येत्'

इत्यस्य तं न विस्मरेदिति व्याख्यानम् । क्वापि कदाचिदपि सन्ततानुस्मरणलक्षणं ध्यानं कुर्यादिति यावत् । श्रवणमननयोरप्युलक्षणमेतत् । प्रयोजनाभावान्न जिज्ञासा कार्येत्यत **एष पन्था** इत्युक्तम् । तस्यार्थः– पुरुषोत्तम एव नित्यं नियमेन सायुज्यादिरूपस्वप्राप्तिहेतुत्वाज्जीवानां स्वरूपानन्दाविर्भावप्राप्ति-हेतुत्वाद्वा पन्था इत्युच्यत इत्यर्थः । तथा च स्वप्राप्तिलक्षणमोक्षस्य तत्प्रसादं विनाऽयोगात्, तदर्थं तज्ज्ञानाय तज्जिज्ञासा कार्येति भावः । ननु कर्मणाऽन्यत्र मोक्षश्रवणात् तत्प्रसादवैयर्थ्यमित्यत एतदेव कर्मेत्यक्तम् । तद् व्याचष्टे– **कर्तृत्वा-दिति** ।। कर्तृत्वान्मातृत्वात् सर्वज्ञत्वाच्च स एव कर्मेत्यर्थः । कर्मणा मोक्ष इत्यस्यापि सर्वजगज्जन्मादिकारणेन सर्वयोग्यताभिज्ञेन भगवतैव मोक्ष इत्यर्थ इति भावः । जीवव्यतिरिक्तेश्वराभावात् तस्य चाहमिति नित्यसिद्धत्वान्न जिज्ञास्यत्वमित्यतो जिज्ञास्यजीवत्वव्यावर्तकं लक्षणमुक्तम् - **एतद् ब्रह्मैतत् सत्यमिति** ।। तद् व्याचष्टे– **ब्रह्मेति** ।। जिज्ञास्यं खलु निर्दोषमनन्तगुणं विवक्षितं न तस्य सदोषाल्पगुणजीवाभेदो वक्तुं युक्त इति भावः । गुणपूर्णत्व-सम्भावनाय जगज्जन्मादिकारणत्वलक्षणमुक्तम्- **कर्मेति** ।। कर्तृत्वाल्लयकर्तृत्वाच्च कर्म । 'मानं ज्ञानं लयश्च' इति वचनाद् भाष्ये मातृत्वादित्यस्य लयहेतुत्वादि-त्यर्थः । ननु तस्यैव जिज्ञास्यत्वे देवतान्तरोपासाविधिवैयर्थ्यमित्यत उक्तम्- **तन्नातीयादिति** ।। तद् व्याचष्टे– **त्यक्त्वेति** ।। तत्परिवारतामृते नेतरं स्मरेदि-त्यर्थः । सर्वोत्तमत्वेन तदुपासनं कृत्वैव तत्परिवारत्वेन देवताः स्मर्तव्यास्तदतिक्रमेण न स्मर्तव्या इत्युक्तार्थे तात्पर्यद्योतनाय पुराकल्प उक्तः- **नह्यत्यायन् पूर्व इति** ।। अतिक्रमवतां विपरीतफलोक्तिपूर्वं निन्दार्थवाद उक्तो **येऽत्यायंस्ते ह पराबभूवुरिति** । अत्रानतिक्रमिणां फलाद्यनुक्त्या न्यूनतेत्यतः ते ह पराबभूवुरित्यस्मात्ते ह बभूवुरित्यंशमाकृष्य नह्यत्यायन् पूर्व इत्येतद् व्याचष्टे– **पूर्व इति** ।। पूर्वे ब्रह्माद्यास्तं नात्यायन् न तत्यजुस्तेन बभूवुः संसारान्मुक्ता बभूवुः । पूर्वा श्रीश्च तदत्यागात् तस्य भगवतः अत्यागात् । वायुजनकदिङ्नामकबाहुमत्त्वाद्युपा-सनान्नित्यमुक्ता पूर्णगुणत्वोपासनाद् गुणाधिका च बभूवेत्यर्थः । 'सोऽहं वायुं

दिशां वत्सं वेद मा पुत्र रोदं रुदम्' (छां. ३.१५.२) इत्यादिश्रुतेरिति भावः। उपनिषत् स्वोक्तार्थे प्रमाणमाह– **तदुक्तमिति** ।। तद् भगवदतिक्रमवतां पराभवस्तदनतिक्रमवतां विभव इत्येतदृषिणा हयग्रीवेणोक्तमित्यर्थः ।।

अयं मन्त्रार्थः–ह प्रसिद्धास्तिस्रः प्रजाः अत्यायमत्ययं भगवदतिक्रममीयुः प्राप्ता इति प्रसिद्धम्। तेन च स्वरूपात्यायं स्वरूपनाशमीयुः। तमः प्राप्ता इति यावत्। अन्यास्तिस्रः प्रजाः अर्कमर्कनामकमग्न्यन्तर्गतं भगवन्तम्। यद् बृहत्तेजसा बृंहणाद् बृहन्नामकमादित्यान्तर्गतं भुवनेष्वन्तस्तस्थौ तद्रूपम्। यः पवमानो हरितो दिश आविवेश तदन्तर्गतं रूपं वाऽभितस्तत् तद्योग्यसाधनैर्निविविश्रे निविविशिरे। 'इरयोर' इति सूत्रेणेर इत्यस्य रेभावः। मनसा प्रविष्टा उपासितवन्तः। उपासनया च नितरां भगवल्लोकं विविशिरे मुक्ता इति यावत् ।।२।।

**उपनिषत्-**

**'प्रजा ह तिस्रो अत्यायमीयुः' इति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादा 'न्यन्या अर्कमभितो विविश्र' इति ।।**

**भाष्यम्-**

**(तमोयाग्यास्त्रिविधाः)**

विहायस्ययनात् प्रोक्ता वयांसीति पिशाचकाः।
वर्तितज्ञानतो वङ्गा नरास्तैरवनं सदा।
अन्नरूपैर्गृध्नवो हि वङ्गावगधनामकाः ।।
राक्षसा असुरा ईरपादा इति समीरिताः।
धर्मो ज्ञानं च वैराग्यमैश्वर्यं चतुरात्मकः ।।

वायुर्देवोऽत्रासुराणामैश्वर्यगुण एव हि ।
ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् ॥
पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ।

**टिप्पणी -**

'प्रजाः ह तिस्रः' इत्युक्तास्तिस्रः प्रजाः का इत्यतस्तदनूद्य श्रुतिरेव व्याचष्टे– **यावैता इमा इति** ॥ वै लौकिकतया प्रसिद्धा यास्ता इमास्तिस्रः प्रजाः अत्यायमीयुरित्युक्तास्तानीमानि वयांसि वंगावगधाः ईरपादाश्चेति योजना । वयांसीत्यादिपदत्रयं व्याचष्टे– **विहायसीति** ॥ छांदोग्यभाष्ये 'वयांसि व्ययनात् प्रोक्ताविल्याकाशस्तथोच्यते' इत्युक्तेः 'विश्वक्षुषि व्योम्नि हरे परमात्मनि पक्षिणि' इति नानार्थरत्नमालायां चोक्तेर्विशब्दस्तावदाकाशवाची । तस्मिन्नयनात् सदा सञ्चारात् पिशाचा वयांसि । वं वर्तितमन्यैरुत्पादितं गं ज्ञानं येषां ते वङ्गा नराः । अन्नरूपैस्तैरवनं स्वरक्षणं गृध्नन्त्यपेक्षन्त इति राक्षसाः वङ्गावगध-नामकाः । वृतु वर्तने, गम्लृ गतौ, अव रक्षणे, गृधु अभिकाङ्क्षायाम् इति धातवः । नन्वसुराणां वाय्वंशत्वाभावात् कथमीरपादत्वमित्यत उक्तम्– **धर्म इति** ॥ वायुर्देवो धर्मो ज्ञानं वैराग्यम् ऐश्वर्यं चेति चतुरात्मकश्चतुर्गुणाभि-मानी । 'अत्र' गुणचतुष्टये । प्रजा इति तिस्रोऽत्यायमीयुरित्यस्यार्थः- **ते त्रय** इति । येऽत्यायन्नित्यस्यार्थः- **पराभूता इति** ॥ उपनिषदि 'येऽत्यायन्' इत्यनुवादस्य प्राप्तिपूर्वकत्वात् 'प्रजा ह तिस्रोऽत्यायमीयुः'इति मन्त्रानुसारेण 'येऽत्यायन्' इत्यतः पूर्वं 'तिस्रः प्रजा अत्यायमीयुः' इत्यध्याहर्तव्यमिति सूचनाय मन्त्रपादव्याख्यानानन्तरं 'येऽत्यायन्' इत्युपनिषदंशो व्याख्यातो बोध्यः ।

**उपनिषत्-**

ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद् भुवनेष्वन्तर-सावादित्यः पवमानो हरित आ विवेशेति ॥

वायुरेव पवमानो दिशो हरित आविष्टः ॥

॥ इति प्रथमं ब्राह्मणम् ॥

**भाष्यम्-**

**(मुक्तियोग्यास्त्रिविधाः)**

देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः ॥
आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ।
अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ॥
आ जनैरर्चितत्वात् स ह्यर्क इत्युच्यते हरिः ।
अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः ॥
कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ।
आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ॥
तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ।
आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ॥
मुच्यन्त ऋषयो नित्यं नान्यथा तु कथञ्चन ।
वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम् ।
संसारात् पावयित्वा यन्महानन्दे मिनोत्ययम् ॥
पवमानस्ततो विष्णुः व्याप्तः सर्वासु दिक्षु च ।
आश्रितो भगवान् सर्वैः सर्वत्रापि विशेषतः ॥
आश्रयात् पृथगुक्तोऽयं नित्यानन्दो रमापतिः ॥

**टिप्पणी -**

द्वितीयपादेऽपि तिस्रः प्रजा इत्यनुवर्तनीयमिति भावेनानूद्य व्याचष्टे— ता इमा इति ॥ तास्तिस्र इमास्तद्विलक्षणाः प्रजा इत्यर्थः । अर्कमित्यनूद्येम-

वायुर्देवोऽत्रासुराणामैश्वर्यगुण एव हि ।
ईरपादास्ततः प्रोक्तास्ते त्रयो विष्णुमत्यजन् ॥
पराभूतास्ततस्ते तु तमस्यन्धे निपातिताः ।

**टिप्पणी -**

'प्रजाः ह तिस्रः' इत्युक्तास्तिस्रः प्रजाः का इत्यतस्तदनूद्य श्रुतिरेव व्याचष्टे– **यावैता इमा इति** ॥ वै लौकिकतया प्रसिद्धा यास्ता इमास्तिस्रः प्रजाः अत्यायमीयुरित्युक्तास्तानीमानि वयांसि वंगावगधाः ईरपादाश्चेति योजना । वयांसीत्यादिपदत्रयं व्याचष्टे– **विहायसीति** ॥ छांदोग्यभाष्ये 'वयांसि व्ययनात् प्रोक्तावित्याकाशस्तथोच्यते' इत्युक्तेः 'विश्वक्षुषि व्योम्नि हरे परमात्मनि पक्षिणि' इति नानार्थरत्नमालायां चोक्तेर्विशब्दस्तावदाकाशवाची । तस्मिन्नयनात् सदा सञ्चारात् पिशाचा वयांसि । वं वर्तितमन्यैरुत्पादितं गं ज्ञानं येषां ते वङ्गा नराः । अन्नरूपैस्तैरवनं स्वरक्षणं गृध्नन्त्यपेक्षन्त इति राक्षसाः वङ्गावगध-नामकाः । वृतु वर्तने, गम्लृ गतौ, अव रक्षणे, गृधु अभिकाङ्क्षायाम् इति धातवः । नन्वसुराणां वाय्वंशत्वाभावात् कथमीरपादत्वमित्यत उक्तम्– **धर्म इति** ॥ वायुर्देवो धर्मो ज्ञानं वैराग्यम् ऐश्वर्यं चेति चतुरात्मकश्चतुर्गुणाभि-मानी । 'अत्र' गुणचतुष्टये । प्रजा इति तिस्रोऽत्यायमीयुरित्यस्यार्थः- **ते त्रय** इति । येऽत्यायन्नित्यस्यार्थः- **पराभूता इति** ॥ उपनिषदि 'येऽत्यायन्' इत्यनुवादस्य प्राप्तिपूर्वकत्वात् 'प्रजा ह तिस्रोऽत्यायमीयुः'इति मन्त्रानुसारेण 'येऽत्यायन्' इत्यतः पूर्वं 'तिस्रः प्रजा अत्यायमीयुः' इत्यध्याहर्तव्यमिति सूचनाय मन्त्रपादव्याख्यानानन्तरं 'येऽत्यायन्' इत्युपनिषदंशो व्याख्यातो बोध्यः ।

**उपनिषत्-**

**ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निं बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद् भुवनेष्वन्तर-सावादित्यः पवमानो हरित आ विवेशेति ॥**

वायुरेव पवमानो दिशो हरित आविष्टः ॥

॥ इति प्रथमं ब्राह्मणम् ॥

**भाष्यम्-**

**(मुक्तियोग्यास्त्रिविधाः)**

देवाश्च ऋषयो मर्त्यसत्तमा इति च त्रयः ॥
आश्रिता विष्णुमेवैकं त्रिस्थानस्थितमच्युतम् ।
अग्निस्थमाश्रिता मर्त्या विष्णुमर्काभिधं परम् ॥
आ जनैरर्चितत्वात् स ह्यर्क इच्युच्यते हरिः ।
अग्नौ कर्माणि कृत्वैव मानुषा मुक्तिभागिनः ॥
कर्मभिः शुद्धसत्त्वानां कर्मत्यागोऽपि नान्यथा ।
आश्रिताः सूर्यगं विष्णुमृषयो बृहदित्यसौ ॥
तेजसा बृंहणादुक्तो विष्णुरादित्य इत्यपि ।
आदानात् सर्ववस्तूनां स्वाध्यायेनामुमाश्रिताः ॥
मुच्यन्त ऋषयो नित्यं नान्यथा तु कथञ्चन ।
वायुस्थमाश्रिता देवाः पवमानाभिधं हरिम् ।
संसारात् पावयित्वा यन्महानन्दे मिनोत्ययम् ॥
पवमानस्ततो विष्णुः व्याप्तः सर्वासु दिक्षु च ।
आश्रितो भगवान् सर्वैः सर्वत्रापि विशेषतः ॥
आश्रयात् पृथगुक्तोऽयं नित्यानन्दो रमापतिः ॥

**टिप्पणी -**

द्वितीयपादेऽपि तिस्रः प्रजा इत्यनुवर्तनीयमिति भावेनानूद्य व्याचष्टे– ता इमा इति ॥ तास्तिस्र इमास्तद्विलक्षणाः प्रजा इत्यर्थः । अर्कमित्यनूद्येम-

मेवाग्निमिति व्याख्यानम् । तृतीयपादे भुवनेष्वन्तःस्थितं बृहत् किमित्यतस्तदनूद्य श्रुतिर्व्याचष्टे– **अद उ एवेति** ।। असावादित्य आदित्यनामा तदन्तर्गतः उ एव उच्चो विष्णुरेव । भुवनेष्वन्तर्विद्यमानमदो बृहदित्यर्थः । चतुर्थपादमनूद्य पवमानहरिच्छब्दयोरर्थमाह– **वायुरेवेति** ।। ता इमाः प्रजा अर्कमभितो निविष्टा इत्यत्र तिसृणामपि प्रजानामर्कनामकाग्न्याविष्टत्वं प्रतीयते । तदयुक्तं, प्रमाणविरोधात् । असावादित्य इत्यादावुपासकानुक्तिश्चेत्याशङ्क्य मूलेऽर्कमित्यनूद्याग्निमिति व्याख्यानम् । असावादित्य इत्यनन्तरं यस्तमिति शेषः । दिशो हरित आविष्ट इत्यनन्तरं च यस्तमिति शेषः । तथाच ता इमाः प्रजाः मनुष्योत्तमा ऋषयो देवाः क्रमेणार्कमग्निं योऽसावादित्यस्तं यो वायुर्हरित आविष्टस्तं चाभितः निविष्टा इत्यर्थमभिप्रेत्य व्याचष्टे– **देवाश्चेति** ।। तिसृणामपि त्रिस्थानस्थभगवदाश्रयत्वप्रतीतेरुक्तं विवृणोति– **अग्निस्थमित्यादिना** ।। अर्चतेः 'कृदाधारार्चिकलिभ्यः कः' इत्युणादिसूत्रेण कप्रत्यये बाहुलकात् कस्येत्सञ्ज्ञाभावे चार्कशब्दो निष्पन्नः । जनैरिति योग्यतया सम्बद्ध्यत इति भावेनार्कशब्दं व्याचष्टे– **आजनैरिति** ।। पूज्यत्वं च सर्वसाधारणमित्यत आ सम्यक् प्राधान्येनार्चितत्वादित्युक्तम् । यद्वा, आङ् ईषदर्थे । अल्पैर्जनैर्मानुषैरित्यर्थः । अभित इत्युक्तं मानुषाणां साधनमाह– **अग्नाविति** ।। नन्वग्नौ कर्माणि कृत्वैवेत्ययुक्तम् । यतीनां मुक्त्यभावप्रसङ्गात् । यत्याश्रमस्याग्निपूजादिकर्मत्यागरूपत्वादित्यत आह– **कर्मभिरिति** ।। होमादिकर्मत्यागलक्षणो यत्याश्रमोऽपि प्राक्कर्मभिः शुद्धान्तःकरणानामेव नान्यथाऽतो नोक्तविरोध इत्यर्थः । अद उ एव बृहदित्यस्य विवरणम्–**आश्रिता इति** ।। ऋषयः सूर्यगं विष्णुमाश्रिताः असौ सूर्यगतो विष्णुस्तेजसा बृंहणाद् बृहदित्युक्तः । सर्ववस्तूनां आदानादादित्य इत्यप्युक्त इति योजना । अभित इत्युक्तमृषीणां साधनमाह– **स्वाध्यायेनेति** ।। वायुरेव पवमान इत्यस्य विवरणम्– **वायुस्थमिति** ।। देवानां कर्मस्वाध्यायभक्त्याद्यखिलसाधनवत्त्वस्य प्रसिद्धत्वादत्र तदनुक्तिः । ननु मनुष्यैर्गायत्र्यादिस्वाध्यायेन सूर्यगतस्य ऋषिभिः कर्मभिरग्न्यन्तर्गत-

स्योभाभ्यां भक्तिपूर्वं वाय्वन्तर्गतस्याऽश्रितत्वाद् विशिष्योक्तिरयुक्तेत्यत आह– **आश्रित इति** ।। सर्वैः अधिकारिभिः सर्वैः साधनैः सर्वत्राग्र्यादौ ।। १ ।।

**।। इति प्रथमं ब्राह्मणम् ।।**

**उपनिषत्-**

**(उक्थमर्कमिति हरे रूपद्वयमधिदैवाध्यात्मगम्)**

**उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावयन्ति ।।**

**टिप्पणी -**

पूर्वखण्डे ब्रह्मपदेन गुणपूर्णत्वं तन्नातीयादिति सर्वोत्तमत्वं चोक्तम् । तत्सम्भावनाय कर्मपदेन जगत्कारणत्वं तद्धोकृत्वं चोक्तम् । तत्प्रमाण-सूचनपूर्वमधिदैवमध्यात्मं चोपपाद्यते– **उक्थमुक्थमित्यादिना** ।। यच्च वै प्रसिद्धाः देवाद्याः प्रजाः उक्थमुक्थमिति वदन्ति तदुक्थमिदं वक्ष्यमाणमेव नतु बृहती-सहस्रम् । तस्य तत्प्रतिपादकत्वेन तन्नामवाच्यत्वेऽपि प्रवृत्तिनिमित्तस्य जगदुत्थापकत्वस्याभावात् । नापि वायुरुक्थं तस्य पारतन्त्र्येण स्वावरोत्थापकत्वेन सर्वोत्थापकत्वाभावादिति भावः । इदं किमियं पृथिव्येव । अस्यां पृथिव्यां स्थितं तन्नामकं भगवद्रूपमेव । न पृथिव्यपि धरा ग्राह्या तस्या मुख्यतः पृथिवीपदप्रवृत्तिनिमित्ताभावादिति भावेन चैवकारप्रयोगः । तस्य मुख्योत्थापकत्वे शक्तत्वात् । पृथिवीस्थितस्योक्थत्वं कुत इत्यत उक्तम् - **इत इति** ।। यत्किञ्चेदमङ्कुरादीतः पृथिवीस्थाद्धि उत्तिष्ठति । न प्रसिद्धपृथिव्येवोक्थं तस्या गरुडवाहनत्वाभावादिति भावेन वाहनमुच्यते– **तस्याग्निरर्क इति** ।। भोग्यमुच्यते– **अन्नमशीतय इति** ।। प्रसिद्धान्नस्य भगवत्तर्पकत्वमपि भगवत्सन्निधानादिति

भावेनोक्तम्- **अन्नेन हीति** ।। हि यस्मादन्नेनान्नगतेनान्ननाम्ना भोज्यभूतेन निमित्तेन भगवानिदं सर्वमश्नुते तस्माद् भगवत्सन्निधानादेवान्नमशीतय इव बृहतीसहस्र-प्रतिपाद्यस्योक्थनामकस्य तर्पकम् । अधिदैवेऽप्युक्थनामकं रूपान्तरमुच्यते– **अन्तरिक्षमेवेति** ।। अत्राप्येवकारस्यान्तरिक्षगतं प्राधान्येन तन्नामकमित्यर्थः । एवमुत्तरत्राप्यन्तरिक्षमन्तरिक्षगतं तन्नामकं भगवन्तमनु तत्प्रेरणया पक्षिणः पतन्ति । नरादयश्च तत्प्रेरणयैवाश्वादीन् धावयन्ति ।

**उपनिषत्-**

**तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुतेऽसावेव द्यौरुक्थममुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च ।।**
**तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुत इत्यधिदैवतमथाध्यात्मम् ।।**

**टिप्पणी -**

'तस्य वायुरर्कः' इत्यादिपूर्ववदवतार्य व्याख्येयम् । द्युस्थस्योक्थत्वमुपपाद्यते– **अमुत इति** ।। अमुतो द्युस्थाद् वृष्टिप्रदानाद् हीदं सस्याद्युत्तिष्ठति तस्मादुक्थ-मित्यर्थः । इत्यधिदैवमुक्थनामकरूपाण्युक्तानि । अथाध्यात्मम् ।

**उपनिषत्-**

**पुरुष एवोक्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात् तस्य मुखमेवोक्थं यथा पृथिवी तथा तस्य वागर्कोऽन्नमशीतयोऽन्ने निहीदं सर्वमश्नुते ।।**
**नासिके एवोक्थं यथाऽन्तरिक्षं तथा तस्य प्राणोऽर्कोऽन्न-मशीतयोऽन्नेन हीदं सर्वमश्नुते तदेतद् ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव ललाटमेवोक्थम् ।।**

**टिप्पणी -**

अध्यात्मे देहे पुरुषनामा हरिरेवोक्थम् । न मुख्यप्राणः । नापि जीवः । कुत इत्यत उच्यते– **अयमेवेति** ।। अयं पुरुष एव महान् सर्वोत्तमः । कुतः? प्रजापतिः प्रजानां पतिर्जन्मादिकर्तृत्वात् । पित्रादिशरीरान्तर्गततया प्रजोत्पादकत्वाद् उक्थत्वं सम्भवतीति भावः । नन्वहमुत्थापक इति पित्रादिभिरनुभूयमानत्वात् कथं भगवतस्तदित्यत उक्तम्- **अयमेवेति** ।। महान् प्रजापतिरयमेवाहं उक्थ-मस्मीति विद्यामनुभवतीति विद्वान्न जीव इत्यर्थः । इदमुक्तं भवति । न जीवस्याबाधितोत्थापकत्वानुभवः। तथा सति तदनुव्यवसायप्रसङ्गात् । अहमुक्थमिति विद्यानुव्यवसायश्च भगवत एव । जीवस्याहमुक्थमित्यनुभवानुव्यवसायेऽपि न विद्यानुव्यवसायः । अनुभवस्याप्रमात्वात् ततस्तस्यैवोक्थत्वमिति । कैमुत्येन तस्योक्थत्वमुच्यते – **तस्य मुखमेवेति** ।। अङ्गभूतं मुखमेव किम्वङ्गीत्येव-कारार्थः । अधिदैवमध्यात्मं चोक्थत्वं समानमित्युच्यते– **यथा पृथिवीति** ।। एवमुत्तरत्र नासिकाप्रसङ्गाद् विद्यान्तरमुच्यते– **तदेतदिति** ।। नासिकायै नासिका-याम् । नेत्रयोर्मध्ये यदेतत् किञ्चिद् विनतं स्थानं तत् तत्र एतत् प्रसिद्धं ब्रध्नस्य सूर्यस्य विष्टपं लोकोऽस्तीत्यर्थः ।

**उपनिषत्-**

**यथा द्यौस्तथा तस्य चक्षुरन्नमशीतयोऽन्नेन हीदं सर्व-मश्नुते ।।**

**समानमशीतयोऽध्यात्मं चैवाधिदैवतं चान्नमेवान्नेन हीमानि सर्वाणि भूतानि समनन्ती३ ।।**

**अन्नेनेमं लोकं जयत्यन्नेनामुं तस्मात् समानमशी-तयोऽध्यात्मं चाधिदैवतं चान्नमेव तदिदमन्नमन्नादमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च ।।**

**टिप्पणी-**

अध्यात्ममधिदैवं चान्नान्तर्गतस्य तन्नाम्नो भगवतोऽन्नत्वमेकप्रकारमित्युच्यते– **समानमशीतय इति** ।। अध्यात्ममधिदैवं चाशीतय इवान्नमन्ननामकं तदन्तर्गतं रूपं समानमेकप्रकारमेवेत्यर्थः । अन्नशब्दनिर्वचनपूर्वकं साम्यमेवोपपाद्यते– **अन्नेन हीति** ।। सर्वाणि भूतान्यन्नेन समनन्ति चेष्टन्ते । तथाच आनयतीत्यन्नमिति निरुक्तं भवति । प्रकारान्तरेण निर्वचनपूर्वकं साम्यमुच्यते– **अन्नेनेमं लोक-मिति** ।। अन्नेन दीयमानान्नान्तर्गतरूपेणाध्यात्मगत-देवताहरितुष्टिद्वारा जन्मान्तरे इममन्नपानादिमन्मनुष्यलोकं जयति । तथा पुरोडाशसोमाद्यन्नान्तर्गतरूपेण देवतातुष्टिद्वाराऽमुं देवलोकं च जयति प्राप्नोतीत्यर्थः । एतेनाद्यते मनुष्यदेव-लोकप्रापकतयोपजीव्यत इत्यन्नमिति निरुक्तं भवति । एवमुपपाद्य उपसंह्रियते– **तस्मादिति** ।। प्राक् पृथिवीगतस्य प्रसिद्धान्नभोक्तृत्वं तद्गततन्नामकस्वभोक्तृत्वं चोक्तम् । एवं द्युस्थस्यापि । अधुना तदनुवादपूर्वकं न केवलमेतावत् किन्तु पृथिवीस्थस्य द्युलोकस्थभगवदभिन्नत्वं तदत्तृत्वं च । द्युस्थस्यापि पृथिवीस्थान्नत्वं तदत्तृत्वं चास्तीत्युच्यते– **तदिदमिति** ।। इयमेव पृथिवी । अस्यां पृथिव्यां विद्यमानं यद् भगवतः स्त्रीरूपं तदिदं अन्नमन्नादं च अद्यमत्तृ च । अद्यत्वस्योपपा-दनम्- **इतो हीति** ।। यत्किञ्चिदिदं सर्वं धान्यादि इतः पृथिवीत उत्तिष्ठतीति प्रसिद्धम् । तथाऽन्नस्रष्टृत्वादत एव 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तै.उ. २.६) 'पृथिव्या ओषधयः ओषधीभ्योऽन्नम्' (तै.उ. २.२) इत्युक्तरीत्या स्वसृष्टान्नेऽन्ननामकरूपेण प्रविष्टत्वाद् अन्नस्रष्टृतयोपजीव्यत्वादुपजीव्यत्व-लक्षणाद्यत्वस्यान्नशब्दप्रवृत्तिनिमित्तत्वात् पृथिव्या अन्नत्वमिति भावः ।

**उपनिषत्-**

**यद्ध किञ्चेदं प्रेता३इ ।।**

**तदसौ सर्वमत्ति यदु किञ्चातः प्रैती३ तदियं सर्वमत्ति**

**सेयमित्याद्याऽत्र्यत्ता हवा आद्यो भवति न तस्येशे यं नाद्याद् यद्वैनं नाद्युः ॥**

॥ इति द्वितीयं ब्राह्मणम् ॥

**टिप्पणी -**

पृथिवीलोकात् प्रेत्य गच्छमानस्य द्युस्थभगवद्भोग्यत्वात् तदन्तर्यामिणश्च तथात्वात् पृथिव्या अन्नत्वमित्युच्यते-- **यद्धेति** ॥ इदं पृथिव्यां विद्यमानं यत् किश्चन मनुष्यादि प्रेता प्रेत्येव गच्छत्येव । तत्सर्वमसौ द्युलोकस्थोऽत्तीत्येतत् तावत् प्रसिद्धम् । अत्तृत्वस्योपपादनम् ॥ **यदु किश्चेति** ॥ उ एव अतो द्युलोकाद् यत्किश्च भुवं प्रैति तत्सर्वमियं पृथिवीगतः स्त्रीरूपो हरिरेवात्ति सेयं पृथिवीगता स्त्रीमूर्तिरिति । अनेन प्रकारेणासम्यगाद्यात्री च द्युस्थस्य भोग्या तदत्त्री चेति यावत् । नचाद्यात्तृरूपयोर्भेदोऽस्तीत्युच्यते– **अत्ता ह वेति** ॥ अत्तैव भगवानासम्यगाद्यो भवति नानयोर्भेद इति ह वा प्रसिद्धम् । यद्वा सर्वात्तैव भगवान् सर्वैरुपजीव्यत्वादाद्यो भवति । भगवतः सर्वभोक्तृत्वं सर्वोपजीव्यत्वं च नित्यमेकप्रकारमेव । नतु केनापि बलवत्पुरुषेण विघटयितुं शक्यमित्युच्यते– **न तस्येति** ॥ अयं पुरुषो यथा सर्वलोकान्नाद्यात् यद्वा सर्वलोका एनं नाद्युर्नोपजीवेयुस्तथा कर्तुं कश्चन नेशे नेष्ट इति ॥ २ ॥

**भाष्यम्-**

**(जगदुत्पादनाद् विष्णुरुक्थनामा)**

उत्थापनादुक्थनामा स एव पृथिवीस्थितः ।
प्रथितः पृथिवीनामा सोऽन्तरिक्षाभिधोऽत्रगः ॥
अन्तरीक्ष्यो यतो द्युस्थो द्युनामाऽतिप्रकाशनात् ।
अध्यात्मे च निविष्टोऽसौ पुरुषाख्यो जनार्दनः ॥

पूर्षु स्थितत्वात् स महान् प्रजानां पतिरेव च ।
अहमुक्थमिति ह्येतां विद्यामनुभवत्यसौ ॥
पृथक् पृथक् च तस्याङ्गान्युक्थानि जगदीशितुः ।
अग्निवातदिनेशानामुत्थानानि पृथक्पृथक् ॥
वदनं नासिका नेत्रमित्येतानि परात्मनः ।

**टिप्पणी -**

अब्रह्मविद्यात्वप्रतीतेः खण्डं प्रमाणेनैव व्याचष्टे– **उत्थापनादित्यादिना** ॥ उत्थापनात् सर्जनात् उक्थपदार्थमाह– **उत्थापनात् सृष्टिकर्तृत्वादिति** ॥ तदुक्थमियमेव पृथिवीत्यस्यार्थः– **स एवेति** ॥ प्रथितः प्रथिमातो विस्तारतः पृथुत्वादिति यावत्। अध्यात्ममित्यस्यार्थः–**अध्यात्मे चेति** ॥ आत्मानमधिकृत्य भोगसाधनत्वेन वर्तमाने शरीरे चासौ पुरुषाख्यो जनार्दनः वासुदेवः प्रद्युम्नो नारायणो निविष्टः । 'प्रकृतौ महतः स्रष्टा परमः पुरुषो मतः । तदेव वासुदेवाख्यम्' (भाग.ता. ३.२७.२०) इति वासुदेवे, 'प्रद्युम्नः पुरुषेत्युक्तः पूरयेत् स जगद् यतः' इति प्रद्युम्ने, 'नारायणाख्यः पुरुषः' (भाग.ता. ११.६.१६) इति नारायणे पुरुषपदप्रयोगात् । कुतः पुरुषाख्यः पूर्षु देहेषु स्थितत्वात् पुरुष एवोक्थमिति जीवस्योक्थत्वमुक्त्वा तस्योक्थत्वोपपादनाय प्रजापत्यैक्यमुच्यत इति प्रतीतिं वारयितुं पुरुषपदार्थमुक्त्वा तस्य गुणसमर्पणायायमेवेत्युच्यत इति भावेन व्याचष्टे– **स महानिति** ॥ स जनार्दन एवेत्यन्वयः । अहमुक्थमस्मीति विद्यादित्यस्यार्थः– **अहमुक्थमिति** ॥ विद्यामत्त्यनुभवतीति विद्यात् । तस्य मुखमेवोक्थं नासिके एवोक्थं ललाटमेवोक्थमित्यस्यार्थः– **पृथगिति** ॥ अङ्गानि चाङ्गान्येव । यथा पृथिवी तथा यथाऽन्तरिक्षं तथा यथा द्यौस्तथेत्यत्र भगवदङ्गानामुत्थापकत्वं नौपचारिकं किन्तु पृथिव्यादिवन्मुखमित्युत्थापकत्वं दृढीकृतं तत् कथमित्यत उक्तम्– **अग्नीति** ॥ नेत्रमित्यनेन मूलस्थललाटशब्देन तत्सन्निहितं नेत्रमुपलक्ष्यत इति व्याख्यातं भवति ।

**भाष्यम्-**

**(शस्त्रमन्त्रवदन्नं तृप्तिकरम्)**

**तृचाशीतिविभिन्नस्य शस्त्रस्यान्नत्वहेतुतः ॥**
**विष्णोस्तृचाशीतिवत् स्यात् प्रसिद्धान्नमिति स्फुटम् ।**
**अन्नाभिमानिदेवश्च तृचाशीत्याश्च देवताः ॥**
**सोम एव ततश्चान्नमशीतय इतीरितम् ।**
**अदनाघ्राणदृष्टाख्यभोगत्रयविभागतः ॥**
**मुखनासाचक्षुषां तद्भोग्यमन्नं हरेः श्रुतम् ।**

**टिप्पणी -**

'अन्नमशीतयः' इत्यत्र लुप्तोपमा । प्रसिद्धमन्नं तस्य हरेरशीतय इव तर्पकं भोग्यमित्यर्थमभिप्रेत्य व्याचष्टे– **तृचेति** ॥ तिसृणां ऋचां समाहारः तृचं तृचस्याशीतिस्तद्रूपेण विभिन्नस्य शस्त्रस्य शंसनस्यान्नत्वहेतुतस्तर्पकत्वात् प्रसिद्धान्नं तृचाशीतिवद् विष्णोरन्नमित्युक्तं स्यादित्यर्थः । एवं लुप्तोपमात्वेन व्याख्याय सामानाधिकरण्येनापि व्याचष्टे– **अन्नाभिमानीति** ॥ आद्यश्चो यस्मादित्यर्थे । यस्मादन्नाभिमानी देवः सोम एव तृचाशीत्याश्च देवताभिमानी अतश्चान्नमशीतय इतीरिता इत्यर्थः । तथाच तस्य पृथिव्यादिस्थस्य भगवतः अन्नं भोग्यान्नाभिमानी अशीतय अशीत्यभिमानी सोम एवातः सोऽपि भोग्य इत्यर्थ उक्तो भवति । तृचानामशीतेरेकत्वविवक्षया तृचाशीत्या इत्येकवचनम् । ऋचां त्र्यशीतिविवक्षयाऽशीतय इति बहुवचनमनुसन्धेयम् । नन्वधिदैवं भगवद्रूपाणां रूपरसगन्धादिप्रसिद्धान्नभोगः पञ्चभिरिन्द्रियैरुपपद्यते । अध्यात्मं वाक् प्राणचक्षुर्गतानां भगवद्भागादीनां तु कथमित्यत आह– **तद्भोग्यमिति** ॥ तत् प्रसिद्धमन्नं हरेर्मुखस्यादनाख्य-क्रियाविषयतया नासाया घ्राणाख्यभोगविषयतया चक्षुषो दृष्टिलक्षणभोगविषयतया श्रुतमित्यर्थः ।

**भाष्यम्-**

**(श्येनाकारचितिगगरुडारूढो विष्णुरर्कः)**

अरणं गमनं यस्मादर्कः शीघ्रगतित्वतः ॥
श्येन एव तदाकारा चितिरर्कपदोदिता ।
सुपर्णप्रतिमा सा यत् तदारूढो जनार्दनः ॥
तस्मात् तस्यार्क इति सा प्रोच्यते वैदिकैः पदैः ।
योऽसौ चितिगतो वीन्द्रः सोऽग्निवातरविष्वपि ॥
तथा वाक्प्राणचक्षुष्षु तस्मात् तेऽर्काः प्रकीर्तिताः ।
तेषु स्थिते सुपर्णे च रूपभेदैः पृथक्पृथक् ॥
स्थितो विष्णुस्तदर्कास्ते तस्मादेव प्रकीर्तिताः ।

**टिप्पणी -**

'तस्याग्निरर्कः' इत्यादौ विवक्षितमर्कशब्दार्थमाह– **अरणमिति** ॥ अर्कशब्द-प्रकृतिऋधात्वर्थरूपमरणं यस्माद् गमनं ऋ गताविति धातोः । तस्माद् 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेन शीघ्रगतित्वाच्छ्येन एवार्कः। 'ऋ गतौ' इति धातोः कन्प्रत्यये गुणे चार्कशब्दो निष्पन्न इति भावः । अस्तु श्येनोऽर्कः किमत्र वाहनतया स एव ग्राह्य इत्यत आह– **तदाकारेति** ॥ श्येनाकारा षष्ट्युत्तरशतत्रयेष्टका सन्निवेशलक्षणचितिरत्रार्कपदोदितेत्यर्थः । ननु भगवद्वाहने वक्तव्ये चितेरुक्तिर्न सङ्गतेत्यत उक्तम्– **सुपर्णप्रतिमेति** ॥ सुपर्णाभिमन्यमानेत्यर्थः । तथा चार्कशब्दश्चित्यभिमानिसुपर्णपर इति भावः । तस्यार्क इत्यस्यार्थमाह– **यस्मादिति** ॥ यस्माद् हरिः श्येनाकार-चित्यन्तर्गतसुपर्णारूढः तस्मात् सा सुपर्णाधिष्ठिता चितिस्तस्यार्क इति प्रोच्यत इत्यर्थः । अग्निरर्को वायुरर्क आदित्योऽर्कः वागर्कः प्राणोऽर्कश्चक्षुरर्क इति षण्णामर्थमाह– **योऽसाविति** ॥ तेऽग्न्यादयः । तस्याग्निरर्क इत्यादिविशिष्टवाक्यार्थ-

माह– **तेष्विति** ॥ अग्न्यादिष्वित्यर्थः । एतेन 'तस्याग्निरर्कः' इत्यादिवाक्यषट्कस्याग्निरग्न्यधिष्ठितोऽर्क इत्यादिविशिष्टवाक्यार्थमाह– **तेष्विति** ॥ अग्न्यादिष्वित्यर्थः । एतेन 'तस्याग्निरर्कः' इत्यादिवाक्यषट्कस्याग्निरग्न्यधिष्ठितोऽर्कः श्येनाकारचितिप्रतिमको गरुडस्तस्य वाहनभूत इत्यादिरर्थ उक्तो भवति ।

**भाष्यम्-**

**(जीवदेहे विष्णुर्व्याप्तः)**

व्याप्तत्वाज्जीवदेहेषु मुखे विष्णोर्मुखं स्मृतम् ॥
नासयोर्नासिका विष्णोरक्ष्णोरेव तदक्षिणी ।
जीववाक्प्राणचक्षुष्षु तद्वागाद्यास्ततः स्थिताः ॥
विष्णोर्वाग् भार्गवो रामः प्राणोऽस्य नरकेसरी ।
चक्षुस्तु कपिलो विष्णुरग्न्यादीनां च कारणम् ॥
जीववागादिसंस्थं च सुपर्णमधिसंस्थिताः ।
अविशेषोऽपि भगवान् पूर्णैश्वर्यस्वरूपतः ॥
अङ्गाङ्गित्वेनैक एव स्वानन्दानुभवे स्थितः ।
स एव व्यूह्य चात्मानं पृथग्रूप इव स्थितः ॥
सुपर्णनामा भगवान् सुपर्णे च व्यवस्थितः ।
अग्न्यादिषु च तन्नामा वासुदेवः स संस्थितः ॥
अन्ननामा स एवान्ने चेष्टयन् सर्वमास्थितः ।
अन्ने स्थितस्स एवेशो ह्यन्नदातृगतिप्रदः ॥

**टिप्पणी -**

पृथक्पृथक् च तस्याङ्गानीत्युक्तं विवृणोति–**व्याप्तत्वादिति** ॥ मुखे आस्ये । मुखमेवोक्थमित्यादेः स्थूलदेहे भगवतो व्याप्तत्वात् स्थूलदेहवागिन्द्रियगोलके आस्ये स्थितं भगवदास्यमुक्थमित्याद्यर्थमभिधाय जीवचैतन्यस्य वागिन्द्रियगोलके विद्य-

मानं विष्णोर्वागिन्द्रियगोलकमुक्थं घ्राणगोलके नासिकायां विद्यमानं भगवतो नासिकाख्यं गोलकमुक्थम्। चक्षुर्गोलके अक्षणि विद्यमानं चक्षुर्गोलकमुक्थ-मित्यर्थान्तरमाह– **जीववागिति** ॥ अत्र वागादिशब्देन गोलकमुच्यते । न च जीवचैतन्यस्य भगवतश्चेन्द्रियातिरिक्तगोलकाभाव इति वाच्यम्। लोकसिद्धस्य गोलकेन्द्रियभेदस्य विशेषशक्त्यङ्गीकारे बाधकाभावात्। अत एव 'विष्णोश्चक्षुर्निमी-लने।' 'निमीलिताक्षेषु सुरेषु विष्णुना आसमन्तान्निमीलिताक्षमभवत्' इत्यादा-वक्ष्युन्मीलननिमीलनादिगोलकक्रियाविशेषप्रतिपादनं सङ्गच्छत इति बोध्यम्। ततो जीवे व्याप्तत्वादेव वागादीनि च भगवतो रूपाणीत्याह– **विष्णोरिति** ॥ पृथिव्यादिस्थस्याग्न्याद्यधिष्ठानान्तरस्थसुपर्णाधिष्ठितत्ववद् देहजीववागादिगोलकगतस्य भगवद्वागादेर्देहजीववागादीन्द्रियाधिष्ठितसुपर्णवाहनत्वं विवक्षित्वा मुखमेवोक्थं वागर्कः । नासिके एवोक्थं प्राणोऽर्कः । ललाटमक्षिण्युक्थं चक्षुरर्क इति गोलकाभि-प्रायेणोक्थानि निरूप्येन्द्रियाभिप्रायेण वाहननिरूपणं कृतमिति भावेनाऽह– **जीव-वागादिसंस्थं च सुपर्णमधिसंस्थिता इति** ॥ जीववागादिगोलकगता भार्गवादयो जीववागादीन्द्रियगतसुपर्णारूढाः, चशब्दाद् देहवागादिगोलकगता भार्गवादयोऽपि तत्तदिन्द्रियगतसुपर्णारूढा इति गम्यते। ननु यदि भार्गवादीनामेव वागादित्वं तर्हि कथं तस्य 'मुखमेवोक्थम्' इत्यादिना पुरुषस्य भार्गवादेश्चाङ्गाङ्गिभावः? तद्रूपाणामभेदादिन्द्रार्जुनादाविव विशेषाभावाच्चेत्यत आह– **अविशेषोऽपीति** ॥ भगवान् यद्यप्येक एव इन्द्रार्जुनादिवद् विशेषरहितश्च तथाऽपि पूर्णाचिन्त्यैश्वर्य-रूपत्वादङ्गाङ्गित्वेनाङ्गाङ्गिभावेन स्वानन्दानुभवे स्थितः । स्वत एव स्वरूप-भूतानन्दानुभववान् भवति रमत इति यावत् । यदि भार्गवादीनां पुरुषाङ्गत्वं तर्ह्यङ्गितया प्रतिभासो न स्यादित्यत आह– **स एवेति** ॥ अङ्गतया स्थित एव भगवान् आत्मानं व्यूह्य वाह्यवाहकरूपेण विभज्य पृथग्रूप इव स्थित इत्यर्थः । भोग्यत्ववद् वाहनत्वं च हरेरेव मुख्यमिति भावेनाप्याह– **स एवेति** ॥ स पृथिव्यादिस्थित एवाऽत्मानं व्यूह्य वाह्यवाहकरूपेण विभज्य

पृथग्रूप इव पृथग्भूत इव स्थित इत्यर्थः । अस्यैव विवरणं **सुपर्णनामेति** ॥ पृथिव्यादिस्थितो भगवान् वासुदेव एव सुपर्णनामा सुपर्णो च व्यवस्थितः । अग्न्यादिषु च तन्नामा स्थित इत्यर्थः । 'अन्नेन हीदं सर्वमश्नुते' इत्येतद् व्याचष्टे– **अन्ननामेति** । अन्ननामा स हरिरेवान्न आस्थित इति योज्यम् । यद्वा, अन्नेन हीमानि सर्वाणि भूतानि' इत्येतद् व्याचष्टे– **अन्ननामा स एवान्ने चेष्टयन् सर्वमास्थित इति** ॥ 'अन्नेनेमं लोकं जयत्यन्नेनामुम्' इत्यस्यार्थः- **अन्ने स्थित इति** ॥

**भाष्यम्-**

**(अद्यात्तृरूपवानेक एव)**

**तस्यान्तरिक्षगस्यैव नियमादनु पक्षिणः ।**
**पतन्ति धावयन्त्यश्वान् नरादींश्च नरादयः ॥**
**परस्य विष्णोर्धामत्वात् सूर्यो ब्रध्न इतीरितः ।**
**निहितश्चैव तल्लोको नासिकायां नतस्थले ॥**
**पृथिव्यां संस्थितो विष्णुः स्त्रीरूपेण द्युलोकतः ।**
**पतितं सर्वमेवात्ति तथा दिवि च संस्थितः ॥**
**इतो गतं सर्वमत्ति द्युनामा भगवान् परः ।**
**भोग्यत्वादाद्य इत्युक्त एवमाद्यात्तृरूपवान् ॥**
**एक एव परो विष्णुरत्ताऽन्यैरुपजीव्यतः ।**
**आद्यो भवति चान्येषां नोपजीव्यो भवेद् यथा ॥**
**हरिः स सर्वजीवानां न भुज्यन्ते यथाऽमुना ।**
**सर्वे लोकास्तथा कर्तुं नैवेष्टे कश्चन क्वचित् ॥**

**टिप्पणी -**

'अन्तरिक्षं वा' इत्यादेरर्थः- **तस्यान्तरिक्षगस्यैवेति** ॥ 'तदेतद् ब्रध्नस्य' इत्येतद्

व्याचष्टे– **परस्येति** ।। परस्य पूर्णस्य बृहत् परं ब्रह्म धीयते निधीयतेऽत्रेति व्युत्पत्त्या ब्रध्नः सूर्य इति भावः । यद्वा, 'बन्ध बन्धने' इति धातोः ब्रधीत्यादेशे नक्प्रत्यये च ब्रध्नशब्दो निष्पन्नः । **'बन्धेर्ब्रधिबुधी च'** इत्युणादिस्मरणात् । तथा च विष्णुरत्र बद्ध्यते सम्बद्ध्यत इति सूर्यो ब्रध्नः तस्य तात्पर्यम्- **परस्येत्यादि** ।। 'यदु किञ्चातः' इत्यस्यार्थः- **पृथिव्यामिति** ।। 'यद्ध किञ्च' इत्यस्यार्थः-**तथेति** ।। सेयमित्याद्यात्रीत्येतत् सेयं भगवन्मूर्तिरिति पूर्वोक्तप्रकारेण स्वयंभोग्यत्वादाद्या स्वभोक्तृत्वादत्त्रीत्यर्थतया व्याचष्टे– **भोग्यत्वादिति** ।। परः पूर्णो विष्णुर्भोग्यत्वादासम्यगाद्य इत्युक्तः स्वात्री चेत्येवमाद्यात्तृरूपवानिति योजना । अत्ता ह वा आद्यो भवतीत्यस्यार्थः । आद्यात्तृरूपवानेक एव परो विष्णुरिति । तदेव वाक्यं प्रकारान्तरेण व्याचष्टे– **अत्तेति** ।। अन्येषा-मत्ताऽन्यैरुपजीव्यत्वादाद्यो भवतीति योजना । न तस्येशेऽयमित्यस्यार्थः- **नोपजीव्य इति** ।। २ ।।

**।। इति द्वितीयं ब्राह्मणम् ।।**

**उपनिषत्-**

**(सृष्टिकर्ता श्रीहरिः)**

**अथातो रेतसः सृष्टिः प्रजापते रेतो, देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग् वाचो रेतः कर्म ।। तदिदं कर्मकृतमयं पुरुषो ब्रह्मणो लोकः स इरामयो यद्धीरामयास्तस्माद्धिरण्मयो हिरण्मयो हवा अमुष्मिन् लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद ।। ३ ।।**

**।। इति तृतीयं ब्राह्मणम् ।।**

**भाष्यम्-**

स एष भगवान् विष्णुः प्रजापतिरितीरितः ।
तस्माज्जाताः सर्वदेवाः ब्रह्माद्यास्तेभ्य एव च ॥
वृष्टिः सञ्जायते तस्याः सर्वा ओषधयोऽभवन् ।
ओषधीभ्योऽन्नमन्नाच्च रेतो रेतस एव च ॥
सर्वाः प्रजाः प्रजायन्ते सङ्कल्पो हृदयाभिधः ॥
प्रजाभ्यो जायते तस्माद् विकल्पाख्यं मनस्तथा ।
विकल्पाद् वाक्प्रचारश्च वाचा नामादिवेदनात् ॥
कर्म सञ्जायते तस्मात् कर्मणश्च जगत् पुनः ।

**टिप्पणी -**

प्रकृतस्य पुरुषनामकस्य वासुदेवाद्यात्मकस्य हरेर्महान् प्रजापतिरित्युक्तं प्रजापतित्वं प्रजापतित्वोपपादनपूर्वं स्वसृष्टदेवादिपुरुषाधिष्ठितत्वं चोच्यते– **अथात इति** ॥ अथाधिकारसम्पत्त्यनन्तरमतः मोक्षाख्यप्रयोजनस्य सत्वात् तस्य चाकारवाच्यात् प्रसन्नाद् भगवतः साध्यत्वात् प्रसादस्य च भगवज्ज्ञानसाध्यत्वात् तदर्थं रेतसः भगवद्रेतसः सम्बन्धिनी देवादिप्रजासृष्टिर्ज्ञातव्याऽतः सोच्यते। यद्वा, अथानन्तरम् अतो वासुदेवरूपाद् भवन्ती रेतःसम्बन्धिनी सृष्टिरुच्यत इत्यर्थः । अत्र देवाः प्रजापतेः ब्रह्मणः पुत्रा इत्यन्यथाप्रतीतेर्व्याचष्टे– **स एष इति** ॥ यः पूर्वखण्डेऽयमेव महान् प्रजापतिरितीरितः स एष भगवान् विष्णुरेव 'प्रजाकामो ह वै प्रजापतिः स मिथुनमुत्पादयते रयिं च प्राणं च इत्येतौ मे बहुधा प्रजाः करिष्यत' (षट्प्र. १.५-६) इत्यादिश्रुतिषु प्रजापतिरितीरित इत्यर्थः । देवा इन्द्राद्या इति प्रतीतिवारणाय व्याचष्टे– **तस्मादिति** ॥ जाता इत्यनेन रेतःशब्दस्य तत्परिणतशरीरभाज इत्यर्थ उक्तो भवति । देवपदस्य कुतो ब्रह्मादिसर्वदेवपरत्वमित्यतस्तज्ज्ञापकतया 'देवानां रेतः' इत्युत्तरवाक्यं व्याचष्टे– **तेभ्य इति** ॥ वृष्टिश्च ब्रह्मादिभ्य एव जायते नतु पर्जन्यादिभ्यः कतिपयेभ्यः ।

अतो देवपदेन ब्रह्मादीनामेव ग्रहणं युक्तमिति भावः । अत्र वृष्ट्यादिपदेन 'भूतं भूताभिमानी च' (ब्र.सू.अनु.) इति न्यायेनाभिमन्यमानाभिमानित-देहादेर्ग्रहणम् । तेषां रेतस्त्वं नाम यथायोग्यं तत्कार्यत्वम् । 'अन्नस्य रेतो रेतः' इत्यत्र प्रसिद्धं रेतः अन्नविकारस्त्वेन तत्कार्यमिति भावेन व्याचष्टे– **अन्ना-च्चेति** ।। जायत इत्युपस्कार्यम् । 'प्रजानां रेतो हृदयम्' इति हृदयशब्देन प्रसिद्ध-हृदयप्रतीतेः व्याचष्टे– **सङ्कल्प इति** ।। इत्थं करिष्य इति मनोवृत्तिविशेषं प्रति प्रजानां कर्तृत्वाद् हृदयाभिधः सङ्कल्पः प्रजाभ्यो जायत इत्यर्थः । ननु मनस इन्द्रियस्य कथं सङ्कल्पलक्षणवृत्तिकार्यत्वमित्यतो 'हृदयस्य रेतो मनः' इत्येतद् व्याचष्टे–**तस्माद् विकल्पाख्यं मन इति** ।। इत्थं करिष्य इति सङ्कल्प-रूपमनोवृत्तिजननानन्तरं हीदं नैवं करिष्य इति वृत्तेरुदयादिति भावः । 'मनसो रेतो वाक्' इत्यत्र वागिन्द्रियप्रतीतेर्व्याचष्टे– **विकल्पादिति** ।। सङ्कल्पादपि वाग्वृत्ति-रूपा जायते । तथाऽपि विकल्पाद् वाक्प्रचारो जायते । तदेवोपपादयति– **वाचेति** ।। विकल्परूपमनसा नामादिवेदनाद् वाचा वाक्प्रचारो जायत इत्यर्थः। 'यथा वाचा निशा दिशा' इत्युदाहरणाद् वाचेति प्रथमा । यद्वा वाचः कर्मेत्येतत् सोपपत्तिकं व्याचष्टे– **वाचेति** ।। वाचा उपदेष्टुर्वाक्प्रचारेणोपदेश्यदेवतानामादिवेदनाद् देवतानामकर्मक्रमादिवेदनात्तस्याः कर्म सञ्जायत इत्यर्थः । 'तदिदं कर्म कृतम्' इत्यत्र तदिदं प्राजापत्यादिकं कर्म कृतमित्यन्यथाप्रतीतेर्व्याचष्टे– **कर्मणश्च जगत्पुनरिति** ।। सर्वं जगत् पुनःपुनः कर्मणैव जायत इत्यर्थः ।

**भाष्यम्-**

**कर्माभिमान्ययं जीवः परस्य ब्रह्मणो हरेः ।।**
**आवासस्थानमुद्दिष्टो विशेषात् स इरामयः ।**
**इच्छानुरूपं तु सुखमिरेत्येव प्रकीर्तितम् ।।**
**इच्छानन्दप्रभूतत्वात् स एव च हिरण्मयः ।**
**हिरुक् सुखं हिरण्यं स्यात् बाह्यानन्दात् पृथग् यतः ।।**

**आधिक्यार्थे मयड् यस्मादधिकानन्दरूपतः ।**
**उत्सृज्य कर्मजं रूपं निजानन्दैकरूपकः ॥**
**एवं नारायणं जानन् सर्वलोकैककारणम् ।**
**तल्लोके दृश्यते भूतैर्मुक्तैरानन्दरूपकः ॥**

**टिप्पणी -**

नन्वचेतनस्य कर्मणः कथं सर्वजगत्कारणत्वं तदभिमानिजीवस्य कर्मपदेन विवक्षायां च तस्यैवादृष्टद्वारा कारणत्वमापन्नं नेश्वरस्येत्यत उक्तम्– **अयं पुरुष इति** ॥ अत्रायमिति परामर्शविषयं दर्शयन् व्याचष्टे–**कर्माभिमानीति** ॥ जीवकर्मणः प्रकृतत्वेन ममेदं कर्माहं कर्तेति तदभिमन्ता जीवोऽपि प्रकृत इति परामृश्यत इत्यर्थः । ब्रह्मावासत्त्वं सर्वसाधारणमित्यत उक्तं भाष्ये– **विशेषादिति** ॥ तथाच जीवस्य कर्माभिमानित्वात् तद्गतस्य परब्रह्मणस्तन्नियामकत्वात् जीवे स्थित्वा तेन कर्म कारयित्वा तं निमित्तीकृत्य भगवानेव सृजतीत्यर्थ इति भावः । ननु प्रयोजनाभावान्न भगवतः सृष्टिकारणत्वमित्यत आनन्दोद्रेकादेव सृष्टौ प्रवृत्तिरित्युच्यते– **स इरामय इति** ॥ तद् व्याचष्टे– **स इति** ॥ अयं पुरुषो यस्य ब्रह्मणो लोकः स ब्रह्मपदोक्तो हरिरिच्छानन्दभूतत्वादिच्छानुसार्यानन्द-पूर्णत्वादिरामय इत्यर्थः । 'स इरामयः' इति पुल्लिङ्गेन परामर्शार्थमेव **'परस्य ब्रह्मणो हरेः'** इत्युक्तम् । शब्दतो जीवस्य प्राधान्येन प्रकृतत्वेऽपि अर्थतः प्राधान्यात् तत्परामर्श इति सूचयितुं परस्येत्युक्तम् । कथमस्य शब्दलब्धत्वमित्यतो मयटः प्राचुर्यार्थत्वप्रसिद्धेरित्येतद् व्याचष्टे– **इच्छेति** ॥ इशब्द इच्छावाची तदनुरूपा रतिः सुखमेवेरेति प्रकीर्तितमित्यर्थः । अस्य स्वेच्छया पूर्णानन्दत्वे ज्ञापकमुच्यते– **यद्धीति** ॥ यद् यस्मादिरामयः स्वातन्त्र्येण पूर्णसुखस्तस्मादेव हिरण्मयोऽन्यथा तन्न स्यादित्यर्थः । तद् व्याचष्टे– **इच्छानन्दप्रभूतत्वादिति** ॥ स भगवानिच्छानु-सार्यानन्दपूर्णत्वादेव इरामय इत्यन्वयः । हिरण्मयपदार्थमाह– **हिरुगिति** ॥ यतः

बाह्याल्लौकिकानन्दाद् हिरुक् पृथक् विलक्षणं सुखं हिरण्यं स्यात् यस्माच्चाधिकार्थे प्राचुर्यार्थे, उपलक्षणमेतत् । तादात्म्यार्थे च मयट् । तत् तस्माद् बाह्यानन्दात् पृथगधिकानन्दरूपतो हिरण्मय इति शेषः । स एव हिरण्यमय एव हिरण्मय इति योजना । णशब्दवत् ण्यशब्दस्यापि निर्वृतिवाचकत्वादिति भावः । भगवतः स्वेच्छानुसारेण पूर्णसुखत्वाभावे तत्सुखस्य परायत्तत्वेन बाह्यानन्दवैलक्षण्यं न स्यादिति भावः । एवमानन्दोद्रेकादेव जगत्स्रष्टृत्वमुक्त्वा तज्ज्ञानिनः फलमुच्यते– **हिरण्मयो ह वेति** ।। यद्वा, कैमुत्येन हरेर्विलक्षणानन्दत्वमुच्यते– **हिरण्मयो ह वेति** ।। यद्वा, पूर्णानन्दत्वेन स्वप्रयोजनाभावेऽपि- 'श्रवणस्मरणार्हाणि करिष्यन्निति केचन' 'सोऽयं विहार इह मे तनुभृत्स्वभावसम्भूतये भवति' (म.ता.नि. १.५) इत्युक्तदिशा तज्ज्ञानिनां परमानन्दावाप्तिहेतुत्वात् सृष्टिर्न व्यर्थेति भावेनोच्यते– **हिरण्मय इति** ।। य एवं वेद स हिरण्मयः सम्भवति ह वा इत्यन्वयमभिप्रेत्य व्याचष्टे– **उत्सृज्येति** ।। एवमुक्तरीत्या पूर्णानन्दत्वात् स्वप्रयोजनाभावेऽप्यानन्दोद्रेकादेव सर्वलोककारणं जानन् कर्मजं रूपमुत्सृज्य निजानन्दरूपको भवतीत्यर्थः । तत्र मुक्तप्रत्यक्षं प्रमाणमुच्यते– **हिरण्मयः सर्वेभ्य इति** ।। य एवं वेद सोऽमुष्मिन् लोके हिरण्मयः सर्वैर्भूतैर्ददृशे दृश्यत इत्यर्थमभिप्रेत्य व्याचष्टे– **तल्लोक इति** ।। मुक्तस्य संसारिभिरनवलोक्यत्वात् कथमेतदित्यत उक्तं– **मुक्तैरिति** ।। यद्वा, उक्तविधया जगत्कारणत्वहेतु फलं वक्तुं जीवस्य स्वरूपमुच्यते– **स इरामय इति** ।। योऽयं पुरुषो ब्रह्मणो लोको विशेषेण भगवत्प्रतिमाभूतस्तत्प्रतिबिम्बः स इरामय इत्यर्थस्तद् व्याचष्टे– **स इरामय इत्यादिना** ।। इच्छानुरूपं भगवदिच्छानुरूपं तदनुसारिस्वेच्छानुरूपं वा । 'कामेन मे काम आगात्' **'सङ्कल्पादेव तच्छ्रुतेः'** (ब्र.सू. ४.४.८) इत्यादेः । भवत्वेवमिच्छानुसार्यानन्दरूपत्वं ततश्च किमित्यत उक्तम्– **यद्धीति** ।। तद् व्याचष्टे– **इच्छानन्दप्रभूतत्वादिति** ।। एवं जीवस्य योग्यतामुपपाद्य 'अथातो रेतसः सृष्टिः' इत्यारभ्योक्तसृष्टिकर्तृत्वज्ञानिनः फलमुच्यते– **हिरण्मयो ह वेति** ।। य एवं

वेद स हिरण्मयोऽमुष्मिन् लोके सम्भवति व्यज्यत इत्यर्थस्तद् व्याचष्टे–उत्सृज्येति ॥ ३ ॥

**॥ इति तृतीयं ब्राह्मणम् ॥**

**उपनिषत्-**

**(प्रपदोरूदरप्रभृतिशब्दानां प्रवृत्तिनिमित्तम्)**

तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत् प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात् प्रपदे तस्मात् प्रपदे इत्याचक्षते ॥

शफाः खुरा इत्यन्येषां पशूनां तदूर्ध्वमुदसर्पत् तावूरू अभवतामुरु गृणीहीत्यब्रवीत् तदुदरमभवदुर्वेव मे कुर्वित्यब्रवीत् तदुरोऽभवदुदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्मा हैव ता३इ ॥

ऊर्ध्वं त्वेवोदसर्पत् तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत् तच्छिरसः शिरस्त्वम् ॥

ता एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक् प्राणः श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद ॥

**भाष्यम्-**

तमिमं प्रथमज्ञानिपुरुषं चतुराननम् ।
वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ॥
यस्मात् प्रपेदे भगवान् प्रपदाच्चतुराननम् ।
तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ॥

**चतुर्मुखाकारवतां नृणां पादतळोपरि ।**
**प्रपदाख्या वर्ततेऽतो नतु पश्वादिनां क्वचित् ॥**
**अयादूर्ध्वं ततो विष्णुः प्रपदादूरुमत्र च ।**
**स्थित ऊरू च तावास्तामूरूर्ध्वगमनाद्धरेः ॥**

**टिप्पणी -**

ब्रह्मपदेन प्रकृतस्य वासुदेवस्य 'पुरुष एवोक्थमयमेव महान् प्रजापतिः 'इत्यध्यात्मं पुरुषनामकत्वमुक्थत्वं प्रजापतित्वं चोक्तम् । प्रजापतित्वमतीतखण्डे उपपादितमधुनाऽध्यात्मे निवेशप्रकार उक्थत्वं च प्रपञ्चेनोच्यते– **तं प्रपदाभ्यामित्या-दिना** ॥ तत्र 'तमिमं पुरुषम्' इति परामर्शविषयाप्रतीतेर्व्याचष्टे– **तमिम-मिति** ॥ प्रजापते रेतोदेवाः अयं पुरुषो ब्रह्मणो लोकः य एवं वेदेति च परमात् प्रथमजत्वेन तस्य मुख्यावासत्वेन मुख्यज्ञातृत्वेन च प्रस्तुतमित्यर्थः । यत् प्रपदाभ्यामित्यस्य ब्रह्म भगवान् वासुदेवः यद् यस्मात् प्रपदाभ्यामिमं पुरुषं चतुराननं प्रापद्यत तस्मात् प्रपदनादेव प्रपदे प्रपदनामके जाते । यस्मात् प्रपदनामके जाते तस्मात् प्रपदे इत्याचक्षते विद्वांस इत्यर्थमभिप्रेत्याऽह– **यस्मादिति** ॥ तस्मादित्यनूद्यार्थकथनम्- **तस्मात् प्रपदनादिति** । तथाचेयं भाष्ययोजना । तस्मात् प्रपदनात् प्रपदं नाम यस्मात् प्रपदनामकं तस्मात् प्रपदं नाम कीर्तितं विद्वद्भि-रिति । ननु चतुर्मुखस्य पादतलोपरिभागे हरेः प्रविष्टत्वेन तस्य प्रपदसञ्ज्ञकत्वेऽपि सर्वेषां नृणां पादोपरिभागे कथं प्रपदसञ्ज्ञेत्यतश्चोक्तम्– **तस्मात् प्रपदे इत्याचक्षत इति** ॥ तस्माच्चतुर्मुखाख्यप्रकृतपुरुषाकारवत्वाद् देवानामन्येषां पादोपरितनभागौ प्रपदे इत्याचक्षते इत्यर्थमभिप्रेत्य व्याचष्टे– **चतुर्मुखेति** ॥ चतुर्मुखाकार इवाऽकार-वतामिति हेतुगर्भविशेषणम् । चतुर्मुखाकारसदृशाकारवतां नृणां पादतलस्योपरिभागे प्रपदमित्याख्या वर्तत इत्यर्थः । चतुर्मुखाकारसादृश्यात् प्रपदनामेत्येतद् व्यतिरेकमुखेनोच्यते– **शफा इति** ॥ इतिशब्द आद्यर्थे । तस्मादित्यनुवर्तते । तस्मान्नृणां पादोपरिभागे प्रपदशब्दस्य चतुर्मुखप्रपदसादृश्यनिमित्तकत्वादेवान्यत्र

तदभावेनान्येषां नृभ्योऽन्येषां पशूनामश्वादीनां तदन्येषां पक्षिप्रभृतीनां पादतलोपरितनभागे शफाः खुरा इत्याद्याख्या वर्तते नतु प्रपदाख्येत्यर्थमभिप्रेत्य तात्पर्यतो व्याचष्टे– **अतो नतु पश्वादीनामिति** ॥ अतः प्रवृत्तिनिमित्ताभावादेव पश्वादीनां पादतलोपरि क्वचिदपि प्रपदाख्या नास्तीत्यर्थः । ऊरु इत्यत्र ऊ उरु इत्यक्षरविभागः । उर्वतिशयेन ऊ ऊर्ध्वगमनात् तावङ्गविशेषौ ऊरू इत्यर्थमभिप्रेत्य व्याचष्टे– **ऊरूर्ध्वगमनादिति** ॥

**भाष्यम्-**

किञ्चिदूर्ध्वं ततो गत्वा वायुना सह केशवः ।
वायुमाहोरुगरणं कुर्वत्र स्थित इत्यपि ॥
उर्वेव गरणं चक्रे वायुर्यत्र स्थितः सदा ।
तत् स्थानमुदरं नाम पुनराह जनार्दनः ॥
उरु स्थानं निवासं मे कुरु विस्तारसंयुतम् ।
तथाऽकरोत् स वायुश्च तदुरोऽभूदुरुत्वतः ॥
उरोमध्ये च हृदयं [१]तत्र वासो हरेः सदा ।
सूक्ष्मदृष्टियुता ये तु मुनयः शार्कराक्ष्यकाः ॥
उदरे ते परं ब्रह्म वासुदेवमुपासते ।
हृत्स्थमेव परं विष्णुं ध्यायन्त्यारुणयः सदा ॥
उदरस्थं च हृद्गं च ते उभे ब्रह्म तत् परम् ।
एकमेव यतस्तस्मादुभये ह्यपि तद्विदः ॥
तत ऊर्ध्वं गतो विष्णुर्वायुना सह दैवतैः ।
स्थितो मूर्धनि देवेशः श्रितोऽसाविति तच्छिरः ॥

---

१. तत्राऽवासो

**टिप्पणी -**

'उरु गृणीहीत्यब्रवीत् तदुदरमभवत्' इत्यस्य साकाङ्क्षत्वादध्याहारपूर्वं व्याचष्टे– **किञ्चिदूर्ध्वमिति** ।। उरु सम्यग् गृणीहि स्तुहीत्यस्य व्याख्यानम्- उरुगरणं कुर्विति । गरणं निगरणं उच्चारणं स्तुतिम् । 'गॄ निगरणे' इति धातोर्निगरणमभ्यवहारं कुर्वित्यर्थ इति भावः । अत्र स्थितो भवेत्यप्याहेति योज्यम् । आज्ञानुसारेण कृतवान् वायुरित्याह– **उर्वेवेति** ।। 'तदुदरमभवत्' इत्यस्यार्थमाह– **यत्र स्थित इति** ।। यत्र स्थितो वायुरुर्वेव गरणं चक्रे तत्स्थानमुदरं नामेति योज्यम् । यद्वा, वायुना सह केशवो यत्र स्थितस्तत्स्थानमिति योज्यम् । अनेनोर्वर्थकोच्छब्दोपपदाद् गॄ निगरण इति धातोरच्प्रत्यये **'सार्वधातुकार्धधातुकयोः'** इति गुणे गलोपे च उद् उच्चैः सम्यग् गीर्यते वायुना हरिरत्रेति वा वायुर्गिरत्यत्रेति वोदरशब्दो निष्पन्न इत्युक्तं भवति । यद्यपि 'उदिदृणातेरजलौ पूर्वपदान्तलोपश्च' इत्युणादिसूत्रे दृणातेर्ग्रहणं कृतम् । तथाऽपि बाहुलकाद् गृणातेर्गशब्दलोपः पूर्वपदान्तलोपाभावश्च ग्राह्यः । यद्वा, धातूनामनेकार्थत्वाद् दृधातोरेव गिरणार्थत्व- मभिप्रेत्यैवमुक्तमिति ध्येयम् । उर्वित्यनूद्य व्याख्यानम्- **विस्तारसंयुतमिति ।।** तदुरोऽभवदित्यनन्तरं अध्याहार्यमाह– **उरोमध्य इति** ।। स्थानद्वये विशिष्योपास्यं ब्रह्मेत्यत्राऽऽचारः प्रमाणमुच्यते– **उदरमिति** ।। ननु भिन्नस्थानगतयोरेक- ब्रह्मत्वायोगादन्यतरोपासकानामब्रह्मवित्त्वं स्यादित्यत उक्तम्– **ब्रह्मा हैव ता३ इति** ।। अत्रोपासकास्ते ऋषयो ब्रह्मैवेत्यन्यथाप्रतीतेर्व्याचष्टे– **उदरस्थमिति** ।। त इति न पुल्लिङ्गप्रथमाबहुवचनम्, किन्तु नपुंसकं प्रथमाद्विवचनम् । तथाचोदरस्थं हृद्गतं चेत्येते ते उभे एकं तत्परं ब्रह्मैवेति ह प्रसिद्धम् इत्यर्थ इति भावः । 'उभे एकम्' इत्युक्त्या द्विवचनमत्र व्यवहारमात्रमिति दर्शयितुं ता ई इत्युक्तमिति वक्ष्यमाणं सूचयति । 'परं ब्रह्म' इत्युक्त्या ब्रह्मा हेति दैर्घ्यमपि परब्रह्मत्वविवक्षयेति वक्ष्यमाणं सूचयति । ऊर्ध्वं त्वेव' इति तुशब्दो विशेषद्योतकः । तं विशेषमाह– **वायुना सह दैवतैरिति** ।। यच्छिरोऽश्रयतेत्यस्य यद्यच्छिरोऽश्रयत तत् तस्मात्

तच्छिरःसञ्ज्ञकमभवत् । ब्रह्मणः श्रयणेन मूर्ध्नः शिरःसञ्ज्ञकत्वं कुत इत्यत उक्तम्- **तच्छिरस इति** ।। यच्छिरोऽश्रयतेत्यनुवर्तनीयम् । ब्रह्मशिरोऽश्रयत इति यत् श्रयणं तदेव शिरसः सम्बन्धि शिरोनिष्ठं शिरस्त्वं शिरःशब्दप्रवृत्तिनिमित्तमित्यर्थः ।

**भाष्यम्-**

**तत्र प्राणात्मना वायुर्मनोरूपेण शङ्करः ।**
**शेषः सुपर्ण इन्द्रश्च मनांस्येव पृथक्पृथक् ।।**
**अहम्भावमनो रुद्रः शेषोऽसौ पाञ्चरात्रकम् ।**
**वैदिकं गरुडश्चेन्द्रो यज्ञादिविषयं मनः ।।**
**श्रोत्रं चन्द्रो रविश्चक्षुर्वागग्निः परिकीर्तितः ।**
**एते देवास्तदन्ये च सर्वप्राणिषु संस्थिताः ।।**
**उपासते महाविष्णुं परमात्मानमच्युतम् ।**

**टिप्पणी -**

'ता एताः' इत्यस्य ताः प्रसिद्धाः शीर्ष्णि स्थिताः श्रयन्त इति श्रियः श्रीशब्दवाच्याः चक्षुःश्रोत्रं मनो वाक् प्राण इत्येता, उपलक्षणमेतदन्ये देवाश्च शीर्षन् शीर्ष्णि । तत्परं ब्रह्म श्रिताः उपासितवन्त इत्यर्थमभिप्रेत्य व्याचष्टे– **तत्र प्राणात्मनेति** ।। तत्र शीर्ष्णि वायुः प्राणात्मना प्राणाभिमानित्वेन तन्नामकत्वेन वर्तत इति श्रुतौ कीर्तितः । मनोरूपेण तदभिमानित्वेन शङ्करः कीर्तितः । शेषादयश्च मनांस्येव कीर्तिताः । पृथक्पृथक् इत्यस्य विवरणम्– **अहंभावेत्यादि** ।। चन्द्रः श्रोत्रं कीर्तितोऽग्निर्वाक् कीर्तितः । सर्वप्राणिषु तत्र शिरसि ते देवास्तदन्ये चोपासत इति योजना ।

**उपनिषत्-**

**(देवोत्तमपदविजेता वायुदेवः)**

ता अहिंसन्ताहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रामाम तद् यस्मिन्नु उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति ।।

वागुदक्रामदवदन्नश्नन् पिबन्नास्तैव चक्षुरुदक्रामद-पश्यन्नश्नन् पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन् पिबन्नास्तैव ॥

मन उदक्रामन्मीलित इवाश्नन् पिबन्नास्तैव ॥

प्राण उदक्रामत् तत् प्राण उत्क्रान्तेऽपद्यत तदशीर्य-ताशारीती३ ॥

तच्छरीरमभवत् तच्छरीरस्य शरीरत्वं शीर्यते हवा अस्य द्विषन् पाप्मा भ्रातृव्यः पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥

**भाष्यम्-**

वाचा हिंसामकुर्वंस्ते विनिन्दन्तः परस्परम् ॥
ते विष्णोराज्ञयाऽवोचन्नुत्क्रामाम पृथक् पृथक् ।
देहादब्जभवस्यास्माद् यस्मिन्नुत्क्रान्त एव हि ॥
शरीरं पद्यते श्रेयान् स न इत्यवधार्यताम् ।
ततः क्रमेण चाग्न्याद्या निष्क्रान्तास्तेषु सर्वशः ॥
निष्क्रान्तेषु न वै पातः शरीरस्याभवत् क्वचित् ।
वायावुत्क्रान्त एवैतच्छरीरमपतत् क्षितौ ।

**टिप्पणी -**

एवं ब्रह्मणो वासुदेवस्य पुरुषत्वमुपपाद्योक्थत्वं कैमुत्येनोच्यते– ता अहिंसन्तेत्यादिना ॥ ता अब्रुवन् हन्तास्मादित्यस्यास्मात् प्रकृताद् भगवतस्तदाज्ञयेत्यर्थमाह– ते विष्णोराज्ञयाऽवोचन्निति ॥ अस्माच्छरीरादित्यस्याप्यन्वयमाह– देहादब्जभवस्यास्मादिति ॥ सर्वत्राश्नन् पिबन् आस्तैवेत्यशनापिपासाभिमानिमुख्यप्राण-

व्यापारसद्भावेनाशनपिपासयोरेवानुवृत्तिं सूचयति। मीलित इवेत्यस्य सर्वेन्द्रिय-निमीलनवानिव सर्वव्यापारोपरमवानिवेत्यर्थः। 'अशारीती तच्छरीरमभवत्' इत्यत्र अशारि इतीं तदिति पदच्छेदः। ईं इति प्लुतम्, बिन्दुश्चावधारणार्थ इति ज्ञेयम्। अशारीति यदशीर्यत विनाशोन्मुखमभवदिति यत् तदेव शरीरस्य सम्बन्धि शरीरत्वं शरीरशब्दप्रवृत्तिनिमित्तं तस्मात् तच्छरीरं शरीरशब्दवाच्यमभवदिति योज्यम्। य एवं वेदास्य द्विषन् द्वेषी भ्रातृव्यो भ्रातृवत् सह स्थितः पाप्मा पापपुरुषः शीर्यते नश्यति तमसि पतति। न केवलमामुष्मिकहानिः किन्तु अस्य द्विषन् पाप्मभ्रातृव्यः पराभवति चेति योज्यम्। यद्वा, 'परास्य द्विषन्' इत्यस्य य एवं वेद पूर्वोक्तं जानतः शत्रुः पापपुरुषो नश्यतीत्युक्तं फलं वेद तस्यापि द्विषन् पाप्मा पराभवति किमु साक्षाज्ज्ञानिन इति योजना।

**उपनिषत्-**

**(देवैः कृतायां स्पर्धायां द्विवारमपि प्राणस्य जयः)**

**ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तेदं पुनः शरीरं प्रविशाम तद् यस्मिन् नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति वाक् प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव ॥**

**प्राणः प्राविशत् तत् प्राणे प्रपन्न उदतिष्ठत् तदुक्थमभवत् तदेतदुक्थं प्राण एव प्राण उक्थमित्येव विद्यात् तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि ॥**

**तव वयं स्मस्त्वमस्माकमसीति तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति ॥**

**भाष्यम्-**

उदासीनवदास्तां तौ केशवश्चाब्जसम्भवः ॥
तेषां बलपरीक्षार्थं वाय्वादीनां च सर्वशः ।
पुनस्ते प्राविशन् सर्वे वह्निसूर्यौ शशी शिवः ॥
नोत्थानमभवत् तेषु प्रविष्टेष्वपि सर्वशः ।
वायौ प्रविष्टे तूत्थानं कायस्याऽसीत् तदैव च ॥
उच्चैः स्थितत्वादुक्थोऽभूद् वायुरेव ततः प्रभुः ।
उच्चत्वं च गुणाधिक्यं त्वमुच्चोऽसीति तेऽब्रुवन् ॥
भृत्या वयं तवैव स्मस्त्वमस्माकं पतिः सदा ।
स्पर्धामहे त्वद्बलेन त्वया नान्येन केनचित् ॥
इत्यूचुर्वीन्द्रशेषेशशक्रचन्द्रादिकाः पृथक् ।
वायुः स संस्तुतस्तैश्च प्रसन्नोऽभूद् दिवौकसाम् ॥

**टिप्पणी -**

केशवब्रह्माणौ प्राणकलहं कुतो न निवारयामासतुरित्यत आह– **उदासीनवदिति** ॥ प्राणादिदेवेषूदासीनवत् नतूदासीनौ । लोकस्य तेषां बलस्य परीक्षया ज्ञापनार्थं तूष्णींभूतत्वादित्यर्थः । यद्वा, तयोः शरीरे सत्वात् कथं पतनमभूदित्यत उक्तम्– **उदासीनवदिति** ॥ लौकिकोदासीन वच्छरीरप्रेरणे निर्व्यापारावास्तामित्यर्थः । प्राणोत्क्रमणे शरीरपातेन स्वपराभवस्य यादृच्छिकत्वशङ्कया पुनस्ता अहिंसन्तेत्युच्यन्ते– **ता अहिंसन्तेति** ॥ पुनःशब्दो वाक् प्राविशदित्यादावपि सम्बद्ध्यत इत्यभिप्रेत्य व्याचष्टे– **पुनस्त इति** ॥ निर्गमापेक्षया पुनःशब्दः । अशयदेवेत्येवकारार्थः- **नोत्थानमिति** ॥ ननु प्राणप्रवेशानन्तरमुत्थानमपि प्राणप्रवेशप्रयुक्तम् । किन्तु देवतान्तरप्रवेशप्रयुक्तमेव किन्न स्यादित्यतः तत्प्राणे प्रपन्न इति वाक्याभिप्रायमाह– **वायाविति** ॥ वायौ प्रविष्टे कायस्योत्थानं तदैवाऽसीन्नतु देवतान्तरप्रवेशे अतो यद्विलम्बात् कार्याभावः तदेव कारणं नान्यदिति भावः ।

'तदैव च' इति चशब्दस्य न केवलं वायूत्क्रमणे पतनं, प्रविष्टे उत्थानं चेत्यर्थः । तदुक्थमभवत् । तत् तस्मादन्यासाध्यो उत्थापनकर्तृत्वात् प्राण उक्थमुच्चैः स्थितमभवत् । तत्तस्मादुच्चैःस्थितत्वात् प्राण एवैतदुक्थमुक्थनामकमभवत् । अतः प्राण उक्थ इति विद्यात् उपासीत । तं देवास्त्वमुक्थमुच्चोऽसि । किमिदमुच्चत्वमित्यतो गुणाधिक्यमेवोच्चत्वमिति भावेनोक्तम् – **त्वमिदमिति** ।। इदं प्रमितं सर्वं पूर्णमसीत्यर्थः । अस्य सर्वस्य त्वं प्रभुरसीति वा । तव वयं दासाः स्मः । त्वमस्माकं पतिरसीति अब्रुवन्नित्यर्थः । तदेतत् प्रमेयं ऋषिणाऽप्युक्तम् । त्वयेदिन्द्रयुजा वयं प्रति ब्रवीमहि स्पृधः । त्वमस्माकं तव स्मसीति । हे इन्द्र परमैश्वर्योपेतवायो । युजा 'द्वा सुपर्णा सयुजा' (आथ.) इति श्रुतेर्नियामकतयाऽस्मत्सङ्गतेन त्वया इत् त्वयैव त्वद्बलेनैव । स्पृधः स्पर्धावन्तो वयं प्रतिब्रवीमहि प्रत्युत्तरं दास्यामः । त्वमस्माकं पतिरसि तव वयं भृत्याः स्मेत्यर्थः । स्मेति वक्तव्ये स्मसीति वचनमुक्तार्थाधिक्यसूचनाय । **नकिर्माकिः** स्मसीत्यादिप्रोक्ताधिक्यविवक्षयेति वचनात् । इदं तोमसीति वचनाच्छान्दसं रूपम् । तदुक्थमभवत् तदेतदुक्थं प्राण एवेत्यनयोः पौनरुक्त्यं परिहरन् व्याचष्टे– **उच्चैरिति** ।। ततः उत्थापकत्वादुच्चैः स्थितः । उच्चैः स्थितत्वादुक्थनामकोऽभूदिति योज्यम् । त्वमिदं सर्वमसीत्यस्यार्थः- **ततः प्रभुरिति** ।। प्रकारान्तरेण व्याचष्टे– **उच्चत्वं चेति** ।। तव वयं स्म इत्यादेरर्थः– **भृत्या इति** ।। 'त्वयेदिन्द्रयुजा वयम्' इति मन्त्रे पूर्वशेषार्थमाह– **स्पर्धामह इति** ।। ४ ।।

## ।। इति चतुर्थं ब्राह्मणम् ।।

**उपनिषत्-**

### (प्रातःसायंशब्दयोरैतिह्यम्)

**तं देवाः प्राणयन्त सः प्रणीतः प्रातायत प्रातायितीं३ तत् प्रातरभवत् समागादिती३ तत् सायमभवदहरेव प्राणो रात्रिरपानः ।**

**भाष्यम्-**

तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम् ॥
शिष्यप्रशिष्यादिषु च तेऽनयन् वायुनोदितम् ।
वायुमप्यनयन् सर्वे यशसा तद्गुणोक्तितः ॥
येये गुणान् विजानन्ति वायोस्तानाविशन्मरुत् ।
तत्रतत्र प्रविष्टत्वात् प्रततोऽसौ बभूव ह ॥
प्रततत्वात् प्रातरिति तस्य नामाभवद् विभोः ।
सङ्गतश्चाभवज्जीवचिता रूपान्तरेण सः ।
सङ्गतत्वात् सायमिति तद् रूपं नामतोऽभवत् ॥
वायोस्तत् पुनरध्यात्मं प्राणापानाभिधं द्वयम् ।

**टिप्पणी -**

**आद्यखण्डे** वासुदेवाद्यात्मकस्य नारायणस्य गुणपूर्णत्वेन सर्वोत्तमत्वे प्रमाणजिज्ञासायां **द्वितीये** उक्थशब्दं प्रमाणयित्वा किमिदमुक्थत्वमित्यतोऽधिदैवमध्यात्मं च पृथिव्यादिलोकद्वारा वागादीन्द्रियद्वारा च सर्जकत्वमुक्थत्वमिति तदुपपादनं कृतम् । **तृतीये** च साक्षाद्देवादिप्रजास्रष्टृत्वेनोक्थत्वं निरुक्तम् । **चतुर्थे** च वासुदेवस्याध्यात्मं शरीरेन्द्रियोत्थापकत्वाच्चोक्थत्वं बलज्यैष्ठ्योपपादनपूर्वं कैमुत्ये-नोक्तम् । इह **पञ्चमे** खण्डे वायोः सर्वदेवतागुरुत्वेन ज्ञानोत्थापकत्वादुक्थत्वमुत्तमत्वं तदुपदेश्यत्वादिना हरेरिति भावेन प्रकृतस्य नारायणस्य प्राणपरिवृतस्याधिदैवमध्यात्मं च माहात्म्यमुच्यते– **तं देवा इति** ॥ देवास्तस्माद् वायोः परं ब्रह्म श्रुत्वा तं वायुनोदितं नारायणाभिधं परं ब्रह्म तमुपदेशकं वायुं च शिष्यप्रशिष्यादिषु प्रकर्षेणानयन्त नीतवन्त उपदिदिशुः स नारायणो वायुश्च । उपदेशेन कर्णरन्ध्र-द्वारेणान्तःप्रणीतः प्रविष्टः प्रातायतैकेन रूपेण शरीरे प्रततोऽभवत् । प्रातायीती प्रातायि इति, ई इति पदच्छेदः । ई यस्माद् इति प्रागुक्तप्रकारेण प्रातायि तत् तस्मात् प्रततत्वात् तदेतद्रूपं प्रातःकालनियामकं प्रातर्नामकमभवत् । समागात्

जीवच्चिता रूपान्तरेण अङ्गारवह्निवत् सङ्गतोऽभवत् । समागादिति जीवच्चिता सङ्गतोऽभूदिति यत् तस्मात् सङ्गतत्वात् तदेव रूपं सायंकालनियामकं सायंनामकमभवत् अहरेव अहर्नियामकमेव वायुर्नारायणश्च पुनरध्यात्मं प्राणनामकरात्रिनियामकश्च अध्यात्ममपाननामा । तमिमं नारायणं वायुं च । अधिदैवमुपासका अग्न्यादयो देवा अध्यात्ममपि वागादिरूपेणोपासत इति भावेनोच्यते– **वागग्निरित्यादिना** ।। तदेतद् व्याचष्टे– **तस्माच्छुत्वेत्यादिना** ।। यशसा दिक्षु यानाद् यज्ञो व्याप्तमित्युक्तप्रकारेण दिक्षु प्रततया तन्महिमोक्त्या तद्गुणोक्तितः । साक्षाद्गुरुणा गुणोक्तितश्च ये गुणान् विजानन्तीत्यन्वयः ।।

**उपनिषत्-**

**(इन्द्रियाभिमानिदेवताः)**

**वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत् तदुक्तं भवति ।**

**भाष्यम्-**

अध्यात्ममग्निर्वागाख्यश्चक्षुः सूर्यः प्रकीर्तितः ।।
यज्ञादिसाधने यत्तु मनश्चन्द्रः प्रकीर्तितः ।
मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः ।।
श्रोत्राभिमानिनः सर्वे वैदिकश्रवणोचितम् ।
श्रोत्रं चन्द्रस्तथा स्मार्ततान्त्रिकश्रवणोचितम् ।।
यम एव षडङ्गानां विषयश्रवणोचितम् ।
श्रोत्रं तु वरुणः काम्यशास्त्रार्थं मित्र एव च ।।
श्रोत्रं यन्नीतिशास्त्रार्थं कुबेरस्तत् प्रकीर्तितः ।
विष्णुना प्रहितानां हि संयोगोऽध्यात्ममेष हि ।।

**शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरः।**
**एताः सर्वा देवता हि ब्रह्मवायुसुपर्णकाः॥**
**शेषशङ्करशक्राश्च चन्द्रसूर्ययमा अपि।**
**अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः॥**
**अधिदैवं स एवैक आधिक्यात् पुरुषोत्तमः।**
**पूर्णज्ञानस्वरूपत्वादेतावत् कथितं भवेत्।**
**तात्पर्यात् सर्ववेदैश्च ............ ।**

**टिप्पणी -**

**यज्ञादिसाधन इति**॥ अग्निरध्यात्मं वागाख्यसूर्योऽध्यात्मं चक्षुश्चन्द्रोऽध्यात्मं यज्ञादिसाधनविषये यन्मनस्तत्प्रकीर्तितः। इन्द्रस्तु साक्षाद् यज्ञादिविषयं मन इति भेद इति भावः। चन्द्रो मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः सर्वेऽध्यात्मं श्रोत्राभिमानिन इत्यन्वयः। काम्यशास्त्रमर्थो विषयो यस्य तत् काम्यशास्त्रार्थम्। एवमुत्तरत्र। 'स एष प्रहितां संयोगोऽध्यात्मम्' इत्येतद् व्याचष्टे– **विष्णुनेति**॥ एतेन प्रहितामित्यस्य प्रहितानामित्यर्थ उक्तः। हीत्यनेन स प्रसिद्ध इति व्याख्यातम्। यदुक्तं पूर्वं देवोपास्यत्वेन सर्वदेवाधिपतित्वं तत् सर्ववेदतात्पर्यगोचरत्वात् सिद्धमित्युच्यते– **इमा देवता इति**॥ अद उ अद एव नारायणाख्यं ब्रह्मैवाधिदैवतं दैवतोत्तमम्। कुतः? आविः आ समन्ताद् विज्ञानरूपं पूर्णज्ञानस्वरूपमिति यावत्। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु इति धातोः। एवकारव्यावर्त्यमुक्तममी वागाद्या देवता इति वागादीनि देवतामात्राणीत्यर्थः। दीव्यतेरर्थस्य ज्ञानस्य पूर्णत्वादित्येतत् प्रमेयं तैर्वेदैस्तात्पर्यादुक्तं भवतीत्यर्थमभिप्रेत्य व्याचष्टे– **शिवादीनामित्यादिना वेदैश्चेत्यन्तेन। इमा देवता इत्यत्रोक्तानामग्न्यादीनामेव न ग्रहणं किन्तु मनो**ऽभिमानित्वेन पूर्वखण्डोक्तानां शिवादीनामपीति भावेन मनोऽभिमानिनः सङ्गृह्णाति – **शिवादीनामिति**॥ तथाऽपि ब्रह्मवाय्वोर्देवतामात्रत्वं न लभ्यते 'वागग्निः' इत्यादौ तदकथनादित्यतः

'ता एताः शीर्षञ्छ्रियः श्रिताः' इत्यत्र चक्षुरादिभिः सह प्राणस्य प्रकृतत्वाद् 'ब्रह्मेमं पुरुषम्' इति पुरुषपदेन ब्रह्मणोऽपि प्रकृतत्वादिमा इति तयोरपि परामर्श इति भावेनाऽह – **एताः सर्वा इति** ॥ 'अद उ आविः' इत्येतद् व्याचष्टे– **सर्वश इति** ॥ सर्वशः सर्वेभ्यो देवेभ्यः । आधिक्यादधिदैवमिति योजना ।

**उपनिषत्-**

**(ज्ञानिनो मुक्तिर्नियता)**

**एतद्ध स्म वै तद्विद्वानाह हिरण्यदन् बैदो न तस्येशेऽयं मह्यं न दद्युरिति ॥**

**प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तदनीशानानि हवा अस्मै भूतानि बलिं हरन्ति य एवं वेद ॥**

**भाष्यम्-**

................तज्ज्ञानन्नवदन्मुनिः ॥
हिरण्यदन्नाम बैदो भूतेषु हि सुरानृते ।
मदभीष्टं ममाऽदातुं नैवेष्टे कश्चनाञ्जसा ॥
विष्णुना प्रहितानां हि देवानामहमुत्तमम् ।
वेदसंयोगमध्यात्मं ततो मुक्तौ यथेष्टभुक् ॥
स्यान्नैवात्रास्ति सन्देहः स्वेच्छाविहृतिरेव च ।
मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा ॥
अधिदैवेन सहिता विष्णुना प्रभविष्णुना ।
एतद्धि तेन कथितं मुनिना तत्ववेदिना ॥
विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा ।
वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् ॥

**शिवादीनां च सर्वेषां मनस्त्वं कथितं पुरः।**

**एताः सर्वा देवता हि ब्रह्मवायुसुपर्णकाः॥**

**शेषशङ्करशक्राश्च चन्द्रसूर्ययमा अपि।**

**अग्निश्च मित्रावरुणौ कुबेराद्याश्च सर्वशः॥**

**अधिदैवं स एवैक आधिक्यात् पुरुषोत्तमः।**

**पूर्णज्ञानस्वरूपत्वादेतावत् कथितं भवेत्।**

**तात्पर्यात् सर्ववेदैश्च ............।**

**टिप्पणी -**

**यज्ञादिसाधन इति**॥ अग्निरध्यात्मं वागाख्यसूर्योऽध्यात्मं चक्षुश्चन्द्रोऽध्यात्मं यज्ञादिसाधनविषये यन्मनस्तत्प्रकीर्तितः। इन्द्रस्तु साक्षाद् यज्ञादिविषयं मन इति भेद इति भावः। चन्द्रो मित्रो यमश्च वरुणः कुबेरश्च दिगीश्वराः सर्वेऽध्यात्मं श्रोत्राभिमानिन इत्यन्वयः। काम्यशास्त्रमर्थो विषयो यस्य तत् काम्यशास्त्रार्थम्। एवमुत्तरत्र। 'स एष प्रहितां संयोगोऽध्यात्मम् इत्येतद् व्याचष्टे– **विष्णुनेति**॥ एतेन प्रहितामित्यस्य प्रहितानामित्यर्थ उक्तः। हीत्यनेन स प्रसिद्ध इति व्याख्यातम्। यदुक्तं पूर्वं देवोपास्यत्वेन सर्वदेवाधिपतित्वं तत् सर्ववेदतात्पर्यगोचरत्वात् सिद्धमित्युच्यते– **इमा देवता इति**॥ अद उ अद एव नारायणाख्यं ब्रह्मैवाधिदैवतं दैवतोत्तमम्। कुतः? आविः आ समन्ताद् विज्ञानरूपं पूर्णज्ञानस्वरूपमिति यावत्। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु इति धातोः। एवकारव्यावर्त्यमुक्तममी वागाद्या देवता इति वागादीनि देवतामात्राणीत्यर्थः। दीव्यतेरर्थस्य ज्ञानस्य पूर्णत्वादित्येतत् प्रमेयं तैर्वेदैस्तात्पर्यादुक्तं भवतीत्यर्थमभिप्रेत्य व्याचष्टे– **शिवादीनामित्यादिना वेदैश्चेत्यन्तेन। इमा देवता इत्यत्रोक्तानामग्न्यादीनामेव न ग्रहणं किन्तु मनो**ऽभिमानित्वेन पूर्वखण्डोक्तानां शिवादीनामपीति भावेन मनोऽभिमानिनः सङ्गृह्णाति – **शिवादीनामिति**॥ तथाऽपि ब्रह्मवाय्वोर्देवतामात्रत्वं न लभ्यते 'वागग्निः' इत्यादौ तदकथनादित्यतः

'ता एताः शीर्षञ्छ्रियः श्रिताः' इत्यत्र चक्षुरादिभिः सह प्राणस्य प्रकृतत्वाद् 'ब्रह्मेमं पुरुषम्' इति पुरुषपदेन ब्रह्मणोऽपि प्रकृतत्वादिमा इति तयोरपि परामर्श इति भावेनाऽऽह – **एताः सर्वा इति** ।। 'अद उ आविः' इत्येतद् व्याचष्टे– **सर्वश इति** ।। सर्वशः सर्वेभ्यो देवेभ्यः । आधिक्यादधिदैवमिति योजना ।

**उपनिषत्-**

**(ज्ञानिनो मुक्तिर्नियता)**

**एतद्ध स्म वै तद्विद्वानाह हिरण्यदन् बैदो न तस्येशेऽयं मह्यं न दद्युरिति ।।**

**प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तदनीशानानि हवा अस्मै भूतानि बलिं हरन्ति य एवं वेद ।।**

**भाष्यम्-**

................तज्ज्ञानन्नवदन्मुनिः ।।
हिरण्यदन्नाम बैदो भूतेषु हि सुरानृते ।
मदभीष्टं ममाऽदातुं नैवेष्टे कश्चनाञ्जसा ।।
विष्णुना प्रहितानां हि देवानामहमुत्तमम् ।
वेदसंयोगमध्यात्मं ततो मुक्तौ यथेष्टभुक् ।।
स्यान्नैवात्रास्ति सन्देहः स्वेच्छाविहृतिरेव च ।
मन्निषेधे न शक्तोऽस्ति प्रीता देवा हि मे सदा ।।
अधिदैवेन सहिता विष्णुना प्रभविष्णुना ।
एतद्धि तेन कथितं मुनिना तत्ववेदिना ।।
विष्णुप्रहितदेवानां योगमध्यात्ममञ्जसा ।
वेद तं च नियोक्तारमुपास्ते विष्णुमव्ययम् ।।

एतादृशोपासनाया योग्यः सन् सततं सुधीः ।
स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि ॥
मुक्तस्य वैष्णवे लोके मुक्तानि च न संशयः ।
इत्येतद्ध्यानयोग्याश्च मुनयो देवतास्तथा ॥
मानुषा ज्ञानमात्रेण स्वावरैः पूज्यतामियुः ।
मुक्तामुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः ॥

**टिप्पणी -**

सर्वेषां वेदानामुक्तार्थे तात्पर्यमित्येतल्लिङ्गेन फलेन समर्थ्यते– **एतद्ध स्मेति** ॥ तदेतत् प्रमेयं विद्वान् हिरण्यदन् बैदनामा ऋषिराहेत्यर्थः । तद् व्याचष्टे– **तज्ज्ञानन्निति** ॥ किं मुनिनोक्तमित्येतदुच्यते– **न तस्येशेऽयमित्यादिना एतद्ध तदित्यन्तेन** ॥ विष्ण्वादयो देवा मह्यं मुक्तौ फलं न दद्युरिति यत् तस्य तथाकरणस्यायं देवातिरिक्तः प्राकृतो जनः नेशे नेष्टे । कुतः? प्रहितां विष्णुनाऽन्तर्नियमनायाऽऽज्ञप्तानामन्तःप्रेरितानां वा देवानामहमध्यात्मं विभक्त्यर्थेऽव्ययीभावः । आत्मनि शरीरे निविष्टं संयोगं नियम्यनियामकभाव-लक्षणम् । भगवान् पूज्यः ते पूजका इति पूज्यपूजकभावलक्षणं वा सम्बन्धं वेद । तस्मात् कश्चन नेशे इत्येतद्धि तेन मुनिनोक्तमित्यभिप्रेत्य व्याचष्टे– **भूतेष्वित्यादिना एतद्धि तेन कथितमित्यन्तेन** ॥ अदातुं अदापयितुं देवा यथा न दद्युस्तथा कर्तुमिति यावत् । तदभीष्टफलविवरणम्- **यथेष्टभुक् स्वेच्छाविहृति-रिति** ॥ कुतो न समर्था इत्यतः देवताज्ञानित्वेन तत्प्रीतियुक्तत्वादित्याह– **मन्निषेध इति** ॥ ननु देवा एव फलं न दद्युरिति किं न स्यादित्यतो वोक्तम्– **प्रीता इति** ॥ न केवलं बैद एवात्राधिकारी फलभाक् किन्त्वन्योऽपि यो वेद तस्यापि महत् फलं भवतीत्युच्यते– **तदनीशानानीति** ॥ य एवमन्योऽपि योग्यो वेदोपास्ते च तदनीशनानि तदीशानभिन्नानि तत्स्वामिभिन्नानि भूतान्यस्मै बलिं हरन्तीत्यर्थमभिप्रेत्य व्याचष्टे– **विष्णुप्रहितेति** ॥ यो मानुषोऽप्येवं

नाममात्रज्ञानवान् भवति तदवराणि भूतान्यस्मै बलिं हरन्त्येनं पूजयन्तीत्यप्यर्थमाह–
**मानुषा** इति ॥ मुक्तियोग्या मानुषा मुक्ताः सन्तः इति योजना ।

**उपनिषत्-**

**(सत्यनामा हरिः)**

तत् सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्य-
स्तदेतत् त्रिवृत् त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति
स यदि हवा अपि मृषा वदति सत्यं हैवास्योदितं
भवति य एवमेतत् सत्यस्य सत्यत्वं वेद ॥

**भाष्यम्-**

स एष भगवान् विष्णुः सत्यमित्यभिधीयते ।
सर्वोत्तमत्वात् पूर्णत्वात् सर्वज्ञत्वात् तथैव च ॥
देवतात्रयमन्यच्च पृथक् सत्यमितीर्यते ।
शेषवीन्द्रशिवादिभ्य उत्तमत्वात् सदैव हि ॥
वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः ।
तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् ॥
अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत ।
अतिनादात् सदा वेदैरप्यन्नं स चतुर्मुखः ॥
यमित्यादित्य उद्दिष्टो यमयेद् यत् प्रकाशयन् ।
देवतात्रयमेतत्तु सहितं सत्यमुच्यते ॥
शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः ।
एवं सत्यपदार्थं यो विज्ञायोपास्त आदरात् ॥
योग्यस्तस्या उपासाया नैवासत्येन दुष्यति ।
देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् ।
मानुषाणां ज्ञानमात्राद् दोषो नातितरां भवेत् ॥

एतादृशोपासनाया योग्यः सन् सततं सुधीः ।
स्वस्वाम्यन्यानि भूतानि हरेयुर्बलिमस्य हि ॥
मुक्तस्य वैष्णवे लोके मुक्तानि च न संशयः ।
इत्येतद्ध्यानयोग्याश्च मुनयो देवतास्तथा ॥
मानुषा ज्ञानमात्रेण स्वावरैः पूज्यतामियुः ।
मुक्तामुक्तैर्मुक्तियोग्या इति शास्त्रस्य निर्णयः ॥

**टिप्पणी -**

सर्वेषां वेदानामुक्तार्थे तात्पर्यमित्येतल्लिङ्गेन फलेन समर्थ्यते– **एतद्ध स्मेति** ॥ तदेतत् प्रमेयं विद्वान् हिरण्यदन् बैदनामा ऋषिराहेत्यर्थः । तद् व्याचष्टे– **तज्ज्ञानन्निति** ॥ किं मुनिनोक्तमित्येतदुच्यते– **न तस्येशेऽयमित्यादिना एतद्ध तदित्यन्तेन** ॥ विष्ण्वादयो देवा मह्यं मुक्तौ फलं न दद्युरिति यत् तस्य तथाकरणस्यायं देवातिरिक्तः प्राकृतो जनः नेशे नेष्टे । कुतः? प्रहितां विष्णुनाऽन्तर्नियमनायाऽज्ञप्तानामन्तःप्रेरितानां वा देवानामहमध्यात्मं विभक्त्यर्थेऽव्ययीभावः । आत्मनि शरीरे निविष्टं संयोगं नियम्यनियामकभाव-लक्षणम् । भगवान् पूज्यः ते पूजका इति पूज्यपूजकभावलक्षणं वा सम्बन्धं वेद । तस्मात् कश्चन नेशे इत्येतद्धि तेन मुनिनोक्तमित्यभिप्रेत्य व्याचष्टे– **भूतेष्वित्यादिना एतद्धि तेन कथितमित्यन्तेन** ॥ अदातुं अदापयितुं देवा यथा न दद्युस्तथा कर्तुमिति यावत् । तदभीष्टफलविवरणम्- **यथेष्टभुक् स्वेच्छाविहृति-रिति** ॥ कुतो न समर्था इत्यतः देवताज्ञानित्वेन तत्प्रीतियुक्तत्वादित्याह– **मन्निषेध इति** ॥ ननु देवा एव फलं न दद्युरिति किं न स्यादित्यतो वोक्तम्– **प्रीता इति** ॥ न केवलं बैद एवात्राधिकारी फलभाक् किन्त्वन्योऽपि यो वेद तस्यापि महत् फलं भवतीत्युच्यते– **तदनीशानानीति** ॥ य एवमन्योऽपि योग्यो वेदोपास्ते च तदनीशनानि तदीशानभिन्नानि तत्स्वामिभिन्नानि भूतान्यस्मै बलिं हरन्तीत्यर्थमभिप्रेत्य व्याचष्टे– **विष्णुप्रहितेति** ॥ यो मानुषोऽप्येवं

नाममात्रज्ञानवान् भवति तदवराणि भूतान्यस्मै बलिं हरन्त्येनं पूजयन्तीत्यप्यर्थमाह– **मानुषा इति** ।। मुक्तियोग्या मानुषा मुक्ताः सन्तः इति योजना ।

**उपनिषत्-**

**(सत्यनामा हरिः)**

**तत् सत्यं सदिति प्राणस्तीत्यन्नं यमित्यसावादित्यस्तदेतत् त्रिवृत् त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति स यदि हवा अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत् सत्यस्य सत्यत्वं वेद ।।**

**भाष्यम्-**

स एष भगवान् विष्णुः सत्यमित्यभिधीयते ।
सर्वोत्तमत्वात् पूर्णत्वात् सर्वज्ञत्वात् तथैव च ।।
देवतात्रयमन्यच्च पृथक् सत्यमितीर्यते ।
शेषवीन्द्रशिवादिभ्य उत्तमत्वात् सदैव हि ।।
वायुः सदिति सम्प्रोक्तो जीवेषु तु सुपूर्णतः ।
तीति ब्रह्मा समुद्दिष्टः स एवान्नाभिमानवान् ।।
अन्नं प्रजापतिरिति श्रुतिरन्या ह्यभाषत ।
अतिनादात् सदा वेदैरप्यन्नं स चतुर्मुखः ।।
यमित्यादित्य उद्दिष्टो यमयेद् यत् प्रकाशयन् ।
देवतात्रयमेतत्तु सहितं सत्यमुच्यते ।।
शुक्लकृष्णकनीनासु चक्षुषोऽप्येत आस्थिताः ।
एवं सत्यपदार्थं यो विज्ञायोपास्त आदरात् ।।
योग्यस्तस्या उपासाया नैवासत्येन दुष्यति ।
देवता मुनयश्चैव योग्या अस्या अपि स्फुटम् ।
मानुषाणां ज्ञानमात्राद् दोषो नातितरां भवेत् ।।

**टिप्पणी -**

प्रकृतस्य नारायणस्यान्तरङ्गं नाम विशेषं तदर्थतयाधिदैवमध्यात्मं चोपास्यत्वं तस्य परिवारदेवानां मिलित्वा सत्यनामकत्वं चोच्यते– **तदिति** ।। अत्र तद् वक्ष्यमाणं देवतात्रयं सत्यमित्यन्यथाप्रतीतेर्व्याचष्टे– **स एष इति** ।। **सर्वोत्तमत्वा-दिति** ।। 'सच्छब्द उत्तमं ब्रूयाद्' (भा.ता.) इति वचनादिति भावः ।। **पूर्णत्वा-दिति** ।। 'तनु विस्तारे' इति धातोः व्याख्यानात् तनोतेर्विस्तारार्थत्वाद् देशकाल-गुणैर्विस्तार एव पूर्तिरिति भावः ।। **सर्वज्ञत्वादिति** ।। यातेर्गत्यर्थत्वादिति भावः । सदिति प्राण इत्याद्यवतारयति– **देवतात्रयमिति** ।। विष्णोः सत्यनामकत्वमयुक्तं प्राणादीनां सत्यनामकत्वप्रसिद्धेरित्यतः विष्णोरन्यदेवावतारत्रयं च पृथगेकै-कावयवप्रतिपाद्यं सम्मिलित्वा सत्यं नतु विष्णोरिव विशिष्टनामवाच्यत्व-मेकैकस्येत्युत्तरवाक्येनोच्यत इत्यर्थः । अवतारितं व्याचष्टे– **शेषेति** ।। यद्यपि ब्रह्मणः शेषादुत्तमत्वं वायोर्जीवेषु मध्ये पूर्णत्वं चास्ति तथाऽपि नामवागादितारतम्यस्य प्राणावसानत्वप्रसिद्धेर्वाय्वपेक्षया ब्रह्मणः पदप्रयुक्तेषदाधिक्यसद्भावात् तद्विवक्षयैव-मुक्तम् । अन्नाभिमानित्वेन सर्वैरुपजीव्यत्वादन्नशब्दवाच्यत्वमुक्त्वा प्रकारान्तरेणाऽह– **अतीति** ।। वेदैरतिनादादतिशयेन स्तूयमानत्वाद् अति नु स्तूयत इत्यन्नम् । णु स्तुताविति धातोरित्युक्तं भवति । तदेतत् त्रिवृदित्यस्य तद्देवतात्रयं त्रित्वेन वृतं मिलितमेव सत्यमित्यर्थमाह– **देवतात्रयमिति** ।। तदेतद् देवतात्रयं त्रिस्थानं वृणोतीति त्रिवृत् । स्थानत्रयमेवोच्यते– **त्रिवृदिवेति** ।। चक्षुः शुक्लं कृष्णं कनी-नकेति रूपेण त्रिवृदिव त्रिवृदेव प्रसिद्धमित्यर्थमभिप्रेत्य व्याचष्टे– **शुक्लेति** ।। य एवमुक्तप्रकारेण सत्यस्य नारायणस्य देवतात्रयस्य च सत्यत्वं सत्यशब्दार्थत्वं वेद स यदिह वा मृषा वदति अस्योदितं वचनमपि सत्यमेव भवति । हेत्ययुक्तं असत्यवचनस्य सत्यत्वस्य व्याहतेरित्यतस्तात्पर्यमाह– **नैवासत्येनेति** ।। वेदेत्यस्य **'आध्यानाय प्रयोजनाभावाद्'** (ब्र.सू. ३.३.१५) इत्युक्तन्यायेनोपासनापर्यन्तं

धावनमभिप्रेत्य तदधिकारिकथनपूर्वकमर्थमुक्त्वा यथाश्रुतार्थमप्यधिकारिकथनपूर्वमाह– मानुषाणामिति ॥ दोषोऽसत्यवचनेन ॥ ५ ॥

**॥ इति पञ्चमं ब्राह्मणम् ॥**

**उपनिषत्-**

**(श्रुतिस्मृती हरेराज्ञे)**

तस्य वाक् तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामानी३ ॥ सर्वं वाचाऽभिवदति वहन्ति हवा एनं तन्तिसम्बद्धा य एवं वेद ॥

**भाष्यम्-**

तस्य नारायणस्यैव सर्ववेदात्मिका हि वाक् ।
तन्तिरूपा जगद्बन्धे नाम ब्रह्मादिकं च यत् ।
विप्रक्षत्रियवैश्यादिरूपं चाखिलमेव तु ॥
दाम तेनैव बध्नाति सकलं जगदच्युतः ।
सर्वे हि नामवन्तोऽत्र सर्वे वेदोदिता अपि ॥
वेदात्मिक्या यतो वाचा विष्णुर्वदति सोऽखिलम् ।
य एतद् विष्णुवाचैव बद्धं नामाख्यदामभिः ॥
ज्ञात्वा जगदुपास्ते तु योग्यः संस्तदुपासने ।
तं प्रत्येवाखिलान्येव भूतानि सह दैवतैः ॥
बलिं हरन्ति पश्चाथ भूतान्येनं वहन्ति च ।
योग्यश्चास्या उपासाया योग्यो ब्रह्मपदस्य यः ॥
भूतयुक्ते रथे तस्मात् स तिष्ठति सुरार्चितः ।
मुक्तः संश्च तदन्येषां ज्ञानमात्राद् विमुक्तिगैः ॥

**स्वावरैः सेव्यतैव स्यात् कैश्चिदेव कचित्कचित् ।**

**तथैव वायुना बद्धं जगदेतत् ततोऽवरम् ॥**

**सुपर्णशेषगिरिशशक्रसूर्याद्यमञ्जसा ।**

**टिप्पणी -**

'स एष प्रहितां संयोगोऽध्यात्मम्' इति नारायणाज्ञया देवा अध्यात्मं तत्वनियामका इत्युक्तम् । सा चाऽज्ञा 'श्रुतिस्मृती ममैवाऽज्ञे' इति वचनाद्वेदरूपेति भावेन तं प्रकारं विवरितुमुच्यते– **तस्य वाक् तन्तिरित्यादिना** ॥ नामभिर्ब्रह्मादि-प्रातिस्विकनामभिर्विप्रक्षत्रियादिसामान्यनामभिश्च सर्वं ब्रह्मादिकं ब्राह्मणादिकं च सितं बद्धम् । कथं नाम्नां बन्धकत्वमित्यत उच्यते–**सर्वं हीदं नामानीति** ॥ इदं सर्वं नाम्नि प्रतिपाद्यतया वर्तते हि यस्मात् तस्मान्नामभिः सितमित्यर्थः । नामकरणकर्तोच्यते– **सर्वं वाचेति** ॥ एतद्विद्योपासकस्य फलमुच्यते– **वहन्ति ह वेति** ॥ एनमुपासकं प्रति दैवतैः सहाखिलानि भूतानि बलिं वहन्ति । कुतः? एवमुपासकं प्रति बलिप्रदानं कार्यमिति विधिबन्धसद्भावादिति भावेनोक्तम्– **तन्तिसम्बद्धा इति** ॥ यद्वा, पञ्चभूतानि तदभिमानिनो देवा अश्वरूपेण तन्तिसम्बद्धा रज्जुसम्बद्धा रथे स्थितमेनं वहन्तीत्यर्थः । अत्र 'तस्य वाक् तन्तिः' इति तच्छब्देन सत्यत्वं वेदेत्युपासकः प्रकृतः देवतात्रयं च प्रकृतं परामृश्यत इत्यन्यथा-प्रतीतेर्व्याचष्टे– **तस्य नारायणस्यैवेति** ॥ नामभिः 'सर्वं सितं सर्वं हीदं नामनि' इति सर्वेषां वैदिकनामवत्त्वं वक्ष्यमाणमयुक्तमस्मदादीनां तदभावादित्यतो नामानि दामानीत्येतद् विवृणोति – **नामब्रह्मादिकं तु यत् विप्रक्षत्रियवैश्यादिरूपं चेति** ॥ सर्वेषां पृथग्वैदिकनामाभावेऽपि विप्रादिब्रह्मचर्यादिसामान्यनामसद्भावान्न दोष इति भावः । वायुविषयतयाऽपि 'तस्य वाक्तन्तिः' इत्यादि व्याचष्टे– **तथैवेति** ॥ तस्य नारायणस्यैवेत्यवधारणं तु पूर्वप्रकृतसत्यवेदिव्युदासायाऽदित्यव्युदासाय वा ब्रह्मादिनामघटितसर्ववेदविवक्षया वायुमपि व्यावर्तयितुं नेत्यविरोधः ।

**उपनिषत्-**

**(पापविनाशकवेदमूर्ती श्रीहरिवायुदेवौ)**

**तस्योष्णिग् लोमानि त्वग् गायत्री त्रिष्टुप् मांसमनुष्टुप् स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो बृहती स च्छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसी-त्याचक्षते च्छादयन्ति हवा एनं छन्दांसि पापात् कर्मणो यस्यां कस्यांश्चिद् दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद ॥**

**भाष्यम्-**

**विष्णोर्वायोश्च लोमादौ छन्दांस्येवाऽश्रितानि च ।**
**विष्णोर्विमुक्तवायोश्च लोमाद्यं तु चिदात्मकम् ॥**
**लोमप्राणादिभेदश्च नैव कश्चिच्चिदात्मनि ।**
**छन्नश्छन्दोभिरेवं स केशवस्तेन चाभिधा ॥**
**छन्दांसीत्येव तेषां हि य एवंविदुपासकः ।**
**निवारयन्ति पापेभ्यश्छन्दांसि किमु केशवः ॥**
**योग्या अस्याश्च विद्याया भृग्वाद्या देवतास्तथा ।**
**छन्दस्सु संस्थितो विष्णुर्गोपायत्येव तद्विदम् ॥**

**टिप्पणी -**

वेदैर्जगद्बन्धकत्वलक्षणं महिमानमुक्त्वा तदाश्रयत्वमुच्यते– **तस्योष्णिगित्या-दिना** ॥ अत्रोष्णिगादीनां लोमाद्यैक्यं प्रतीयते तदयुक्तम् । प्रमाणविरोधात् 'स च्छन्दोभिः छन्न' इति वाक्यशेषविरोधाच्चेत्यतो लोमानीत्यादिप्रथमायाः सप्तम्यर्थत्व-मुपेत्य तस्येत्येतद् विष्णुवायुविषयतया व्याचष्टे– **विष्णोरिति** ॥ उष्णिगादीनां लोमादिष्वाश्रितत्वे छन्दःशब्द एव प्रमाणमित्यभिप्रायेण निरुच्यते– **स च्छन्दोभि-**

**रिति** ।। नन्वेतदयुक्तम् । लोमादीनामवयवानां छन्दआश्रयत्वमुक्त्वा स च्छन्दोभिः छन्न इति विष्णोर्वायोश्च तदाश्रयत्वकथनस्य विरुद्धत्वान्न चावयवावयविनोरभेदो मन्तव्यः । लोमाद्यवयवानां प्राकृतत्वात् । विष्णोरप्राकृतत्वेऽपि वायोस्तद-भावादित्यत आह– **विष्णोरिति** ।। ततश्च किं तत्राऽह– **लोमेति** ।। लोमेत्यादिग्रहणं प्राणेत्यन्तस्य । आदिपदेन मध्यस्थानां त्वगादीनां ग्रहणम् । तथाच चिदात्मनि आकेशादानखाग्राच्चैतन्यरूपे हरौ मुक्तवायौ च लोमप्राणाद्यवयवैः भेदो नास्ती-त्यर्थः । यद्वा, ननु लोमादीनां परस्परं भिन्नत्वात् कथं एकवस्त्वभेदस्तेषामित्यत आह– **लोमेति** ।। लोमप्राणादीनां परस्परं भेदश्च चैतन्यैकरसेनैवेत्यर्थः । अस्त्वेवं ततश्च किमित्यत आह– **छन्न इति** ।। एवं चावयवानां परस्परमङ्गिना च भेदाभावे सति केशवः वायुश्च छन्दोभिः छन्न इत्युपपद्यत इत्यर्थः ।

ननु मुक्तवायुलोमादेश्चिदात्मकत्वेन वाय्वभेदेऽपि किं संसारिलोमादेरागतमिति चेत्; मुक्तौ चैतन्यात्मकलोमादिभावे तस्य संसारेऽप्यवस्थानमङ्गीकार्यं स्वरूपस्यागन्तुकत्वायोगात्, तथाच संसारे प्राकृतलोमादिसंवलितस्वरूपभूतलोमादेः छन्दआश्रयत्वेऽवयवावयव्यभेदेन वायोरेव तदुक्तं भवतीत्यविरोध इत्याशयात् । एतेनैतदपि निरस्तम् । मुक्तवायुलोमादेः छन्दआश्रयत्वं जगद्व्यापारसूत्रविरुद्ध-मिति । अस्य ग्रन्थस्य लोमादेश्चैतन्यात्मकस्य मुक्तौ सत्वात् संसारेऽपि तदस्ति तस्य च छन्दआश्रयत्वे सच्छन्दोभिः छन्न इत्युपपन्नमित्यत्रैव तात्पर्याङ्गीकारेण मुक्तौ छन्दआश्रयत्वमस्तीत्यत्र तात्पर्यात् । भवतु वा मुक्तलोमादेः छन्दाश्रयत्वं, नच जगद्व्यापारसूत्रविरोधः । वेदानभिमानित्वेऽपि मुक्तस्वावरकर्तृकक्रमपोषादि-नियामकतया तदाश्रयत्वोपपत्तेः । छन्दोऽभिमानिदेवानां मुक्त्यनन्तरं तदाश्रयत्व-विवक्षयाऽप्येतद्वचनोपपत्तेः । 'तस्योष्णिक्' इत्यादिविद्यावेत्तुः फलमुच्यते– **छादयन्ति हवेति** ।। य एवमुक्तप्रकारेण छन्दांसि भगवदङ्गाश्रितत्वात् तन्नामकानीति छन्दसां छन्दस्त्वं छन्दःशब्दवाच्यत्वं वेद स यदि यस्यां कस्याञ्चिद् दिशि वस्तु कामयते तर्हि तस्यां दिशि वसन्तमेनं पापात् कर्मणः छादयन्ति गोपायन्ती-

त्यर्थः । यद्वा, यस्यां कस्याञ्चिद् दिशि स्थित्वा यदभीष्टं वित्तादिकं ज्ञानादिकं वा कामयते तत्प्रतिबन्धकात् पापात् कर्मण इति योज्यम् । तद् व्याचष्टे– **य एवंविदिति** ।। एनमित्यध्याहार्यम् । ननु 'छादयन्ति ह्वा' इत्युक्तार्थे मन्त्रोदाहरणमसङ्गतं मन्त्रे विष्णोर्गोपकत्वोक्तेरत्र पुनः छन्दसां तदुक्तेरित्यतः कैमुत्यलब्धार्थे मन्त्रोदाहरणमिति भावेनाऽऽह– **किमु केशव इति** ।। यदा छन्दोऽभिमानिनो गोपायन्ति किमु वक्तव्यं तदाश्रयतया प्राधान्येनोपासितो हरिरितीति भावः । तद्विद्योपासकानाह– **योग्या इति** ।। कैमुत्यलब्धार्थे प्रमाणमिति समाहितं प्रकारान्तरेण समाधत्ते– **छन्दस्स्विति** ।। तथाच छादयन्ति ह्वा एनं छन्दांसीत्यस्य छन्दोगतानि तन्नामकानि भगवद्रूपाणि छादयन्तीत्यर्थस्तथा च साक्षादुक्तार्थ एव मन्त्रोदाहरणमिति भावः ।

**उपनिषत्-**

**(ऋषेः स्वानुभवः)**

**तदुक्तमृषिणा । अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायत्यनिपद्यमानमिति नह्येष कदाचन संविशत्या च परा च पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति ।।**

**स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिश आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्ति ।।**

**भाष्यम्-**

मन्त्रोऽप्यर्थमिमं प्राहापश्यं गोपामिति स्म ह ।
एष गोप्ता हि सर्वस्य वायुस्थः पुरुषोत्तमः ।।

**छन्दस्सु संस्थितो वायुर्वायौ च स जनार्दनः।**
**वायुश्च वायुसंस्थश्च कदाचिन्नहि तिष्ठतः॥**
**वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान्।**
**चोदितः केशवेनैव तत्स्थेनामितशक्तिना॥**
**आ समान्तात् पराक् चापि पञ्चभूतेभ्य ईश्वरः।**
**वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः॥**
**सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि।**
**नित्यदा वसतः कोणादिष्वथासु विषूचिषु॥**
**अन्तश्च सर्वभूतेषु चरतो लोकसाक्षिणौ।**

**टिप्पणी -**

उपनिषदुक्तार्थे प्रमाणमुच्यते– **तदुक्तमिति**॥ छन्दःस्थितस्तन्नामा विष्णुर्वायुश्च तद्विदं गोपायतीति यदुक्तं तदृषिणा 'अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम्। स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः' (ऋ.सं. १.१६४.३१) इति मन्त्रद्रष्ट्राऽप्युक्तमित्यर्थः। अहं गोपां स्वोपासकस्यानिष्ट-परिहारकत्वेनेष्टप्रापकत्वेन च गोप्तारं सर्वगोप्तारं वा 'गुपू रक्षणे' आकारप्रत्ययो गुणश्च। छन्दस्सु संस्थितं वायुं तदन्तर्गतं विष्णुं चापश्यम्। ननु यस्यां कस्याञ्चिद् दिशि संस्थितो य उपासकस्तद्गोप्तृत्वं युक्तं सर्वदिग्गतत्वं सर्वगोपकत्वं च तयोः कथमित्यत उक्तम्- **अनिपद्यमानमा च परा चेति**। अनिपद्यमानं कदाचिदेकत्रातिष्ठन्तम्। आसमन्ताच्च परा च पञ्चभूतेभ्यो बहिश्च पथिभिर्मार्गविशेषै-श्चरन्तमित्यर्थः। विष्णुवाय्वोः सर्वदिक्ष्वपि रूपविशेषेण स्थितत्वाच्च सर्वगोप्तृत्वं युज्यत इत्युक्तम्– **स सध्रीचीरिति**॥ द्वितीया सप्तम्यर्थे। सध्रीचीना स्ववक्रासु पूर्वादिदिक्षु विषूचीनासु कोणदिक्षु वसानो वर्तते इत्यर्थः। लोकापेक्षिताभीष्टपरिज्ञानं च तस्य कथमित्यतो लोकसाक्षितया सर्वभूतान्तश्चारित्वादिति भावेनोक्तम्– **आवरीवर्तीति**॥ स इत्येकमत्रान्वेति। भुवनेषु लोकेषु तदन्तःस्थप्राणिषु आ

समन्ताद् वरीवर्त्यतिशयेन लोकसाक्षितया वर्तते चरतीति यावत् । खण्डशोऽनुवादपूर्वं मन्त्रार्थ उच्यते– **अपश्यं गोपामित्येष वा इत्यादिना** ।। अपश्यं गोपामित्यत्रोक्तो गोपा एष वै । वायुस्तदन्तस्थो हरिश्च नान्यः । कुतः? हि यस्माद् एष इदं सर्वं गोपायति नान्य इवाल्पमत 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेनैष एव गोपा इत्यर्थः । अनिपद्यमानमित्यस्य नितरामतिष्ठन्तमित्यर्थमभिप्रेत्योक्तम्– **नह्येष कदाचनेति** ।। आ चेत्यस्या सम्यक् पराग् बहिश्चरन्तं पूर्वोक्तादनिपद्यमानादन्यं चापश्यमित्यर्थप्रतीतेरुक्तम्– **आ च ह्येष इति** ।। एष एवाच परा च पथिभिश्चरतीत्यर्थः । स सध्रीचीः स विषूचीरित्यत्र स इति द्विरुक्तिर्व्यर्थेत्यत एक एव तच्छब्दोऽत्रान्वेतीत्यभिप्रेत्य व्याक्रियते– **सध्रीचीश्चेति** ।। वसान इत्यस्य विशेषणत्वे वसानः स भुवनेष्वन्तरा वरीवर्तीत्येकवाक्यत्वेन पुनः स इति व्यर्थमित्यतोऽवसान इति कारकक्रियेति भावेनोक्तम्–**वस्त इति** ।। सध्रीचीरित्याद्यनुवादेनेमा एव दिश इति विशेष्यमुक्तम् । आ वरीवर्तीत्यत्रैकः स इत्यन्वेतीति भावेनोक्तम्– **एष हीति** ।। एष वै गोपा इत्यत्रैतच्छब्दपरामृष्टमाह– **एष गोप्ता हीति** ।। ननु प्राक् छन्दस्सु स्थितमित्युक्तमधुना वायुस्थ इत्युच्यतेऽतो विरोध इत्यत आह– **छन्दस्स्विति** ।। नह्येष कदाचनेत्यस्यार्थो– **वायुश्चेति** ।। अनिपद्यमानत्वे आ च परा चेति हेतुरुच्यत इति भावेनाऽह– **वायुर्हीति** ।। हि यस्मात् तस्मादिति पूर्वेणान्वयः । सञ्चारप्रयोजनमुक्तम्– **सदा सर्वेति** ।। तर्हीश्वरसाम्यमित्यत उक्तम्– **चोदित इति** ।। एवमवतार्य व्याचष्टे– **आसमन्तादिति** ।। सध्रीचीश्चेत्यादि द्वितीयां सप्तम्यर्थतया व्याचष्टे– **सध्रीचीनास्विति** ।। समीचीनास्ववक्रास्विति यावत् । विषूचीषु वक्रासु अत एव कोणदिक्षु । भुवनेष्वित्यस्य तत्स्थेषु सर्वभूतेष्वित्यर्थमाह– **अन्तश्चेति** ।। छादयन्तीति फलवाक्ये पापात् कर्मण एनं छादयन्ति गोपायति गोपायन्ति पापं कर्मास्य परिहरन्तीत्युक्तं कथं परिहरन्तीत्यत उपासकान् स्वोदरे संस्थाप्य पापाभिमानिनो यथा न स्पृशन्ति तथा आच्छादयन्तीत्यपि विवक्षितम् ।

छन्दस्सु संस्थितो वायुर्वायौ च स जनार्दनः ।
वायुश्च वायुसंस्थश्च कदाचिन्नहि तिष्ठतः ॥
वायुर्हि नित्यसञ्चारी सदा सर्वप्रवृत्तिमान् ।
चोदितः केशवेनैव तत्स्थेनामितशक्तिना ॥
आ समान्तात् पराक् चापि पञ्चभूतेभ्य ईश्वरः ।
वायुस्तत्स्थो हरिश्चैव चरत्यमितपौरुषः ॥
सध्रीचीनासु पूर्वादिदिक्ष्वेतौ चतसृष्वपि ।
नित्यदा वसतः कोणादिष्वथासु विषूचिषु ॥
अन्तश्च सर्वभूतेषु चरतो लोकसाक्षिणौ ।

**टिप्पणी -**

उपनिषदुक्तार्थे प्रमाणमुच्यते– **तदुक्तमिति** ॥ छन्दःस्थितस्तन्नामा विष्णुर्वायुश्च तद्विदं गोपायतीति यदुक्तं तदृषिणा 'अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आवरीवर्ति भुवनेष्वन्तः' (ऋ.सं. १.१६४.३१) इति मन्त्रद्रष्ट्राऽप्युक्तमित्यर्थः । अहं गोपां स्वोपासकस्यानिष्ट-परिहारकत्वेनेष्टप्रापकत्वेन च गोप्तारं सर्वगोप्तारं वा 'गुपू रक्षणे' आकारप्रत्ययो गुणश्च । छन्दस्सु संस्थितं वायुं तदन्तर्गतं विष्णुं चापश्यम् । ननु यस्यां कस्याञ्चिद् दिशि संस्थितो य उपासकस्तद्गोप्तृत्वं युक्तं सर्वदिग्गतत्वं सर्वगोपकत्वं च तयोः कथमित्यत उक्तम्- **अनिपद्यमानमा च परा चेति** । अनिपद्यमानं कदाचिदेकत्रातिष्ठन्तम् । आसमन्ताच्च परा च पञ्चभूतेभ्यो बहिश्च पथिभिर्मार्गविशेषै-श्चरन्तमित्यर्थः । विष्णुवाय्वोः सर्वदिक्ष्वपि रूपविशेषेण स्थितत्वाच्च सर्वगोप्तृत्वं युज्यत इत्युक्तम्– **स सध्रीचीरिति** ॥ द्वितीया सप्तम्यर्थे । सध्रीचीना स्ववक्रासु पूर्वादिदिक्षु विषूचीनासु कोणदिक्षु वसानो वर्तते इत्यर्थः । लोकापेक्षिताभीष्टपरिज्ञानं च तस्य कथमित्यतो लोकसाक्षितया सर्वभूतान्तश्चारित्वादिति भावेनोक्तम्– **आवरीवर्तीति** ॥ स इत्येकमत्रान्वेति । भुवनेषु लोकेषु तदन्तःस्थप्राणिषु आ

समन्ताद् वरीवर्त्यतिशयेन लोकसाक्षितया वर्तते चरतीति यावत्। खण्डशोऽनुवादपूर्वं मन्त्रार्थ उच्यते– **अपश्यं गोपामित्येष वा इत्यादिना** ।। अपश्यं गोपामित्यत्रोक्तो गोपा एष वै। वायुस्तदन्तस्थो हरिश्च नान्यः । कुतः? हि यस्माद् एष इदं सर्वं गोपायति नान्य इवाल्पमत 'असाधारण्येन व्यपदेशा भवन्ति' इति न्यायेनैष एव गोपा इत्यर्थः। अनिपद्यमानमित्यस्य नितरामतिष्ठन्तमित्यर्थमभिप्रेत्योक्तम्– **नह्येष कदाचनेति** ।। आ चेत्यस्या सम्यक् पराग् बहिश्चरन्तं पूर्वोक्तादनिपद्यमानादन्यं चापश्यमित्यर्थप्रतीतेरुक्तम्– **आ च ह्येष इति** ।। एष एवाच परा च पथिभिश्चरतीत्यर्थः । स सध्रीचीः स विषूचीरित्यत्र स इति द्विरुक्तिर्व्यर्थेत्यत एक एव तच्छब्दोऽत्रान्वेतीत्यभिप्रेत्य व्याक्रियते– **सध्रीचीश्चेति** ।। वसान इत्यस्य विशेषणत्वे वसानः स भुवनेष्वन्तरा वरीवर्तीत्येकवाक्यत्वेन पुनः स इति व्यर्थमित्यतोऽवसान इति कारकक्रियेति भावेनोक्तम्–**वस्त इति** ।। सध्रीचीरित्याद्यनुवादेनेमा एव दिश इति विशेष्यमुक्तम्। आ वरीवर्तीत्यत्रैकः स इत्यन्वेतीति भावेनोक्तम्– **एष हीति** ।। एष वै गोपा इत्यत्रैतच्छब्दपरामृष्टमाह– **एष गोप्ता हीति** ।। ननु प्राक् छन्दस्सु स्थितमित्युक्तमधुना वायुस्थ इत्युच्यतेऽतो विरोध इत्यत आह– **छन्दस्स्विति** ।। नह्येष कदाचनेत्यस्यार्थो– **वायुश्चेति** ।। अनिपद्यमानत्वे आ च परा चेति हेतुरुच्यत इति भावेनाऽह– **वायुर्हीति** ।। हि यस्मात् तस्मादिति पूर्वेणान्वयः । सञ्चारप्रयोजनमुक्तम्– **सदा सर्वेति** ।। तर्हीश्वरसाम्यमित्यत उक्तम्– **चोदित इति** ।। एवमवतार्य व्याचष्टे– **आसमन्तादिति** ।। सध्रीचीश्चेत्यादि द्वितीयां सप्तम्यर्थतया व्याचष्टे– **सध्रीचीनास्विति** ।। समीचीनास्ववक्रास्विति यावत् । विषूचीषु वक्रासु अत एव कोणदिक्षु। भुवनेष्वित्यस्य तत्स्थेषु सर्वभूतेष्वित्यर्थमाह– **अन्तश्चेति** ।। छादयन्तीति फलवाक्ये पापात् कर्मण एनं छादयन्ति गोपायति गोपायन्ति पापं कर्मास्य परिहरन्तीत्युक्तं कथं परिहरन्तीत्यत उपासकान् स्वोदरे संस्थाप्य पापाभिमानिनो यथा न स्पृशन्ति तथा आच्छादयन्तीत्यपि विवक्षितम् ।

उपनिषत्-

(सर्वे चेतनाः स्वोदरे विष्णुना रक्षिताः)

अथो आवृतासोऽवतासो न कर्तृभिरिति ॥ १८ ॥ सर्वं हीदं प्राणेनाऽवृतं सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धस्तद्यथाऽयमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येव विद्यात् ॥

॥ इति षष्ठं ब्राह्मणम् ॥

भाष्यम्-

हस्तयोरेतयोरेव नित्याक्षीणं वसु स्थितम् ॥
तद्ध्यसह्यं बलं वायोरनन्तं किमु तद्धरेः ।
वायोराधारभूतस्य ताभ्यां हि क्रतुनामकाः ॥
आवृताः सर्वजीवा हि यथैव कनकावटाः ।
आच्छाद्यन्ते वित्तविद्भिस्ताभ्यामेवं च चेतनाः ॥
आवृता महदाद्यैस्तु देहे तिष्ठन्ति चैतयोः ।
विष्टब्धाश्चैव सर्वेऽपि जीवा आकाश एव च ॥
स वायुः प्रकृतिश्चैव विष्टब्धौ केशवेन हि ।
बृहत्त्वाद् बृहतीत्येव तयोर्नाम प्रकीर्तितम् ॥
वायुकेशवयोः प्राणनाम सर्वप्रणायनात् ।
विशेषतो बृहत्प्राणो भगवांस्तत्र केशवः ॥
इति विद्यात्............................ ।

टिप्पणी -

तत्र मन्त्रान्तरमुदाहृत्य व्याक्रियते– **अथो इति** ॥ उक्तार्थे प्रमाणान्तरमुच्यत

इत्यर्थः । तदेकदेशेन पठति– **आवृतास इति** ।। 'अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे । आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः ।। इति समग्रमन्त्रस्यायमर्थः । हे इन्द्र परमेश्वर वायो विष्णो अप्रक्षितं प्रकर्षेणाक्षीणं नित्याक्षीणं वसु बाह्यं स्वर्णाद्यान्तरं ज्ञानाख्यं दातुं हस्तयोर्बिभर्षि । तथाचेष्टदानेन गोपायसीति भावः । यद्वा, ज्ञानाख्यं वसु त्वद्धस्तयोः वर्तते त्वमक्षितावबोध इति यावत् । बलवद्भिस्तदपहरणे कथं दास्यतीत्यत उक्तम्–**अषाळ्हमिति** ।। असह्यं सहो बलं तन्वि तनौ दधे दधासि । अत्र प्रमाणम्– **श्रुत इति** ।। 'वसु पूर्णकरम्' (तं.सा.सं. ४.१२६) इत्यादौ वसुधारकत्वेन बळित्थेत्यादौ ज्ञानबलपूर्णत्वेन प्रसिद्ध इत्यर्थः । यद्वा, वायुरिति श्रुतः प्रसिद्धः बशब्दस्य बलार्थत्वादयतेर्गत्यर्थत्वादिति भावः । छादयन्तीति यत् स्वोदरे निवेश्य जीवाच्छादकत्वमुक्तं साक्षात् तत्र प्रमाणम्- **आवृतास इति** । हे इन्द्र ते तव तनुषु कर्तृत्वाद् ज्ञानरूपत्वाद्वा क्रतुनामकाः क्रतुशब्दस्य प्रज्ञानामसु पाठात् भूरयोऽनन्ता जीवाः कर्तृभिर्जगत्कारणैर्महदादिदेवैरावृता रक्षितास्तिष्ठन्ति । तत्र दृष्टान्तः। कर्तृभिः स्वेष्टकर्तृभिः वित्तवद्भिर्वित्तवन्तो हि स्वेष्टं कुर्वन्ति । अवतासो न अवटा इव । सावर्ण्याट्टिकारस्य तकारः । कनकावटा इव कनकविशिष्टगर्तविशेषा इव । 'गर्तावटौ भुवि श्वभ्रे' इत्यमरोक्तेः । एतन्मन्त्रतात्पर्यमुच्यते–**सर्वं हीदमिति** ।। इदं सर्वं जीवजातं प्राणेन वायुना केशवेन चाऽवृतम् । ननु 'वायुना वै गौतम सूत्रेणायं च लोकः परश्च' इति वायोः सर्वाधारत्वं श्रूयते । 'आकाश एव तदोतं च प्रोतं च' इति चित्प्रकृतेः, कथं विष्णोस्तदित्यत उच्यते– **सोऽयमिति** ।। सोऽयं वायुराकाशश्चित्प्रकृतिश्च प्राणेन प्रकर्षेण नियामकेन बृहत्या पूर्णेन केशवेन विष्टब्धो धृत इत्यर्थः । यद्वा, प्राणकेशवयोः सर्वाधारत्वं सदृष्टान्तमुच्यते । प्रसिद्धोऽयमाकाशः प्राणेन बृहत्या प्रकर्षेण नियामकेन पूर्णेन विष्णुना वायुना च विष्टब्धो धृतो भवति । यथा तदयमाकाशः सोऽयमाकाशः प्राणेन बृहत्या

विष्टब्ध एवमापिपीलिकाभ्यः पिपीलिकापर्यन्तं विद्यमानानि सर्वाणि भूतानि प्राणेन बृहत्या विष्णुना वायुना च विष्टब्धानि धृतानि इति विद्यादित्यर्थः। अप्रक्षितमिति मन्त्रस्य प्रसिद्धेन्द्रपरत्वप्रतीतेः व्याचष्टे – **हस्तयोरिति** ।। प्रेत्युपसगार्थः **नित्येति** । तद्धव्यसह्यमित्यत्र हीति श्रुत इत्यस्यार्थः । ननु बलदेवत्वाद् वायोः बलमनन्तं भवतु कथं हरेरित्यत आह– **किम्विति** ।। तनूषु ते क्रतव इत्यस्यार्थः- **ताभ्यामिति** ।। कर्तृभिरावृतासो नेति दृष्टान्तविवेचनपूर्वं दार्ष्टान्तिकं विवृणोति– **यथैवेत्यादिना** ।। यथैव वित्तवद्भिः कनकावटाः कनकनिक्षेपगर्तविशेषः पाषाणफलकादिनाऽऽच्छाद्यन्ते तथा ताभ्यां कर्तृभ्यां महदाद्यैः करणैश्चेतना आवृतास्सन्त एतयोर्देहे तिष्ठन्तीत्यर्थः । क्रतव इत्यस्य चेतना इति व्याख्यानं कर्तृभिरित्यस्य दार्ष्टान्तिकेऽर्थो महदाद्यैरिति । 'सर्वं हीदं प्राणेनाऽवृतम्' इत्युपक्रमवाक्यस्य एवं सर्वाणि भूतानि' इत्युपसंहारवाक्यस्य चार्थः- **विष्टब्धाश्चैव सर्वेऽपि जीवा इति** ।। ताभ्यामिति वर्तते । सोऽयमाकाशः प्राणेन बृहत्या विष्टब्ध इत्येतद् व्याचष्टे– **आकाश एवेति** ।। प्रसिद्ध एवाकाश इत्यर्थः । ताभ्यां विष्टब्ध इत्यन्वेति । सोऽयमाकाश इत्यस्य स वायुरयमाकाशश्चेत्यर्थान्तरमाह– **स वायुरिति** ।। बृहत्प्राणशब्दं निर्वक्ति– **बृहत्त्वादिति** ।। तर्हि तयोः साम्यमित्यत आह– **विशेषेण बृहदिति** ।। विशेषेण प्राण इत्यपि योज्यम् । तत्र प्राणकेशवयोर्मध्ये

।। ६ ।।

## ।। इति षष्ठं ब्राह्मणम् ।।

**उपनिषत्-**

### (पृथिव्यग्न्योः परमपुरुषमुखेन सृष्टिः)

**अथातो विभूतयोऽस्य पुरुषस्य तस्य वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयती-दमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको**

भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद ।

**भाष्यम्-**

........... तस्य विष्णोरङ्गानामथ वैभवम् ।
उच्यते तस्य वाचा हि सृष्टावग्निः क्षितिस्तथा ॥
शुश्रूषार्थे तस्य पृथ्वी जनयत्योषधीः प्रभोः ।
ताः पचत्यग्निरुद्युक्त आहृता आहृताः पुनः ॥
आहरेति वचोऽस्यापि शृण्वन्त्येवं महर्षयः ।
मुखजत्वात् तयोर्विष्णोर्मुखं जनकमिष्यते ॥
आस्यभोग्यं ततो विष्णोरन्नं तौ कुरुतः सदा ।
सर्वैर्यद् भुज्यते चान्नं तत्रतत्र स्थितो हरिः ॥
तद् भुङ्क्तेऽतस्तदर्थं हि तावन्नं कुरुतः सदा ।
विष्णोर्वाग्विभवं वेद य उपास्ते च सर्वदा ॥
योग्यः संस्तदुपासायाः स भूम्यग्निसमन्वितः ।
समं तयोर्व्याप्तिमांश्च तद्वन्मुक्तश्च नित्यदा ॥
अनष्टलोको वसति समीपे केशवस्य च ।

(पृथिव्यग्निपदयोग्याः वर्णितोपासनाधिकारिणः)

योग्या अस्या उपासायाः पृथिव्यग्निपदस्य ये ॥
योग्यास्ते वै मुख्यतया तदन्ये यत्र तौ स्थितौ ।
तत्र चर्तुं समर्थाः स्युर्मुक्तिं प्राप्य यदृच्छया[१] ॥
कादाचित्कोपासने तु तावत् तेषां च योग्यता ।

१. यथेच्छया (ह.पा.)

(आपरोक्ष्येण महिमावेत्तुः महाफलम्)

वेदनं ह्यापरोक्ष्येण मुख्यं भवति नान्यथा ॥
एकदेशविदो यस्मात् परोक्षज्ञानिनोऽखिलाः ।
आपरोक्ष्यं भवेद् यस्मान्नैवोपासामृते क्वचित् ॥
तस्मादुपासापूर्वं तु योऽपरोक्षं प्रपश्यति ।
स एव वेद नान्यस्तु योग्यश्चैवापरोक्षदृक् ॥
तस्माद् योग्यस्योक्तफलमन्येषां किञ्चिदेव हि ।

**टिप्पणी -**

पूर्वं स छन्दोभिः छन्न इत्यत्र लोमाद्यवयवैस्तस्य भेदो नास्ति तेषामपि भगवल्लक्षणलक्षितत्वादिति सूचितम् । तत् प्रकटयितुं प्रकृतनारायणाङ्गानां वैभवमुच्यते इति सङ्गतिः खण्ड एव व्यक्ता । अथाधिकारसम्पत्त्यनन्तरं सम्पन्नाधिकारवतामतः प्रयोजनस्य सत्त्वादस्य पुरुषस्य नारायणस्याङ्गानां विभूतयो विभवा उच्यन्त इति शेषः । वाचा आस्येन । अस्यां पृथिव्यां एना ओषधीः स्वदयत्यास्वादनार्हाः करोति पचतीति यावत् । इदमाहरतेदमाहरतेति वदति च । अत एवेदमाहरतेदमाहरतेति वचः श्रूयते ऋषिभिरिति शेषः । अथात इति सूचिते अधिकारफले उच्येते– **यावदन्विति** । योऽधिकारी पृथिव्यादि-पदयोग्यतालक्षणोपासनाधिकारवानेवं वेदोपासनापूर्वमपरोक्षतो देदास्यान्वेनमनु पृथिव्यग्निश्च वर्तते । मुक्तभूम्यग्निसमन्वितो भवतीति यावत् । यद्वा, पृथिवी यावद्देशमनुवर्ततेऽग्निश्च यावद्देशमनुवर्तते तावानस्य लोक आवासस्थानं भवति तत्समव्याप्तिमान् भवतीति यावत् । यद्वा, मुक्तौ पृथिव्यग्निश्च यावत्कालमनुवर्तते तावान् कालोऽस्य लोक आश्रयो भवतीत्यर्थः । एतयोः मुक्तयोः पृथिव्यग्न्योः लोको यावत्पर्यन्तं न जीर्यते तावत्पर्यन्तमस्यापि लोको न जीर्यते । तल्लोको यथा जरादिरहिता नित्यस्तथैतयोरपीति भावः । अन्तरिक्षमनु तत्प्रेरणया चरन्ति । कर्माण्याचरन्ति कर्मफलानि भक्षयन्त्यनुभवन्ति च । चर गतिभक्षणयोरिति

धातुः । यद्वाऽन्तरिक्षप्रेरणया श्रुतिसञ्चारं कुर्वन्ति । आकाशस्य वर्णव्यञ्जक-ध्वन्युपादानत्वादन्तरिक्षमनु तत्प्रेरणया वेदादीन् शृण्वन्ति । वेदश्रवणस्य श्रोत्रेन्द्रिय-साध्यत्वाच्छ्रोत्रस्याऽकाशात्मकत्वात् । वायुर्भूतवायुरस्मै पुण्यं गन्धमावहति, मुख्यवायुरप्यस्य विषये भूतानां पुण्यं गन्धं ज्ञानं स्नेहसहितं ज्ञानं भक्तिं चाऽवहति ददाति । 'गन्ध अर्दने' इति धातोः । अर्दनं च गतिः । 'अर्द गतौ याचने च' इति च धातोः । गतिश्चात्र ज्ञानं गत्यर्थानां ज्ञानार्थकत्वात् । यद्वा, गतिरवगतिरत्र मनसो भगवति गतिर्विवक्षिता । मनसो गतिश्च ज्ञानं भक्तिश्च भवत्येव । ज्योतिः प्रकाशं ज्योतिषा पदार्थव्यक्तिम् । दिग्भ्यो मित्रादि-दिग्देवताभ्यस्तत्प्रेरणयैनं पूजयितुमायान्ति । दिक्प्रेरणयैव ताभ्य आगतं विविध-शब्दं भगवद्विषयं शृणोति । यद्वा, भगवान् दिग्देवैः कृतं स्तवनं स्वश्रोत्रेण शृणोति । यद्वा, दिग्देवतानुग्रहेण प्राप्तमन्येषां श्रवणजं भोगं दिग्भ्यो विवर्जितत्वेन स्वश्रोत्रेण शृणोति भुङ्क्त इत्यर्थः । अस्मै पुण्याय कर्मण इति । एनमुद्दिश्य जीवानां पुण्यकर्म कर्तुं अबभिमानिनः सर्वे देवाः अस्मै पुण्याय कर्मणे भगवद्विषय-ज्ञानभक्तिवैराग्यश्रवणमननयज्ञादिमानसबाह्यक्रियासिद्ध्यर्थं श्रद्धामास्तिक्यनिष्ठां सन्नमन्ते सम्यङ् नमयन्ति प्रह्वीभावयन्ति जनयन्तीति यावत् । वरुणोऽस्य भगवतः प्रजां भगवद्भक्तान् पूर्वपुण्यरूपेण धर्मेण दाधार । पूर्वपुण्यविषये मनोभिमानितया श्रद्धामुत्पाद्य धृतवानिति यावत् ॥

अथास्य पुरुषस्येत्यत्र विष्टब्धानीति विद्यादिति प्रकृतोपासकपुरुषस्य फल-तया वैभवमुच्यते इत्यन्यथाप्रतीतेर्व्याचष्टे– **तस्य विष्णोरिति** ॥ उपास्यतया प्राधान्येन प्रकृतस्य विष्णोरित्यर्थः । अस्येति प्रतिज्ञाय 'वाचा सृष्टौ' इत्यादिनाऽङ्ग-वैभवमुच्यते । तदनुसारेण पुरुषस्येत्यतः परं शेषमाह– **विष्णोरङ्गानामिति** ॥ परिचरत इत्येतदनुरोधेनोक्तम्– **शुश्रूषार्थमिति** ॥ अस्यां जायन्त इत्यधि-करणत्वमात्रप्रतीतेरुक्तम्– **जनयत्योषधीरिति** ॥ इदमाहरतेदमाहरतेति द्विर्वचनानुसारेणोक्तम्– **आहृता आहृता इति** ॥ पुनःपुनराहृता इत्यर्थः ।

इदमाहरतेति वदन्ति जनाः शृण्वन्ति चेत्यर्थमभिप्रेत्योक्तमाह– **आहरेति वच इति** ।। ननु पृथिव्यग्निकार्यान्नस्य वागिन्द्रियभोग्यत्वायोगात् कथं तयोः परिचारकत्वमित्यत आह– **मुखजत्वादिति** ।। 'वाचा सृष्टौ' इत्यत्र वाक्शब्देन मुखमास्यं जनकमिष्यते । कुतः? तयोः विष्णुमुखजत्वाद् विष्णुमुखजत्वस्य प्रसिद्धत्वादित्यर्थः । यत एवं वाक्शब्देनाऽस्यं विवक्षितं तत आस्यभोग्यमन्नं तौ कुरुत इत्युपपद्यत इति योज्यम् । ननु प्रसिद्धान्नस्य दृष्ट्या स्वीकारोक्तेरित्यतोऽन्तर्यामिरूपेण सम्भवतीत्याह– **सर्वैरिति** ।। यदन्नं सर्वैर्भुज्यते तदन्नं तत्रतत्र स्थितो हरिर्भुङ्क्ते, यत एवमन्तर्यामिरूपेण भोक्तृत्वमतस्तदर्थमित्यन्वयः। 'य एवं वेद' इति वेदनमात्रेणैतत्फलमित्यन्यथाप्रतीतेराह– **विष्णोर्वाग्विभवमिति** ।। पृथिव्यग्निश्चास्यान्वेनमन्वित्यर्थमभिप्रेत्य व्याचष्टे– **स भूमीति** ।। मुक्तभूम्यग्निसहित इत्यर्थः । यावद्देशमनुपृथिव्यग्निश्च तावान् देशः । अस्य लोक आश्रयः इत्यर्थान्तरमाह– **सम्मतयोरिति** ।। यावान् कालस्तयोस्तावान् कालो लोक आश्रय इत्यर्थान्तरमाह– **तद्वदिति** ।। नास्य तावल्लोक इत्येतद् व्याचष्टे– **अनष्टलोक इति** ।। योग्यः संस्तदुपासाया इत्यत्र सच्छब्दार्थतयाऽधिकारिविशेषा उक्ताः । के त इत्यत आह– **योग्या इति** ।। ये पृथिव्यग्निपदयोग्यास्ते अस्या उपासाया मुख्यतया योग्यास्तथा चोक्तं फलं तेषु मुख्यमिति भावः । अन्येषां साधनं फलं चामुख्यमित्याह– **तदन्य इति** ।। पदयोग्येभ्योऽन्ये तदवराः कादाचित्कोपासने कृते मुक्तिं प्राप्य तौ यत्र यथेच्छया चर्तुं समर्थाः स्युरेषां तावत्येवोपासने फले च योग्यतेत्यर्थः । ननु 'वाचो विभूतिं यो वेद' इत्यस्य 'य उपास्ते च सर्वदा' इति कथं व्याख्यानमित्यंतस्तल्लाभप्रकारमाह– **वेदनमिति** ।। यस्मादखिलाः परोक्षज्ञानिन एकदेशविदः तस्मादापरोक्ष्येण वेदनमेव मुख्यं विदिधातुप्रतिपाद्यं भवति नान्यथा । पारोक्ष्येणावेदनं मुख्यं प्रतिपाद्यं न भवति । ततश्च किं? तत्राऽह– **आपरोक्ष्यमिति** ।। स एव वेदेत्युच्यत इति शेषः । नन्वस्त्वेवं य एवं वेदेत्यस्योपासनापूर्वं योऽपरोक्षं प्रपश्यतीत्यर्थस्तथाऽपि योग्यानामेव मुख्यं फलमिति कुत इत्यत आह– **योग्यश्चेति** ।। चो

यस्मादित्यर्थे । यस्माद् योग्य एवोपासनापूर्वमपरोक्षदृक् नान्यस्तस्मादित्यन्वयः । अन्येषां कादाचित्कोपासनावतां 'खण्डस्मृतिर्धारणा स्यादखण्डा ध्यानमुच्यते । अप्रयत्नात् समाधिस्तु दर्शनं चिरयाऽनया' (तं.सा.सं. ४.१७२) इत्युक्तत्वादप्रयत्नस्मृतिलक्षणेन समाधिना चिरानुष्ठितेनापरोक्षज्ञानं भवति । नतु खण्डस्मृतिरूपकादाचित्कोपासनेनातस्तेषां तल्लोकसञ्चरणमेवेति भावः ।

**उपनिषत्-**

**(विष्णुना विघ्नेश्वरभूतवाय्वोः सृष्टिः)**

प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यतेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद ॥

**(विष्णोश्चक्षुषा द्यौश्चादित्यश्च सृष्टौ)**

चक्षुषा सृष्टौ द्यौश्चाऽदित्यश्च द्यौर्हास्मै वृष्टिमन्नाद्यं सम्प्रयच्छत्यादित्योऽस्य ज्योतिःप्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चाऽदित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते ॥

यावदेतयोर्न जीर्यते दिवश्चाऽदित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद ॥

(विष्णोः श्रोत्रेण दिशश्च चन्द्रमाश्च सृष्टौ)

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायन्ती३ ॥ दिग्भ्यो विशृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मण एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद ॥

(मनसा सृष्टा आपश्च वरुणश्च)

मनसा सृष्टा आपश्च वरुणश्चाऽपो हास्मै श्रद्धां सन्नमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ॥

॥ इति सप्तमं ब्राह्मणम् ॥

भाष्यम्-

(विष्णुजातानामप्शब्दवाच्यानां देवोत्तमानां जीवेऽनुग्रहनिरूपणम्)

प्राणादिभ्यश्च वाय्वाद्या एवं विष्णोः प्रजज्ञिरे ॥

ब्रह्मशेषसुपर्णेन्द्रशिवाद्या आप ईरिताः ।

ते विष्णोर्मनसा जाताः सर्वे चावभिमानिनः ॥

वैश्वदेव्यस्ततो ह्यापो वरुणश्च मनोभवः ।
प्राणिनां पूर्तपुण्येषु श्रद्धारूपमनोऽधिपः ॥
एवं सर्वा देवता हि विष्ण्वङ्गेभ्यः प्रजज्ञिरे ।
स्वोत्पत्त्यङ्गं च ते विष्णोः शुश्रूषन्ते पृथक्पृथक् ॥
विष्णोर्विषयधर्मेषु ज्ञानादिषु चतुर्मुखः ।
श्रद्धां ददाति भूतानां वैदिकश्रवणे विपः ॥
तान्त्रिके शेषरुद्रौ च शक्रो यज्ञादिकर्मणि ।
वायुर्गन्धवहश्चास्य भक्तिज्ञानप्रदस्तथा ॥
भूतानां तस्य विषये त्वन्तरिक्षं च कर्मणः ।
तदीयस्यैव भोगार्थं जीवानां श्रुतिचारदम् ॥
अन्तरिक्षं च विघ्नेशः सूर्यस्तत्कर्मसिद्धये ।
भूतानां ज्योतिषो दाता द्यौरप्यन्नाद्यदायिनी ॥

**टिप्पणी -**

'प्राणेन सृष्टौ'इत्यादिप्रकरणचतुष्टयं व्याचष्टे– **प्राणादिभ्य इति** ॥ 'मनसा सृष्टा आपश्च वरुणश्च' इत्येतद् व्याचष्टे– **ब्रह्मेति** ॥ सर्वेषामबभिमानित्वे ज्ञापकमाह– **वैश्वदेव्य इति** ॥ तत एव सर्वेषामबभिमानित्वादेव ह्यापो वै सर्वा देवता इत्यादावापो वैश्वदेव्यः विश्वेदेवा अभिमानिनो यासां ता वैश्वदेव्य उच्यन्ते, अन्यथा तन्न स्यादिति भावः । 'वरुणोऽस्य प्रजाम्' इत्येतद् व्याचष्टे– **प्राणिनामिति** ॥ पूर्तपुण्येष्वन्नदानादिपुण्येषु विषये श्रद्धात्मना परिणामिमनोऽभिमानित्वात् तदधिप इत्यर्थः । वरुणस्यासाधारण्येनाबभिमानित्वात् तज्ज्ञापनाय वरुणश्चेति पृथग्ग्रहणम् । उक्ताङ्गेभ्यः उक्तदेवानामुत्पादवचनमुपलक्षणमित्याह– **एवं हीति** ॥ 'आपो हास्मै श्रद्धाम्' इत्युक्तश्रद्धादानं विवेचयति– **विष्णोरिति** ॥ विष्णुविषयेषु ज्ञानादिषु धर्मेष्वित्यर्थः । वैदिकश्रवणे वेदविषयकश्रवणे विपो गरुडः श्रद्धां ददातीत्यन्वयः । एवमुक्तान्यसर्वदेवानां श्रद्धाहेतुत्वं शास्त्रे

विवेचनीयम् । 'वायुरस्मै पुण्यं गन्धम्' इत्येतद् व्याचष्टे– **वायुरिति** ।। भूतवायुरस्य गन्धवहः 'वायुर्गन्धानिवाशयाद्' इत्यादेः । मुख्यवायुः भूतानां तस्य विषये भक्ति-ज्ञानप्रद इत्यर्थः । 'अन्तरिक्षं वाऽनुचरन्ति' इत्यादि व्याचष्टे– **अन्तरिक्षं चेति** ।। अन्तरिक्षं च तदीयस्य पूजारूपस्य कर्मणः प्रदमित्येकोऽर्थः । कर्म किमर्थं जीवानां सुखभोगार्थमित्यर्थः । एतेनान्तरिक्षमनुसृत्य चरन्ति भक्षयन्ति । सुखमनुभवन्ति । चर गतिभक्षणयोरिति धातोरित्यर्थान्तरमुक्तं भवति । प्रकारान्तरेण व्याचष्टे– **श्रुतिचारदमिति** ।। ध्वन्युत्पादनद्वारा वेदप्रवृत्तिप्रदमित्यर्थः । 'अन्तरिक्षमनुशृण्वन्ति' इत्येतद् व्याचष्टे– **श्रुतिचारदमिति** ।। श्रुतिः श्रोत्रेन्द्रियं तस्य चारो व्यापारः श्रवणम् । यद्वा, श्रुतिः श्रवणं तदेव चारो व्यापारस्तत्प्रदमित्यर्थः । 'आदित्योऽस्य ज्योतिः प्रकाशम्' इत्येतद् व्याचष्टे– **सूर्य इति** ।। 'द्यौर्हास्मै वृष्टिमन्नाद्यम्' इत्यस्यार्थः– **द्यौरपीति** ।। अपिपदेन वृष्टिदायिनीति समुच्चिनोति ।। ७ ।।

**।। इति सप्तमं ब्राह्मणम् ।।**

**उपनिषत्-**

**(ब्रह्मरुद्रादिनामान्यपि हरिनामान्येव)**

**आपा इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्वच पुत्रस्य तत् पितुर्यत्र वा पितुस्तत् पुत्रस्येत्येतत् तदुक्तं भवत्येतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेय आऽहं मां देवेभ्यो वेदा ओ मद् देवान् वेदेतः प्रदाना ह्येत इतः सम्भृता इति ।**

**खण्डार्थः -**

अस्य खण्डस्य पूर्वसङ्गतिस्तु 'मनसा सृष्टा आपश्च वरुणश्च' इत्यत्रा-

म्नामकाः सर्वे देवाः सृष्टा इत्युक्तं तन्महालक्ष्म्या आक्षिप्यत इति ॥ **आप इति** ॥ आप इति नाम देवानां कथमेव भवेदिति शेषः । प्रश्नस्यापरिहार्यत्वसूचनाय संहितायां दैर्घ्यं पदे तदभावः । तत्र भगवता महिदासेनोत्तरमुच्यते– **आप इति** ॥ ब्रह्मादीनामाप इति नाम भवत्येवेत्यध्याहार्यम् । तत् कथम् ? इत्यत उक्तम्– **तदिदमिति** ॥ इदं महदाख्यं यद् ब्रह्म तदाप एवाम्नामकमेव । तवाम्नामकत्वे तेषां तन्नामकत्वं कुतः? इत्यत उक्तम्– **इदमिति** ॥ इदं मदाख्यं यद् ब्रह्म तदखिलस्य मूलमदोऽखिलं जन्ममूलं कार्यम् । मूलत्वं च वृक्षमूलवन्न जगदेकदेशत्वेनेति भावेनोच्यते– **अयं पितेति** ॥ ततश्च किमित्यतः पितृत्वात् तन्नाम पुत्राणां भवतीति वक्तुं तदुपपादनाय 'यः पुत्रः स पितृनामवान्' इति व्याप्तिरुच्यते– **यत्र हेति** ॥ पुत्रस्य यत्र क्व च यत्किञ्चिन्नाम भवति तत्पितुर्भवति । यदैवं पुत्रनामापि राजा जयीत्यादिवत् पुत्रस्वामित्वेन पितुर्भवति तदा किमु वक्तव्यं यत्र वा यद्वा नाम पितुर्भवति तत्पुत्रस्य भवतीति । तन्नामपुरस्कारेण पुत्रस्य प्रसिद्धिभाक्त्वादिति हेतोः । तदुक्तं तस्योक्तं भावे क्तः भगवन्नाम । इत्येतदाप इत्येतत् । तेषां ब्रह्मादीनां उक्तं नाम भवतीत्यर्थः । 'तदिदमाप एव' इति मदाख्यं ब्रह्म पूर्णवस्तु आ सम्यग् गुणैः पूर्णत्वादाप इत्युच्यते तन्मोचकत्वाच्चात्यन्तरङ्गत्वेन स्वनाम तेषां दत्तवानितश्चेति भावेन तदुपपादनपूर्वं पूर्णत्वमपि सोपपत्तिकमुच्यते– **एतद्ध स्मेत्यादिना समग्रखण्डेन** ॥ एतत् पूर्णत्वात् स्वस्याम्नामकत्वं तत्पुत्रत्वादन्येषां तन्नामकत्वमिति विद्वान् महिदास एवैतद् वक्ष्यमाणतया बुद्धिस्थं स्वानुभवसिद्धं नियामकत्वादिकमप्याह– [१]**किमिति** ॥ 'आहं माम्'इत्यत्र आ अहमिति पदच्छेदः । 'ओमद्'इत्यत्रापि आ उमदिति पदानि । पिपीलिकामारभ्य देवेभ्य आपर्यन्तम् । आव्याप्तं मामहमावेद सम्यग् वेद । देवानपि मत् आ स्वस्वोत्तमक्रमेण मत्पर्यन्तमाव्याप्तानावेद उ एव वेदैवमयि देवा आश्रितास्तेषु चाहं नियामक इति यावत् ।

---

१. अनन्वितमिदं किंमिति पदं दृश्यते ।

विवेचनीयम् । 'वायुरस्मै पुण्यं गन्धम्' इत्येतद् व्याचष्टे– **वायुरिति** ।। भूतवायुरस्य गन्धवहः 'वायुर्गन्धानिवाशयाद्' इत्यादेः । मुख्यवायुः भूतानां तस्य विषये भक्ति-ज्ञानप्रद इत्यर्थः । 'अन्तरिक्षं वाऽनुचरन्ति' इत्यादि व्याचष्टे– **अन्तरिक्षं चेति** ।। अन्तरिक्षं च तदीयस्य पूजारूपस्य कर्मणः प्रदमित्येकोऽर्थः । कर्म किमर्थं जीवानां सुखभोगार्थमित्यर्थः । एतेनान्तरिक्षमनुसृत्य चरन्ति भक्षयन्ति । सुखमनुभवन्ति । चर गतिभक्षणयोरिति धातोरित्यर्थान्तरमुक्तं भवति । प्रकारान्तरेण व्याचष्टे– **श्रुतिचारदमिति** ।। ध्वन्युत्पादनद्वारा वेदप्रवृत्तिप्रदमित्यर्थः । 'अन्तरिक्षमनुशृण्वन्ति' इत्येतद् व्याचष्टे– **श्रुतिचारदमिति** ।। श्रुतिः श्रोत्रेन्द्रियं तस्य चारो व्यापारः श्रवणम् । यद्वा, श्रुतिः श्रवणं तदेव चारो व्यापारस्तत्प्रदमित्यर्थः । 'आदित्योऽस्य ज्योतिः प्रकाशम्' इत्येतद् व्याचष्टे– **सूर्य इति** ।। 'द्यौर्हास्मै वृष्टिमन्नाद्यम्' इत्यस्यार्थः– **द्यौरपीति** ।। अपिपदेन वृष्टिदायिनीति समुच्चिनोति ।। ७ ।।

**।। इति सप्तमं ब्राह्मणम् ।।**

**उपनिषत्-**

**(ब्रह्मरुद्रादिनामान्यपि हरिनामान्येव)**

**आपा इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत् पितुर्यत्र वा पितुस्तत् पुत्रस्येत्येतत् तदुक्तं भवत्येतद्ध स्म वै तद् विद्वानाह महिदास ऐतरेय आऽहं मां देवेभ्यो वेदा ओ मद् देवान् वेदेतः प्रदाना ह्येत इतः सम्भृता इति ।**

**खण्डार्थः -**

अस्य खण्डस्य पूर्वसङ्गतिस्तु 'मनसा सृष्टा आपश्च वरुणश्च' इत्यत्रा-

म्नामकाः सर्वे देवाः सृष्टा इत्युक्तं तन्महालक्ष्म्या आक्षिप्यत इति ।। **आप इति** ।। आप इति नाम देवानां कथमेव भवेदिति शेषः । प्रश्नस्यापरिहार्यत्वसूचनाय संहितायां दैर्घ्यं पदे तदभावः । तत्र भगवता महिदासेनोत्तरमुच्यते– **आप इति** ।। ब्रह्मादीनामाप इति नाम भवत्येवेत्यध्याहार्यम् । तत् कथम् ? इत्यत उक्तम्– **तदिदमिति** ।। इदं महदाख्यं यद् ब्रह्म तदाप एवाम्नामकमेव । तवाम्नामकत्वे तेषां तन्नामकत्वं कुतः? इत्यत उक्तम्– **इदमिति** ।। इदं मदाख्यं यद् ब्रह्म तदखिलस्य मूलमदोऽखिलं जन्ममूलं कार्यम् । मूलत्वं च वृक्षमूलवन्न जगदेकदेशत्वेनेति भावेनोच्यते– **अयं पितेति** ।। ततश्च किमित्यतः पितृत्वात् तन्नाम पुत्राणां भवतीति वक्तुं तदुपपादनाय 'यः पुत्रः स पितृनामवान्' इति व्याप्तिरुच्यते– **यत्र हेति** ।। पुत्रस्य यत्र कच यत्किञ्चिन्नाम भवति तत्पितुर्भवति । यदैवं पुत्रनामापि राजा जयीत्यादिवत् पुत्रस्वामित्वेन पितुर्भवति तदा किमु वक्तव्यं यत्र वा यद्वा नाम पितुर्भवति तत्पुत्रस्य भवतीति । तन्नामपुरस्कारेण पुत्रस्य प्रसिद्धिभात्त्वादिति हेतोः । तदुक्तं तस्योक्तं भावे क्तः भगवन्नाम । इत्येतदाप इत्येतत् । तेषां ब्रह्मादीनां उक्तं नाम भवतीत्यर्थः । 'तदिदमाप एव' इति मदाख्यं ब्रह्म पूर्णवस्तु आ सम्यग् गुणैः पूर्णत्वादाप इत्युच्यते तन्मोचकत्वाच्चात्यन्तरङ्गत्वेन स्वनाम तेषां दत्तवानितश्चेति भावेन तदुपपादनपूर्वं पूर्णत्वमपि सोपपत्तिकमुच्यते– **एतद्ध स्मेत्यादिना समग्रखण्डेन** ।। एतत् पूर्णत्वात् स्वस्याम्नामकत्वं तत्पुत्रत्वादन्येषां तन्नामकत्वमिति विद्वान् महिदास एवैतद् वक्ष्यमाणतया बुद्धिस्थं स्वानुभवसिद्धं नियामकत्वादिकमप्याह– [१]**किमिति** ।। 'आहं माम्'इत्यत्र आ अहमिति पदच्छेदः । 'ओमद्'इत्यत्रापि आ उमदिति पदानि । पिपीलिकामारभ्य देवेभ्य आपर्यन्तम् । आव्याप्तं मामहमावेद सम्यग् वेद । देवानपि मत् आ स्वस्वोत्तमक्रमेण मत्पर्यन्तमा व्याप्तानावेद उ एव वेदैवमयि देवा आश्रितास्तेषु चाहं नियामक इति यावत् ।

---

१. अनन्वितमिदं किंमिति पदं दृश्यते ।

एतदेव इतो मत्तः प्रदानाः प्रकृष्टपदादिप्रदानवन्तः सन्तानादिप्रदानवन्तो ज्ञानकर्म-बलादिगुणप्रदानवन्तश्चेतो मत्त एव सम्भृताः सम्यग् जीवधारणवन्तः पूर्णा मुक्ता आहेत्यन्वयः ।

**भाष्यम्-**

आप इत्येव देवानां ब्रह्मादीनां कथं भवेत् ।
नामेत्यपृच्छल्लक्ष्मीस्तं महिदासं जनार्दनम् ।।
आप इत्येव नामैषां भवतीत्याह स प्रभुः ।
इदं मदाख्यं यद् ब्रह्म ह्याप इत्यभिधीयते ।।
आ पूर्णत्वाद् गुणैः सर्वैस्तन्मूलमखिलस्य च ।
तूलभूतं तदन्यत्तु पिता ह्येष जनार्दनः ।।
पुत्रा ब्रह्मादयः सर्वे नैवायं वृक्षमूलवत् ।
स्वतन्त्रत्वाज्जगन्नाथः पितृत्वात् परमेशितुः ।।
तन्नामाऽप इति ह्येतत् ब्रह्मरुद्रादिनां भवेत् ।
यथा यदव इत्येव रघवः कुरवस्तथा ।।
पुत्रनाम पितुश्च स्यात् तत्तन्त्रत्वात् सुतस्य हि ।
यथा पितामहाद्याश्च पितरो नाम कीर्तिताः ।।
तथाऽपि मुख्यया वृत्त्या व्यवहारव्यवस्थितिः ।
आप इत्येव सर्वेषां देवानां प्रददौ हरिः ।।
स्वकीयमेवमन्यानि पृथक् पृथगदात् प्रभुः ।
नारायणादिनामानि ददौ नान्यस्य केशवः ।।
एवं स भगवान् विष्णुर्महिदासाभिधः प्रभुः ।
जानन्नित्योदितज्ञानादाह देवीमिदं वचः ।।
देवपर्यन्तमा व्याप्तिं वेदाहं मम सर्वदा ।
मत्पर्यन्तं तथा व्याप्तिं देवानामपि सर्वशः ।।

**मयि देवास्तेषु चाहमिति विद्धि वरानने।**
**मयैतानि प्रदत्तानि पदानि ब्रह्मपूर्वकाः॥**
**अधितिष्ठन्ति सत्ताद्या अप्येतेषां मदाज्ञया।**
**ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वदे॥**
**सम्भृता मत्त एवैते ...........।**

**टिप्पणी-**

'आप इत्यापः' इत्यनयोः पौनरुक्त्यप्रतीतेः साध्याहारं प्रश्नपरिहारविषयतया व्याचष्टे- **आप इत्येव देवानामिति** ॥ 'तदिदं ब्रह्माप एव' इति प्रकृताद्भिर्ब्रह्मणोऽभेदप्रतीतेर्व्याचष्टे- **इदमिति** ॥ 'इदं वै मूलम्' इत्यादेरर्थः- **तन्मूलमिति**। 'अयं पिता' इति पुनरुक्तमित्यतस्तद् व्याकुर्वन्नुपयोगमाह- **पितेति** ॥ 'इदं वै मूलम्' इत्युक्तं मूलत्वं च न वृक्षमूलवज्जगदेकदेशत्वेनेति भावेनायं पितेत्यादि प्रवृत्तमिति भावः। वृक्षमूलवत् किन्न स्यादित्यत आह-**स्वतन्त्रत्वादिति** ॥ इत्येतत् तदुक्तं भवतीत्येतद् व्याचष्टे- **पितृत्वादिति** ॥ एतेनेतिशब्द उक्त-पितृत्वहेतुपरामर्शकः। तदुक्तं तस्य हरेर्नाम इत्येतदाप इत्येतत् तेषां देवानामुक्तं नाम भवेदिति व्याख्यातं भवति। 'यत्र वा पितुस्तद्वा पुत्रस्य' इत्युक्तव्याप्तेरुदाहरण-माह- **यथेति** ॥ कैमुत्यन्यायसूचकस्य 'यत्र ह क्व च पुत्रस्य' इत्यस्याप्युदाहरण-माह-**पुत्रनामेति** ॥ तत्तन्त्रत्वादित्यनेन **'तदधीनत्वादर्थवत्'** (ब्र.सू. २.४.३) इति न्यायं सूचयति। पुत्रस्य पितृनामवत्त्वे लोके व्यवहारसाङ्कर्यं स्यात्। तथा देवानामपि अम्नामकत्वेन तत् स्यादित्यत आह- **तथाऽपीति** ॥ व्यवहार-व्यवस्थितिर्नाम व्यवस्थितिः। प्रवृत्तिनिमित्तं यत्र मुख्यं तत्र तस्य बहुव्यवहारोऽन्यत्राल्प इति प्रकरणपर्यालोचनयाऽपि मुख्यत्वाद्यनुसन्धानेन नामव्यवस्थेति भावः। यद्वा, देवानामम्नामकत्वे ब्रह्मरुद्रादिनामपर्यायत्वं स्यादित्यत आह-**तथाऽपीति** ॥ ब्रह्मादि-नाम्नां तत्तन्मात्रवर्तित्वेनासाधारण्येन मुख्यत्वं समुदायनाम्नस्त्वमुख्यत्वमिति व्यवहाराणां नाम्नामपर्यायतया व्यवस्थितिरिति। उक्तमेव विवृणोति- **आप**

**इत्येवेति** ।। अन्यानि ब्रह्मेत्यादीनि । पृथग् देवेभ्यः । नन्वम्नाम्न इव ब्रह्मादिनाम्नामपि भगवन्नामत्वात् सर्वेष्वपि देवेषु तत्प्रयोगप्रसङ्गस्तथाच व्यवहारसाङ्कर्यं स्यादित्यत आह– **तथाऽपीति** ।। यन्नाम यस्य विशेषतो दत्तं तत् तत्र मुख्यमिति मुख्यया वृत्त्येत्यर्थः । तद् विवृणोति– **आप इत्येव देवानामिति** ।। ननु देवानां पितृनामकत्वे नारायणादिनामवत्त्वमपि स्यादित्यत आह– **नारायणा-दीति** ।। 'इत्येतद्ध स्म वै तद् विद्वान्'इत्येतद् व्याचष्टे– **एवं स भग-वानिति** ।। 'आहं मां देवेभ्यः' इत्यत्र आ अहमिति विभज्य आ इत्यस्यार्थत्रयमाह– **देवपर्यन्तमिति** ।। देवेभ्यः आ पर्यन्तं आव्याप्ति । मा वेद सम्यक् सदा वेदेत्यर्थः । तात्पर्यमाह– **मयि देवा इति** ।। 'इतः प्रदानाः' इत्येतद् व्याचष्टे– **मयैतानीति** ।। कैमुत्यपरत्वेन प्रकारान्तरेण व्याचष्टे– **सत्ताद्या अपीति** ।। सत्ताद्याः स्वरूपसत्ता तद्विषयप्रतीतिप्रवृत्तयोऽपि मदाज्ञया पदानि मया प्रदत्तानीति किमु वाच्यमित्यर्थः । सत्ताद्या अपि मदाज्ञया ज्ञानकर्मबलेहाद्या मद्दत्ता इति किं वद इति योज्यम् । ईहेच्छाज्ञानभक्त्यादिविषयिणी । इतः सम्भृता इत्य-स्यार्थः । **सम्भृता इति** ।।

**उपनिषत्-**

**(भगवानेव ब्रह्मगिरिः)**

**स एष गिरिश्चक्षुः श्रोत्रं मनो वाक् प्राणस्तं ब्रह्मगिरिरित्याचक्षते गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ।।**

**खण्डार्थः -**

किञ्च स एष सर्वभूतानां निगरणात् संहरणाद् गिरिः, चष्ट इति चक्षुः, श्रोत्रत्वाच्छ्रोत्रं, मन्तृत्वान्मनः, प्रणेतृत्वात् प्राणः, उपलक्षणमेतत् । एवं सर्वगुण-

पूर्णश्च तमेवं गुणपूर्णत्वादखिलस्य गरणाच्च ब्रह्मगिरिरित्याचक्षते । य एवं सर्वगुणपूर्णत्वात् सर्वसंहर्तृत्वाच्च ब्रह्मगिरिशब्दवाच्यं वेद स द्विषन्तं ज्ञानभक्त्यादि-स्वयोग्यगुणपूर्तिप्रतिबन्धकं भ्रातृव्यं भ्रातृवत् सह स्थितं पाप्मानं पापपुरुषं कल्यादिदैत्यं गिरति नाशयति । 'कलिर्ममाराऽशु सुवाङ्मयैः शरैः', 'निकृत्तशीर्षो भगवन्मुखेरितैः' (म.ता.नि. १०.६०) इति तात्पर्यनिर्णयोक्तरीत्यैवमुपासकस्य द्वेषी कल्यादिदैत्यो रूपविशेषेण नश्यतीति ज्ञेयम् । न केवलमेतावत् किन्त्व-स्यैवमुपासकस्य द्विषन् द्वेष्टा भ्रातृव्यः भ्राता यथैकगेहे वर्तते यथाच यमलभ्रातैक-स्मिन् मातृदेहे वर्तते तथैकदेहस्थः पाप्मा पराभवति तमःप्राप्तिलक्षणं पराभवं प्राप्नोति । पराचीनमवमं तमो भवति प्राप्नोतीति वा भवतेः प्राप्त्यर्थकत्वात् ।

**भाष्यम्-**

**............... स एष भगवान् गिरिः ।**
**गिरणात् सर्वभूतानां चक्षुर्नामास्य दर्शनात् ॥**
**सर्वश्रोतृत्वतः श्रोत्रं मनो मन्तृत्वहेतुतः ।**
**प्राणनामा प्रणेतृत्वात् तमेनं गुणपूर्तितः ॥**
**गिरणाच्चाखिलस्यास्य प्राहुर्ब्रह्मगिरिं प्रभुम् ।**
**य एवं वेद तं विष्णुमापरोक्ष्येण शाश्वतम् ॥**
**गिरत्येवाखिलं पापं भ्रातृवत् सह संस्थितम् ।**
**पराभवति पाप्माऽस्य द्वेष्टा निरयदस्सदा ॥**

टिप्पणी -

'स एष गिरिः' इत्यादि व्याचष्टे– **स एष इति** ॥ गरणदर्शनश्रोतृत्वादिकं सर्वसाधारणमित्यतः सर्वभूतानां गरणात् सर्वभूतानां दर्शनात् सर्वश्रोतृत्वत इत्यादि । 'तं ब्रह्मगिरिः' इत्येतद् व्याचष्टे– **तमेनमिति** ॥ 'गिरति हवा वै' इत्यादि फलवाक्यं व्याचष्टे– **य एवमिति** ॥ जगन्मूलत्वतत्संहारकत्वादेः प्रकृतत्वात् तल्लब्धार्थपरमार्शाय शाश्वतमित्युक्तम् । **निरयगो नित्यनिरयगः** ।

**उपनिषत्-**

**(उपासनावैविध्येनैव तत्तद्योग्यफलप्राप्तिः)**

**स एषोऽसुः स एष प्राणः स एष भूतिश्चाभूतिश्च तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह परा बभूवुर्भवत्यात्मना पराऽस्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद ॥**

**खण्डार्थः -**

ब्रह्मज्ञानिद्वेषिणो निरये पराभवो ज्ञानिनस्तु परमानन्दप्राप्तिरित्यस्य सम्भावनाय भगवतो द्वेषिनिरासकत्वादिमहिमान्तरमुच्यते– **स एष इति** ॥ स एष भगवान् सर्वस्यायोग्यजनस्यासनात् तमसि क्षेपणादसुः ज्ञानिनां प्रकृष्टं सुखं यस्मात् स प्राणः। परमानन्दप्रापक इति यावत्। स्वस्याऽनन्दाभावे कथं तद्दानमित्यतश्चोक्तम्– **प्राण इति** ॥ प्रकृष्टं सुखं यस्य स्वरूपं स प्राण इत्यर्थः । निरयपरमानन्दयोः साधनमुच्यते– **स एष भूतिश्चेति** ॥ स एष भगवान् भक्तानां ज्ञानैश्वर्यादिभूतिप्रदत्वात् तद्रूपत्वाच्च भूतिनामा अभक्तानामज्ञानाद्यभूतिप्रदत्वादभूतिनामा । कुत इदं वैषम्यमित्यत उक्तम्– **भूतिरिति** ॥ वाय्वादयो देवास्तं भूतिः सुखज्ञानादिगुणप्रदश्चेत्युपासाञ्चक्रिरे तस्माच्च तेऽखिलाः सुखसज्ज्ञानपूर्वसद्गुणैः युता बभूवुः । देवानां तथोपासकत्वे उदाहरणमुक्तम्– **तस्माद्धेति** ॥ तस्मादेव कारणादेतर्हीदानीमपि देवोत्तमः सुप्तः सुप्तस्थो वायुस्तं भूर्भूरित्येव भूतिप्रदो भूतिरूप इत्येव प्रश्वसिति श्वासरूपेण शंसति । 'यद् यदाचरति श्रेष्ठः' इति न्यायेनान्येऽपि तथोपासत इति भावः। एवं देवतोपासनं तद्भूतिकारणमित्युक्त्वा तद्विपरीतोपासनमसुराणां फलवैपरीत्ये कारणमित्युच्यते– **अभूतिरिति** ॥ असुरास्त्वभूतिर्भूत्यकारकः अभूतिरूपश्चेत्युपासाञ्चक्रिरे तस्मात् ते पराबभूवुः ज्ञानैश्वर्यादिहीनाः पराभूतास्तमस्यन्धे च पेतुः । य एवं वेद स आत्मना

परमात्मप्रसादेन भवति । ज्ञानैश्वर्यादिसम्पन्नो भवति । अस्य द्वेष्टा भ्रातृव्यः पाप्मा च पराभवतीत्यर्थः ।

**भाष्यम्-**

असनाद् भगवान् सोऽसुः सर्वस्यापि जनार्दनः ।
प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते ॥
स एव भूतिनामाऽपि ज्ञानैश्वर्यादिभूतिदः ।
अज्ञानादिप्रदातृत्वात् स एवाभूतिनामकः ॥
सुखज्ञानादिगुणदं पूर्णं सर्वगुणैः प्रभुम् ।
उपासते तं वाय्वाद्या देवास्तस्माच्च तेऽखिलाः ॥
बभूवुः सुखसज्ज्ञानपूर्वैः सर्वैर्गुणैर्युताः ।
देवानामपि सर्वेषां प्रधानोऽद्यापि मारुतः ॥
स्थित्वा सुप्तेषु विष्णुं तं भूर्भूरित्येव शंसति ।
भूशब्दार्थो भूतिरिति वैपरीत्येन चासुराः ॥
अभूतिकारणोऽस्माकमैश्वर्यादिगुणोज्झितः ।
इत्येवोपासते तस्मात् पराभूताश्च सर्वशः ॥
ज्ञानैश्वर्यादिभिर्हीनाः पेतुरन्धे तमस्यथ ।
य एवं वेद तं विष्णुं भूतिदं भूतिरूपिणम् ॥
भावाभावं च देवानां दैत्यानां चैवमेव तु ।
ज्ञानैश्वर्यादिभिः सोऽपि भवेत् तस्य परात्मनः ॥
प्रसादादस्य पाप्मा च पराभवति सर्वशः ।

**टिप्पणी -**

'स एषोऽसुः' इत्यादि व्याचष्टे– **असनादित्यादिना** ॥ असनान्निरसनात् संहरणात् तमसि क्षेपणाद्वा । असु क्षेपण इति धातोः । सर्वस्य योग्यस्य प्रकृष्टमानन्दं

रूपयति निरूपयतीति प्रकृष्टानन्दरूपत्वात् प्राण इत्यर्थः । प्रकृष्टानन्दस्वरूपत्वादिति वा । ज्ञानैश्वर्यादिभूतिद इत्युपलक्षणम्। भूतिरूप इति च ग्राह्यम् । 'भूतिदं भूतिरूपिणम्'इति वक्ष्यमाणत्वात् । 'तं भूतिरिति देवाः' इत्युपलक्षणम् । 'स एष प्राणः' इत्युक्तरीत्या सुखप्रदस्तत्पूर्णश्चेति चोपासाञ्चक्रिरे इत्यर्थमभिप्रेत्य व्याचष्टे– **सुखज्ञानादीति** ।। तस्माद्धाप्येतर्हीत्यत्र श्रूयमाणं तस्मादिति पदं देहलीदीपन्यायेनोभयत्रान्वेतीति भावेन पूर्वसम्बन्धितया व्याचष्टे– **तस्माच्च तेऽखिला इति** ।। ननु देवानां भूतिरित्युपासकत्वे कथं सुप्तस्य भूर्भूरिति श्वासकर्तृत्वं ज्ञापकमित्यतस्तस्माद्धाप्ये तर्हीति वाक्यं व्याचष्टे– **देवानामिति** ।। तस्मादेवेत्यत्रा-प्यन्वेति । ननु तथापि भूतिरित्युपासकत्वे भूरिति शंसनं कथं ज्ञापकमित्यत उक्तम्– **भूःशब्दार्थ इति** ।। भूतिरित्येव भूःशब्दस्यार्थ इत्यर्थः । 'अभूतिरित्यसुराः' इत्येतद् व्याचष्टे– **वैपरीत्येनेति** ।। किं तद्देवतोपासनावैपरीत्यमसुरोपासायामित्यतः अभूतिरित्यस्यार्थमाह– **अभूतिकारक इति** ।। भूत्यकारक इत्यर्थः । विष्णुः स्वोपासकानामभूतिमेव करोतीति वा । अर्थान्तरमाह– **ऐश्वर्यादीति** ।। परा-बभूवुरित्यस्य प्रतिपदं-**तस्मात् पराभूता इति** । तद् द्वेधा विवृणोति–**ज्ञानेति** ।। 'य एवं वेद स भवत्यात्मना'इति फलवाक्यं व्याचष्टे– **य एवमिति** ।। **भावाभाव-मिति** ।। देवानां भावमैश्वर्यादिशुभं दैत्यानामभावमशुभम् । 'सद्भाववाचकाः शब्दाः सर्वे ते शुभवाचकाः' (गी.ता. २.१६) इति वचनात् । आत्मना परमात्मना प्रसन्नेनेति धर्मिप्राधान्यविवक्षयोक्तमिति भावेन धर्मप्राधान्यविवक्षया 'परात्मनः प्रसादाद्' इत्युक्तम् । आत्मनेत्यस्य पाप्मेत्युत्तरेणाप्यन्वयः । तद् व्याचष्टे– **तस्य परात्मनः प्रसादात् तस्य पाप्मा चेति** ।।

**उपनिषत्-**

**(जीवानां जीवनमरणमोक्षादयो भगवदधीना एव)**

**स एष मृत्युश्चैवामृतं च तदुक्तमृषिणा । अपाङ् प्राङेति स्वधया गृभीत इत्यपानेन ह्ययं यतः प्राणो**

**न पराङ् भवत्यमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी३ ॥ अमृतैषा देवता ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यमिति निचिन्वन्ति हैवेमानि शरीराणी३ ॥ अमृतैवैषा देवताऽमृतो हवा अमुष्मिन् लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद ॥**

**॥ इति श्रीमहैतरेयोपनिषदि द्वितीयप्रघट्टके प्रथमोऽध्यायः ॥**

**खण्डार्थः -**

इतः सम्भृता एष गिरिरिति जीवनहेतुत्वं मोक्षहेतुत्वं संहारकत्वं चोक्तम् । तदुपपादयितुमुच्यते– **स एष मृत्युश्चेति** ॥ स एष वायुना सहितो विष्णुरेव मृत्युर्मारकोऽमृतं मोक्षप्रदश्च संसारे मुक्तौ च मृतिविरुद्धजीवनप्रदो वा । तदेतत् प्रमेयमृषिणोक्तम् । अपागवागञ्चतीत्यप्राङ् अपानः प्रागूर्ध्वमञ्चतीति प्राङ् प्राणश्च वायुः स्वधया आनन्दरूपिणा हरिणा गृभीतोऽनुगृहीतः । **हृग्रहोर्भश्छन्दसीति** वचनात् । अपागवाक्पायूपस्थरूपाधःस्थाने प्राक् चक्षुःश्रोत्र-मुखनासिकारूपोर्ध्वस्थाने चेति जीवनहेतुः प्रवर्तक इति यावत् । ननु मर्त्यैः शरीरैः सह स्थितस्य वायोर्मरणावश्यम्भावेन कथमन्यत्र मृतिजीवनहेतुत्वमित्यत उक्तम्–**अमर्त्य इति** ॥ स्वधया गृहीत इत्यनुवर्तते । मर्त्यं न मर्त्यैर्नाशशिरस्कैर्देहैः स योनिः सह स्थितोऽपि भगवदनुगृहीतत्वाद् अमर्त्य एव देहाभिमानाभावेन तत्कृतोत्पत्तिमृतिविक्रियाशून्यत्वादज्ञानलोपाभावाच्चेति भावः । कैमुत्येन वायो-रमृतत्वमुच्यते–**ता शश्वन्तेति** ॥ तौ वायुतद्देहौ शश्वन्तौ शश्वद् विद्यमानौ । देहानां शश्वद् विद्यमानत्वं मोक्षपर्यन्तमेव नतु निरवधिकमिति भावेनोक्तम्–**विषूचीनेत्यादि** ॥ विष्वगञ्चत इति विषूची विषूचीनौ हरिपञ्चभूतलक्षणनानागम्याविति यावत् । किञ्च वियन्ता वियन्तौ विरुद्धगमनौ । ऊर्ध्वगमनं वायोः शरीराणामधःक्षिप्तौ

पात इति भावः । तत्र ज्ञापकमुक्तम्- **न्यन्यमिति** ।। अन्यं शरीरं निचिक्युर्ददृशुरन्यं वायुं न ददृशुरित्यर्थः । प्रथमपादमनूद्य तात्पर्यमुच्यते– **अपानेनेति** ।। स्वधये-त्यध्याहार्यम् । अपानेनेति सहयोगे तृतीया । हिशब्दो यस्मादित्यर्थे । यस्मादपानेन सह प्राणः स्वधया परमात्मना यतो नियतस्तस्मान्न परागू भवति शरीरान्निर्गच्छति जीवनकर एव वर्तत इति यावत् । द्वितीयपादमनूद्य स्वधयेत्यन्वेति जात्येकवचनमिति भावेनार्थ उच्यते– **एतेन हीति** ।। इदं सर्वं देहजातमेतेन भगवदनुग्रहेणामर्त्येन वायुना सयोनि सहस्थितम् । तस्यैव विवरणम्– **मर्त्यानि हीति** ।। 'ता श्वशन्ता' इत्यर्धमनूद्य 'अन्यं निचिक्युः' इत्यस्यार्थ उच्यते– **निचिन्वन्ति हैवेति** ।। अस्योपयोग उच्यते- **अमृतैवैषा देवतेति** ।। यदा देहा अपि शाश्वतास्तदैषा देवता अमृतेति किमु वाच्यमित्यर्थः । 'स एष मृत्युश्चैवामृतं च'इत्यादेः फलमुच्यते– **अमृत इति** ।। य एवं भगवत्प्रसादेनामृतत्वादिगुणयुक्तं वायुं वेद सोऽमृतो मुक्तः सन्नमुष्मिन् लोके विष्णुलोके सम्भवति वसति । मुक्तेभ्यः सर्वेभ्यो भूतेभ्यो मुक्त एव ददृशे दृश्यत इति ।।

**भाष्यम्-**

**स एष भगवान् विष्णुर्मृत्युदो मोक्षदस्तथा ।।**
**स एव जीवनकरो यदाऽपानेन संयुतः ।**
**प्राणं नियमयत्यस्मिन् शरीरे पुरुषोत्तमः ।।**
**शरीराद् बहिरेतौ तु यदा निःसारयत्यजः ।**
**तदा मृत्युप्रदश्चायं मुक्तानामपि जीवनम् ।।**
**प्राणादेव हि तत्रापि प्राणाधारो जनार्दनः ।**

**(मुख्यप्राणो मरणरहितः)**

**अर्वाक् प्राक् च सदा गच्छेद् वायुरानन्दरूपिणा ।।**

अनेनैव गृहीतो हि प्राणोऽपानेन संयुतः ।
अनेन हरिणा यस्मान्नियतो न पराङ् भवेत् ।।
अमर्त्यस्तत्प्रसादेन वायुर्देहैः सह स्थितः ।
अनित्या अपि देहास्ते शश्वत् सन्त्या विमोक्षतः ।।
स्थूलसूक्ष्मविभागेन किमु वायुर्जगत्प्रभुः ।
नानागती च तावेतौ वायुः प्राप्नोति केशवम् ।।
शरीरं तु विनष्टं सत् पञ्चत्वमुपगच्छति ।
जडं तज्जडतामेति चेतना वायुदेवता ।।
चेतनेशं हरिं याति विरुद्धगमनौ च तौ ।
ऊर्ध्वं गच्छति देवः स देहोऽधः पतति क्षितौ ।।
दृश्यते तच्छरीरं चाप्यदृश्या वायुदेवता ।
य एवं वेद तं वायुममृतं सर्वनायकम् ।।
पूर्णानन्देन हरिणा गृहीतं तद्वशं सदा ।
स मुक्तो लोकमाप्नोति विष्णोर्मुक्तैश्च दृश्यते ।। इति च ।।

**टिप्पणी -**

'स एष मृत्युश्चैवामृतं च'इत्यत्रैष उपासको देहतो मृत्युग्रस्तः स्वरूपतस्त्वमृत इत्यन्यथाप्रतीतेर्व्याचष्टे– **स एष भगवानिति** ।। अमृतमित्यस्य मृतिविरुद्धजीवनकर इत्यर्थान्तरमाह– **स एवेति** ।। मन्त्रेणैकार्थत्वसिद्धये जीवनप्रदत्वं मृत्युत्वं चोपपादयति– **यदापानेनेत्यादिना** ।। न केवलं लिङ्गभङ्गलक्षणमुक्तिप्रदः किन्तु मुक्तौ जीवनप्रदश्चेति भावेनामृतमित्येतद् व्याचष्टे– **मुक्तानामपीति** ।। न केवलं संसारिणां मुक्तानामपीति वा । प्राणादेवेत्येवकारेण तत्त्वदेवानां नियामकत्वमात्रं जीवनं तु प्राणादेवेति द्योतयति । तत्र मुक्तावपि जनार्दनः प्राणाधारः प्राणस्य प्राणधारको जीवनकर इति यावत् । 'अपाङ् प्राङेति'इति मन्त्रपादं व्याचष्टे– **अर्वागिति** ।। तत्रापाङ् प्राङित्यस्यार्थः- **अर्वाक् प्राक् चेति** ।। सार्वकालिको

लडिति भावेन सदा गच्छेदित्युक्तम्। अपाङ् अपानः प्राङ् प्राण इत्यर्थान्तरमभिप्रेत्य तयोः प्रतिपदं व्याचष्टे- **वायुरिति** ॥ 'स्वधया गृभीतः' इत्यस्यार्थः–**आनन्दरूपिणेति** ॥ 'अपानेन ह्ययं यतः प्राणो न पराग् भवति' इत्यस्यार्थमाह– **प्राणोऽपानेनेति** ॥ एतेनापानेनेति सहयोगे तृतीया । स्वधयेत्यनुवृत्तस्य यत इत्यनेन सम्बन्धः । तस्य च नियत इत्यर्थः । हिशब्दस्य यस्मादित्यर्थ इत्युक्तं भवति । 'अमर्त्यो मर्त्येनास योनिः' इत्यादि व्याचष्टे– **अमर्त्य इति** ॥ देहैः सह स्थितोऽपि वायुस्तत्प्रसादेनाभिमानशून्यत्वादमर्त्य इत्यर्थः। अनेन मन्त्रेण 'स्वधया गृभीतः' इत्येतद् 'अमर्त्यो मर्त्येन' इत्यत्रापि सम्बद्ध्यत इति भावेनोपनिषद्येतेन हीत्युक्तमित्युक्तं भवति। 'ता शश्वन्त' इत्येतद् वायोरमृतत्वे कैमुत्यन्यायपरमिति भावेन व्याचष्टे– **अनित्या अपीति** ॥ तर्हि मोक्षायोग इत्यतो विषूचीनेत्यादिलब्धं समाधानमाह– **आविमोक्षत इति** ॥ प्रलयेऽभावात् कथमेतदित्यत उक्तम्– **स्थूलसूक्ष्मेति** ॥ विषूचीनेत्येतद् व्याचष्टे– **नानेति** ॥ नानागम्यावित्यर्थः । तद् विवृणोति– **वायुरिति** ॥ पञ्चत्वं पञ्चभूतलक्षणकारणात्मकत्वम् । ननु तद्देहस्य सत्त्वगुणकार्यत्वात् कथं भौतिकत्वमिति चेत् । 'भौतिकेन तु सत्त्वेन गूढं ब्रह्मण आण्डजम्' इति तृतीयस्कन्धतात्पर्योक्तरीत्या (३.११.१६) 'अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' (चित्तु. १३.१) इत्यादि श्रुत्युक्तरीत्या चाण्डजरूपविवक्षयैवमुक्तिसम्भवात्। बहिर्गतरूपाणां शरीरस्य तु कथमित्यतः प्रकारान्तरमाह– **जडमिति** ॥ अत एव स्थूलसूक्ष्मविभागेनेत्यस्य स्थूलमण्डजं सूक्ष्मं महदाद्यन्तर्गतमित्यर्थः । सूक्ष्माणि महदादीनि स्थूलान्यण्डादिकानि चेत्यादेः । यद्वा, 'ततो महत्तत्त्वतनू विरिञ्चः स्थूलात्मनैवाजनि' (मं.ता.नि. ३.१६) इत्युक्तरीत्या स्थूलात्मना सृष्टं महदाद्यन्तर्गतं स्थूलं सूक्ष्मतया सृष्टं सूत्रपुरुषादिनामकं सूक्ष्ममित्यर्थः । यद्वा, स्थूलं बाह्यं सूक्ष्मं लिङ्गशरीरमिति ज्ञेयम्। वियन्तेत्येतद् व्याचष्टे– **विरुद्धेति** ॥ ननु 'स्रष्टुस्तु ग्रासभूतस्तु देहस्तत्र लयं व्रजेत्' (ब्र.सू.अनु. ४.२.१) इति वचनात् कथमधः क्षितौ देहस्य पात इति चेन्न । क्षितिशब्देन स्वनाशस्थानस्योर्ध्वगमनशब्देन तत्तदधस्त्यागस्य विवक्षितत्वात्। क्षि निवासगत्योरिति

धातोः । 'न्या अन्यम्'इत्येतद् व्याचष्टे– **दृश्यत इति** ॥ एतेन 'अनित्या अपि देहास्ते' इत्यारभ्य 'दृश्यते तच्छरीरं च' इत्यन्तमुक्तं प्रमेयं सर्वं जीवसाधारणं 'ता शश्वन्त' इति वायोः विशेष उच्यत इति निरस्तम् । वायोः सूक्ष्मदृष्टरूपाणां तत्त्वाभिमानिरूपाणामण्डान्तर्जातमूलरूपाणां चाप्रलयमवस्थानाङ्गीकारादितर-देवादिरूपाणाम् । अण्डान्तः ब्रह्मकश्यपादिसृष्टानां दैनन्दिनप्रलयादौ विनाशाङ्गी-कारात् । प्रतिदिनं रोचनाद्यात्मना जननेऽपि तेषां नाशः । किन्तु दैनन्दिनप्रलयेऽपि सत्यादौ पृथगवस्थानं वा ब्रह्मसृष्टमनूनां भगवत्सृष्टैकीभाववन्मूलरूपेण संश्लेषो वेत्युपपत्तेः । अत एव महाप्रलय एव तच्छरीराणां तस्य च नानागतित्वविरुद्ध-गतित्वाद्यभ्युपगमेन तद्विषयेऽपीतरवैलक्षण्यमिति ज्ञेयम् । यद्वा, 'स एष मृत्यु-श्चैवामृतं च' इत्यत्र 'शरीराद् बहिरेतौ तु यदा निःसारयत्यजः । तदा मृत्युप्रदश्चायम्' इति सर्वजीवशरीरेभ्यो निर्गमनमुक्तं तेन जीववत्तस्यापि मर्त्यत्वमिति शङ्कानिवारणाय 'अमर्त्यो मर्त्येन'इत्यादिमन्त्रशेषप्रवृत्तिः । तद्विवरणम्– **एतेन हीदमिति** ॥ व्याख्यानम्- अमर्त्यस्तत्प्रसादेनेत्यादि । अनन्तैर्जीवदेहैः सह स्थितोऽपि भगवत्प्रसादेनामर्त्य एव तन्नाशेन विक्रियाशून्यत्वादिति भावः । वायोरमृतत्वं कैमुत्येनोच्यते– **ता शश्वन्तेति** ॥ तद्व्याख्यानम्– **अनित्या अपीति** ॥ यदा शरीराणां प्रवाहतो नित्यत्वं तदा जगत्प्रभुस्तन्नियामको वायुर्नित्य इति किमु वक्तव्यम् । अनित्यत्वे शरीरप्रवाहनिर्वाहकत्वायोगादिति भावः । 'मृत्युश्चैवामृतं च'इत्यत्र प्राणिशरीरेभ्यः प्राणापानाख्यरूपद्वयस्य निःसरणमुक्तम् । तत्र प्रमाणम्– **विषूचीनेत्यादि** ॥ तद्व्याख्यानम्–**नानागती इत्यादि** ॥ शरीरं प्राणिदेहः । पञ्चत्वमित्यस्य विवरणम्– **जडमित्यादि** ॥ 'अमृतो ह वै' इत्यादिफलवाक्यं विवृणोति– **य एवमित्यादिना** ॥

**भाष्यम्-**

**(श्रीहरिरेव सृष्ट्यादिसर्वकर्ता)**

'ब्रह्म' 'पन्थाः' 'सत्यं' 'कर्म' इति तस्य नारायणस्य वासुदेवाद्याः क्रमेण

**चतस्रो मूर्तयः । नासिकायां यन्नेत्रयोर्मध्ये विनतमिव किञ्चिन्नतस्थानं तत् सूर्यलोकस्थानीयं विद्यात् ।**

**टिप्पणी -**

'एष पन्थाः' इत्यादि वाक्यं ब्रह्म जिज्ञास्यं तस्य निर्दोषगुणपूर्णत्वेन विषयत्वात् । स्वप्राप्तिहेतुतया प्रयोजकत्वादित्येवंपरतया प्रमाणेन व्याख्यातम् । अधुना प्रकारान्तरेणानुपपत्तिपरिहारकतया स्ववाक्येन व्याक्रियते । तथाहि- यदुक्तं नारायणस्य जगज्जन्मादिकारणत्वमुखानन्तगुणपूर्णत्वम्, तदयुक्तम् । वासुदेवस्य मोचकत्वात् सङ्कर्षणस्य संहारकत्वात्, प्रद्युम्नस्य स्रष्टृत्वात्, अनिरुद्धस्य जगज्जन्मादिकारणत्वस्थापकत्वादित्यतस्तदेव वाक्यं नारायणस्य वासुदेवाद्यैक्यपरतया व्याचष्टे– **ब्रह्म पन्था इति** ।। प्रकृतस्य ब्रह्मशब्दवाच्यतयाऽनन्तगुणपूर्णस्य नारायणस्य वासुदेवाद्याश्चतस्रो मूर्तयः ब्रह्मपन्था इत्यस्मान्निर्देशक्रमेणोक्ता इत्यर्थः । 'वानात्सूतेर्देवनाद् वासुदेवः' इत्याद्युक्तगुणपूर्णत्वाद् ब्रह्म वासुदेवः। शरीरेभ्यः सम्यक् कर्षणेन प्रळये स्वोदरप्राप्तिहेतुत्वात् पन्थाः सङ्कर्षणः । प्रकृष्टतया द्युतिमेयत्वं हि प्रद्युम्नपदप्रवृत्तिनिमित्तम् । सत्त्वेन प्रकृष्टतयाऽवगम्यत इति सत्यम्, यातेरवगत्यर्थत्वात् प्रद्युम्न इत्येकोऽर्थः । प्रकर्षेण सृष्ट्या जगतो द्योतकः प्रद्युम्नः। सद्भावं यापयतीति सत्यमिति वा एकोऽर्थः । अन्नपानादिकर्तृत्वाद् रक्षणाय प्राप्तोपद्रवज्ञातृत्वात् तल्लयकर्तृत्वाच्चानिरुद्धः कर्मकर्तृत्वात् कर्ममातृत इति ह्युक्तम् । 'मानं ज्ञानं लयश्च'इति वचनाच्च । प्राप्तविरोधपरिहारेण स्थापको ह्यनिरुद्ध इति भावः । तथाच मूले एष नारायण एव पन्थाः सङ्कर्षणः । एतन्नारायणाख्यं परं ब्रह्मैव कर्मानिरुद्ध इत्यादियोजना । तथाच वासुदेवादीनां तदत्यन्ताभिन्नत्वान्नोक्तविरोध इति मूलार्थ इति ज्ञेयम् । यद्वा, ननूपक्रमे नारायणस्य जिज्ञास्यतया प्रस्तुतस्य खण्डत्रये प्रतिपादनादत एव भाष्योदाहृतप्रमाणे तृतीयखण्डान्ते 'एवं नारायणं जानन् सर्वलोकैककारणम्' इत्युक्तत्वात् । पञ्चमे च– 'तस्माच्छ्रुत्वा परं ब्रह्म देवा नारायणाभिधम्' इति प्रमाणानुसारेण– 'तं देवाः प्राणयन्तः'

इति प्रकृतनारायणपरामर्शात्। षष्ठे च– 'तस्य नारायणस्यैव सर्ववेदात्मिका हि वाग्' इति प्रमाणानुसारेण 'तस्य वाक् तन्तिः' इति नारायणपरामर्शात् कथं मध्ये चतुर्थखण्डे 'तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्' इत्यत्र 'तमिमं प्रथमज्ञानिपुरुषं चतुराननम्। वासुदेवात्मकं ब्रह्म' इति प्रमाणानुसारेण वासुदेवस्य प्रतिपाद्यत्वमुपक्रमे प्रस्तुतत्वात् कथं चोत्तरत्र 'प्रज्ञामयोऽमृतमयो देवतामयः' इत्यादावनिरुद्धादिरूपाणां प्रसक्तिरित्यत आह– **ब्रह्मपन्था इति**॥ 'एष पन्थाः' इत्युपक्रमे ब्रह्मपन्था इत्यादिपदैर्नारायणस्य वासुदेवाद्याश्चतस्रो मूर्तयः प्रस्तुता अतः सङ्गतिवशात् तासामपि निरूपणं युक्तमेवेति भावः। द्वितीयखण्डे नासिकायै विनतमिवेत्येतन्निहितश्चैव तल्लोको नासिकायां नतस्थल इति व्याख्यातम्। तदविस्पष्टम्। नासिकारन्ध्रसमीपे नतस्थलाभावादिवेति च न व्याख्यातमतः स्ववचनेन विवृणोति–**नासिकायामिति**॥ 'उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते'[१] इति वचनात् किञ्चिन्नतमित्युक्तम्। अध्यात्मं नासिकायां यन्नेत्रयोर्मध्ये किञ्चिन्नतं स्थानं तदधिदैवं द्युलोके यत् सूर्यलोकस्य स्थानं तद्वदाचरितं सूर्यलोकस्थानीयं तत्प्रतिनिधिं विद्यात्। अत्रापि सूर्यलोको निहित इति यावत्।

**भाष्यम्-**

**(अक्षरविभागोऽप्यर्थपूर्णः)**

**तथेति निर्णयः। इरामया इति दैर्घ्यमवधारणार्थम्। 'दैर्घ्यं प्लुतं च हिङ्कारो बिन्दुरप्यवधारणे' इति हि शब्दनिर्णये। ब्रह्मा हैव ता इ ते।**

**देशतः कालतोऽर्थाच्च बलतो गुणतस्तथा।**
**स्वरूपतोऽपि नैव स्याद् भेदोऽत्यल्पोऽपि यत्र हि॥**
**केवलैश्वर्ययोगेन यत्र सङ्ख्या द्विवद् भवेत्।**
**स्वरस्पर्शविभागेन तत्रोक्तिः स्याद् विभक्तिषु॥**

१. संवादिप्रमाणं शब्दनिर्णयगतमुदाहृतं भगवत्पादैः काठकभाष्ये- 'भवेदेकत्र संयोग इवशब्दो विरुद्धयोः। धर्मयोरुपमायां वा स्वल्पत्वे वा विवक्षिते॥' इति।

[१]अचिन्त्यात्तु तथैश्वर्यादेकोऽपि बहुरूपवान्।
प्रकाशयेद् यथा विष्णुः सर्वत्राप्यविशेषवान्॥
न विशेषो हि रूपाणां मत्स्यादीनां कथञ्चन।
नैश्वर्ये न बले चैव नाऽनन्दादिगुणेष्वपि॥

इत्यादिशब्दनिर्णयवचनाद् द्विवचनमत्र व्यवहारमात्रमिति दर्शयितुं 'ता' इत्युक्तम्।

संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते।
उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम्॥

इत्यतो ब्रह्मा हेति दैर्घ्यमपि परब्रह्मत्वविवक्षया।

**टिप्पणी -**

ननु 'यथा पृथिवी तथा' इत्यादौ तथेति व्यर्थं यथा महानस इत्यादिवद् यथा पृथिवीत्येतावता पूर्णत्वादित्यत आह– **तथेति निर्णय इति**॥ यथेत्युक्त्यैव लोकप्रयोगमहिम्ना तथेत्यर्थस्य सिद्धत्वेऽपि 'सिद्धे सत्यारम्भो नियमार्थः' इति न्यायेन पुनः स्पष्टोक्तिर्यथा पृथिवी तथैव नात्र संशयः इति निर्णयज्ञापिकेत्यर्थः। तृतीयखण्डे 'स इरामयः' इति वाक्यं 'स इरामयः' इच्छानन्दप्रभूतत्वादिति व्याख्यातम्। इरामया इति दीर्घस्य का गतिरित्यत आह– **इरामया इति दैर्घ्यमवधारणार्थमिति**॥ स एवेरामय इति वा स इरामय एवेति वाऽवधारणार्थ इत्यर्थः। दैर्घ्यस्यावधारणार्थत्वेऽभिधानमाह– **दैर्घ्यमिति**॥ प्रकृते दैर्घ्यमापा इत्यादौ प्लुतं वङ्गावगधा इत्यादौ बिन्दुरन्यत्र हिङ्कार इति योज्यम्। चतुर्थे खण्डे 'ब्रह्मा हैवत३ई' इत्यत्र ताः ई इति पदच्छेदप्रतीतेरनूद्य विवक्षितं पदं दर्शयति– **ब्रह्मा हैवेति**॥ ननु तत् औ इति स्थिते त्यदाद्यत्वे पररूपत्वे च नपुंसकाच्चेति शीभावे त ई इति स्थिते अवधारणार्थे प्लुते त३ई इति स्थिते गुणे ते इति रूपं सिद्ध्यतीति वस्तुगतिः। त ई इति स्वरयोर्विभागेनोक्तौ किं

१. व्याख्यानानुगुण्येन 'अचिन्त्यादेव चैश्वर्यात्' इति पाठः सम्भाव्यते।

कारणमित्यतः क्रमेणोदाहरणपूर्वं विभागप्रयोजनमाह– **देशत इति** ।। उदरदेशे वर्तते हृदयदेशे वर्तते इति देशतः । रामस्त्रेतायां कृष्णो द्वापर इति कालतः। व्यासः जटाकमण्डल्वादिमान् कृष्णश्चक्रशङ्खादिमानिति विशेषणपदार्थात्। ज्ञानार्थं व्यासः शत्रुसंहारार्थं कृष्ण इत्यर्थात् प्रयोजनात्। रामो महाबलो भार्गवोऽल्पबल इति बलतः। गुणतस्तदतिरिक्तगुणतः। स्वरूपतो मत्स्याद्याकारतः। परिमाणतो वा यत्र भेदो नास्ति । इन्द्रार्जुनादिष्विवात्यल्पो भेदो विशेषोऽपि नास्ति । किन्तु केवलैश्वर्याख्येन योगेन घटकेन यत्र सङ्ख्या द्विवत् द्वयोरिव 'तत्र तस्येव' इति सप्तम्यर्थे वतिः । वस्तुतो भिन्नयोर्द्वयोरिव भवेत्। तत्र विषये विभक्तिषु स्वरस्पर्शविभागेन क्वचित् स्वरयोः क्वचित् स्पर्शयोः क्वचित् स्वर-स्पर्शयोर्विभागेनासंहिततयोक्तिः स्यादित्यर्थः। केवलैश्वर्ययोगेन यत्र द्वित्वादि-सङ्ख्या भवेदिति सामान्येनोक्तं तस्योदाहरणमाह– **अचिन्त्यादिति** ।। एतद् यथा स्पष्टं तथोच्यते। विष्णुरेको भेदरहितोऽप्यचिन्त्यादैश्वर्यादेव बहुरूपवान् आत्मानं प्रकाशयेदित्यर्थः । यद्वा स्वार्थे णिच्, प्रकाशत इत्यर्थः। 'तथैश्वर्यात्' इति क्वचित् पाठः। तत्राचिन्त्यैश्वर्यादेव विष्णुरेकोऽपि बहुरूपवान् तथा भिन्नमिव स्वात्मानं प्रकाशयेदिति योज्यम्। ननु 'यत्तु युक्त्या विरुद्ध्येत तदीशकृतमेव हि' इत्युक्तत्वात् कोऽत्र युक्तिविरोधो येनाचिन्त्यत्वसमाधानमभेदेऽपीन्द्रार्जुन-योरिव विशेषसम्भवादित्यत आह– **यत इति** ।। यतो विष्णुः सर्वत्र रूपादि-ष्विन्द्रार्जुनादिवद् विशेषरहितः ततोऽचिन्त्यैश्वर्यादेव बहुरूपवानिति योज्यम्। सर्वत्रेत्युक्तमेव विशदयति– **न विशेष इति** ।। नैश्वर्य इत्यादौ विशेष इत्यनु-वर्तते। इन्द्रार्जुनयोरभेदेऽपि 'सर्वे गुणा आवृता मानुषत्वे' (म.ता.नि. २२.२७३) इत्युक्तरीत्याऽस्त्येवैश्वर्यादौ विशेषः । 'अंशिनो शेषसन्धानमत्यल्पस्यापि विद्यते । भुवि जातेन चांशेन सुखदुःखादि तद्गतम् ।। अनुभूयते विशेषस्तु कश्चिदीशकृतो भवेत्' इत्युक्तरीत्याऽनु सन्धानादावस्त्येव विशेषो नात्र तथेत्याशयेन प्रमाणोदाहरणस्योपयोगमाह– **इत्यादिशब्दनिर्णय इति** ।। अत्यभिन्ने विशेषरहितेऽपि वस्तुनि द्विवचनं व्यवहारमात्रं नतु तन्तुपटावित्यत्रेव भेदज्ञापकम्। नापीन्द्रार्जुनावित्यत्रेव

विशेषज्ञापकम्, किन्त्वचिन्त्यैश्वर्यघटितद्वित्वसङ्ख्यामात्रपरमिति दर्शयितुं ब्रह्मैवेत्यभेदे सिद्धेऽपि त ई इति विभागेनोक्तमित्यर्थः । ननु ब्रह्मा हैवेति संहिताकाले दैर्घ्यश्रवणात् कथं ते उभे ब्रह्म तत्परमिति ह्रस्वान्तपदमुपात्तम् । कथं वा तत्परत्वे न विशेषितमित्यत आह– **संहितायामिति** ।।

**भाष्यम्-**

**(देवोत्तमो नारायण एव)**

**अद उ एव नारायणाख्यमधिकं दैवतमन्यानि दैवतमात्राणि । स्थानान्तरेऽन्येषामप्यधिदैवतत्वकथनं कर्मदेवाद्यपेक्षया । मुख्याधिदैवतं नारायण एव ।**

**(अमरवरैर्मुरारेराराधनम्)**

**तस्योष्णिग् लोमानीत्यादि लोमसूष्णिगित्याद्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । 'स च्छन्दोभिश्छन्नः' इति वाक्यशेषात् । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिवच्च ।**

**अङ्गेषु यस्य च्छन्दांसि देवा लोका मखा अपि ।**
**तद्वशा नियता नित्यं नमस्तस्मै परात्मने ।। इति च स्कान्दे ।।**

**'अस्मै पुण्याय कर्मण' इति । एनमुद्दिश्य जीवानां पुण्यकर्म कर्तुम् । तैर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण शृणोति भगवान् । दिग्भ्योऽप्यन्य एव विशृणोति जीवः । अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेनैव भगवान् भुङ्क्ते ।**

**टिप्पणी -**

पञ्चमखण्डे 'अद उ आविरधिदैवतम्' इत्येतदधिदैवं स एवैक इति व्याख्यातं तत्पदानुकरणेन स्पष्टं व्याचष्टे–**अद उ एवेति** ।। उ इत्यनूद्यैवेति व्याख्यानम् । ननु 'हिरण्यगर्भोधिदैवं देवः सङ्कर्षणोऽपि वा' इति गीताभाष्योदाहृतगीताकल्पे हिरण्यगर्भादेरप्यधिदैवत्वोक्तेः कथमवधारणमित्यत आह– **स्थानान्तर इति** ।।

कर्मदेवादीत्यादिपदेन स्वावरदेवग्रहणम् । षष्ठे खण्डे 'तस्योष्णिक्' इत्यादिवाक्ये लोमादिपदं विष्णोर्वायोश्च लोमादाविति सप्तम्यर्थतया व्याख्यातम् । तद्व्याकरणेन समर्थयते– **तस्योष्णिगिति** ।। उष्णिग्लोमानीति सामानाधिकरण्येनैक्यमेव किन्न स्यादित्यत आह– **स छन्दोभिरिति** ।। प्रयोगेणापि प्रथमायाः सप्तम्यर्थत्वं समर्थयते– **ब्राह्मण इति** ।। आदिपदेन 'अग्निर्मुखं ब्रह्मा शिरः पृथिव्येव पादौ द्यौरेव शिरः उर एव वेदिः लोमानि बर्हिः सत्राणि शरीरसन्धिस्त्वं सर्वं यज्ञक्रतुरिष्टिबन्धनः' इत्यादिकं गृह्यते । ननूक्तोदाहरणमपि सन्दिग्धमेवेत्यतः पुराणवचनेन सर्वत्र प्रथमायाः सप्तम्यर्थत्वमाह– **अङ्गेष्विति** ।। सप्तमखण्डे 'चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय कर्मणे' इत्यादावस्य पुण्यकर्मसिद्धये इत्यन्यथाप्रतीतेर्व्याचष्टे– **अस्मै पुण्यायेति** ।। जीवानां कर्म कर्तुं चेत् पितरं परिचरत इति कथमुक्तमित्यत उक्तम्– **एतमुद्दिश्येति** ।। भगवन्तमुद्दिश्य दर्शपूर्णमासादिपुण्यकर्म जीवैः कारयितुं पूर्वपक्षापरपक्षान् विचिनोतीति भावः । चन्द्रस्य स्वपितृश्रोत्रपरिचर्यात् कथमनेन लब्धेत्यत आह– **तैरिति** ।। तैर्यजमानैः स्तुतिव्याख्याध्ययनादिकर्माणि कृतानि स्वश्रोत्रेण शृणोति भगवानित्यर्थः । 'पुण्याय कर्मणे' इत्यत्र पुण्यकर्मशब्देन स्तुत्यादिकमपि विवक्षितमिति भावः । यद्वा, 'दिग्भ्यो विशृणोति' इत्येतद् व्याचष्टे– **तैरिति** ।। दिग्देवैरित्यर्थः । प्रकारान्तरेण व्याचष्टे– **दिग्भ्य इति** ।। दिग्भ्योऽन्यः प्रेर्य एव सन् भगवत्स्तुत्यादिकर्माणि शृणोतीत्यर्थः । यद्वा, भगवान् शृणोतीत्युक्तं भगवतोऽन्यो जीवोऽपि दिग्भ्यस्तदनुग्रहाच्छृणोतीत्यर्थः । ननु जीवानां शब्दभोगस्य दिगनुग्रहसाध्यत्वेऽपि भगवत्परिचारकत्वं कथं तासामित्यत आह– **अन्येषामिति** ।। अन्येषां जीवानां श्रोत्रेन्द्रियेण शब्दश्रवणेन जायमानं भोगं भोग्यं सुखं तत्सदृशं परमसुखमिति यावत् । भगवान् तच्छ्रोत्राधिष्ठितेन स्वश्रोत्रेण शब्दश्रवणेनानुभवतीत्यर्थः । यद्वा, श्रवणजं श्रोत्रदेशेऽभिव्यक्तं भोग्यं शब्दं तदधिष्ठितेन स्वश्रोत्रेण भुङ्क्त इत्यर्थः । ननु दिग्देवानामेव श्रोत्राभिमानित्वाज्जीवश्रोत्रस्य न भगवदनुग्राह्यत्वं सम्भवति तदधिष्ठितभगवच्छ्रोत्रस्यापि तदनुग्राह्यत्वे परिचारकत्वायोग इत्यत उक्तम्–

विशेषज्ञापकम्, किन्त्वचिन्त्यैश्वर्यघटितद्वित्वसङ्ख्यामात्रपरमिति दर्शयितुं ब्रह्मैवेत्यभेदे सिद्धेऽपि त ई इति विभागेनोक्तमित्यर्थः । ननु ब्रह्मा हैवेति संहिताकाले दैर्घ्यश्रवणात् कथं ते उभे ब्रह्म तत्परमिति ह्रस्वान्तपदमुपात्तम् । कथं वा तत्परत्वे न विशेषितमित्यत आह– **संहितायामिति** ॥

**भाष्यम्-**

## (देवोत्तमो नारायण एव)

**अद उ एव नारायणाख्यमधिकं दैवतमन्यानि दैवतमात्राणि । स्थानान्तरेऽन्येषामप्यधिदैवतत्वकथनं कर्मदेवाद्यपेक्षया । मुख्याधिदैवतं नारायण एव ।**

## (अमरवरैर्मुरारेराराधनम्)

**तस्योष्णिग् लोमानीत्यादि लोमसूष्णिगित्याद्यर्थे । 'सप्तसु प्रथमा' इति सूत्रात् । 'स च्छन्दोभिश्छन्नः' इति वाक्यशेषात् । 'ब्राह्मणोऽस्य मुखमासीत्' इत्यादिवच्च ।**

**अङ्गेषु यस्य च्छन्दांसि देवा लोका मखा अपि ।**
**तद्वशा नियता नित्यं नमस्तस्मै परात्मने ॥ इति च स्कान्दे ॥**

**'अस्मै पुण्याय कर्मण' इति । एनमुद्दिश्य जीवानां पुण्यकर्म कर्तुम् । तैर्हि स्तुत्यादिकर्माणि कृतानि श्रोत्रेण शृणोति भगवान् । दिग्भ्योऽप्यन्य एव विशृणोति जीवः । अन्येषां जीवानां श्रवणजं भोगं स्वश्रोत्रेण दिग्भिरननुगृहीतेनैव भगवान् भुङ्क्ते ।**

**टिप्पणी -**

पञ्चमखण्डे 'अद उ आविरधिदैवतम्' इत्येतदधिदैवं स एवैक इति व्याख्यातं तत्पदानुकरणेन स्पष्टं व्याचष्टे–**अद उ एवेति** ॥ उ इत्यनूद्यैवेति व्याख्यानम् । ननु 'हिरण्यगर्भाधिदैवं देवः सङ्कर्षणोऽपि वा' इति गीताभाष्योदाहृतगीताकल्पे हिरण्यगर्भादिरप्यधिदैवत्वोक्तेः कथमवधारणमित्यत आह– **स्थानान्तर इति** ॥

कर्मदेवादीत्यादिपदेन स्वावरदेवग्रहणम्। षष्ठे खण्डे 'तस्योष्णिक्' इत्यादिवाक्ये लोमादिपदं विष्णोर्वायोश्च लोमादाविति सप्तम्यर्थतया व्याख्यातम्। तद्व्याकरणेन समर्थयते– **तस्योष्णिगिति** ॥ उष्णिग्लोमानीति सामानाधिकरण्येनैक्यमेव किन्न स्यादित्यत आह– **स छन्दोभिरिति** ॥ प्रयोगेणापि प्रथमायाः सप्तम्यर्थत्वं समर्थयते– **ब्राह्मण इति** ॥ आदिपदेन 'अग्निर्मुखं ब्रह्मा शिरः पृथिव्येव पादौ द्यौरेव शिरः उर एव वेदिः लोमानि बर्हिः सत्राणि शरीरसन्धिस्त्वं सर्वं यज्ञक्रतुरिष्टिबन्धनः' इत्यादिकं गृह्यते । ननूक्तोदाहरणमपि सन्दिग्धमेवेत्यतः पुराणवचनेन सर्वत्र प्रथमायाः सप्तम्यर्थत्वमाह– **अङ्गेष्विति** ॥ सप्तमखण्डे 'चन्द्रमा अस्मै पूर्वपक्षापर-पक्षान् विचिनोति पुण्याय कर्मणे' इत्यादावस्य पुण्यकर्मसिद्धये इत्यन्यथा-प्रतीतेर्व्याचष्टे– **अस्मै पुण्यायेति** ॥ जीवानां कर्म कर्तुं चेत् पितरं परिचरत इति कथमुक्तमित्यत उक्तम्– **एतमुद्दिश्येति** ॥ भगवन्तमुद्दिश्य दर्शपूर्णमासादि-पुण्यकर्म जीवैः कारयितुं पूर्वपक्षापरपक्षान् विचिनोतीति भावः । चन्द्रस्य स्वपितृश्रोत्रपरिचर्यात् कथमनेन लब्धेत्यत आह– **तैरिति** ॥ तैर्यजमानैः स्तुति-व्याख्याध्ययनादिकर्माणि कृतानि स्वश्रोत्रेण शृणोति भगवानित्यर्थः । 'पुण्याय कर्मणे' इत्यत्र पुण्यकर्मशब्देन स्तुत्यादिकमपि विवक्षितमिति भावः । यद्वा, 'दिग्भ्यो विशृणोति' इत्येतद् व्याचष्टे– **तैरिति** ॥ दिग्देवैरित्यर्थः । प्रकारान्तरेण व्याचष्टे– **दिग्भ्य इति** ॥ दिग्भ्योऽन्यः प्रेर्य एव सन् भगवत्स्तुत्यादिकर्माणि शृणोतीत्यर्थः । यद्वा, भगवान् शृणोतीत्युक्तं भगवतोऽन्यो जीवोऽपि दिग्भ्यस्तदनु-ग्रहाच्छृणोतीत्यर्थः । ननु जीवानां शब्दभोगस्य दिगनुग्रहसाध्यत्वेऽपि भगवत्परि-चारकत्वं कथं तासामित्यत आह– **अन्येषामिति** ॥ अन्येषां जीवानां श्रोत्रेन्द्रियेण शब्दश्रवणेन जायमानं भोगं भोग्यं सुखं तत्सदृशं परमसुखमिति यावत् । भगवान् तच्छ्रोत्राधिष्ठितेन स्वश्रोत्रेण शब्दश्रवणेनानुभवतीत्यर्थः । यद्वा, श्रवणजं श्रोत्रदेशेऽभिव्यक्तं भोग्यं शब्दं तदधिष्ठितेन स्वश्रोत्रेण भुङ्क्त इत्यर्थः । ननु दिग्देवानामेव श्रोत्राभिमानित्वाज्जीवश्रोत्रस्य न भगवदनुग्राह्यत्वं सम्भवति तदधिष्ठितभगवच्छ्रोत्रस्यापि तदनुग्राह्यत्वे परिचारकत्वायोग इत्यत उक्तम्–

**दिग्भिरननुगृहीतेनेति** ।। केवलं सेवारूपेण श्रोत्राश्रितत्वात् परिचारकत्वं नत्वनु-ग्राहकत्वमिति भावः । एतेन दिग्भ्यो विवर्जितेन तदनुग्रहरहितेन जीवश्रोत्राधिष्ठितेन स्वश्रोत्रेण शब्दश्रवणजं भोग्यं स्वरूपसुखं च भगवान् भुङ्क्ते इत्यर्थान्तरमुक्तं भवति ।

**भाष्यम्-**

## (जीवो नैव सृष्टिकर्ता)

**नच जीववागादिना पृथिव्यग्न्यादिकं सृष्टमित्यत्र किञ्चिन्मानमस्ति । 'मुखादिन्द्रश्चाग्निश्च' इत्यादिना भगवतः सकाशाद्धि सर्वेषां सृष्टिः प्रसिद्धा । सृष्टिभेदादन्यथावचनम् । नच मुख्यकारणाङ्गीकारेऽविरोध औप-चारिककारणमङ्गीकर्तुं युक्तम् । अतिप्रसङ्गात् । नहि यत्किञ्चित् कारणत्व-मस्तीत्येतावता ब्राह्मणस्य चण्डालः पितेत्युच्यते । पितृत्वं चात्रोक्तम् 'वाचं पितरम्' इत्यादिना ।**

**मानुषाणां तु यत् कर्म न देवोत्पत्तिकारणम् ।**
**दैवतैरुपकारस्तु क्रियते नरकर्मणा ।।**
**देवानां कर्मणैवैते जायन्ते सर्वमानुषाः ।**
**प्रधानत्वान्न देवानां नृकर्मोत्पत्तिकारणम् ।। इति च ब्रह्माण्डे ।।**

**टिप्पणी -**

तस्य वाचा सृष्टावित्यादौ प्रकृतस्वजीवस्य वाचेत्याद्यर्थप्रतीतिः प्रमाणेन निरस्ता । प्रमाणाभावेनापि निराचष्टे- **नचेति** ।। पुरुषसूक्तमन्त्रसमाख्ययाऽपि तस्य परमपुरुषस्य विष्णोर्वाचेत्यर्थोऽङ्गीकर्तव्य इत्याह– **मुखादिति** ।। ननु पुरुष-सूक्ते 'पद्भ्यां भूमिरजायत' इत्युक्तत्वाद् 'वाचा सृष्टौ पृथिवी चाग्निश्च'इत्यादेः कथं तत्समाख्यारूपमित्यत आह– **सृष्टिभेदादिति** ।। भगवतः सकाशात् सर्वेषां सृष्टिरित्यत्र समाख्यात्वं मध्ये यदन्यथावचनं तत्सृष्टिभेदादुपपद्यत इत्यर्थः । ननु तृतीयखण्डेऽयं पुरुषो ब्रह्मणो लोक इत्यत्रायमिति विशेषणात् पुरुषो जीवोऽभ्युप-

गतः । प्रकृते चास्य पुरुषस्येति विशेषणात् पुरुषो जीवोऽङ्गीकार्यस्तस्य पृथिव्यादिकारणत्वमप्रामाणिकं प्रमाणविरुद्धं चेदौपचारिकं कारणत्वं कल्प्यतां तस्य जीवस्य वाचाऽऽस्येनान्नभोगजनकादृष्टेन पृथिवी चाग्निश्च सृष्टावित्यभ्युपगमे बाधकाभावादित्यत आह– **नचेति** ।। भगवदास्यादिकमेव साक्षात् पृथिव्यादिकारणमित्यङ्गीकारे विरोधेऽन्नभोजनकादृष्टस्यान्नहेतुत्वं तदर्थं तण्डुलगर्भरं धनार्थमग्न्यपेक्षा तन्दुलार्थमोषधिपृथिव्यपेक्षेति पृथिव्यादिकं प्रति वाचोऽदृष्टद्वारौपचारिकं कारणत्वं वक्तुं युक्तमित्यर्थः । अतिप्रसङ्गं स्पष्टयति– **नहीति** ।। यद्युक्तपरम्परया जीवास्यादेरग्न्यादिकारणत्वं तर्हि चण्डालस्य यत्किञ्चित् कृष्यादिकं प्रति कारणत्वात् ब्राह्मणस्य कृषिमूलकान्नविकाररेतःपरिणतदेहलाभेन तस्य चण्डालः पितेति निर्देशः स्यादित्यर्थः । ननूक्तपरम्परया मानुषाणां नोपचारेण कारणत्वं किन्तु साक्षान्मानुषाणां यद्देवजनकादृष्टं तस्मादेवोत्पत्तिः किन्न स्यादित्यत आह– **मानुषाणामिति** ।। प्रत्युत 'देवानां कर्मणैवैते जायन्ते सर्वमानुषाः' इति योज्यम् । ननु मानुषकर्मैव मानुषोत्पादकं किं देवकर्मणेत्यत उक्तम्– **दैवतैरिति** ।। ननु जीवादृष्टैरेव वर्षेणोषध्यादिदेवा जायन्त इति प्रसिद्धम् । तत् कथं मानुषकर्म न देवोत्पत्तिकारणमित्युच्यत इत्यत उक्तम्– **दैवतैरिति** ।। अन्नादिप्रापकाणां नरादृष्टानां तदभिमानिदैवतैरुपकारः फलपर्यवसानलक्षणः क्रियते । नतु देवा एवादृष्टेनोत्पद्यत इत्यर्थः । कुतो नोत्पद्यन्त इत्यतस्तत्र हेतुकथनपूर्वं निगमयति– **प्रधानत्वादिति** ।।

**भाष्यम्-**

**(समग्रोपनिषद उपदेशकः महिदास एव)**

'आह महिदास ऐतरेयः' इति तु सर्वस्य वचनस्य तदीयत्वप्रकाशनार्थम्, नतु सन्निहितस्यैव । यथा 'इन्द्रं कुत्सः' इत्यादि । यथा च 'पूर्वं तु बादरायणो हेतुव्यपदेशात्' (ब्र.सू. ३.२.४२) इत्यादि ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमदैतरेयोपनिषद्भाष्ये द्वितीयः प्रघट्टकः ।।**

**टिप्पणी -**

**अष्टमेऽस्मिन्** खण्डे 'आह महिदास ऐतरेयः' इत्यादिना महिदासवचनं सम्मतित्वेनोदाह्रियते इत्यन्यथाप्रतीतेराह– **आहेति** ।। सन्निहितस्याहं मां देवेभ्यो वेदेत्यादि सन्निहितस्यैव । अत्रोदाहरणमाह– **यथेन्द्रमिति** ।। 'इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे नि बाह्ळ ऋषिरह्व ऊतये' (ऋ.सं. १.१०६.६) इति वाक्यं सर्वस्य तत्पूर्वोत्तरसन्दर्भस्य यथा कुत्सवाक्यत्वज्ञापकं तथेत्यर्थः । आदिपदेन 'आत्वाकण्वा अहूषत' (ऋ.सं. १.१४.२) इत्यादेर्ग्रहणम् । काटे काट सङ्घाते कामक्रोधादिशत्रुसङ्घाते । नि बाह्ळः नितरां बाढः । कुत्सऋषिरूतये रक्षार्थम् । वृत्रहणं शचीपतिमिन्द्रमह्वदाह्वयामासेत्यर्थः । प्रसिद्धमुदाहरणान्तरमाह– **यथा चेति** ।। ब्रह्ममीमांसायाः बादरायणोपज्ञत्वस्य प्रसिद्धत्वात् तत्र बादरायणग्रहणं यथा सर्वस्य तद्वाक्यत्वद्योतकं तथेत्यर्थः ।।

**।। इति श्रीमद्विट्ठलाचार्यपुत्रेण श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन विरचितायां श्रीमन्महैतरेयभाष्यार्थरत्नमालायां द्वितीयप्रघट्टके प्रथमोऽध्यायः समाप्तः ।।**

## ।। अथ द्वितीयप्रघट्टके द्वितीयोऽध्यायः ।।

**उपनिषत्-**

**(सूर्यमण्डलगो नारायणः जीवशरीरान्तर्यामी)**

एष इमं लोकमभ्यार्चत्पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत्प्राणो ह्येष य एष तपति । तं शतं वर्षाण्यभ्यार्चत्तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति तं यच्छन्तं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनस्तस्माच्छतर्चिन इत्याचक्षत एतमेव सन्तं स इदं सर्वं मध्यतो दधे यदिदं किञ्च स यदिदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षत एतमेव सन्तं प्राणो वै गृत्सोऽपानो मदः स यत्प्राणो गृत्सोऽपानो मदस्तस्माद्गृत्समद इत्याचक्षत एतमेव सन्तं तस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किञ्च तस्माद्विश्वामित्रस्तस्माद्विश्वामित्र इत्याचक्षत एतमेव सन्तं तं देवा अब्रुवन्नयं वैनः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नार्थन्नैनः सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षत एतमेव सन्तं स इदं सर्वं पाप्मनो त्रायत यदिदं किञ्च स यदिदं सर्वं पाप्मनो त्रायत यदिदं किञ्च तस्मादत्र यस्तस्मादत्रय इत्याचक्षत एतमेव सन्तम् ।। १ ।।

।। इति प्रथमं ब्राह्मणम् ।।

**भाष्यम्-**

**एष नारायणो [१]देवो वायुना सहैवेमं लोकमभ्यार्चत्। ब्रह्मादिशरीरेषु प्रविवेश। पुरुष इत्यन्तर्यामिरूपस्याख्या। पुरि शेत इति। प्रसिद्धत्वाच्च पञ्चरात्रेषु।**

**टिप्पणी -**

उपक्रमे 'एतद् ब्रह्म' इत्यत्रैतदिति प्रकृतस्य नारायणस्य तत्परमान्तरङ्गस्य वायोश्च गुणपूर्णत्वं समन्वयमुखेनोच्यतेऽस्मिन्नध्याये। एष प्राणपरिवृतो नारायणः इमं लोकं ब्रह्मादिशरीरं पुरुषरूपेणान्तर्यामिरूपेणाभ्यार्चत् प्रविवेश। एष कः? योऽभ्यार्चद् इत्यत उच्यते– **एष इति** ॥ य एष आदित्ये स्थित्वा तपति स प्राणो नारायणो वाव स तदभ्यार्चदित्यर्थः। आदित्ये स्थित्वा तपन्नारायणः कथम्? प्रसिद्धेः सूर्य एवेत्यत उच्यते– **प्राण इति** ॥ य एष आदित्ये स्थित्वा तपति स एष प्राणो नारायण एवेति प्रसिद्धम्। प्रसिद्धसूर्यस्य तापनशक्त्यभावादिति भावः। वक्ष्यति चाऽचार्यः। न प्रसिद्धसूर्यस्येयं तापनशक्तिरिति ज्ञापयितुं 'प्राणो ह्येष य एष तपति' इत्युक्तमिति। शतर्चिनाम्नि धात्वर्थमुक्त्वा पदार्थ उच्यते– **तमिति** ॥ तं ब्रह्मादिशरीरं शतं वर्षाण्यभ्यार्चत्। तद् ज्ञापकम्– **तस्मादिति** ॥ तस्मादेव हेतोः पुरुषायुषः शतं वर्षाणि भवन्ति अन्यथा तन्न स्यादित्यर्थः। यद्यस्माच्छतं वर्षाण्यभ्यार्चत् तस्मात् तानि रूपाणि शतर्चिनो नाम्नाऽभवन्। तस्मात् तन्नामकत्वादेव शतर्चिन इत्याचक्षते विद्वांसः। ननु मधुच्छन्दःप्रभृतयोऽपि शतर्चिनः प्रसिद्धा इत्यत उक्तम्– **एतमेवेति** ॥ प्रवृत्तिनिमित्तमुख्याश्रयतया सन्तमेवाऽचक्षते मुख्यतः। ऋषींस्तूपचारत इति भावः। स भगवान् यदिदं किञ्च जगद्वर्तते इदं सर्वं मध्यतः तन्मध्ये स्थित्वा आत्मन उदरे स्थापयित्वा च दधे। तस्मान्मध्यमा इत्यादि पूर्ववत्। प्रकर्षेण नेतृत्वात् प्राणस्थः प्राणनामा, गृत्सः गृह्णाति सारमिति व्युत्पत्तेः। अपनेतृत्वादपानस्थोऽपाननामा, मदः सुखरूपत्वान्मलाद्यपकर्षणेन सुखहेतुत्वाच्च। स

---

१. देवो इति ह.पा. नास्ति।

यद्यस्मात् प्राणरूपेण गृत्सोऽपानरूपेण मदश्च तस्माद् गृत्सश्चासौ मदश्चेति गृत्समदनामेत्यर्थः। तस्य यत्किञ्च तदिदं विश्वं मित्रमासीद् योग्यानां मित्रत्वं स्फुटम् । अयोग्यानामपि भगवदपकारकरणसामर्थ्याभावान्मित्रत्वम् । तत्संहार्यत्वेनेष्टत्वाद्वा । 'तं देवा अब्रुवन्' इत्यत्र देवानां मध्ये वामत्वाद् वामदेव इति निर्वचनं लब्धं ज्ञेयम्। अत्र य इति बहुवचनमपि बहुरूपापेक्षयेति ज्ञेयम् । 'एष इमं लोकम्'इत्यत्रैष इति प्रकृतः प्राणापानात्मको वायुरिति प्रतीयते प्राधान्येन प्रकृतत्वात् तत्सहितनारायणपरामर्शेऽपि एष नारायणः पुरुषरूपेण मानुषादिभावेनेमं लोकं शरीरमभ्यार्चदित्यन्यथाप्रतीतेर्व्याचष्टे– **एष नारायण इति** ॥ अन्तर्यामिणि पुरुषशब्दं निर्वक्ति– **पुरि शेत इति** ॥ प्रयोगं चाऽह– **प्रसिद्धत्वाच्चेति** ॥

**भाष्यम्-**

**य एष सूर्यमण्डले स्थित्वा तपति भगवान् स नारायणः। 'य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद' (बृ.भा. ५.७.९) इत्यादिश्रुतिभ्यः। 'य ऐषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (म.ना.उ. १०.१) इत्युक्त्वा 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' (छां. १.६.७) इत्युक्तत्वान्न शिवादयः। शिवो हि विरूपाक्षः। प्रसिद्धश्च पुण्डरीकाक्ष इति भगवान्नरायणः।**

**(आदित्यः न जीवशरीरान्तर्यामी)**

**'यमादित्यो न वेद' इत्युक्तत्वान्नादित्यः। 'ॐ भेदव्यपेदशाच्चान्यः' (ब्र.सू. १.१.२१) इति भगवद्वचनम्।**

**टिप्पणी -**

ननु 'आदित्य एव प्राणः' इति श्रुतेः य एष तपति सूर्याख्यः प्राणः स तदभ्यार्चदिति उत्तरवाक्ये श्रवणात् कथमेष नारायण इति व्याख्यानमित्यतस्तद् व्याचष्टे– **य एष इति** ॥ सूर्यमण्डले स्थित्वा तपन्नारायणः कुत इत्यत उपनिषदि हिशब्देन श्रुतिप्रसिद्धिरुक्ता। ता एव श्रुतीरुदाहरति– **य आदित्य**

**इति** ।। ननु पठितबृहदारण्यश्रुतौ आदित्यमण्डलस्थत्वेन श्रूयमाणः शिवादिः किन्न स्यात् । शिवस्याप्यष्टमूर्तित्वेन सूर्ये प्रोक्तत्वादादित्यमण्डलस्थत्वस्य सिद्धत्वादित्यत आह– **य एष इति** ।। समाख्याश्रुत्यन्तरे 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादित्ये हिरण्मयः पुरुषो वर्तते इति विष्णोरुक्तत्वात् तत्समाख्यया 'य आदित्ये तिष्ठन्' इत्यत्र न शिवादय उच्यन्त इत्यर्थः । तत्रापि शिवादयः किन्न स्युरित्यत उक्तम्– **इत्युक्त्वेति** ।। इत्युक्त्वा तस्य 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' (छां. १.६.७) इत्युक्तत्वान्न शिवादयस्तत्रोच्यन्त इत्यर्थः । पुण्डरीकाक्षत्वोक्तिमात्रेण शिवादिव्यावृत्तिः कुत इत्यत आह–**शिवो हीति** ।। उपलक्षणमेतत् सूर्यश्चेत्यपि ग्राह्यम् । 'विरूपाक्षः सूर्यः शिवः सुराचार्यो विनायकः । पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ।।' इति वक्ष्यमाणत्वादिति भावः। 'य आदित्ये तिष्ठन्' इत्यत्र न सूर्यो मण्डलस्थत्वेनोच्यत इत्यत्र ज्ञापकान्तरमन्तरङ्गमाह– **यमादित्य इति** ।। विष्ण्वादित्ययोरैक्याद् विष्णुरेवायं नाऽदित्य इत्युक्तिः कथमित्यत आह– **भेदव्यपदेशादिति** ।। 'अन्तरादित्ये मनसा चरन्तम् । देवानां हृदयं ब्रह्मान्वविन्दत्' इत्यादिभेदव्यपदेशात्प्रसिद्धादित्यादन्य एव विष्णुरिति सूत्रार्थः ।

**भाष्यम्-**

**'वृत्रं यदिन्द्र शवसाऽवधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ।**
**यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतसे कः ।**
**सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि ।'**

**(ऋ. १०.९०.१३)**

**'चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत ।' (ऋ. ८.४.२९)**

**'यः सूर्यं य उषसञ्जजान योऽपां नेता सजना स इन्द्रः ।**
**उद्वेति प्रसवीताजनानां महान् केतुरर्णवः सूर्यस्य ।' (ऋ. २.१२.७)**

'येनावृतं खं च दिवं मही च येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ।'

'तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः ।'
इत्यादौ सूर्यस्य सर्वत्र पराधीनत्वावगतेश्च ।

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥'
(तं.सा.सं.उ.प्र.व., अ. ६२,श्लो.१७)
इति नारसिंहपुराणे ।

'तापनी पाचिका चैव शोषणी च प्रकाशनी ।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य हि ॥' इति पाद्मे ।

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' (भ.गी. १५.१२)
इति च ।

**टिप्पणी -**

इतश्च नैक्यमितयह–**वृत्रमित्यादिना** ॥ हे इन्द्र परमेश्वर । भगवन् शवसा सुखेनानायासेन वृत्रमहिं च यद् यस्मादवधीः आत् इत् अस्मादेव हेतोः । दृशे दर्शनाय सूर्यं दिवि आरोहय इत्यत्र आ आरोहय इति पदपाठः । सम्यङ् न्यदधाः । यद् येन सूर्यस्य दिव्यारोहणेन सूर्यस्य हरितः दिशः पतन्तीः पुरः सतीः पुरोभागे वर्तमाना निर्दिष्टा वा उपरा उपरिभागे वर्तमाना रुचः एतसे ज्ञानाय । कः अकः अकरोः । अत्र क इत्येव पदपाठः । न केवलं दिव्यारोहणेन प्रजानां ज्ञानं लभ्यते । किन्तु कर्मापीत्युच्यते– **सीदन्निति** ॥ इन्द्रस्य जठरे सीदन् वर्तमानः त्वं यतः सूर्यं दिव्यारोहयः अतो नृभिः कनिक्रदत् कर्माण्यकारयः । हे जनासो जनाः यः सूर्यं जजान य उषसं च जनयामास योऽपां नेता स इन्द्रः परमेश्वरो नारायण इत्यर्थः । यो

**इति** ।। ननु पठितबृहदारण्यश्रुतौ आदित्यमण्डलस्थत्वेन श्रूयमाणः शिवादिः किन्न स्यात् । शिवस्याप्यष्टमूर्तित्वेन सूर्ये प्रोक्तत्वादादित्यमण्डलस्थत्वस्य सिद्धत्वादित्यत आह– **य एष इति** ।। समाख्याश्रुत्यन्तरे 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्यादित्ये हिरण्मयः पुरुषो वर्तते इति विष्णोरुक्तत्वात् तत्समाख्यया 'य आदित्ये तिष्ठन्' इत्यत्र न शिवादय उच्यन्त इत्यर्थः । तत्रापि शिवादयः किन्न स्युरित्यत उक्तम्– **इत्युक्त्वेति** ।। इत्युक्त्वा तस्य 'यथा कप्यासं पुण्डरीकमेवमक्षिणी' (छां. १.६.७) इत्युक्तत्वान्न शिवादयस्तत्रोच्यन्त इत्यर्थः । पुण्डरीकाक्षत्वोक्तिमात्रेण शिवादिव्यावृत्तिः कुत इत्यत आह–**शिवो हीति** ।। उपलक्षणमेतत् सूर्यश्चेत्यपि ग्राह्यम् । 'विरूपाक्षः सूर्यः शिवः सुराचार्यो विनायकः । पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ।।' इति वक्ष्यमाणत्वादिति भावः। 'य आदित्ये तिष्ठन्' इत्यत्र न सूर्यो मण्डलस्थत्वेनोच्यत इत्यत्र ज्ञापकान्तरमन्तरङ्गमाह– **यमादित्य इति** ।। विष्ण्वादित्ययोरैक्याद् विष्णुरेवायं नाऽदित्य इत्युक्तिः कथमित्यत आह– **भेदव्यपदेशादिति** ।। 'अन्तरादित्ये मनसा चरन्तम् । देवानां हृदयं ब्रह्मान्वविन्दत्' इत्यादिभेदव्यपदेशात्प्रसिद्धादित्यादन्य एव विष्णुरिति सूत्रार्थः ।

**भाष्यम्-**

**'वृत्रं यदिन्द्र शवसाऽवधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ।**
**यत्सूर्यस्य हरितः पतन्तीः पुरः सतीरुपरा एतसे कः ।**
**सीदन्निन्द्रस्य जठरे कनिक्रदन्नृभिर्यतः सूर्यमारोहयो दिवि ।'**

(ऋ. १०.९०.१३)

**'चन्द्रमा मनसो जातश्चक्षोः सूर्योऽजायत ।'** (ऋ. ८.४.२९)

**'यः सूर्यं य उषसञ्जजान योऽपां नेता सजना स इन्द्रः ।**
**उद्वेति प्रसवीताजनानां महान् केतुरर्णवः सूर्यस्य ।'** (ऋ. २.१२.७)

'येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च।
यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः।'
'तमेताः पञ्चदेवताः परिम्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः।'
इत्यादौ सूर्यस्य सर्वत्र पराधीनत्वावगतेश्च।

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः।
केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥'
(तं.सा.सं.उ.प्र.व., अ. ६२,श्लो.१७)
इति नारसिंहपुराणे।

'तापनी पाचिका चैव शोषणी च प्रकाशनी।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य हि ॥' इति पाद्मे।
'यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' (भ.गी. १५.१२)
इति च।

**टिप्पणी -**

इतश्च नैक्यमितयह–**वृत्रमित्यादिना** ॥ हे इन्द्र परमेश्वर। भगवन् शवसा सुखेनानायासेन वृत्रमहिं च यद् यस्मादवधीः आत् इत् अस्मादेव हेतोः। दृशे दर्शनाय सूर्यं दिवि आरोहय इत्यत्र आ आरोहय इति पदपाठः। सम्यङ् न्यदधाः। यद् येन सूर्यस्य दिव्यारोहणेन सूर्यस्य हरितः दिशः पतन्तीः पुरः सतीः पुरोभागे वर्तमाना निर्दिष्टा वा उपरा उपरिभागे वर्तमाना रुचः एतसे ज्ञानाय। कः अकः अकरोः। अत्र क इत्येव पदपाठः। न केवलं दिव्यारोहणेन प्रजानां ज्ञानं लभ्यते। किन्तु कर्मापीत्युच्यते– **सीदन्निति** ॥ इन्द्रस्य जठरे सीदन् वर्तमानः त्वं यतः सूर्यं दिव्यारोहयः अतो नृभिः कनिक्रदत् कर्माण्यकारयः। हे जनासो जनाः यः सूर्यं जजान य उषसं च जनयामास योऽपां नेता स इन्द्रः परमेश्वरो नारायण इत्यर्थः। यो

जनानां प्रसवीता प्रसविता। अलंनवः अर्णवः । अरं अलं णं सुखं वं ज्ञानं यस्य स इति वा। सूर्यस्य केतुराश्रयः । केतयतीति केतुर्ज्ञानप्रदो वा । उद्वेति उदेति वै। येन भगवता आवृतं बहिर्व्याप्तं खं च दिवं महीं चाऽदित्यो येन यत्प्रेरणया तेजसा तपति । तप सन्तापे । भ्राजसा दीप्त्या तपति प्रकाशयति । नन्वत्र येनेति यच्छब्देन प्रकृतो विष्णुरिति कुतः इत्यतो वाक्यशेषमुदाहरति– **यमन्तःसमुद्र इति** ।। यमन्तः समुद्रे कवयो ज्ञानिनोऽप्यवयन्तीषदेव जानन्ति । यस्मिंस्तदक्षरे परमे परमाक्षरे प्रजा आश्रिता इति समुद्रान्तःस्थत्वलिङ्गस्याक्षरश्रुतेश्च वाक्यशेषे सत्वाद् येनादित्य इत्यत्रापि यच्छब्देन स एवोच्यत इति भावः। विद्युद् वृष्टिश्चन्द्रमा आदित्योऽग्निरित्येताः पञ्च देवताः तं परित अनुसृत्य तत्सङ्कल्पानुसारेण परिम्रियन्त इत्यादौ सर्वत्र सूर्यस्य द्युस्थत्वे स्वरुचा ज्ञानकर्मप्रदत्वे उत्पत्तौ तापकत्वे प्रकाशकत्वे मरणे च पराधीनत्वावगतेश्चान्य एव तस्माद् विष्णुरित्यर्थः। सूर्यमण्डलस्थत्वं नारायणस्य स्मृत्याऽपि साधयति– **ध्येय इति** ।। 'य एष तपति' इत्यत्रोक्तादित्यमण्डलस्थत्वे प्रमाणमभिधाय तत्र स्थित्वा तापकत्वे च प्रमाणमाह– **तापनीति** ।। यद्वा, 'येनादित्यस्तपति तेजसा भ्राजसा च' इत्युक्तेऽर्थे स्मृतिमप्याह–**तापनीति** ।। मामकं मदीयं मदधीनं च ।

**भाष्यम्-**

## (न विष्णुरन्याधीनः)

न च विष्णोरन्याधीनत्वं श्रुतिपूक्तं कुत्रचित्। उत्पत्तिस्तु प्रादुर्भावापेक्षया। 'एको नारायण आसीन्न ब्रह्मा न च शङ्करः' (महोप. १) इति महाप्रलये तस्यैवावस्थान-श्रुतेः। 'यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्' (ऋ.सं. १०.१२५.५.) इत्यादिब्रह्मशिवादीनां देव्यधीनपदप्राप्तिमुक्त्वा तस्या अपि भगवदधीनत्वं 'मम योनिरप्स्व१न्तःसमुद्रे। ततो वितिष्ठे भुवनानि विश्वा। परो दिवा पर एना पृथिव्या' (ऋ.सं. १०.१२५.७) इत्याह। 'अहं रुद्राय धनुरातनोमि

**ब्रह्मद्विषे शरवे हन्त वा उ। अहं सुवे पितरमस्य मूर्धन्' (ऋ. १०.१२५.६,७) इति ब्रह्मरुद्रयोर्देव्याः सकाशात् सृष्टिसंहारौ चोक्तौ।**

**टिप्पणी -**

ननु सूर्य इव यद्ययं पराधीनस्तदा तपतीत्युक्तम् । तापनादि तस्मिन्नेव मुख्यमिति। स एवाऽदित्यस्थो न विष्णुरित्यत आह– **नचेति**।। कुत्रचिदुत्पत्त्यादि-विषये । ननु तस्योत्पत्तिश्रुतिरेवान्याधीनत्वं वक्तीति चेत् । अत्र वक्तव्यम् । किं वसुदेवादौ कृष्णाद्यात्मनोत्पत्तिवचनमन्याधीनत्वे प्रमाणम्, उत वासुदेवाद्यात्मना आदिसर्गे उत्पत्तिवचनम् उत मूलरूपनारायणस्यैव। आद्यं पक्षद्वयं निराकरोति– **उत्पत्तिरिति**।। उत्पत्तिः कृष्णाद्यात्मनोत्पत्तिवचनं प्रादुर्भावापेक्षया। 'प्रत्यक्षत्वं हरेर्जन्म' ति वचनाज्जनप्रत्यक्षगोचरत्वापेक्षया। वासुदेवादिरूपेणोत्पत्तिवचनं तु दीपाद् दीपान्तरवन्मूलरूपात् पूर्णस्यैव विश्लेषापेक्षयेत्यर्थः । तृतीयं दूषयति– **एक इति**।। नारायणस्य महाप्रलयेऽवस्थानश्रुतेरुत्पत्तिरेव न श्रुतिषूक्ता । किञ्चान्यनिषेधपूर्वं तस्यैवावस्थानोक्तेर्न ब्रह्मादिभ्य उत्पत्तिः सम्भावनीये-त्यर्थः। कैमुत्येन विष्णोरन्याधीनत्वं नास्ति प्रत्युत सर्वस्य तदधीनत्वमित्याह– **यं कामय इति**।। इत्यादीत्यविभक्तिको निर्देशः । इत्यादिना तस्या अपि भगवदधीनत्वमुक्तमिति शेषः। मम योनिरित्यादेरयमर्थः। मम योनिः कारणभूतः समुद्रेऽन्तरप्सु वर्तते नारायण इत्यर्थः । ततो भगवत्प्रसादाद् विश्वा भुवनानि वितिष्ठेऽधितिष्ठामि । उतामूं द्यां च वर्ष्मणोपस्पृशामि । अमूं द्यामपि वर्ष्मणा देहेन बलेन वोपस्पृशामि । अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा। अहमेव विश्वा भुवनान्यारभमाणा कुर्वन्ती वात इव प्रवामि व्याप्नोमि। मत्कारणं परमात्मा दिवः परः एना पृथिव्या अस्याः पृथिव्याश्च परः श्रीभू-नामकमद्रूपद्वयापेक्षया परः । अहं तु महिना महिम्नैतावती केवलं ब्रह्मादिभ्य उत्तमत्वात् परिमिता सम्बभूवेत्यर्थस्तत्त्वप्रदीपोक्तोऽवगन्तव्यः। प्रसिद्धद्यावा-पृथिवीपरत्वस्य रमाया अपि सत्त्वात् सृष्टिसंहारकत्वेन प्रसिद्धयोर्ब्रह्मरुद्रयोरपि

सृष्टिसंहारकर्तृत्वाद् देव्याः न तदुत्तमस्य हरेरन्येभ्यः सृष्ट्यादीति भावेनाऽह–**अहमिति** ॥ अहम् अशरवे हिंसकाय ब्रह्मद्विषे ब्रह्मणः पञ्चममुखच्छेत्रे । ब्रह्मद्विषे ब्रह्मद्विषां शरवे हिंसकायेति वा। रुद्राय हन्त वा उ हन्तुमेव नतु भीषयितुम् । प्रलये दुर्गारूपेण धनुरातनोमि विस्तारयामि । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सकलजीवोत्तमत्वेन सुवे अजनयम् । मम योनिरप्स्विति वाक्यशेषः पूर्वं व्याख्यातः ।

**भाष्यम्-**

**(नारायणः सर्वाधारः)**

**'अस्य देवस्य मीळ्हुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरातत् ॥'**

**इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च । 'तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षंल्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्त' (बृ. २.२.२) इत्यादिना शिवादिसर्वदेवोपास्यस्य 'वायोरयं वाव शिशुर्योऽयं मध्यमः प्राणः' (बृ. २.२.१) इति मध्यमप्राणशब्दोक्तस्य 'प्राणः स्थूणा' इति प्राणशब्दोदितो नारायण आश्रय उक्तः । तस्मात् सर्वोत्तमो भगवान्नारायणः प्राणशब्दोदित आदित्य-मण्डलस्थस्तपतीत्यादि सिद्धम् ।**

**टिप्पणी -**

विष्णोरेव साक्षात्पदप्रापकत्वश्रवणाच्च न तस्यान्याधीनत्वमित्याह–**अस्येति** ॥ भक्ताभीष्टसेचकस्य समर्थस्य वा एषस्य आसमन्तादिच्छारूपस्य । इषु इच्छायामिति धातोः । सत्यकामस्येति यावत् । आसमन्तादीशस्येति वा । देवस्य द्योतनादि-मतः । अस्य विष्णोर्हविर्भिः प्रभृते प्रभरणे पूजने कृते सति वयाः वय बन्धने अहङ्काराभिमानित्वेन बन्धको रुद्रः । यद्वा, कालाभिमानी रुद्रः । रुद्रियं महित्वं रौद्रं पदं विदेहि विविदे लब्धवान् हि । हे अश्विनौ युवामपीरावद्वर्तिः अन्नवद्वर्तनं समस्तभोगवत्पदं यासिष्टम् अयाशीष्टं लब्धवन्तौ स्थ इत्यर्थः ।

'य एष तपति प्राणो वाव' इति वाक्यं य एष सूयमण्डले स्थित्वा तपति स भगवान्नारायण इति व्याख्यातम्। तत्र प्राणशब्दस्य नारायणपरत्वं कुत इत्याशङ्क्य तस्य सर्वोत्तमत्वेनान्याधीनत्वाभावे प्राणशब्दवाच्यत्वे च प्रमाणमाह– **तमेता इति** ॥ तं गोवत्सरूपं वायुमेता वक्ष्यमाणा अक्षितयः क्षीणज्ञानमनसः सदा शिवपुरःसराः सप्तदेवाः उपतिष्ठन्ते उपासते । अक्षन्नक्षणि तद् याः यास्तास्ता लोहिन्य इमा उपलभ्यमाना राजयो रेखास्ताभिरधिष्ठानभूताभिस्तत्र स्थ इति यावत् । रुद्र एनमन्वायत्त उपास्ते । या अक्षन्नापस्ताभिः पर्जन्यः या कनीनिका तयाऽऽदित्यः । यत्कृष्णं तेनाग्निः यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तिन्या पृथिव्यन्वायत्त द्यौरुत्तरयेति वाक्येन शिवादिसर्वदेवोपास्यतयोक्तस्य 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति च मध्यमप्राणशब्दोक्तस्य वायोः प्राणः स्थूणेति प्राणशब्दोक्तो नारायण आश्रय उक्त इत्यर्थः । उपसंहरति– **तस्माद्** उक्तप्रमाणसमुदायादिति ॥ एको नारायण इत्यादिना सर्वोत्तमः शाखान्तरे आदित्यस्थस्य पुण्डरीकाक्षत्वसमुद्रान्तस्थत्वादिलिङ्गेन 'सवितृमण्डलमध्यवर्ती नारायणः' इति स्मृत्या च भगवान्नारायणः । प्राणः स्थूणेति प्रयोगात् प्राणशब्दोदितः । 'य एष आदित्ये' 'सवितृमण्डलमध्यवर्ती' इत्यादिनाऽऽदित्यमण्डलस्थः । 'येनाऽदित्यस्तपति' 'तापनी पाचिका चैव' इत्यादिना तापनपाचनादिकर्ता आदिशब्देन शिवादिर्नादित्यस्थ इत्येतत् सिद्धमित्यर्थः ।

**भाष्यम्-**

**'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च ॥**
**शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्तावुक्ताः शतगुणा बलज्ञानसुखादिभिः ॥**
**विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः ।**
**तस्माद् रमा ततो विष्णुरनन्तगुणतोऽधिकः ॥**

सृष्टिसंहारकर्तृत्वाद् देव्याः न तदुत्तमस्य हरेरन्येभ्यः सृष्ट्यादीति भावेनाऽह–**अहमिति** ।। अहम् अशरवे हिंसकाय ब्रह्मद्विषे ब्रह्मणः पञ्चममुखच्छेत्रे । ब्रह्मद्विषे ब्रह्मद्विषां शरवे हिंसकायेति वा। रुद्राय हन्त वा उ हन्तुमेव नतु भीषयितुम् । प्रलये दुर्गारूपेण धनुरातनोमि विस्तारयामि । अहमस्य जगतः पितरं ब्रह्माणं मूर्धन् मूर्धनि सकलजीवोत्तमत्वेन सुवे अजनयम् । मम योनिरप्स्विति वाक्यशेषः पूर्वं व्याख्यातः ।

**भाष्यम्-**

**(नारायणः सर्वाधारः)**

**'अस्य देवस्य मीह्लुषो वया विष्णोरेषस्य प्रभृथे हविर्भिः ।**
**विदेहि रुद्रो रुद्रियं महित्वं यासिष्टं वर्तिरश्विनाविरातत् ।।'**

**इत्यादिना विष्णोः प्रसादादेव शिवादीनां पदप्राप्तिकथनाच्च । 'तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षंल्लोहिन्यो राजयस्ताभिरेनं रुद्रोऽन्वायत्त' (बृ. २.२.२) इत्यादिना शिवादिसर्वदेवोपास्यस्य 'वायोरयं वाव शिशुर्योऽयं मध्यमः प्राणः' (बृ. २.२.१) इति मध्यमप्राणशब्दोक्तस्य 'प्राणः स्थूणा' इति प्राणशब्दोदितो नारायण आश्रय उक्तः । तस्मात् सर्वोत्तमो भगवान्नारायणः प्राणशब्दोदित आदित्य-मण्डलस्थस्तपतीत्यादि सिद्धम् ।**

**टिप्पणी -**

विष्णोरेव साक्षात्पदप्रापकत्वश्रवणाच्च न तस्यान्याधीनत्वमित्याह–**अस्येति** ।। भक्ताभीष्टसेचकस्य समर्थस्य वा एषस्य आसमन्तादिच्छारूपस्य । इषु इच्छायामिति धातोः । सत्यकामस्येति यावत् । आसमन्तादीशस्येति वा । देवस्य द्योतनादि-मतः । अस्य विष्णोर्हविर्भिः प्रभृते प्रभरणे पूजने कृते सति वयाः वय बन्धने अहङ्काराभिमानित्वेन बन्धको रुद्रः । यद्वा, कालाभिमानी रुद्रः । रुद्रियं महित्वं रौद्रं पदं विदेहि विविदे लब्धवान् हि । हे अश्विनौ युवामपीरावद्वर्तिः अन्नवद्वर्तनं समस्तभोगवत्पदं यासिष्टम् अयाशीष्टं लब्धवन्तौ स्थ इत्यर्थः ।

'य एष तपति प्राणो वाव' इति वाक्यं य एष सूयमण्डले स्थित्वा तपति स भगवान्नारायण इति व्याख्यातम्। तत्र प्राणशब्दस्य नारायणपरत्वं कुत इत्याशङ्क्य तस्य सर्वोत्तमत्वेनान्याधीनत्वाभावे प्राणशब्दवाच्यत्वे च प्रमाणमाह– **तमेता इति** ।। तं गोवत्सरूपं वायुमेता वक्ष्यमाणा अक्षितयः क्षीणज्ञानमनसः सदा शिवपुरःसराः सप्तदेवाः उपतिष्ठन्ते उपासते । अक्षन्नक्षणि तद् याः यास्तास्ता लोहिन्य इमा उपलभ्यमाना राजयो रेखास्ताभिरधिष्ठानभूताभिस्तत्र स्थ इति यावत् । रुद्र एनमन्वायत्त उपास्ते । या अक्षन्नापस्ताभिः पर्जन्यः या कनीनिका तयाऽऽदित्यः। यत्कृष्णं तेनाग्निः यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तिन्या पृथिव्यन्वायत्त द्यौरुत्तरयेति वाक्येन शिवादिसर्वदेवोपास्यतयोक्तस्य 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति च मध्यमप्राणशब्दोक्तस्य वायोः प्राणः स्थूणेति प्राणशब्दोक्तो नारायण आश्रय उक्त इत्यर्थः । उपसंहरति– **तस्माद्** उक्तप्रमाणसमुदायादिति ।। एको नारायण इत्यादिना सर्वोत्तमः शाखान्तरे आदित्यस्थस्य पुण्डरीकाक्षत्वसमुद्रान्तस्थत्वादिलिङ्गेन 'सवितृमण्डलमध्यवर्ती नारायणः' इति स्मृत्या च भगवान्नारायणः। प्राणः स्थूणेति प्रयोगात् प्राणशब्दोदितः। 'य एष आदित्ये' 'सवितृमण्डलमध्यवर्ती' इत्यादिनाऽऽदित्यमण्डलस्थः। 'येनाऽदित्यस्तपति' 'तापनी पाचिका चैव' इत्यादिना तापनपाचनादिकर्ता आदिशब्देन शिवादिर्नादित्यस्थ इत्येतत् सिद्धमित्यर्थः ।

**भाष्यम्-**

**'क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः।**
**आजानजाः कर्मदेवास्तात्त्विका दक्ष एव च ।।**
**शक्रश्चोमा च रुद्रश्च भारती वायुरेव च ।**
**मुक्तावुक्ताः शतगुणा बलज्ञानसुखादिभिः ।।**
**विष्णुभक्त्यादिभिश्चैव गुणैः सर्वैः क्रमाधिकाः।**
**तस्माद् रमा ततो विष्णुरनन्तगुणतोऽधिकः ।।**

नित्यमुक्तः स्वतन्त्रश्च न चान्यस्तादृशः क्वचित् ।
कुत एवाधिकोऽन्यः स्याद् यन्मुक्ता अपि तद्वशाः ॥
रमापि तद्वशा नित्यं स नान्यस्य वशे प्रभुः ।
न भेदः शेषशिवयोः सुपर्णः शेषसञ्ज्ञितः ॥
कामः शक्रसमो नित्यं प्रतिबिम्बाश्च ते क्रमात् ॥'

-इति च महासंहितायाम् ।

स पुरुषेषु शतं वर्षं गत इति शतर्चिनामा । बहुरूपत्वाद् बहुवचनम् । एतमेव तथा सन्तं मुख्यत आचक्षते ऋषींस्तूपचारतः । आत्मन उदरे धृतवान् मध्ये स्थित्वा धृतवांश्च ।

'प्राणस्थः प्राणनामासावपानेऽपाननामकः ।
नेतृत्वाच्चापनेतृत्वाद् भगवान् पुरुषोत्तमः ॥' इति च ।

वामो भद्रः ॥ १ ॥

**टिप्पणी -**

सर्वजीवानां तारतम्यमुक्त्वा विष्णोः सर्वाधिक्यकथनान्न तस्यान्याधीनत्वमिति भावेनाऽह–**क्षितिपा इति** ॥ देवा देवगन्धर्वाः । कर्मदेवा बल्याद्याः । तात्त्विकास्तत्त्वाभिमानिनोऽग्न्यादयः बलज्ञानसुखादिभिर्विष्णुभक्त्यादिभिर्विष्णुभक्तिरेवाऽदिर्येषां ते वैराग्यशमदमादिभिरित्येवं साध्यसाधनभूतैः सर्वैर्गुणैर्मुक्तौ शतगुणाः क्रमाधिका उक्ता इत्यन्वयः । अत्र ज्ञाने शताधिक्यमौत्सर्गिकम् । 'उमा यावदनन्तांशान्' (ब्र.सू.अनु. ३.४.३, श्लो. ८१) इत्युक्तरीत्याऽनन्ताधिक्यं च द्रष्टव्यम् । तस्माद् वायो रमा कोटिगुणाधिका ॥ **न भेद इति** ॥ शेषशिवयोर्भेदो विशेषो नास्ति । पदैक्यादिति भावः ॥ **कामः शक्रसम इति** ॥ प्रायः सम इति भावः । प्राय इन्द्रवत् काम इति वचनात् । नित्यं प्रतिबिम्बा इत्यन्वयः । तं यच्छतं वर्षाण्यभ्यार्चत् तस्माच्छतर्चिन इत्यसङ्गतम् । प्रवेश्यस्य प्रवेष्टुरप्येकत्वेन बहुवचनायोगादित्यत आह– **स पुरुषेष्विति** ॥ एवं च तमिति न जात्येकवचनम् । प्रवेष्टुरेकत्वेऽपि

बहुवचनमित्यर्थः । एतमेवेत्येतावता पूर्णत्वात् सन्तमिति व्यर्थमित्यतो व्याचष्टे– **एतमेवेति** ।। सन्तमिति न स्वरूपसत्त्वमुच्यते किन्तु स्वतन्त्रपुष्कलप्रवृत्तिनिमित्त-कारणतया सन्तं मुख्यत आचक्षते । ऋषींस्तूपचारतः वचनवृत्तावेव न्यूनवृत्त्याऽऽचक्षत इत्यर्थः । 'स इदं सर्वं मध्यतो दधे' इत्यस्यार्थद्वयमाह–**आत्मन इति** ।। 'प्राणो वै गृत्सः' इत्यादि व्याचष्टे– **प्राणस्थ इति** ।। 'सर्वेषां वामः' इत्यत्र वामपदार्थमाह– **वाम इति** ।। भद्रः सुन्दरः । 'वामं सौन्दर्यं भामं तेजः' इत्यन्यत्रोक्तत्वात् ।। १ ।।

**।। इति प्रथमः खण्डः ।।**

**उपनिषत्-**

**(सर्वाणि नामानि विष्णुमाविशन्ति)**

**एष उ एव बिभ्रद्वाजः । प्रजा वै वाजस्ता एष बिभर्ति यद् बिभर्ति तस्माद् भरद्वाजस्तस्माद् भरद्वाज इत्याचक्षत एतमेव सन्तम् । तं देवा अब्रुवन्नयं वैनः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन्नयं वैनः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठस्तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभिप्रागाद्यदिदं किञ्च तस्मात् प्रगाथास्तस्मात् प्रगाथा इत्याचक्षत एतमेव सन्तम् । स इदं सर्वमभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात् पावमान्यस्तस्मात् पावमान्य इत्याचक्षत एतमेव सन्तम् ।**

**सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च तस्मात् क्षुद्रसूक्ता-**

स्तस्मात् क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तं सूक्तं बतावोचतेति तत्सूक्तमभवत्तस्मात् सूक्तं तस्मात् सूक्तमित्याचक्षत एतमेव सन्तम् एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्माद् ऋक्तस्माद् ऋगित्याचक्षत एतमेव सन्तम् एष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत स यदेभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्चस्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम् एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि तस्मात् पदं तस्मात्पदमित्याचक्षत एतमेव सन्तम् एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तं ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् ॥

**भाष्यम्-**

वसिष्ठोऽवसतामुत्तमः।

**टिप्पणी -**

एष उ एव बिभ्रद्वाजः । उ उच्च एष एव बिभ्रद्वाजो भरद्वाजः । तदुपपाद्यते– प्रजा इति ॥ अयं वै न इति ॥ नित्यमनायान्तर्वसतामुत्तमानां सर्वेषां नोऽयं वै वसिष्ठः वसतामुत्तमत्वप्रद इत्यर्थः । वासिनां निवसतामति-

शयितो वसिष्ठः । अतिशायने इष्ठन्प्रत्ययविधानात् ।। **यदिदं सर्वमिति** ।। स यद्यस्माद् यदिदं किञ्च वर्तते तदिदं सर्वमभिप्रागात् प्राप्नोत् । प्रागायदिति वा । तस्मात् प्रगाथा इति योज्यम् । गाङ्गतौ गा गान इति धातोः **'उषिकुषि-गार्तिभ्यस्थन्'** इति थन्प्रत्यय इति भावः । अभ्यपवयत पावयामास । इदं प्रमाणप्रसिद्धं सन्निहितं वा । सर्वं पूर्णं वस्तु सन्नहं यच्च क्षुद्रं अल्पं प्राणि-जातम् । यच्च महत्प्राणिजातमिदमस्मिन्नसानि प्रविशामि । प्रविश्य च क्षुद्रमणुरूपो महत् महारूपश्चासानि भवानीति सोऽब्रवीत् । तस्मात् क्षुद्रो महांश्चासानीत्युक्तत्वात् ते रूपसञ्ज्ञाः । क्षुद्रसूक्ता महासूक्ताश्च नाम्नाऽभवन्निति योजना । तद् विष्ण्वाख्यं ब्रह्मसूक्तं सूक्तानि सुष्ठु वचनान्यादिभागवतादीनि अवोचत कृतवत् । यद्वा, सूक्तानि सहस्रशीर्षेत्यादीन्यवोचत प्रथमं व्यक्तीचकारेति यत् तस्मात् तत्सूक्तं नाम्नाऽभवत् । यद्वा, तद् ब्रह्म तत्स्वात्मानम् अवोचतेति यत् तस्मात् तत्सूक्तं सुष्टूक्तम् । बतेत्यास्वादने असामर्थ्यात् स्वस्य सम्यग् वक्ताऽन्यो नास्ति स्वस्य वक्ता स्वयमेवाहो परिपूर्णं परं ब्रह्मेति । इतिं यस्मात् स्वात्मनैव सुष्टूक्तं तस्मात् सूक्तनामकमभवत् । तस्मात् सूक्तमित्याचक्षत इति योज्यम् । पुन-रुक्तिस्तस्मादेवेत्यवधारणायेति ज्ञेयम् । एष वा ऋगृङ्नामेति प्रतिज्ञा । कुतः एष ह्येभ्यः सर्वेभ्यो भूतेभ्यः प्राणिभ्योऽर्चत । मरणकाले गच्छति । हि प्रसिद्धम् । स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्माद् ऋङ्नामा । तस्मादृगित्याचक्षत इत्यर्थः । एवमुत्तरत्र । अर्धेभ्यः स्थानेभ्यः शरीरेभ्यः । पादि अपादि पद्लृ गतौ, पुनः शरीरसम्प्राप्तौ प्रविवेश । प्रवेशस्य सर्वसाधारणत्वादसाधारण्यद्योतनाय 'सर्वाणि भूतानि' इत्युक्तम् । एवं पूर्वमपि द्रष्टव्यम् । अधिकं क्षरतिं दिशतीत्य-क्षरम् । दानस्याऽधिक्यं च बहुविषयत्वेनेति भावेनैष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरतीति क्षरणं विशेषितम् । प्रकारान्तरेण निरुच्यते– **नचैनमिति** ।। एनं भगवन्तमतिक्रम्य न क्षरन्ति अस्मादधिकं केऽपि न ददति यदतिक्रम्य न क्षरन्ति तदक्षरमिति भावः । न केवलं ऋषिवेदनामान्येव भगवद्वाचकानि ।

किन्तु देवतापरत्वेन प्रसिद्धास्ता एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः । एकमेकप्रकारमेव व्याहरणं नाम किंविषयकमिदं नाम प्राणे भगवद्विषय एव । ऋचस्तु विशेषतः प्राणे विषय एवेति विद्यादिति । नः सर्वेषां मतेऽयं वसिष्ठस्तेनैकीभूत इत्यन्यथाप्रतीतेर्व्याचष्टे– **वसिष्ठ इति** ॥ अतिशयार्थे इष्ठन्प्रत्यय इति भावः । तथाच देवानां देवत्वप्रदो देव इतिवद् वसतामुत्तमानां देवानां नः वसतामुत्तमः वसतामुत्तमत्वप्रद इत्यर्थ इत्युक्त भवति ।

**भाष्यम्-**

**अभ्यपवयत पावयामास संसारात् । तद्विष्ण्वाख्यं ब्रह्मसूक्तान्यवोचतेति सूक्तनामकमभवत् । बतेत्यास्वादने । स्वात्मनैव स्वयं सुष्ठूक्तमिति वा । इदं सर्वं परिपूर्णं सन्नहमल्पप्राणिषु प्रविश्य सूक्ष्मरूपो महप्राणिषु महारूपश्चासानीति स भगवानब्रवीत् । तस्मात्क्षुद्रोऽसानीत्युक्तत्वात् क्षुद्रसूक्तास्ते क्षुद्रप्राणिषु स्थिता भगवद्रूपसङ्घाः । महानसानीत्युक्तत्वान्महासूक्ता महप्राणिषु स्थिताः । सूक्ष्मरूपत्वादेव क्षुद्रनाम भगवतः । न तु सामर्थ्याल्पत्वात् । न हि सामर्थ्यादिगुणेषु कश्चिद्विशेषो भगवद्रूपेषु । एभ्यः प्राणिभ्यो गतवानित्यूक् । गच्छति हि मरण-काले । 'ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते बुधैः' इति हि भारते ।**

**टिप्पणी -**

अभ्यपवयतेत्यस्य वायुरूपेण वातीत्यन्यथाप्रतीतेर्व्याचष्टे– **पावयामासेति** ॥ पूञ् पवन इति धातोरिति भावः । 'सूक्तं बतावोचतेति तत्सूक्तमभवत्' इत्यत्र स इति प्रकृतो विष्णुस्तत्सूक्तमित्यवोचत तदुच्यमानं शब्दतत्त्वं सूक्तनामकमभवदित्यन्यथाप्रतीतेर्व्याचष्टे– **तद् विष्ण्वाख्यमिति** ॥ सूक्तानि सुष्ठु वचनानि आदिभागवतादीनि अपौरुषेयसूक्तानीति वा। एतेन सुष्ठूक्तानि वचनानि येनेति व्युत्पत्तिर्दर्शिता भवति । खेदार्थप्रतीतेर्बतेत्येतद् व्याचष्टे–**बतेति** ॥ अहो अनन्ता वेदाः पौरुषेयाणि चानेन प्रतिक्षणमुद्धीर्यन्त इत्यास्वादन इत्यर्थः । 'वैकुण्ठस्याखिला वेदा उद्गीर्यन्तेऽनिशं यतः' (द्वा.स्तो.) इति वचनात् । प्रकारान्तरेण 'सूक्तं

बतावोचत' इत्यस्यार्थमाह– **स्वात्मनैवेति** ।। मूलार्थस्तु प्रागुक्तः । तस्मिन् पक्षे आस्वादनप्रकारोऽप्युक्तः । यच्च क्षुद्रं यच्च महदिदं सर्वं जगदहं भवानीत्यन्यथाप्रतीतेर्व्याचष्टे– **इदमिति** ।। सर्वसन्निहितं प्रमाणप्रमितं वा सर्वं पूर्णं वस्तु सन्नप्यहमिदमस्मिन्नल्पप्राणिषु महाप्राणिषु च प्रविश्येत्यनेन यच्च क्षुद्रं यच्च महत् इदमस्मिन्नसानि भवानि प्रविशामीत्यर्थ उक्तो भवति । प्रविश्य च सूक्ष्मरूपो महारूपश्चेत्यनेन क्षुद्रं महच्चासानीत्यस्यार्थान्तरमुक्तं भवति । ते क्षुद्रसूक्ताश्चाभवन् महासूक्ताश्च तस्मादित्येतद् व्याचष्टे– **तस्मादिति** ।। क्षुद्रमसानीत्येतत् सूक्ष्मरूपो भवानीति व्याख्यातम् । तत्कुतः । क्षुद्रशब्दस्य सामर्थ्याल्पत्वमेवार्थः किन्न स्यादित्याशङ्क्य तथात्वे सर्वं पूर्णं सन्नहं क्षुद्रः सामर्थ्येनाल्पो भवानीति व्याहतं स्यादिति भावेनाऽह– **सूक्ष्मरूपत्वादेवेति** ।। सूक्तनामसमन्वयानन्तरं तद्विशेषक्षुद्रसूक्तमहा सूक्तनामसमन्वयो वाच्यः । सामान्यज्ञानपूर्वकत्वाद् विशेषज्ञानस्येति भावेन भाष्ये 'सूक्तं बतावोचत'इति प्रथमं व्याख्याय 'सोऽब्रवीदहमिदं सर्वमसानि' इत्यादि पश्चाद् व्याख्यातम् । 'एष वा ऋक्'इत्यत्र सर्वेभ्यो भूतेभ्य आकाशादिभ्य इत्यन्यथाप्रतीतेर्व्याचष्टे– **एभ्य इति** ।। ननु प्राणिभ्यः कथं गमनमित्यत आह– **गच्छति हीति** ।। तत्रैष' हीति हिशब्दसूचितं प्रमाणमाह– **ब्रह्मणेति** ।।

**भाष्यम्-**

**म्रियमाणमिमं जीवं वासुदेवादिदेवताः ।**
**त्यक्त्वा भागेन गच्छन्ति भागतोऽनुव्रजन्ति तम् ।।**
**गतैर्भागैरपि पुनर्विशेयुर्भोगसिद्धये ।**
**भोग्यलोकमनुप्राप्तं तस्मात् स्वप्नवदन्तरा ।।'** इति च ।

**टिप्पणी -**

ननु 'द्वा सुपर्णा सयुजा सखाया' (आथ. ३.१) इति श्रुतेः कथं जीवस्य ब्रह्मपरित्याग इत्यत आह– **म्रियमाणमिति** ।। प्रतिमरणं विष्ण्वादीनां

भागतो गमने कालक्रमेण सर्वस्यापि गमनं किमित्यत आह– **गतैरिति** ।। भोग्यलोकं मानुषलोकं स्वर्गलोकं च । 'पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च'इति ग्रन्थान्तरोक्तेर्भोग्यलोकशब्देन मानुषदेह एव विवक्षित इति चेन्न । स्वर्गभोग्यस्य स्वप्नतुल्यत्वायोगात् । तस्यापि तत्रोपलक्षणीयत्वात् । म्रियमाणस्य भागतो देवतात्याग इत्यत्र ज्ञापकमाह– **तस्मादिति** ।। वासुदेवादीनां भागतो गमनादेवान्तरा मध्ये मरणानन्तरं भोग्यलोकपर्यन्तं स्वप्नवत् स्वप्नावस्थायामिव भोग इत्यर्थः । तिर्यक्त्वे नरके च स्वप्नवदस्पष्टतया दर्शनेऽपि दुःखातिशय उपपद्यत एवेति ज्ञेयम् । 'गतैर्भागैरपि पुनर्विशेयुः' (ब्र.सू.भा.उ.व) इत्यनेन 'एष वै पदम्' इत्याद्यपि व्याख्यातं भवति ।

**भाष्यम्-**

**अर्च= गतिपूजनयोः ऋ= गताविति धातोः । सर्वेभ्योऽर्धेभ्यः स्थानेभ्यः शरीरेभ्यो गतवानित्यर्थर्धर्चः । सर्वाणि भूतान्यपादि । पद= गतौ । तस्मात् पदं नाम । अधिकं क्षरतीत्यक्षरम् । क्षरणं नाम सन्ततदानम् । क्षर= विनाशसन्ततदानयो-रिति धातोः । एवमृषिशब्देषु च व्यवह्रियमाणानि सर्वाणि नामानि विष्णोरेव मुख्यतः किमु देवतानामानि ।**

**टिप्पणी -**

ऋक्शब्दप्रकृतिऋधातोर्व्याख्यानस्थार्चतेश्चैकार्थ्यसिद्ध्ये तद्व्याख्यानं पठति– **अर्चेति** ।। सर्वेभ्योऽर्धेभ्यो भागेभ्य इत्यन्यथाप्रतीतिर्व्याचिष्टे– **सर्वेभ्य इति** ।। स ह्यऽयस्तः पितुरर्धमेयायेत्यादावर्धशब्दस्य स्थाने प्रयोगादिति भावः । यदि प्राणिन एव स्थानानि तर्हि भूतेभ्य इत्यनेन पौनरुक्त्यमित्यत उक्तम्– **शरीरेभ्य इति** ।। तेषां जीवाश्रयत्वाच्च स्थानशब्दवाच्यत्वमिति भावः । तथा च प्राग् जीवेभ्यो भागतो गमनमृक्शब्दप्रवृत्तिनिमित्ततयोक्तम् । अत्र तु शरीरेभ्यो गमनमर्धर्च-शब्दप्रवृत्तिनिमित्ततयोच्यत इत्यपौनरुक्त्यम् । 'एष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति' इत्यनेन लब्धमक्षरशब्दनिर्वचनं दर्शयति– **अधिकमिति** ।। सर्वेभ्यो भूतेभ्यः

क्षरणं बहुविषयत्वादधिकं क्षरणमिति भावः । क्षरणपदस्यार्थं ज्ञापकं चाऽह– **क्षरणमिति** ॥ 'ता वा एताः' इति वाशब्दोऽप्यर्थः । किम्विति कैमुत्य-द्योतकश्च । ऋचोऽपि किम्विति सम्बद्ध्यत इति भावेन व्याचष्टे–**एवमिति** ॥ यदैवमुक्तप्रकारेण ऋषिषु शब्देषु सूक्तादिषु व्यवह्रियमाणानि सर्वाणि नामानि विष्णोरेव तदा देवतानामान्यपि विष्णोरिति किम्विति योजना । ऋक्शब्देन तद्गतदेवतानामानि गृह्यन्ते । सर्वे वेदा इति ऋचामपि प्राप्तत्वात् प्राण ऋच इति विशिष्य ऋचां भगवत्परत्वस्य वक्ष्यमाणत्वाच्चेति भावः ।

**भाष्यम्-**

**(समुद्र-मेघ-वृक्षपतन-भेरीताडनादिसर्वघोषा अपि तस्यैव नामानि)**

**'यो देवानां नामधा एक एव तं सम्प्रश्नं भुवनायन्त्यन्या ।'** (ऋ. १०.८२.३)

**'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।'**

**'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः ।'**

**'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति'**

**इत्यादिश्रुतिभ्यः । न केवलमृष्यादीनां नाम भगवतः सर्वे वेदा अपि तस्यैव नामानि किमुत वेदाः समुद्रमेघवृक्षपतनभेरीताडनादिसर्वघोषा अपि तस्यैव नामानि यथायोग्यं योजनीयानि । एकमेव व्याहरणम् । एकप्रकारमेव नाम । निर्दोषगुणपूर्ति-वाचकत्वादेकप्रकारता । प्राणे नारायण एव । न नारायणविषय एव व्यवहारः । ऋचस्तु विशेषत इन्द्रादिनामवतो विष्णोर्गुणानल्पज्ञानामपि प्रकाशयन्तीति प्राणे नारायण एवेति विद्यात् ।**

**टिप्पणी -**

कैमुत्यबीजमाह– **यो देवानामिति** ॥ यदैवं विष्णुपरत्वेनातिप्रसिद्धशून्यानि ऋष्यादिनामानि भगवत्पराणि तदा इत्यादि बहुश्रुतिभ्यो भगवत्परतयाऽवगतानि देवतानामानि भगवत्पराणीति किमु वाच्यमिति कैमुत्यमिति भावः । सर्वे

वेदा इत्यतः परं चाप्यर्थः किम्वित्यर्थकश्च वाशब्दो योज्य इति भावेन तत्समुच्चयपूर्वमाह– **न केवलमिति** ।। न केवलं ऋष्यादिनाम भगवतः किन्तु सर्वे वेदा अपि तस्यैव नाम इत्येतत् किमु वक्तव्यमित्यर्थः । 'अग्निमीळे' इत्यादौ अग्न्यादिनाम्नां 'इन्द्रं कुत्स' इत्यादौ कुत्सादिनाम्नां 'ऋचां त्वं' इत्यादौ ऋगादिनाम्नां भगवत्परत्वे संसर्गबोधकवाक्यसमुदायरूपवेदचतुष्टयस्य भगवत्परत्वं सुलभमिति भावः । सर्वे घोषा इत्यतः परं चाप्यर्थकस्य किम्वर्थकस्य वाशब्दस्य सम्बन्धं मत्वा व्याचष्टे– **वेदाः समुद्रमेघेत्यादि** ।। किम्वित्येतद् देहलीदीपन्यायेना-स्मिन्नपि वाक्ये सम्बद्ध्यते । तस्य सर्वे घोषा अपि तस्यैव नामानीत्यतः परं सम्बन्धः । वेदाः इत्यतः परं तस्यैव नामेत्यनुवर्तमानस्य सम्बन्धस्तथा च यदैवं वेदास्तस्यैव नामानि तदा समुद्रमेघवृक्षपतनभेरीताडनदधिमथन-गोधादिघोषा अपि तस्यैव नामानीति किम्विति योजना । यदा श्रुतिलिङ्गादिभिरन्यत्र प्रसिद्धानां वेदानां भगवत्परत्वं तदा किमु वाच्यमन्यत्र प्रसिद्धिरहिता घोषा इति । वेदानामन्यत्र प्रसिद्धित्याजनस्य भगवत्प्रसिद्धि- सम्पादनस्य च कार्य-त्वात् । घोषेषु भगवत्परत्वस्यैव कल्प्यत्वादिति भावः। यद्वा, यदा समुद्रादिघोषाः ध्वन्यात्मका अपि वक्ष्यमाणप्रकारेण तस्य नामान्येव यथायोग्यं योजनीयानि तदा किमु सर्वे वेदा अपीति योजना । इत्यादयः सर्वघोषा इति वक्ष्यमाणत्वात् । ऋगादयः सर्वे भूरित्येकैव व्याहृतिरिति ऋगादीनां व्याहृत्यैक्यप्रतीतेर्व्याचष्टे– **एकमेवेति** ।। व्याहरणं च नाभिलपनमेकत्वं च नैक्यमिति भावेन स्वपदं विवृणोति– **एकप्रकारमिति** ।। नाम्नामेकप्रकारत्वं किं स्वप्रतिपाद्यवस्तूनामभेदेनेत्यत आह– **निर्दोषेति** ।। प्राण एव मुख्यवायुरेवेत्यन्यथाप्रतीतेः सप्तमीविभक्तिरियं भगवत्परेत्याह– **प्राणे नारायण इति** ।। सप्तम्या अनेकार्थत्वाद् विवक्षितार्थ-माह– **नारायणविषय एवेति** ।। विषयसप्तमीत्वे ज्ञापकमाह–**व्यवहार इति** ।। नामेत्यर्थः । शब्दस्य सविषयत्वादिति भावः । सर्वा ऋच इत्युक्तत्वेन पुनः प्राण ऋच इति किमर्थमित्यत आह– **ऋचस्त्विति** ।।

**भाष्यम्-**

उक्तं च बृहत्संहितायाम्-

हुङ्कारेण सहैवाब्धिः सर्वाभिभवशक्तताम् ।
विष्णोर्वक्ति यतो हुं च पराभिभववाचकः ।
ओमिति स्वरते नित्यं वायुर्मेघेषु संस्थितः ।
बलवन्नादसंयुक्तो ह्यधिकोच्चत्वमस्य तु ।
ओङ्कारस्यार्थ उद्दिष्ट उक्तार्थाधिक्यमेव च ।
नादो बली प्रवदति तथा भेरीध्वनिः प्रभोः ।
अनुदात्तस्वरूपत्वादौदार्यं वदतीशितुः ।

**टिप्पणी -**

यदुक्तं समुद्रमेघघोषादीनां भगवन्नामत्वं, तदयुक्तम् । तेषां ध्वन्यात्मकत्वेन वाचकत्वायोगादित्याशङ्कां प्रमाणेन परिहरन् यथायोग्यं योजनाप्रकारं लेशेनाऽऽह– **उक्तं चेति** ॥ अब्धिः स्वघोषव्यङ्ग्येन हुङ्कारेण सह तमुच्चरन्निति यावत् । विष्णोः सर्वाभिभवशक्ततां वक्ति । कथम्? यतो हुङ्कारः परेषामभिभवसम्पादक शक्तिवाचकः। अत एव शक्ताः स्वेषां पराभवशक्तिरस्तीति ज्ञापयितुं हुं कुर्वन्तीति भावः । एतेन वाचकवर्णव्यञ्जकत्वेन समुद्रादिघोषाणामुपचाराद् वाचकत्वोक्तिरित्युक्तं भवति । ननु 'नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः' इति कर्मनिर्णये समुद्र-घोषस्य नादव्यञ्जकत्वेन श्रैष्ठ्यवाचकत्वमुक्तम्, अतो विरोध इति चेन्न । ग्रन्थ-द्वयानुसारेण हुङ्कारनादोभयव्यञ्जकत्वोपपत्तेः । यद्वा, नदीघोषविवक्षया नादत्वादि-त्युक्तम् । समुद्रघोषविवक्षया हुङ्कारत्वाच्चेति चशब्दार्थो बोध्यः । मेघेषु संस्थितो वायुः बलवन्नादसंयुक्तः । नादो नाम वर्णो मन्त्रशास्त्रे प्रसिद्धः । तत्संयुक्तस्तत्सत्समुच्चरन् तद्व्यञ्जकध्वनिं कुर्वन् ओमिति स्वरते मेघध्वनिव्यङ्ग्योङ्कारं समुच्चरति इत्यर्थः। ओङ्कारस्याधिकोच्चत्वमर्थ उद्दिष्टः । बली नादश्चोक्तार्थाधिक्यमेव प्रवदति । अनुदात्तस्वरूपत्वात् अनुदात्तव्यञ्जकत्वात् । ईशितुः सर्वेष्टदानशक्तस्य ।

**भाष्यम्-**

तदपेक्षयान्यनीचत्वं घण्टाद्या स्वरितात्मकाः ॥
उच्चस्थितिमुदात्तस्तु स्वर्णचञ्च्वादिकः स्वरः ।
विष्णोर्वक्ति तथा मन्द्रः श्वासादिः प्रचयात्मकः ।
एकप्रकारतां विष्णोः सदाचाल्यां वदत्यपि ॥
इत्यादयः सर्वघोषा विष्णोरेव गुणोन्नतिम् ।
वदन्ति किमु वेदाद्या मार्जाराद्यभिधास्तथा ॥
मारयित्वा प्रभक्ष्यैव जरयत्यखिलं जगत् ।
तेन मार्जार उद्दिष्टो मोषणान्मूषको हरिः ॥
वर्षणाद्वर्ष उद्दिष्टो बलनाद्बलिनामकः ।
तारणात्तृणनामासावित्याद्येकोऽभिधीयते ॥

**टिप्पणी -**

स्वरितात्मकाः स्वरितस्वरव्यञ्जकाः । उच्चस्थितिम् उच्चतयोत्तमत्वेनावस्थानम् । स्वर्णचुञ्चुरपभ्रष्टयानागसरः तत्प्रभृतीनां स्वरव्यङ्ग्यः । श्वासादिप्रचयात्मकः । श्वासादीनां प्रचय उपर्युपरि तीव्रसंयोगं विहाय प्रशिथिलतया संयोगः समस्थितिस्तदात्मकस्तद्व्यङ्ग्यो मन्द्रस्वरोऽपि विष्णोः केनाप्यचाल्यां सदैकप्रकारतां वदतीत्यर्थः । इत्यादय इत्यादिपदेन दधिमन्थनवृक्षपतनादिघोषा गृह्यन्ते । ते चान्तर्नादव्यञ्जकत्वेन यदा विष्णोर्भीषकत्वादिगुणोन्नतिं वदन्ति । तदा वेदाद्याः वेदाः पौरुषेयग्रन्थाः मार्जाराद्यभिधाश्च वाक्यपदसमन्वयेन विष्णोर्गुणोन्नतिं वदन्तीति किमु वाच्यमित्यर्थः । यद्वा, सर्वे वेदा अपि तस्यैव नाम किमु समुद्रघोषेत्यादि स्ववचनानुसारेण यदा वेदाद्या मार्जाराद्याभिधाश्चान्यत्र प्रसिद्धा विष्णोरेव गुणोन्नतिं वदन्ति तदा किम्वित्यादयः सर्वे घोषा अन्यत्र प्रसिद्धिरहिता विष्णोर्गुणोन्नतिं वदन्तीति वक्तव्यमिति योज्यम् । एवं सत्युपनिषदि 'सर्वे वेदाः सर्वे घोषाः' इति पाठक्रमोऽप्यनुसृतो भवति । ध्वन्यात्मकत्वेनावाचकानामपि घोषाणां

वाचकवर्णादिव्यञ्जकत्वेनोपचरितं वाचकत्वमित्येतच्च कर्मनिर्णये तट्टीकायां च व्यक्तम्। तथाच तद्वाक्यम्- 'गर्गरगोधापिङ्गादीनां घोषा अपि नादमात्रव्यञ्जकत्वेन भगवद्वाचका एव' इत्याह– **अवस्वरतीत्यादिना**॥ 'दध्नो मन्थनघोषश्चाप्यन्तर्नाद-स्वरूपतः। भीषकत्वं हरेर्ब्रूयादन्तर्नादो हि भीषणे। नदीसमुद्रघोषाश्च नादत्वाच्छ्रैष्ठ्यवाचकाः' इत्यादिटीकावाक्यानि च। ननु वर्णा एव वाचकाः न घोषाः। ते तु वर्णव्यञ्जका एव तत्कथमुच्यते घोषा एव वाचका इति। न च मन्तव्यं वाचकवर्णव्यञ्जकत्वेनोपचारादियमुक्तिरिति। गर्गरादिघोषाणामकारादि-व्यञ्जकत्वस्याप्यभावादित्यत उक्तम्– **नादेति**॥ नादो नाम वर्णो मन्त्रशास्त्रे प्रसिद्धः। अन्तर्नादोऽपि नादस्यैव विशेषः। 'तत्स्वरूपत्वात् तद्व्यञ्जकत्वान्नादव्यञ्ज-कत्वात्' इति। मारयति जरयति चेति मार्जारः। मारणमात्रेण कथं जारणमित्यतः प्रभक्ष्येति तात्पर्यमुक्तम्। मोषणात् स्तैन्याद् भक्तानां पापहरणादिति यावत्। वलनात् संवरणात्। वल संवरण इति धातोः। तारणात् संसारात्।

**भाष्यम्-**

**(सर्वनामा भगवान् सर्वविलक्षणः)**

**सर्वनामापि भगवान् सर्वशक्तिश्च सर्ववित्।**
**ब्रह्मरुद्रादिजीवेभ्यो जडेभ्यः श्रिय एव तु।**
**व्यतिरिक्तः सदानन्तसान्द्रानन्दैकरूपकः।**
**तस्यैव मुख्यनामानि समाकृष्येतरेष्वपि।**
**उपचारात् प्रवर्तन्ते व्यवहारप्रसिद्धये।**
**तथैव सर्वनामानि प्रवर्तन्ते च मारुते।**
**न तावन्मुख्यवृत्त्यैव मुख्यतोऽन्यव्यपेक्षया।**
**मुख्यतः सर्वनामा तु विष्णुरेको न चापरः।**
**तस्मात् प्राणादिशब्दाश्च विष्णावेव हि मुख्यतः।**
**अन्यव्यपेक्षया वायौ मुख्यवृत्तिर्विधीयते।**

**वायुश्च सूर्यसंस्थः संस्तपत्येतज्जगत्त्रयम् ।**
**आज्ञयैव हरेर्वायोः शक्त्या सूर्यस्तपत्ययम् ।।' इत्यादि च ।**

**टिप्पणी -**

ननु किं सर्वाभेदेन सर्वनामत्वमित्यत आह– **सर्वनामेति** ।। सर्वनामाऽपि ब्रह्मादिभ्यः सदा व्यतिरिक्त इत्यन्वयः । तत्र श्रीव्यतिरिक्तत्वेन तत्त्वं हेतुः । तस्यास्त्रिविधानन्त्याभावात् । जीवेभ्यो व्यतिरिक्तत्वे सदाभिव्यक्तसान्द्रानन्दैक-स्वरूपत्वं च । जडव्यतिरिक्तत्वे सर्वज्ञत्वं च । उक्तगुणसाधनाय सर्वशक्तिरिति ।। भगवत एव सर्वनामवत्त्वे कर्मदेवतादिलोकव्यवहारलोपः स्यादित्यत आह– **तस्यै-वेति** ।। एष नारायणो देवो वायुना सहेमं लोकमभ्यार्चदिति व्याख्यानघटनाय 'एष इमम्' इत्यारभ्य 'ता वा एता' इत्यन्तं वायावपि योजयति–**तथैवेति** ।। तर्हि नारायण एवेत्यवधारणं कथमित्यत आह– **न तावदिति** ।। मुख्यवृत्त्यपेक्षयाऽवधारणमिति भावः । ननु प्राणे तावती मुख्यवृत्तिर्न चेत् प्राणे वायावेव विषये ऋगाद्या इत्यवधारणं कथमित्यत आह–**मुख्यत इति** ।। अन्यव्यपेक्षया मारुते मुख्यतः सर्वनामानि प्रवर्तन्त इत्यर्थः । तदपेक्षया वायावेवेत्यवधारणमिति भावः । ननु 'य एष तपति प्राणो वाव तदभ्यार्चत्' इत्येतद्व्याख्यावसरे 'प्राणः स्थूणा' इति प्रयोगदर्शनेन प्राणशब्दस्य नारायणपरत्वं निर्धारि-तम् । सर्वेषामपि शब्दानां मुख्यतो भगवत्परत्वं च प्रमापितम् । सूत्रितं च **'प्राणस्तथाऽनुगमाद्'** इति । तत्कथमेतत्प्रकरणस्थं सर्वशब्दान्तर्गतं प्राणनाम वायुपरं स्यादित्यत आह– **मुख्यत इति** ।। यद्यपि मुख्यतः सर्वनामा विष्णुर्नापरः तस्मात् प्राणादिशब्दाश्च विष्णावेव मुख्यत इति हि प्रसिद्धम् । तथाऽप्यन्यव्यपेक्षया प्राणादिशब्दानां वायावपि मुख्यवृत्तिर्विधीयतेऽस्तीत्युच्यत इत्यर्थः । ननु प्राणशब्दस्य वायुपरत्वमत्र सम्भवति । 'य एष तपति' इति प्राणस्य सूर्यमण्डले स्थित्वा तापकत्वोक्तेर्विष्णोरेवाऽदित्यमण्डले तापकत्वस्य निर्धारितत्वादित्यत आह– **वायुश्चेति** ।। आज्ञयैव नतु स्वातन्त्र्येण । वायोः

शक्त्या सूर्योऽपि तपति किमु वायुः । स्वातन्त्र्येण सूर्यस्थत्वादिकं प्राक् साधितमिति भावः ।

**भाष्यम्-**

**(मुख्यवायुरपि सर्ववेदप्रतिपाद्यः)**

**न प्रसिद्धसूर्यस्येयं तापनशक्तिरिति ज्ञापयितुं 'प्राणो ह्येष य एष तपति' इत्युक्तम् । 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति इति च श्रुतिः । प्राणशब्दश्च मुख्यतो विष्णौ प्रवर्तमानोऽपि वायावपि वर्तते । अतः सर्ववेदाद्यभिधेयत्वं वायोरप्यस्ति । 'प्राणस्य प्राणः' (केन. १.३) इति श्रुतेरुभयोरपि प्राणशब्दः प्रसिद्ध एव । 'अयं वाव शिशुर्योऽयं मध्यमः प्राणः' इति वायोर्विशेषणादुत्तमः प्राणो विष्णुरिति च सिद्धम् ।**

**टिप्पणी -**

विष्णु-वाय्वोः शक्त्या सूर्यस्य तापकत्वं न स्वयं तापनशक्तिरित्यत्र ज्ञापकमाह– **नेति** ।। न प्रसिद्धसूर्यस्येयं मुख्यतापनशक्तिरिति ज्ञापयितुं 'य एष तपति स एष प्राणः' इति प्रसिद्धमित्युक्तमित्यर्थः । सूर्यस्य प्राणाधीनत्वे श्रुत्यन्तरं च पठति– **प्राणादिति** ।। ननु प्राणाद् वेति प्राणपदेन विष्णुरेव किन्न स्यादित्यत आह– **प्राणशब्दश्चेति** ।। यद्वा, 'एष इमम्' इत्यादिकं वायोरपि सर्वनामत्वपरमिति 'तथैव सर्वनामानि प्रवर्तन्ते च मारुते' इति प्रमाणेन व्याख्यातम् । तत्र 'ता वा एताः' इत्युपसंहारवाक्यमपि ज्ञापकम् । तत्रत्यप्राणशब्दस्य वायावपि वृत्तेरिति भावेनाऽह– **प्राणशब्दश्चेति** ।। यत इत्यादौ योज्यम् । प्राणशब्दस्योभयपरत्वे प्रमाणमुदाहरति–**प्राणस्येति** ।। तत्रापि विष्णौ मुख्यत्वं ज्ञापकोक्त्या निर्धारयति– **अयं वावेति** ।। यद्वा, 'प्राणस्य प्राणः' इत्यत्र प्राणस्य प्राणताप्रद इत्यर्थः । तत्रोत्तमः प्राणो विष्णुरिति कुत इत्यत आह– **अयं वावेति** ।। मध्यमः प्राण इत्युक्त्या प्राणत्रयं प्रतीतम् ।

**भाष्यम्-**

द्वावात्मानौ हि देवेषु द्वौ प्राणौ द्वौ च चेतनौ।
अज्ञानाभिभवास्पृष्टौ वायुर्नारायणश्च तौ।
तदन्ये चेतनाः सर्वे प्राणाश्चात्मान एव च।
अज्ञानाभिभवास्पृष्टास्तस्मात् ते ह्यधमाः श्रुताः।
मध्यमो वायुरेवैक उत्तमः केवलो हरिः।
सर्वशब्दोदितौ तस्मादेतौ द्वावेव नापरः।
अन्ये चैव मितैः शब्दैरुच्यन्ते नामितैः क्वचित्।
श्रीरप्यखिलशब्दोक्ता विष्णुवन्न तु मुख्यतः।
तस्मादमितनामानावपि तौ मितनामवत्।
श्रीश्च वायुश्च विष्णुस्तु मुख्योक्तेरमिताभिधः।
अनन्तनामकत्वाच्च सोऽनन्तगुण ईरितः।
पृथङ्नामानि यस्मात् तद्गुणानेव प्रचक्षते॥' इत्यादि ब्रह्माण्डे॥ २॥

**टिप्पणी -**

तत्प्रमाणेन विविच्य दर्शयति- **द्वाविति**॥ देवेषु मध्ये द्वावात्मशब्द-वाच्यौ। द्वौ प्राणशब्दवाच्यौ। द्वौ चेतनशब्दवाच्यौ। कौ तौ?। वायुर्नारायणश्च तौ। कुतः। यतोऽज्ञानाभिभवास्पृष्टौ। अज्ञानास्पर्शाच्चेतनोत्तमेषु देवेष्वपि मुख्यचेतनत्वम्। अभिभवशून्यत्वादात्मपदोदितमुख्यस्वामित्वम्। अज्ञानाभि-भवाभ्यामस्पृष्टत्वादेव मुख्यतः प्राणत्वं प्रकर्षेण नियामकत्वम्। मुख्यत्वं च निर्धारणाल्लभ्यत इति ज्ञेयम्। तदन्ये ते सर्वे देवाः यस्मादज्ञानाभि-भवस्पृष्टास्तस्मादधमाश्चेतनाः अधमाः प्राणाः अधमा आत्मानः श्रुताः इति योजना। तर्हि वायुनारायणयोः साम्यमित्यत आह- **मध्यम इति**॥ मध्यमो मध्यमः प्राणो मध्यमश्चेतनो मध्यम आत्मा। एवमुत्तम इत्यत्रापि। ततश्च किमित्यत आह- **सर्वेति**॥ तस्मात् सर्वस्वामित्वात् सर्वनियामकत्वाच्च

चेतनाचेतनपरसर्वशब्दोदितौ **'तदधीनत्वादर्थवत्'** (ब्र.सू. १.४.३) इति सूत्रात् परमचेतनत्वाच्चेतनवाचिसर्वशब्दोदितावित्यर्थः। यद्वा, तस्मात् प्राणशब्दवाच्यत्वादित्यर्थः। प्राणशब्दस्य तदुभयपरत्वे 'ता वा एताः' इति वाक्येन सर्वशब्दवाच्यत्वसिद्धेरिति भावः। तर्ह्यन्येषाम- नभिधेयत्वं स्यादित्यत आह– **अन्ये चैवेति**॥ तर्हि श्रियोऽपि मितशब्दवाच्यत्वं प्राप्तमत आह– **श्रीरिति**॥ विष्णुवदखिलवेदोक्ताऽतो विष्णुग्रहणेन साऽपि गृहीतेति भावः । एतेन सरस्वत्यपि वायुवदिति सिद्धम्। तर्हि तयोः साम्यमित्यत आह– **विष्णुवन्न तु मुख्यत इति**॥ सङ्ख्यातोऽर्थतश्च विष्णुवन्न तु मुख्यतोऽखिलवेदोक्ता नारायणादिशब्दवाच्यत्वस्याभावात्। तद्वत् प्रवृत्तिनिमित्तपौष्कल्याभावेन लक्ष्म्यादिशब्दमुख्यार्थत्वाभावाच्चेति। नन्वेवं यदि श्रीवाय्वोरनन्तशब्दवाच्यत्वं तर्हि ग्रन्थान्तरे मितशब्दवाच्यत्वोक्तिः कथमित्यत आह– **तस्मादिति**॥ तौ श्रीवायू अमितनामानावपि तस्मादेव विष्णुवदखिलनाममुख्यार्थत्वाभावादेव मितनामवत् मितनामभिर्देवैः तुल्यं ग्रन्थान्तरे उच्यते। **'तेन तुल्यं क्रिया चेत् तद्वतिः'** इति सूत्रात्। विष्णुस्तु मुख्योक्तेर्निःशेषैः शब्दैः मुख्यतयोक्तेरमिताभिध इत्यर्थः। 'एष इमं लोकमभ्यार्चत्' इत्यारभ्य 'ता वा एताः' इत्यन्तोक्तस्य सर्वशब्दसमन्वयस्य प्रकृतोपयोगं प्रमाणशेषेणाऽह– **अनन्तेति**॥ तथाचैतद् ब्रह्मैतत् सत्यमित्युपक्रमोक्तं निर्दोषगुणपूर्णत्वं युक्तमिति मूलाभिप्राय इति भावः ॥ २ ॥

**॥ इति द्वितीयः खण्डः ॥**

**उपनिषत्-**

**(बृहतीसहस्रमन्त्रेतिहासः)**

**विश्वामित्रं ह्येतदहःशंसिष्यन्तमिन्द्र उपनिषससाद सहान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स त्वा ऋषे द्वितीयं शंसेति सहान्नमित्येवाभिव्याहृत्य**

बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धमोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति सहान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयाय तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागावरं ते ददामीति सहोवाच त्वामेव जानीयामिति तमिन्द्र उवाच 'प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मि' इति होवाच ॥ ३ ॥

**भाष्यम्-**

**(बृहतीसहस्रं सर्वं नारायणस्यान्नम्)**

अन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो भगवद्विषया एव मुख्यतः। तदनन्तरं वायुविषयाश्च । तस्माद् बृहतीसहस्रं सर्वं मुख्यतो नारायणस्यान्नं तदाज्ञया वायोश्च। तस्मात् तच्छंसनेन भगवान् वायुश्चातिप्रीयेते इति दर्शयति 'विश्वामित्रं ह्येतदहः शंसिष्यन्तम्' इत्यादिना।

**टिप्पणी -**

ननु समन्वयमुखेन गुणपूर्णत्वमुपपाद्योपसंहृतम्। किमधुनाऽसङ्गताख्यायिकोच्यत इत्यतः सङ्गतिमाह– **अन्यदेवतेति**॥ 'प्राण ऋच इत्येव विद्यात्' इत्यत्रान्यदेवताविषयत्वेन प्रतीयमाना अपि सर्वा ऋचो भगवद्विषया एव मुख्यतस्तदनन्तरं वायुविषयाश्चेति यत् सर्वासामृचां भगवद्विषयत्वं प्राणविषयत्वं चोक्तं तद् दर्शयति। युक्त्योपपादयति। 'विश्वामित्रं ह्येतदहः' इत्यादिनेत्यन्वयः। कया युक्त्या दर्शयति तदित्यत उक्तम्– **तस्मादिति**॥ यस्माद् भगवद्वायुविषयास्तस्मादेवान्यदेवताविषयत्वेन

प्रतीयमानमपि सर्वं बृहतीसहस्रं मुख्यतो नारायणस्य तदाज्ञया वायोश्चान्नं तर्पकमन्यथा तन्न स्यात्। अन्यविषयस्यान्यतर्पकत्वायोगादिति युक्त्या दर्शयतीत्यर्थः। तर्पकत्वमसिद्धं कथं हेतूकृतमित्यत उक्तम्–**तस्मात् तच्छंसनेनेति** ।। तस्मादन्नं तस्मादेव तच्छंसनेन भगवान् वायुश्चातिप्रीयेते अन्यथा तन्न स्यादिति युक्त्या तर्पकत्वं च दर्शयतीत्यर्थः। यद्वा, यस्मात् तच्छंसनेन तौ प्रतीयेते तस्मान्नारायणस्य वायोश्च तदन्नं यस्मादन्नं तस्मादन्यदेवताविषयत्वेन प्रतीयमाना अपि ऋचो मुख्यतो भगवद्विषयास्तदनन्तरं वायुविषयाश्चेति दर्शयतीति योज्यम्। अथवा 'ता वा एताः सर्वा ऋचः' इत्यत्र सर्ववेदादिप्रतिपाद्यत्वमुक्तम्। तत्र कैमुत्ययुक्तिपरत्वेनाऽख्यायिकोच्यत इत्यवतारयति– **अन्यदेवतेति** ।। वायुविषयाश्चेत्यनन्तरं तदा किं वाच्यं सर्वे वेदादयो भगवद्विषया इतीति शेषः। तत्तच्छ्रुतिलिङ्गबलादन्यदेवताविषयत्वेन प्रतीयमाना अप्यृचो बृहतीसहस्रान्तर्गता भगवद्विषया एव मुख्यतः तदनन्तरं वायुविषयाश्च। तदा किमु वक्तव्यं सर्ववेदादयो भगवद्विषया इतीति दर्शयतीति योजना। बृहतीसहस्रान्तर्गतानामन्यदेवताविषयतया प्रतीयमानानामृचां भगवत्परत्वे युक्तिमाह– **तस्माद् बृहतीसहस्रमिति** ।। पूर्ववद् व्याख्येयम् ।।

**भाष्यम्-**

**(इन्द्रकर्तृकं महाव्रतम्)**

वृत्रं हत्वा पुरेन्द्रस्तु महेन्द्रत्वाभिपत्तये।
**महाव्रतं कर्म चक्रे** हौत्रं चक्रेऽत्र कौशिकः।
भृगुरध्वर्युरभवद् ब्रह्मा ब्रह्माभवत् स्वयम्।
उद्गाता वायुरभवत् स्वयं नारायणः प्रभुः।
सादस्यमकरोत् तत्र तदन्येऽन्येऽपि चर्त्विजः।

**(विश्वामित्रेण बृहतीसहस्रपठनम्)**

बृहतीसहस्रं शंसिष्यन् यदा सस्मार केशवम्।
वायुना सह देवेशस्तदा वासवमाविशत्।

आविष्टो विष्णुनाथेन्द्रो वायुना सह कौशिकम् ।
शंसेत्युक्त्वा निषण्णोऽभूदिदमन्नं तवेति सः ।
ऋक्सहस्रं [१]शशंसाथ यज्ञाङ्गत्वेन भक्तितः ।
तच्छ्रुत्वा तुष्टिमगमत् केशवो वायुसंयुतः ।
द्वितीयवारं शंसेति प्राह तं च जनार्दनः ।
प्रीत्यैव शक्रमाविष्टो विश्वामित्रः शशंस तत् ।
अतिप्रियत्वाद् भगवान् पुनरप्याह कौशिकम् ।
तृतीयं च शशंसासौ विष्णोरन्नं प्रकल्प्य तत् ।

**टिप्पणी -**

अत्र विश्वामित्रस्य बृहतीसहस्रशंसनलिङ्गेन होतृत्वमवगम्यते । अयं होता चेत् केऽन्ये ऋत्विजः तच्छंसनं च महाव्रते सर्वपृष्ठात् पूर्या मे विश्वजिति अतिरात्रे च प्रसक्तमतस्तेषामत्र प्रकृतं कर्म किमित्यतश्च तत्सर्वं विविच्याऽह– **वृत्रमित्यादिना** ।। तदन्ये ऋष्यादयः । अन्ये उक्तेभ्योऽन्ये उप ऋत्विज इत्यर्थः । 'विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषससाद' इत्यत्र एतदहः शंसिष्यन्तमिति पदतात्पर्यमाह– **बृहतीसहस्रमिति** ।। इन्द्र उपनिषससादेति सप्तम्यन्तं पदमित्यभिप्रेत्य निषससादेत्यत्र नि सः ससादेति पदविभागमभिप्रेत्य स इति कर्तृपदं व्याचष्टे– **वायुनेति** ।। 'स इन्द्र उपनिषसाद' इति प्रथमान्तं पदमभिप्रेत्य व्याचष्टे– **आविष्ट इति** ।। उपनिषसादेत्यत्रोपेत्युपसर्गतात्पर्यमाह– **शंसेत्युक्त्वेति** ।। शंसेत्यादरपूर्वं निषदनमेवोपनिषदनमिति भावः । सहान्नमित्यभिव्याहृत्येत्यस्यार्थः ।। **इदमन्नमिति** ।। इदमन्नं तवेत्यथेत्यन्वयः । इदं तवान्नमिति वचनानन्तरमित्यर्थः । इति वचनमुक्त्वेति यावत् । अभिशशंसेत्यन्वयमभिप्रेत्य तस्यार्थद्वयमुक्तम्– **यज्ञाङ्गत्वेन भक्तित इति** ।। तेनेन्द्रस्य प्रियं धामोपेयायेत्यस्य

---

१. शशंसात्र- ह.पा.

तात्पर्यमाह– **तच्छ्रुत्वेति** ।। 'स वा ऋषे द्वितीयं शंस' इत्येतद् व्याचष्टे– **द्वितीयवारमिति** ।। प्रीत्यैव बृहतीसहस्रे विश्वामित्रे च । 'स वा ऋषे तृतीयम्' इत्येतद् व्याचष्टे– **अतिप्रियत्वादिति** ।। बृहतीसहस्रस्येति शेषः । तृतीयवारं शंसेत्याहेत्यन्वयः । सहान्नमित्येवाभिव्याहृत्येत्यस्यार्थः– **विष्णोरिति** ।। प्रकल्प्य वचनेन ।

**भाष्यम्-**

**ततोऽतितुष्टो भगवान् ददामि वरमित्यमुम् ।**
**ऊचे स प्रथमे त्वेव निजसालोक्यमीश्वरः ।**
**प्रादाद् द्वितीये सामीप्यं तृतीये पुनरेव च ।**
**वरं ददामीत्युक्तः स मुनिः प्राह जनार्दनम् ।**
**सम्यक्त्वामेव जानीयामिति मोक्षे सुखोच्चताम् ।**
**इच्छंस्तं प्राह भगवानिन्द्रस्थो वायुसंयुतः ।**
**सर्वनामाहमस्म्येक इति ज्ञानं ममोत्तमम् ।**
**यस्मात् सर्वगुणत्वं स्यात् सर्वनामत्व एव तु ।**
**न हि दोषाभिधायीनि विष्णोर्नामानि कानिचित् ।**
**अदोषत्वान्महाविष्णोर्न सामान्यवचांस्यपि ।**
**सर्वोत्तमगुणात्मत्वात् सदा नारायणस्य हि ।**
**सर्वोत्तमगुणानेव नामान्याचक्षते हरेः ।**

**टिप्पणी -**

'वरं ते ददामि'इत्यस्य 'तमिन्द्र उवाच' इत्यनेनान्वयमाह– **ततोऽतितुष्ट इति** ।। उत्तममित्यतः परमितिशब्दोऽध्याहार्यः । 'प्रियं धामोपेयाय' इति त्रिवारं श्रुतधामशब्दार्थं विवेचयति–**स प्रथमे त्विति** ।। अत्र सालोक्यादिशब्देन तत्साधनप्रसादो लक्ष्यते । सामीप्यं पुरवासलक्षणम् । पुनरेव च सामीप्यमन्तःपुरवासलक्षणम् । 'सहोवाच'इत्येतद् व्याचष्टे– **इतीति** ।। विश्वामित्रस्यापरोक्ष-

ज्ञानित्वात् 'त्वामेव जानीयाम्' इति ज्ञानप्रार्थनमयुक्तम् । सालोक्यादिरूपमोक्षस्य प्राप्तत्वादनर्थकं चेत्यतो व्याचष्टे– **सम्यगिति** ।। 'तमिन्द्र उवाच' इत्यस्यार्थः– **तं प्राहेति** ।। ननु 'त्वामेव सम्यग् जानीयाम्' इति प्रश्ने 'प्राणस्त्वम्' इत्यादिना विश्वामित्रादीनां प्राणभेदोक्तिरसङ्गता स्यादित्यतः 'प्राणो वाऽहमस्मि' इत्यादिकं स्वप्रभृतीनां नाभेदपरं किन्तु स्वस्य सर्वनामवत्त्वपरम् । तथा ज्ञानस्यैव सम्यग्ज्ञानत्वादिति भावेनोपदेष्टुर्भावमाह– **सर्वेति** ।। 'अहमेक एव सर्वनामास्मि' इति सर्वनामवत्त्वेन यज्ज्ञानं तदुत्तमं विश्वामित्रेण प्रार्थितं विशेषज्ञानमिति भावेन भगवांस्तं प्राहेत्यन्वयः । तदुपपादयति– **यस्मादिति** ।। यस्मात्तु मुख्यतः सर्वनामवत्त्व एव तत्प्रवृत्तिनिमित्तसर्वगुणत्वं स्यात्तस्मादिति ज्ञानमुत्तममित्यन्वयः। ननु दुःखिबद्धावरादिनामवत्त्वे दोषाः स्युस्तदभावे सर्वनामत्वभङ्ग इत्यत आह– **नहीति** ।। कर्हिचित् कान्यपि नामानि विष्णोर्दोषाभिधायीनि न भवन्ति । हि प्रसिद्धम् । कुतः कर्हिचित् कुत्रापि रूपे विष्णोरदोषत्वाद् दोषाभावाद् योग्यताविरहादिति भावः । न केवलं नामानि दोषाभिधायीनि न भवन्ति । किन्तु सामान्यवचांस्यपि गुणदोषोदासीनधर्ममात्रप्रतिपादकान्यपि न भवन्ति । यद्वा साधारणगुणवाचीन्यपि नेत्यर्थः । तदुपपादनम्– **सर्वोत्तमेति** ।। तर्हीश्वरे प्रयुक्तानां दुःख्यादिशब्दानां भावचेतनवस्त्वादिशब्दानां च प्रवृत्तिनिमित्तानर्पकत्वेन केवलं साङ्केतिकत्वं स्यादित्यत आह– **सर्वोत्तमगुणानेवेति** ।। सर्वोत्तमगुणात्मत्वादित्यनुवर्तते । योग्यतासद्भावादिति यावत् । दुःख्यादिशब्दप्रवृत्तिनिमित्तानां 'निरनिष्टो निरवद्यः' इत्यादिश्रुत्या जीवेष्विव तत्राभावेऽप्यन्यगतदुःखादिकं प्रति स्वतन्त्रत्वात् स्वातन्त्र्यस्य शब्दप्रवृत्तौ मुख्यकारणत्वात् 'तदधीनत्वादर्थवत्' इति न्यायेन दुःख्यादिशब्दानां तत्परत्वं भावादिशब्दानामप्यसाधारण्यव्यपदेशन्यायेन स्वातन्त्र्येण भवति । सर्वं चेतयते सर्वत्र वस्त इत्यादिरूपेण सर्वोत्तमगुणप्रतिपादकत्वमिति भावः ।

**भाष्यम्-**

**(विष्णौ सर्वशब्दसमन्वयक्रमप्रदर्शनम्)**

**यावज्ज्ञानेन मोक्षः स्यात् तावज्ज्ञात्वापि कौशिकः।**
**अधिकज्ञानलब्ध्यर्थं मोक्षेऽधिकसुखाप्तये।**
**जानीयां त्वामिति प्राह तस्मा आह स केशवः।**
**इन्द्राविष्टः प्राणनाम तथान्याश्चाभिधाः प्रभुः।**
**प्रकृष्टानन्दरूपत्वात् प्राण इत्यभिधीयते।**
**अहेयत्वादहंनामास्म्यसनान्मनुतेरपि।**
**ततो वेत्तीति च त्वं सपूर्णत्वात् सर्वनामकः।**
**सर्वाणि बहुरूपत्वात् सर्वरूपेषु पूर्तितः।**
**प्रभुतत्वाद् भूतनामा सर्वरूपप्रभू ततः।**
**बहुरूपः स भूतानीत्युक्तो विष्णुः सनातनः।**
**सर्वैश्वर्यस्वरूपत्वादेष इत्यभिधीयते।**

**टिप्पणी -**

ननु 'त्वां जानीयाम्' इत्यस्य सम्यक् त्वामेव जानीयामित्यर्थो न युक्तः। स्वयोग्ययावज्ज्ञानाभावे सालोक्यादिमोक्षानुपपत्तेरित्याशङ्कां परिहरन् विशेष-ज्ञानार्थं प्रार्थने नामकथनमयुक्तमिति शङ्कां परिहरन् उक्तं विवृणोति– **याव-दिति**॥ प्राणनाम तथान्या अभिधाश्चाहेत्युपपन्नमिति शेषः। प्राणपदं त्रिरावृत्तमेकमेव नामेति द्योतनाय प्राणनामेत्युक्तम्। पूर्णानन्दत्वस्य विशिष्य सर्वैरपि स्मर्तव्यत्वात् प्राधान्यविवक्षया पृथगुक्तमत एवोपनिषद्यभ्यास इति ज्ञेयम्। 'प्राणो वा अहम्' इत्यादि व्याचष्टे– **प्रकृष्टेत्यादिना**॥ प्रकृष्टो ण आनन्दः प्रणः, प्रण एव प्राणः, प्रज्ञ एव प्राज्ञ इति यथा। यद्वा, प्रकृष्टः आ पूर्णो ण आनन्दः प्राण इति व्याख्येयम्।.सर्वाणीत्यत्र सर्वप्रातिपदिकार्थमाह– **पूर्णत्वादिति**॥ बहुवचनस्यार्थः– **सर्वाणीति**॥ विशिष्टस्यार्थः– **सर्वरूपेषु पूर्तित इति**॥ सर्वाणीति

योज्यम् । प्रभूतत्वात् पूर्णत्वाद् भू बहौ इति धातोः । नित्याविर्भूतगुणत्वाद् वा । भवतेराविर्भावार्थत्वात् । प्रकर्षेण स्वातन्त्र्येण सत्त्वाद्वा भूतनामा यतो बहुरूपोऽतः स भूतानीति बहुवचनेनोक्तः । सर्वरूपेषु प्रभूतत्वाद् भूतानीति विशिष्टशब्देनोक्त इति योजना । सनातन इत्यनेन सर्वदा सत्त्वाच्च भूतनामेति व्याख्यातं भवति । आ समन्तादीश एष इत्यभिप्रेत्योक्तम्– **सर्वैश्वर्येति** ॥

**भाष्यम्-**

> **स एव सूर्यसंस्थः संल्लोकं तपति केशवः ।**
> **सर्वनामवतस्तस्य ममान्नं मित्रमुच्यते ।**
> **अन्नाभिमानिनी साक्षाच्छ्रीरेव प्रमदोत्तमा ।**
> **सान्नमित्युच्यते विष्णोर्भोग्यत्वान्मित्रमेव च ।**
> **दक्षभागस्थितेनत्वाद्दक्षिणं नाम सोच्यते ।**
> **तस्या इनो हि विष्णुः सदक्षभागे स्थितः सदा ।**

**टिप्पणी -**

सर्वैश्वर्योपपादकं 'य एष तपति' इत्येतद् व्याचष्टे– **स एवेति** ॥ य एष सर्वेश्वरः स एवेति योज्यम् । सर्वनामत्वे युक्तित्वेन तस्य मेऽन्नमित्येतद् व्याकुर्वन् तस्येति परामृष्टमाह– **सर्वेति** ॥ अन्नं प्रसिद्धमित्यन्यथाप्रतीतेर्व्याचष्टे– **श्रीरेवान्नं नतु प्रसिद्धमिति** ॥ तत्र हेतुः– **साक्षान्मुख्यत इति** ॥ अन्नशब्दस्य तत्र मुख्यत्वादिति भावः । तदुपपादकम्– **अन्नाभिमानीति** ॥ तथाच समाकर्ष-न्यायेनाभिमानिनि शब्दो मुख्य इति भावः । श्रीशब्दस्य भारत्यादौ प्रयोगात् तद्वारणाय प्रमदोत्तमा साक्षाच्छ्रीरिति । नन्वन्यासामप्यन्नाभिमानित्वादुक्तन्यायेन तासामपि प्राप्तिरित्यत उक्तम्– **साक्षान्मुख्यतोऽन्नाभिमानिनीति** ॥ तथाच मुख्ये सम्भवन्यायेन नान्यासामत्र परिग्रह इति भावः । केन प्रवृत्तिनिमित्तेन साऽन्नमित्युच्यत इत्यत उक्तम्– **भोग्यत्वात् साऽन्नमित्युच्यत इति** ॥ 'सर्वं वा अत्तीति तददितेरदितित्वम्' (बृह. १.२.५) इति श्रुतेः सर्वं तस्य भोग्यं

श्रियः को विशेष यत उक्तम्–**साक्षादिति** ।। मुख्यतो भोग्यत्वादित्यर्थः । तत्र मित्रत्वं हेतुरित्याह–**भोग्यत्वान्मित्रमेव चेति** ।। भोग्यत्वादेव मित्रं चोच्यते । अन्यथा तन्न स्यादतिप्रियस्यैव भोगसाधनत्वादिति भावः । मम दक्षिणं दक्षभागस्थितं इत्यन्यथाप्रतीतेर्व्याचष्टे– **दक्षेति** ।। कोऽयमिन इत्यत उक्तम्–**तस्या इति** ।। अर्धनारीरूपेषु दक्षभागस्थित इत्यर्थः । नन्वर्धनारीरूपेषु कुत्रचित् कदाचिद् वामभागे भगवतोऽवस्थाने तद्विवक्षयान्नं मे दक्षिणं दक्षभागस्थितमित्यर्थः सम्भवत्येवेति किमर्थं दक्षे इनो यस्येति विग्रहाश्रयणं, आश्रयणे वा दक्षेणमिति स्यान्नतु दक्षिणमित्यत उक्तम्– **सदेति** ।। नियमेन सर्वदा चेत्यर्थः । एतद्विशेष-सूचनायैव दक्ष इन इति स्थिते गुणे भवितव्ये अकारलोपेन दक्षिणमित्येव रूपं प्राप्तमिति भावः । ननु वाय्वादीनामपि स्वभार्याभिरेकीभावस्य वक्ष्यमाणत्वेन भारत्यादीनामपि दक्षभागस्थितत्वात् किं विशिष्योच्यते श्रीर्दक्षिणेतीत्यतो वोक्तम्– **सदेति** ।। भारत्यादीनां दक्षिणत्वं न सार्वकालिकमतो विशिष्योच्यत इति भावः । ननु च श्रीरपि सदा न दक्षिणा महाभारततात्पर्यनिर्णये 'यदा तु सा मे वामार्धरूपा दक्षिणानामधेया' (म.ता.नि. २०.७३) 'तदाऽप्यस्या उत्तमोऽहम्' (म.ता.नि.२०.७५) इत्युक्तत्वादिति चेन्न । भावानवबोधात् । अत्र हि दक्षिणारूपाणामविच्छिन्नप्रवाहरूपेण सदा सत्त्वमभिप्रेतम्, नतु एकैकरूपस्यैव सदा दक्षिणात्वेनावस्थानं येन विरोधः स्यादिति ।

**भाष्यम्-**

**(शक्राविष्टो विष्णुर्न चापरः)**

यस्याभिमानिन्यन्नस्य लक्ष्मीः सा देवतोत्तमा ।
वैश्वामित्रं तदन्नं तु ऋक्सहस्रात्मकं मतम् ।
विश्वामित्रेण दृष्टत्वाद्वैश्वामित्रं तदीर्यते ।
इन्द्राविष्टः कोऽयमिति शङ्कां परिहरन् हरिः ।
आदित्यसंस्थितो विष्णुस्तपन्नस्मीति चोचिवान् ।

त्वां जानीयामिति प्रश्नं विश्वामित्रस्य कुर्वतः ।
अभिप्रायद्वयं ह्यस्ति शक्राविष्टो न चापरः ।
हरेरिति तु मे तर्कस्तेजोबाहुल्यतोऽजनि ।
तस्य तर्कस्य सत्यत्वं ज्ञातव्यं प्रथमं मया ।
द्वितीयं यदि विष्णुः स्याज्ज्ञातव्यो मे विशेषतः ।
इत्यभिप्रायमस्यैव ज्ञात्वा विष्णुः सनातनः ।
अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ ।
प्राणो वा अहमित्यादि नाम सन्दर्भमुक्तवान् ।
विशेषज्ञानसिद्ध्यर्थं नाम्ना मुक्तिः परात्मनः ।
इन्द्राविष्टः कोऽयमिति शङ्कानुत्त्यर्थमेव च ।
तपन्नेवास्मीत्यवदत् तपन्तं वेद सोऽपि हि ।
नारायणं सर्वगतं गायत्र्योपासको हि सः ।। इति ब्रह्माण्डे ।

**टिप्पणी -**

तद्वैश्वामित्रमित्यत्र तत्प्रकृतं श्रीतत्त्वमित्यन्यथाप्रतीतेर्व्याचष्टे– **यस्येति** ।। तत्तदभिमतमिति परामृष्टमन्नं च न प्रसिद्धान्नमिति भावेनाऽह– **तदिति** ।। तस्य वैश्वामित्रत्वं च न तत्कृतत्वम् अपौरुषेयत्वान्नापि तत्प्रतिपादकत्वं विष्णुपरत्वादित्यत उक्तम्– **विश्वामित्रेणेति** ।। 'य एष तपति' इति सूर्यान्तःस्थतया तापकत्वैश्वर्यस्यो क्तत्वादेष तपन्नेवेति पुनरुक्तमित्यत आह– **इन्द्रेति** ।। नन्विन्द्राविष्टं सिद्धवत्कृत्य सम्यक् त्वामेव जानीयामिति मोक्षे सुखातिशयार्थं विशेषज्ञानस्य प्रार्थितत्वात् कोऽयमिति शङ्कानवकाशः । तथाचापृष्टोत्तरत्वं स्यादित्यत आह– **त्वामिति** ।। हि यस्मादभिप्रायद्वयमस्ति तस्मादस्याभिप्रायद्वयं ज्ञात्वैव सर्वशङ्कां परिहरतीति हरिशब्दवाच्यः सनातनो विष्णुः । यद्वा, सनातनो नित्यः कालतः ततः विष्णुरन्तर्बहिश्च व्यापको हरिरभिप्रायद्वयस्यापि परिहारं ददावित्य-न्वयः । अभिप्रायमस्यैवेत्युक्तमभिप्रायं विशिनष्टि– **शक्राविष्ट इत्यादिना** ।।

तेजोबाहुल्यतः तेजोबाहुल्याख्येन लिङ्गेन शक्राविष्टो हरेरपरो नैवेति मे तर्कोऽनुमितिरजनि । तस्य तर्कस्य सत्यत्वं प्रामाण्यं संवादेन ज्ञातव्यम् । प्रमाणसंवादस्य दार्ढ्यहेतुत्वादिति प्रथममभिप्रायं यदि विष्णुः स्यात् प्रमाणसम्प्लवेन विष्णुत्वव्यवस्था स्यात्तदा विशेषतो ज्ञातव्य इति द्वितीयमभिप्रायं च ज्ञात्वेत्यन्वयः । केन कस्य परिहार इत्यत आह– **प्राण इति** ।। विशेषज्ञानसिद्ध्यर्थं नामसन्दर्भमुक्तवानित्युक्तम्, तत्कथम्? इत्यत आह– **विशेषज्ञानसिद्ध्यर्थं नाम्नामिति** ।। भारतादौ परमात्मनो विश्वविष्णुरित्यादिनाम्नां विशेषज्ञानसिद्ध्यर्थमेवोक्तिः प्रसिद्धेत्यर्थः । तपन्नेवास्मीत्युक्त्या नारायणाख्यधर्म्युपस्थितिः कथं स्यादित्यत आह– **तपन्तमिति** ।। वेदेति कथमवगतमित्यत आह– **गायत्र्येति** ।। गायत्र्या स्वदृष्टया । ननु तत्त्वप्रकाशिकायां 'कस्त्वयि' इति प्रश्नस्य 'प्राणो वा अहम्' इति परिहारः कीदृश इत्यस्योत्तरतयोत्तरवाक्ययोजनेत्युक्तत्वाद् विरोधः । किञ्च धर्मिप्रश्नस्य प्रथमप्राप्तत्वाद् धर्मप्रश्नस्यानन्तरिकत्वादन्ते धर्मिप्रश्नप्रतिहारकथनमयुक्तमिति चेन्न । 'प्राणो वा अहम्' इत्यादिवाक्यं पदसमन्वयेन वाक्यसमन्वयेन च भगवत्परम् । तत्र पदसमन्वयविवक्षयाऽस्य ग्रन्थस्य प्रवृत्तत्वात् । प्राणोऽहमित्यादिकं गुणसमर्पकम् । 'एष तपन्नेवास्मि' इति वाक्यं धर्मिपश्नोत्तरमिति युक्तम् । सूत्रभाष्यटीकासु वाक्यसमन्वयमङ्गीकृत्याऽविष्टः क इति प्रश्नोत्तरतया 'प्राणो वा अहम्' इत्यादिवाक्यं प्रवृत्तम् । प्राणशब्दस्य 'ईशानः प्राणदः प्राणः' 'प्राणस्य प्राणः' 'प्राणः स्थूणा' इत्यादौ भगवन्नामतया प्रसिद्धत्वात् । 'प्राणस्त्वम्' इत्यादिवाक्यानि तु त्वदादिसर्वजीवान्तर्गतत्वादिमहामाहात्म्यप्रतिपादकानीत्युक्तमतो न विरोधः । ननु तथाऽपि तत्र 'प्राणो वा ऽहमस्मि' इत्युपदेशस्य वामदेवोपदेशवदन्तर्यामिविवक्षयेन्द्रकर्तृकत्वं तत्रोक्तम्, अत्र तु 'अभिप्रायद्वयस्यापि परिहारं हरिर्ददौ' इति भगवत्कर्तृकत्वमुच्यतेऽतो विरोध इति चेन्न । इन्द्राविष्टः कोऽयमिति पृष्टे इन्द्रेण स्वान्तर्यामी नारायण इति तत्स्थेनाहमेवेति युगपदुक्तिसम्भवात् । यच्च कोऽयमिति प्रश्नस्यैष तपन्नेवेत्यन्ते परिहारकथनं तदपि तेजोबाहुल्यलिङ्गेन

विष्णुत्वस्यावगतत्वाद् दार्ढ्यमात्रस्यापेक्षितत्वात् कीदृश इति प्रश्नस्याज्ञात-गुणविषयकत्वात् तत्परिहारे गौरवेणेति ज्ञेयम् ।

**भाष्यम्-**

**(प्राणो वा अहमित्युपदेशः भगवतैव कृतः)**

**उपनिषण्णमिन्द्रं दृष्ट्वापि त्वामेव जानीयामिति वरस्वीकारादिन्द्रादेव चेन्द्राविष्टो भगवानत्रोक्त इति ज्ञायते। इन्द्रं तु जानात्येव हि विश्वामित्रः। भगवन्तमपि स्वरूपत आगतं जानात्येव। विशेषज्ञानप्रार्थने प्राणो वा अहमस्म्यृष इत्यादिकमेव पूर्यते। एष तपन्नेवास्मीति व्यर्थम्। प्राणो ह्येष य एष तपतीत्युक्तत्वात्।**

**टिप्पणी -**

किञ्च प्रश्नपरिहारौ भगवद्विषयावित्यागमेन दर्शितं युक्त्या चोपपादयति– **उपनिषण्णमिति** ।। जानीयामितीत्यतः परं वरप्रार्थनादिति शेषः । उपनिषण्णमिन्द्रं दृष्ट्वाऽपि 'त्वामेव जानीयाम्' इति ज्ञानवरप्रार्थनात् प्रश्नस्येन्द्रविषयत्वायोगादिन्द्राविष्टो भगवानेवात्र त्वामित्युद्देश्यतयोक्त इति ज्ञायते । किञ्च प्रश्नवाक्येऽस्य प्रसिद्धेन्द्रस्य ज्ञानार्थं प्रार्थितत्वे इन्द्रादेव वरस्वीकारप्रसङ्गात् तस्य च वक्ष्यमाणरीत्याऽनिष्टत्वादिन्द्राविष्टो भगवानत्र प्रश्नवाक्ये 'प्राणो वा अहम्' इत्यादिपरिहारवाक्ये चोक्त इति ज्ञायत इत्यर्थः । ननूपनिषण्णमिन्द्रं पुरुषविशेषत्वेन जानाति नतु इन्द्रत्वेनातस्त्वामेवेति स्वरूपप्रश्नो युज्यत इत्यत आह– **इन्द्रमिति** ।। महाव्रते यजमानमिन्द्रं तु विशिष्येन्द्रत्वेन्द्रेण हौत्रे कर्मणि विनियुक्तो विश्वामित्रो जानात्येवेत्यर्थः । नन्विन्द्रं प्रतीव भगवन्तमपि प्रति 'त्वामेव जानीयाम्' इति न वक्तुं शक्यते भगवत्स्वरूपस्य ज्ञातत्वात् तस्यात्रेन्द्रे आगत्य सन्निहितत्वस्य च ज्ञातत्वात् । तस्यापरोक्षज्ञानित्वात् स्वरूपज्ञानसद्भावात् तेजोबाहुल्यलिङ्गेनात्रागतत्वेऽस्य ज्ञातत्वादित्यत आह– **भगवन्तमपीति** ।। भगवन्तं जानातीतमागतं च जानात्येव । किन्तु स्वरूपत एव जनाति नतु मुक्तावधिकसुखसम्पादकगुणविशेषवत्तया । अतस्त्वामेव पूर्वावगतं त्वामेव पुनर्जानीयामिति प्रश्नो युज्यत

इति वैषम्यमिति भावः । नन्विन्द्रस्वरूपज्ञानेऽपि विशेषज्ञानार्थं प्रश्नः किन्न स्यादित्यत आह– **विशेषज्ञानेति** ।। नन्विन्द्रस्य तापकत्वाख्यगुणविशेषप्रतिपादकत्वान्न व्यर्थमित्यत आह– **प्राणो ह्येष इति** ।। ननूक्तमेवैष तपन्नेवेत्यवधार्यत इत्यत आह– **प्राणो ह्येष इति** ।। नवमे खण्डे 'प्राणो ह्येष य एष तपति' इति विष्णोस्तापकत्वस्योक्तत्वान्नेन्द्रस्य तापनशक्तिरिति भावः । अस्मत्पक्षे तु तेजोबाहुल्यलिङ्गेनेन्द्राविष्टो विष्णुरिति ज्ञातेऽपि तद्दाढर्याय कोऽयमिति प्रश्नोत्तरत्वेन 'एष तपन्नेवास्मि' इति सार्थकम् । इन्द्रस्य तु प्रत्यक्षसिद्धत्वेन कस्त्वमिति प्रश्नानवकाशादेष तपन्नेवेति व्यर्थमेवेति भावः । यद्वा भगवन्तमपि स्वरूपत आगतं जानात्येवेत्युक्तरीत्याऽवश्यमङ्गीकार्येण विशेषप्रश्नेनैवालम् । किमिति स्वरूपप्रश्नोऽप्यनेन क्रियते इति निर्बन्धेनेत्यत आह– **विशेषेति** ।। विशेषज्ञानस्यैव प्रार्थन इत्यर्थः । शिष्टं पूर्ववदवतार्य व्याख्येयम् । ननु तेजोबाहुल्यलिङ्गेन विष्णुत्वं ज्ञायत एव ।

**भाष्यम्-**

### (भगवतस्तदीयरूपाणां च नास्ति भेदः)

**स एतेन रूपेण सर्वा दिशो विष्टोऽस्मीत्यादिनाथाविष्टस्य विष्णुत्वं किञ्चिज्ज्ञायते। तथाप्येतेनेति तृतीयात्वात् करणत्वाशङ्का भवति। तस्य म इति वैयधिकरण्यमिति च। अतो भगवन्नामानि पृथगुक्त्वाऽहं विष्णुरित्येष तपन्नेवास्मीत्युवाच। इन्द्रशरीरमेव पश्यतो विश्वामित्रस्य तर्कमात्रतो भगवानिति किञ्चिज्जानत इति ज्ञायते।**

**टिप्पणी -**

किञ्च स एतेन रूपेणेत्यत्र स इन्द्राविष्टोऽहमेतेनाऽविष्टत्वाद् विष्ण्वाख्येन रूपेण सर्वा दिशोविष्टोऽस्मीतीन्द्राविष्टस्य विष्णुत्वं ज्ञायते। विष्णुशब्दस्य स्वस्मिन् निर्वचनात्। किञ्च तस्य मेऽन्नं दक्षिणमित्यत्रापि इन्द्राविष्टस्य दक्षिणामित्रत्वलिङ्गेन तद्विष्णुत्वं ज्ञायत एवेति एष तपन्नेवेति व्यर्थमित्याशङ्कयाऽह–**स एतेनेति** ।। अपि यद्यपि स एतेन रूपेण सर्वा दिशोऽविष्टोऽस्मीत्यनेन आदिपदेन 'तस्य

मेऽन्नं मित्रं दक्षिणम्' इत्यनेन पुनरपिपदेन तेजोबाहुल्यलिङ्गेन चेन्द्राविष्टस्य विष्णुत्वं ज्ञायते, तथाऽपि किञ्चिदेव, नतु स्पष्टम् । एतेन विष्ण्वाख्येन रूपेण करणेन सर्वा दिशोऽविष्टोऽस्मीति तृतीयानिर्दिष्टस्य करणत्वं प्रथमानिर्दिष्टस्य कर्तृत्वम् अतस्तस्य विष्ण्वन्यत्वमिति शङ्का भवति । 'तस्य मेऽन्नम्' इत्यत्र मे तस्य मम करणभूतस्य विष्णोरन्नं दक्षिणं मित्रमित्यर्थाभ्युपगमे तस्य म इत्यनयोर्वैयधिकरण्यं भिन्नविषयत्वमतस्तस्य विष्ण्वन्यत्वमिति शङ्का भवत्यतः स्पष्टमाविष्टस्य विष्णुत्वं न ज्ञायत इत्यर्थः । एवं तेजोबाहुल्यलिङ्गेन 'स एतेन रूपेण' इत्युक्त्या दक्षिणामित्रत्वलिङ्गेन च विष्णुत्वावगतेरेष तपन्नेवास्मीत्यस्या-स्मत्पक्षेऽपि वैयर्थ्यमित्याशङ्क्य समाहितमुपसंहरति–**अत इति** ।। यत एवं विष्णु-प्रापकाणां सावकाशत्वमत इन्द्रशरीरमेव पश्यतस्तर्कमात्रतो भगवानिति किञ्चिज्जानतः प्रमाणान्तरसंवादमपेक्ष्य जानतः स एतेनेत्यादिनाऽपि विष्णुत्वं किञ्चिज्जानतः स्वरूपज्ञानेऽपि विष्णुविशेषगुणाज्ञानात् किञ्चिज्जानतो वा विश्वामित्रस्य पृथक्पृथक् भगवन्नामान्युक्त्वाऽहं विष्णुरित्येष तपन्नेवास्मीत्युवाचेति ज्ञायत इति योजना ।

**भाष्यम्-**

**(न शचीपतिः सर्वशब्दवाच्यः)**

**न चेन्द्रस्य [1]प्राणशब्दः सर्वशब्दाभिधेयत्वं च विद्यते । अजस्य नाभावध्येक-मर्पितमित्युक्तस्य पद्मनाभस्य हि 'यो देवानां नामधा एक एव' इति सर्वदेवाभिधानत्वमुक्तम् । इन्द्रे हीन्द्रशब्दोऽपि न मुख्यतो वर्तते । परमैश्वर्या-भावात् । इन्द्रशब्दोऽपि विष्णावेव वर्तते । स हि परमेश्वरः । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्यमाहुः । इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्' इत्यादिश्रुतेश्च । 'सप्तार्द्धगर्भा भुवनस्य रेतो विष्णोऽस्तिष्ठन्ति प्रदिशा विधर्मणि' इत्यादिना विष्णुरेव हि तत्र प्रस्तुतः ।**

---

१. प्राणशब्दाभिधेयत्वम्- ह.पा.

**टिप्पणी -**

ननु यदुक्तमुपनिषण्णमिन्द्रं दृष्ट्वेत्यत्रेन्द्रस्यैव त्वामेव ज्ञानार्थं प्रर्थितत्वे इन्द्रादेव वरस्वीकारप्रसङ्ग इति नेदमनिष्टम् । 'प्राणो वा अहम्' इत्यादिनेन्द्रेणैव विश्वामित्रायाऽत्मोपदेशाङ्गीकारादित्यत आह– **नचेति** ।। विष्णोरपि तत्तुल्यमित्यतस्तस्य सर्वशब्दवाच्यत्वस्य प्रमितत्वादित्याह– **अजस्येति** ।। कैमुत्यन्यायेनापीन्द्रस्य सर्वशब्दवाच्यत्वं प्रतिषेधति–**इन्द्रे हीति** ।। तर्हीन्द्रशब्दस्य मुख्योऽर्थः क इत्यत आह– **इन्द्रशब्दोऽपीति** ।। न केवलं योगः रूढिरप्यस्तीत्याह– **यमिति** ।। 'इन्द्रं मित्रं वरुणम्' इत्यत्र यो दिव्यः सुपर्णो गरुत्मान् तम् इन्द्रं मित्रम् इत्याद्याहुरित्यर्थप्रतीतेर्विष्णुपरत्वमस्याः श्रुतेः कुत इत्यत आह–**सप्तेति** ।। सप्त अर्धगर्भा इति पदविभागः । अर्धमासमन्ताद् ऋद्धं ब्रह्माण्डम् । तदेव गर्भे येषां ते तदावरणभूताः । सप्त महदहङ्कारपञ्चभूताभिमानिनो देवाः भुवनस्य रेतो रतिप्रदस्य कारणभूतस्य वा विष्णोः प्रदिशा आज्ञया धारणादिविविधधर्मणि धर्मेषु तिष्ठन्तीत्यर्थः ।

**भाष्यम्-**

**(नारायणादिनामानि नान्यस्य)**

**'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम् ।**
**नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ।।'**

**(सू.भा.उ. भाल्लवेयश्रुतिः, १.१.१)**

**इति च श्रुतिः । 'यो देवानां नामधा एक एव' इत्यवधारणान्नान्यस्य सर्वनामत्वम् । स च विष्णोर्नान्यः । पद्मनाभत्वादेव । श्रियो वायोरपि न नारायणादिनामवत्त्वम् ।**

**टिप्पणी -**

ननु सुपर्णादिशब्दश्रवणाद् विष्णुरेव तत्र प्रस्तुत इति कथमित्यत आह– **नामानीति** ।। तथाच यं विष्णुमिन्द्रं मित्रं वरुणमग्निमाहुः स एव सुपर्णादिशब्दवाच्यश्चेति

तदर्थ इति भावः । ननु नामानि विश्वेत्यस्य लोके विश्वानि नामानि न सन्ति । विद्यमानान्यपि अभि मुख्यतो न सन्ति, कुतः? यद् यस्मादनृतस्य ऋतं ब्रह्म पूर्वावगतवत् सदा स्थितेस्तद्विरुद्धमनृतं तस्य जगतः सर्वं प्रवृत्तिनिमित्तं यद् यस्मादुत्पन्नमिति नार्थः । किन्तु परमार्थपर्यालोचनायां यद् यस्मात् सर्वमनृतस्यानृतमाविरासीत् तस्माल्लोके नामान्येव न सन्तीत्यर्थः । अतो विष्णोरेव सर्वनामत्वेन तदुदाहरणं युक्तम् । 'नामानि सर्वाणि यमाविशन्ति' इत्यत्रापि यं परमं सर्वाणि नामानि आविशन्ति तं विष्णुशब्दवाच्यमप्युदाहरन्तीत्येकस्यैव सर्वनामवत्त्वं विष्णुशब्दवाच्यत्वं चोच्यते नतु सर्वनामवाच्यानुवादेन विष्णुत्वं विधीयते । तथाच 'इन्द्रं मित्रं वरुणमग्निमाहुः' इत्यत्र सुपर्ण एव सर्वशब्दवाच्योऽस्तु । नच तत्र विष्णुप्रस्तुतिविरोधः उक्तरीत्या 'नामानि' इति श्रुतौ सर्वशब्दवाच्यस्यैव विष्णुनामवत्त्वस्याप्युक्तेरित्यतो निरवकाशं प्रमाणमाह – **यो देवानामिति** ।। 'नामानि सर्वाणि' इत्यत्र सर्वनामवाच्यानुवादेन विष्णुत्वविधिरित्यस्माभिरुक्तम् । भवतु वा त्वदुक्तरीत्या तत्र सर्वनामवाच्यस्यैव विष्णुशब्दवाच्यत्वमप्यच्युत इति । तथाऽपि 'यो देवानां नामधा एक एव' इत्यवधारणादेकस्यैव विष्ण्वादिसर्वनामवत्त्वं नान्यस्य । स चैको विष्णोरन्यो न भवति पद्मनाभत्वलिङ्गादित्यर्थः । लिङ्गं चासाधरणमित्येवशब्दः । **'शब्दादेव प्रमितः'** इतिवत् । एतेन 'अजस्य नाभौ' इत्युक्तस्य पद्मनाभस्य 'यो देवानां नामधा एक एव' इति सर्वदेवाभिधानमुक्तमित्यादिनैतत् पुनरुक्तमिति निरस्तम् । ननु श्रियो वायोश्च सर्वनामत्वप्रसिद्धेः कथमेक एवेत्यवधारणमित्यत आह– **श्रिय इति** ।। तथाच तयोरपि पूर्वप्रसिद्धवर्जं सर्वनामविषयत्वेन प्रसिद्धिरुपपन्नेति भावः ।

**भाष्यम्-**

**'एको वासुदेवस्तत्सदृशपरौ न स्तः' इति हि श्रुतिः । 'एको नारायण आसीत् तमसो वा अधिको वा नास्ति' इति च । येनावृतं खं च दिवं मही च येनादित्यस्तपति**

**तेजसा भ्राजसा च। 'यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा' (तै.आ. १०.१.१) इत्युक्तस्य समुद्रशायिन एव नारायणस्य 'तदेवर्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव। अतस्तदत्रोच्यत इत्यपि न वक्तव्यम्।**

**टिप्पणी -**

किञ्च यदि विष्ण्वादिनामधारकत्वं विष्ण्वन्यस्योच्यते तर्हि स विष्णुसमो वा स्यादधिको वा स्यान्न चैतत् सम्भवतीत्याह– **एको वासुदेव इत्यादिना तदत्रोच्यत इत्यन्तेन** ।। 'यो देवानाम्' इत्यत्र विष्ण्ववरस्य विष्ण्वादि-सर्वदेवनामधारकत्वेनानुक्तावपि तद्विष्णुसममधिकं वाऽत्र सर्वदेवनामवत्त्वेनोच्यत इत्यपि न वक्तव्यम्। कुतः? हि यस्मात् 'एको वासुदेवः' 'एको नारायणः' इति च श्रुतिरस्त्यतो विष्णोः परं तत्सदृशं वा नास्त्यतस्तदत्रोच्यत इति न वक्तव्यमिति। ननु देवेषु वासुदेवनारायणशब्दितसगुणसमो नास्तीत्युच्यते परं ब्रह्म त्वदन्यदस्ति तदेव 'यो देवानाम्' इत्यत्र लक्षणया सर्वनामप्रतिपाद्यमुच्यत इत्यत उक्तम्– **येनाऽवृतमिति** ।। येन नारायणेनावृतं खमावृतां दिवं महीं च येन तत्प्रेरणयाऽऽदित्यस्तेजसा तपति। भ्राजसा दीप्त्या। चशब्दात् प्रकाश-यति। यदक्षरे यस्मिन्नक्षरे नारायणस्य परब्रह्मत्वावधारणाच्च विष्णोः परमुत्तमं नास्त्यतस्तद्विष्णोः परं निर्गुणं परं ब्रह्मात्र 'यो देवानाम्' इत्यत्रोच्यते इत्यपि न वक्तव्यमित्यर्थः।

**भाष्यम्-**

**(विष्णुः सर्वेश्वरः)**

**'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति।**
**न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमाप।।' (ऋ. ७.९९.१)**

इत्यादेश्च।

तदर्थ इति भावः । ननु नामानि विश्वेत्यस्य लोके विश्वानि नामानि न सन्ति । विद्यमानान्यपि अभि मुख्यतो न सन्ति, कुतः? यद् यस्मादनृतस्य ऋतं ब्रह्म पूर्वावगतवत् सदा स्थितेस्तद्विरुद्धमनृतं तस्य जगतः सर्वं प्रवृत्तिनिमित्तं यद् यस्मादुत्पन्नमिति नार्थः । किन्तु परमार्थपर्यालोचनायां यद् यस्मात् सर्वमनृतस्यानृतमाविरासीत् तस्माल्लोके नामान्येव न सन्तीत्यर्थः । अतो विष्णोरेव सर्वनामत्वेन तदुदाहरणं युक्तम् । 'नामानि सर्वाणि यमाविशन्ति' इत्यत्रापि यं परमं सर्वाणि नामानि आविशन्ति तं विष्णुशब्दवाच्यमप्युदाहरन्तीत्येकस्यैव सर्वनामवत्त्वं विष्णुशब्दवाच्यत्वं चोच्यते नतु सर्वनामवाच्यानुवादेन विष्णुत्वं विधीयते । तथाच 'इन्द्रं मित्रं वरुणमग्निमाहुः' इत्यत्र सुपर्ण एव सर्वशब्दवाच्योऽस्तु । नच तत्र विष्णुप्रस्तुतिविरोधः उक्तरीत्या 'नामानि' इति श्रुतौ सर्वशब्दवाच्यस्यैव विष्णुनामवत्त्वस्याप्युक्तेरित्यतो निरवकाशं प्रमाणमाह – **यो देवानामिति** ।। 'नामानि सर्वाणि' इत्यत्र सर्वनामवाच्यानुवादेन विष्णुत्वविधिरित्यस्माभिरुक्तम् । भवतु वा त्वदुक्तरीत्या तत्र सर्वनामवाच्यस्यैव विष्णुशब्दवाच्यत्वमप्यच्युत इति । तथाऽपि 'यो देवानां नामधा एक एव' इत्यवधारणादेकस्यैव विष्ण्वादिसर्वनामवत्त्वं नान्यस्य । स चैको विष्णोरन्यो न भवति पद्मनाभत्वलिङ्गादित्यर्थः । लिङ्गं चासाधरणमित्येवशब्दः । **'शब्दादेव प्रमितः'** इतिवत् । एतेन 'अजस्य नाभौ' इत्युक्तस्य पद्मनाभस्य 'यो देवानां नामधा एक एव' इति सर्वदेवाभिधानमुक्तमित्यादिनैतत् पुनरुक्तमिति निरस्तम् । ननु श्रियो वायोश्च सर्वनामत्वप्रसिद्धेः कथमेक एवेत्यवधारणमित्यत आह– **श्रिय इति** ।। तथाच तयोरपि पूर्वप्रसिद्धवर्जं सर्वनामविषयत्वेन प्रसिद्धिरुपपन्नेति भावः ।

**भाष्यम्-**

**'एको वासुदेवस्तत्सदृशपरौ न स्तः'** इति हि श्रुतिः । **'एको नारायण आसीत् तमसो वा अधिको वा नास्ति'** इति च । **येनावृतं खं च दिवं मही च येनादित्यस्तपति**

**तेजसा भ्राजसा च। 'यमन्तःसमुद्रे कवयो वयन्ति यदक्षरे परमे प्रजा' (तै.आ. १०.१.१) इत्युक्तस्य समुद्रशायिन एव नारायणस्य 'तदेवर्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति परब्रह्मत्वावधारणाच्च विष्णोः परं सदृशं वा नास्त्येव। अतस्तदत्रोच्यत इत्यपि न वक्तव्यम्।**

**टिप्पणी -**

किञ्च यदि विष्ण्वादिनामधारकत्वं विष्ण्वन्यस्योच्यते तर्हि स विष्णुसमो वा स्यादधिको वा स्यान्न चैतत् सम्भवतीत्याह– **एको वासुदेव इत्यादिना तदत्रोच्यत इत्यन्तेन** ॥ 'यो देवानाम्' इत्यत्र विष्ण्ववरस्य विष्ण्वादि-सर्वदेवनामधारकत्वेनानुक्तावपि तद्विष्णुसममधिकं वाऽत्र सर्वदेवनामवत्त्वेनोच्यत इत्यपि न वक्तव्यम्। कुतः? हि यस्मात् 'एको वासुदेवः' 'एको नारायणः' इति च श्रुतिरस्त्यतो विष्णोः परं तत्सदृशं वा नास्त्यतस्तदत्रोच्यत इति न वक्तव्यमिति। ननु देवेषु वासुदेवनारायणशब्दितसगुणसमो नास्तीत्युच्यते परं ब्रह्म त्वदन्यदस्ति तदेव 'यो देवानाम्' इत्यत्र लक्षणया सर्वनामप्रतिपाद्यमुच्यत इत्यत उक्तम्– **येनाऽवृतमिति** ॥ येन नारायणेनावृतं खमावृतां दिवं महीं च येन तत्प्रेरणयाऽऽदित्यस्तेजसा तपति। भ्राजसा दीप्त्या। चशब्दात् प्रकाश-यति। यदक्षरे यस्मिन्नक्षरे नारायणस्य परब्रह्मत्वावधारणाच्च विष्णोः परमुत्तमं नास्त्यतस्तद्विष्णोः परं निर्गुणं परं ब्रह्मात्र 'यो देवानाम्' इत्यत्रोच्यते इत्यपि न वक्तव्यमित्यर्थः।

**भाष्यम्-**

**(विष्णुः सर्वेश्वरः)**

'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति।
न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमाप॥' (ऋ. ७.९९.१)

इत्यादेश्च।

'न किरिन्द्रत्वदुत्तरो न ज्यायानस्ति वृत्रहन्।
नकिरेवा यथा त्वम्'

इत्याद्यपि सर्वनामकत्वात् तस्यैव। 'किमेकं दैवतं लोके किं वाप्येकं परायणम्' इत्यादिप्रश्नस्यापि

'परमं यो महत्तेजः परमं यो महत्तपः।
परमं यो महद् ब्रह्म परमं यः परायणम्।
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्।
दैवतं देवतानां च भूतानां योऽव्ययः पिता।
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये।
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नामसहस्रं[१] ..............।।'

(म.भा.अनुशासनपर्वणि अ. १४९)

इत्येव भारते परिहाराच्च।

**टिप्पणी -**

ननु यदि विष्णोर्देवान्तर्गतत्वं स्यात्तदा 'यो देवानाम्' इत्यस्य विष्ण्वादि-देवानामित्यर्थः स्यात्तदेव कुत इत्याशङ्कां परिहरन् समादिराहित्ये श्रुत्यन्तरमाह– **परो मात्रयेति** ।। अत्र देवेति सम्बोधनाद् देवत्वमुक्तम्। ननु 'नकिरिन्द्र' इत्यत्र समाभ्यधि-कराहित्योक्तावपि तदधिको विष्णुर्यथा स्वीक्रियते तथा वासुदेवादुत्तमोऽपि किन्न स्यादित्यत आह– **नकिरिति** ।। अत्र नकिरित्युक्तार्थाधिक्य-विवक्षया। 'नकिर्माकिः स्म सीत्यादिप्रोक्ताधिक्यविवक्षयात्यन्यत्रोक्तत्वात्। विष्णोर्देवान्तर्गतत्वं सर्वोत्तमत्वं तस्यैव परममहद्ब्रह्मत्वमित्यत्र भारतसम्मतिमाह– **किमेकमिति** ।।

**भाष्यम्-**

**(मित्रं मे दक्षिणा रमा)**

**मेऽन्नं दक्षिणमित्युक्तत्वाच्च विष्णुरेवेति ज्ञायते। स हि विष्णुर्दक्षिणामित्र उक्तो हरिवंशेषु धन्याश्चर्याध्याये।**

**'दक्षिणाभिः सहैवैतन्मदधस्ताज्जगत्सदा।**
**धन्याश्चर्योऽहमेवैको मित्रं मे दक्षिणा रमा।।**
**इत्यवादीद्धरिर्भूपा धन्योऽसीत्युदितो मया।' इति नारदवचनम्।**

**न च बृहतीसहस्राभिमानिनीं देवीं विना चेतनमात्रस्य मुख्यमित्रत्वं युज्यते।**

**'मिनोति त्रायते चेति मित्रमित्यभिधीयते।**
**तस्माद्योऽयं विजानाति स मित्रं तस्य नान्यथा।।' इति भारते।**

**टिप्पणी -**

इतोऽपि 'प्राणो वा अहम्' इत्युपदेशस्य भगवद्विषयतवमित्याह– **मेऽन्नमिति** ।। उपदिष्टं वस्तु विष्णुरिति ज्ञायते । दत्रिणामित्रत्वं विष्णुलिङ्गं कुत इत्यत आह– **स हीति** ।। धन्यः सर्वोत्तम आश्चर्यो सद्दशः । ननु 'मेऽन्नं मित्रं दक्षिणाम्' इत्यत्र दक्षिणं समीचीनमन्नं बृहतीसहस्रं मे मित्रमित्युच्यते । नतु तदभिमानिनी लक्ष्मीर्मित्रमित्यत आह– **नचेति** ।। अचेतनमात्रस्याभिमानिनं विहाय केवलमचेतनस्य बृहतीसहस्रस्य । कुतो नाचेतनस्य मित्रत्वमित्यतो मित्रशब्दं निर्वक्ति– **मिनोतीति** ।। विजानातीत्युपलक्षणम् । त्रायते चेत्यपि ग्राह्यम् । प्रकृते देव्या भगवत्त्राणकर्तृत्वं नाम बृहतीसहस्रप्रतिपाद्यरूपगुणादीनामयोग्य-जनचित्ताविषयीकरणेन गोपकत्वं विवक्षितम् । नन्वस्त्वन्नपदेन तदभिमानि-चेतनपरिग्रहः । रमेति कुत इत्यत उक्तं देवीं विना चेतनमात्रस्य ब्रह्मादेरपि मुख्यमित्रत्वं न युज्यत इति ।

**भाष्यम्-**

**(विष्णुरेव बृहतीसहस्रप्रतिपाद्यः)**

**उक्थायुत्वाच्च विष्णुरेवात्रोक्त इत्यवगम्यते । बृहतीसहस्रं ह्युक्थनामकं मुख्यतः ।**

**'महाव्रतनियुक्तं यदृक्सहस्रं हरेः प्रियम् ।**
**तदुक्थमिति सम्प्रोक्तं तेने यो विष्णुरेव हि ।**
**तस्मादुक्थायुरित्युक्त ऐश्वर्यादिन्द्र उच्यते ।**
**तस्मादुक्थायुरिन्द्रेति विष्णुर्यज्ञेषु चोच्यते ।।' इति गारुडे ।**

**विष्णुर्ह्युक्थायुरिन्द्र इत्यच्यते । यज्ञेष्वन्य इन्द्रः पृथक्चोच्यते । 'यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमुसत्यमाहुः' इत्युक्त्वा 'तस्मै त्वा तेभ्यस्त्वा' इति भेद-वचनाच्च ।**

**टिप्पणी -**

बृहतीसहस्रं शशंस । तेनेन्द्रस्य प्रियं धामोपेयायेत्यत्रेन्द्रस्योक्थायुत्व-मुच्यते । ततश्च नात्रेन्द्रः प्रसिद्धः किन्तु विष्णुरेवेत्याह– **उक्थेति** ।। किमिदमुक्थायु-त्वमित्यत उक्थपदार्थमाह– **बृहतीति** ।। नन्वाश्विनसहस्रमप्युक्थनामकमित्यत उक्तम्– **मुख्यत इति** ।। बृहतीसहस्रमपि महाव्रतनियुक्तमेवोक्थनामकम् । नतु सर्वपृष्टाप्तोर्यामविश्वजिदतिरात्रादिनियुक्तमिति भावेनोक्थायुपदार्थमाह–**महाव्रतेति** ।। ईयो ज्ञेयः प्राप्यश्च । उक्थायुत्वविशेषितेन्द्रस्य विष्णुत्वमागमेनोक्त्वा युक्त्या चोपपादयति– **विष्णुरिति** ।। हि यस्मात् यज्ञेष्वन्य इन्द्रः एकप्रकरण एव पृथगुच्यते तस्मादुक्थायुरिन्द्र इति विष्णुरुच्यते इत्यर्थः । ननु विष्णोः प्राणादि-शब्दवाच्यत्वे प्राग् 'यमिन्द्रम्' इति श्रुत्युदाहरणमसङ्गतम् । तत्र यं विष्णुमिन्द्र-स्वरूपमाहुरित्यादिनेन्द्रादिभिरभेदस्यैवोक्तेरित्यत आह– **यमिन्द्रमाहुरित्यादिना** ।। 'यमु सत्यमाहुः' इत्युक्त्वा 'यो देवानां देवतमस्तस्मै त्वा तेभ्यस्त्वा' इत्युत्तरवाक्ये

'तस्मै देवतमाय तेभ्यो देवेभ्यः' इति भेदस्यापि वचनात् पूर्ववाक्यं नाभेदविधिपरं व्याघातादतः शब्दवाच्यत्वपरमेवेति ज्ञायत इति भावः ।

**भाष्यम्-**

सत्य इति वायुः । 'सदिति प्राणः' इति श्रुतेः ।

'सदेव सत्यमित्युक्तं सत्यो वायुरुदाहृतः ।
साधुत्वं सत्यता प्रोक्ता साधुर्वायुर्हि सर्वतः ॥' इति शब्दनिर्णये ।

**(बृहतीसहस्रपठनफलम्)**

प्रियधाम्न उपसमीपे गमनं नाम तद्धामप्राप्तिकारणभगवत्प्रसादप्राप्तिः । अन्यथोपशब्दो व्यर्थः स्यात् । न च तदैव भगवतः प्रियं धाम विश्वामित्रेण प्राप्तम् ।

'बृहतीसहस्रे प्रथमे सालोक्यं प्रददौ हरिः ।
द्वितीये स्वपुरप्राप्तिं तृतीयेऽन्तःपुरस्य च ।
तथा स्वविषयं ज्ञानं विश्वामित्रे ददौ प्रभुः ॥' इति च गारुडे ।

**टिप्पणी -**

ननु 'यमु सत्यमाहुः' इति वाक्यं न नामविधिपरम्, सत्यनामकस्य कस्याप्यभावात् । किन्तु ब्रह्मैव सत्यमाहुरिन्द्राद्यौपाधिकानामसत्यत्वेन तच्चैतन्यमात्रमेनमाहुरित्यर्थोऽङ्गीकार्य एवेत्यत आह– **सत्य इतीति** ॥ सच्छब्दस्य प्राणनामत्वे किं सत्यशब्दस्येत्यत आह– **स देवेति** ॥ सत्यता सत्यशब्दप्रवृत्तिनिमित्तम् । सर्वतः सर्वदा । 'अनादिकालतः सर्वदोषहीना गुणाधिकाः । ऋजवः' इति वचनात् । तेनन्द्रस्य प्रियं धामोपेयाय' इत्येतत् 'तच्छ्रुत्वा तुष्टिमगमत्' इति व्याख्यातम् । तत्कथं शब्दलब्धमित्यत आह– **प्रियधाम्न इति** ॥ धामप्राप्तिरेवार्थः किन्न स्यादित्यत आह– **अन्यथेति** ॥ 'प्रियं धामेयाय' इत्येतावता पूर्तेरिति भावः । नचोपसर्गस्य धात्वर्थव्यञ्जकत्वान्न वैयर्थ्यमिति वाच्यम् । प्रययावित्यादिवत् तदर्थातिशायिकत्वाभावात् । नचोपयानं नाम सम्यग्

यानमिति वाच्यमपदार्थत्वात् । नच धात्वर्थ एवोपसर्गार्थ इति वाच्यम्, वैयर्थ्यानिस्तारात् । वक्ष्यति च- 'न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम् । नह्यार्षेषु वेदेषु व्याकरणादिषु चोपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित्' इति । अर्थानुपपत्तिं चाऽऽह–**नचेति** ॥ शंसनत्रयस्य फलभेदं प्रमाणेनाऽऽह–**बृहतीति** ॥ सालोक्यं तत्कारणप्रसादम् । एवमन्यत्र ।

**भाष्यम्-**

**(इन्द्रे विशेषावेशस्तात्कालिकः)**

**न चेन्द्रादिभिरैक्यमत्रोच्यते। 'प्राणस्तथानुगमात्' (ब्र.सू. १.१.२८) इति च विष्णोरेव प्राणशब्दाभिधेयत्वमुक्त्वा 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्' (ब्र.सू. १.१.२९) इति वक्तुर्बृहतीसहस्रं शंसितुर्विश्वामित्रस्येन्द्रेण स्वात्मोपदेशः क्रियत इति पक्षो निराकृतो हि भगवता सूत्रेषु। अध्यात्मसम्बन्धशब्देनावेशो विष्णोरिन्द्रे विवक्षितो भगवता। अन्येष्वन्तर्यामिरूपेण सम्बन्धोऽस्त्येव। अस्मिन्निन्द्रे तु विशेषावेशस्तात्कालिकः। अधिकात्मनः परमात्मनः सम्बन्धोऽध्यात्मसम्बन्धः। न हि स्वात्मना स्वस्य सम्बन्धो भवति। यद्यध्यात्ममात्रमत्रोच्यत इति विवक्षितं तर्ह्यध्यात्मभूमेत्येव स्यात् सम्बन्धशब्दो व्यर्थः। तस्मादिन्द्रादिजीवेभ्यो विष्णोर्भेद एवात्र भगवतो विवक्षितः।**

**टिप्पणी -**

अपव्याख्यां प्रत्याख्याति– **नचेति** ॥ कस्यचित् प्राणस्येन्द्रदिभिरैक्यमत्र 'प्राणो वा अहमस्मि' इत्यादावुच्यत इति न मन्तव्यमित्यर्थः । कुतो न मन्तव्यमित्यतः प्राणस्य विष्णवन्यत्वस्येन्द्रादिभिरभेदस्य च सूत्रकृता निराकृतत्वादित्याह– **प्राण इत्यादिना** ॥ इन्द्रेणेत्यतः परं प्राणतयेति शेषः । कथं निराकृत इत्यतः 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' इति सूत्रखण्डार्थमाह– **अध्यात्मेति** ॥ सम्बन्धशब्दार्थः– **आवेश इति** ॥ अध्यात्मशब्दार्थः– **विष्णोरिति** ॥ अस्मिन्नित्यस्यार्थः– **इन्द्र इति** ॥ ननु सर्वेष्वन्तर्यामित्वेन भगवत्सम्बन्धोऽ-

स्त्येव तत्किं विशिष्टस्योच्यते इन्द्रे सम्बन्ध इतीत्याशङ्कापरिहाराय सम्बन्धभूमेति प्रवृत्तं भूमपदं व्याचष्टे– **अन्येष्विति** ।। अन्येष्वन्तर्यामित्वेनैव सम्बद्धोऽस्मिन्निन्द्रे तु विशेषावेश इत्यर्थः । ननु महाभारततात्पर्यनिणये– 'श्रीब्रह्मरुद्रशेषाश्च वीन्द्रेन्द्रौ काम एव च । कामपुत्रोऽनिरुद्धश्च सूर्यश्चन्द्रो बृहस्पतिः ।।' इत्याद्युक्त्वा '....इत्याद्या विशेषावेशिनो हरेः' इतीन्द्रादन्येषामपि विशेषावेशोक्तेः किं विशिष्योच्यते इन्द्रे तु विशेषावेश इतीत्यत आह– **तात्कालिक इति** ।। महाव्रत-यज्ञकाले प्राप्तो विशेषावेश इत्यर्थः । अध्यात्मसम्बन्धशब्देन विष्णोरावेशः कथमुक्त इत्यत आह–**अधिकात्मन इति** ।। ननु नैवं सूत्रार्थः किन्तु न प्राणः परमात्मा, वक्तुः विश्वामित्रस्येन्द्रेण प्राणतयात्मोपदेशादिति चेन्नास्मिन्निन्द्रेऽध्यात्मसम्बन्ध-भूमा परमात्मैक्यं विद्यते तथाचेन्द्रस्य प्राणशब्दवाच्यत्वे परमात्मनस्तदविरुद्धमित्यर्थ इत्यत आह– **नहीति** ।। नैक्यविवक्षया सिद्धान्तांशप्रवृत्तिः । तथात्वे सम्बन्धशब्द-व्याकोपादिति भावः । शङ्कते– **यदीति** ।। 'अध्यात्मसम्बन्धभूमा' इत्यत्राध्यात्म-मात्रमध्यात्म-भूयस्त्वमात्रं परमात्मभूयस्त्वं तदैक्यमेव विवक्षितम् । सम्बन्धशब्दस्तु ऐक्यमपि तादात्म्यलक्षणः स्वरूपसम्बन्ध इति वस्तुस्थितिकथनायेति यद्युच्यत इत्यर्थः । परिहरति– **तर्हीति** ।। तस्य सम्बन्धत्ववचनस्य निष्प्रयोजनत्वादिति भावः । उपसंहरति– **तस्मादिति** ।। ऐक्यपरत्वे सम्बन्धशब्दव्याकोपाद् वैयर्थ्याद्वा इन्द्रादिजीवेभ्यो भेद एवात्र सूत्रे भगवतो विवक्षित इत्यर्थः । यद्वा, तदेवं सूत्रार्थस्य व्यवस्थितत्वादत्र श्रुताविन्द्रादिजीवेभ्यो भेद एवात्र सूत्रे भगवतो विवक्षित इति ज्ञायतेऽतो 'नचेन्द्रादिभिरैक्यमत्रोच्यते' इत्युपपन्नमिति भावः ।

**भाष्यम्-**

### (अन्तर्यामिदृष्ट्याऽभेदव्यवहारः)

**'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र.सू. १.१.३०) इति शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरस्थितत्वात् सर्वनामाभिधेयत्वं चोक्तम् । 'अहं मनुरभवं सूर्यश्च' इत्यादिवत् । नहि मनुसूर्यादिर्भवति वामदेवस्तेषां पक्षेऽपि । सर्वप्रवृत्तिहीनतां हि ते मोक्षं वदन्ति । अत्र चाहं भूमिमददामार्यायेत्यादिना प्रवृत्तिरेवोच्यते ।**

**टिप्पणी -**

नन्वत्र यदि प्राणपदेनेन्द्रेणापि विष्णुरेव स्वात्मादिसर्वगततयोच्यते नतु स्वात्माभेदेनेति विवक्षितम्, तर्हि मयि प्राण इत्यादिप्रयोगः स्यान्न त्वहं प्राण इति। विष्णावहमित्यादिरूपोपदेशायोगादित्याशङ्क्य सेयमाशङ्का सूत्र एव परिहृतेति भावेनानूद्य व्याचष्टे– **शास्त्रेति** ॥ शास्तीति शास्त्रमिति व्युत्पत्त्या शास्त्रस्य शास्तुरन्तर्यामिणो विष्णोः सर्वशरीरेष्विन्द्रविश्वामित्रादिसर्वशरीरेषु स्थितत्वात् तद्दृष्ट्या तद्विवक्षयोपदेशः 'अहं त्वं सर्वाणि भूतानि' इत्यहमादिसर्वनामोपदेशो युज्यत इति सर्वनामाभिधेयत्वं चोक्तमित्यर्थः। सूत्रभाष्ये शास्त्रशब्दस्य 'संविच्छास्त्रं परं पदम्' इति अन्तर्यामिणि प्रयोगदर्शनेन रूढिरुक्ता। अत्र तु योग इति विवेकः। अन्तर्यामिण्य-प्यहमादिपदप्रयोगादर्शनात् तदयोग इत्यतः सूत्रोक्तदृष्टान्तं विवृणोति– **अहमिति** ॥ यथाऽन्तर्यामिविवक्षया वामदेवोऽहं मन्वादिशब्दान् प्रयुक्तवां-स्तथाऽयमुपदेशो युक्त इति भावः। वामदेववचनमप्यभेदविवक्षया किन्न स्यादिति चेदत्र वक्तव्यम्। किं वामदेवेन विशिष्टेन मन्वादिभिर्विशिष्टैरैक्यमुच्यते उतोपाध्यविवक्षया भागत्यागलक्षणयोपाधिविनिर्मुक्तशुद्धचैतन्यैक्यमुच्यते। आद्यं दूषयति– **नहीति** ॥ तेषामभेदवादिनां पक्षेऽपि वामदेवो विशिष्टो मनुसूर्यादिर्न भवति नाङ्गीक्रियत इत्यर्थः। द्वितीयं दूषयति– **सर्वेति** ॥ उपाधिविनिर्मुक्तशुद्ध-चैतन्यविवक्षया 'अहं मनुः' इत्याद्युपदेश इति च न सम्भवति। कुतः ? हि यस्मात् ते सर्वप्रवृत्तिहीनतां सर्वप्रवृत्तिराहित्यं मोक्षं वदन्ति। अविवक्षितोपाधिक-शुद्धचैतन्यावस्थैव मोक्षावस्थेति चैतन्यैक्यविवक्षयाऽस्य ग्रन्थस्य प्रवृत्तत्वे भूमिदानादिप्रवृत्त्युक्तिर्न स्यात्। अत्र चाहं भूमिमददामार्यायेत्यादिना प्रवृत्तिरेवोच्यते नतु निवृत्तिरतो न चैतन्यैक्यविवक्षयाऽयमुपदेश इति भावः।

**भाष्यम्-**

**न च वामदेवेन मन्वादिकर्म क्रियते कदापि। अतीतार्थश्चायं दृश्यते भूमि-मददामित्यादिना। नहि पूर्वं वामदेवेन तानि कर्माणि कृतानि। भगवान् विष्णुर्हीन्द्राय**

**भूमिमददात्। स एव च सर्वेष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तानि सर्वकर्माणि कुर्वन्नव बोधसूरिर्नियमनादिभिर्मनुसूर्यादिसर्वनामा भवति। यदि भेदस्य पूर्वमपि मिथ्यातवमङ्गीक्रियते तर्हि भूमिदानादिसर्वकर्मणां मन्वादित्वस्यापि मिथ्यात्वादहं मनुरभवमित्यादिकं सर्वमनर्थकमेव भवति।**

**टिप्पणी -**

ननु मा भूदैक्यविवक्षयाऽयमुपदेशो न तावताऽन्तर्यामिविवक्षा सिद्ध्यति। मन्वादिकर्मणो वामदेवेन करणादहं मनुरित्यादिव्यपदेशोपपत्तेः। लोके समर्थेनामात्येन राजकर्मकरणेन राजाऽह-मिति व्यपदेशदर्शनादित्यत आह– **नचेति**॥ न केवलमैक्यं न युज्यते किन्तु वामदेवेन मन्वादि कर्म क्रियते तद्विवक्षायाऽयं व्यपदेश इत्यपि न युक्तम्। कुतः ? कदाऽपि कालत्रयेऽपि वामदेवेन मन्वादिकर्म-करणाभावादित्यर्थः। आदिपदेन सूर्यादिग्रहणम्। स्मृतिप्रणयनेनावबोधकत्वं मनुकर्म सूरिनियामकत्वं सूर्यकर्म सूरयो हि सूर्योदयेऽध्यात्ममधिदैवं च तन्नियमितविहितमनु-तिष्ठन्ति। आर्यायेन्द्राय भूमिदानं चोपेन्द्रकर्म। एवंमन्यदपि द्रष्टव्यम्। तत्रोत्तरकाले वर्तमानकाले च तदभावे ज्ञापकमाह– **अतीतार्थश्चेति**॥ अयमभवमिति व्यपदेशः अहं भूमिमददामित्यादिना व्यपदेशाश्चातीतार्था दृश्यन्तेऽतो नोत्तरवर्तमानकालयोरेतत् कर्म क्रियत इत्यर्थः। अतीतकाले तदभावमुपपादयति– **नहि पूर्वमिति**॥ कुतो न कृतानीत्यत आह– **भगवान् हीति**॥ यद्वा, ननु परमात्मनाऽपि भूमिदानस्मृतिप्रणयनेनावबोधकत्वसूरिनियामकत्वादीनि कदाऽपि न कृतानीति तुल्यम्। तदपेक्षयाऽऽर्यस्यैवाभावात्। स्मृतिप्रणयनादेर्मन्वादिनिष्ठत्वेन प्रसिद्धत्वाच्चेत्यत आह– **भगवानिति**॥ वामनरूपी भगवान् विष्णुर्ह्यार्यायावतारविवक्षयाऽग्रजायेन्द्राय त्रिपदयाश्चाच्छलेन बलेरपहृत्य भूमिमददात् स एवोपेन्द्र एव तत्तन्मन्वन्तेरषु मन्वादिष्वन्तर्यामित्वेन स्थित्वा नामप्रवृत्तिनिमित्तैर्मनुसूर्यादिसर्वनामा भवत्यतोऽहं मनुरभवमित्याद्युपपन्नमित्यर्थः। तथाच भागवतेऽष्टमस्कन्धे त्रयोदशाध्याये– 'मनवो मनुपुत्राश्च मुनयश्च महीपते। इन्द्राः सुरगणाश्चैव सर्वे पुरुषशासनाः॥ यज्ञादयो

याः कथिताः पौरुष्यस्तनवो नृप । मन्वादयो जगद्यात्रां नयन्त्यभिप्रचोदिताः' इत्यादिना स्पष्टमुक्तमवगन्तव्यम् । ननु यदुक्तं 'नहि मनुसूर्यादिर्भवति वामदेवः' इति स्यादिदमपसिद्धान्तदूषणं सत्योपाधिकृतसत्यभेदवादे । तैर्मुक्तेः पूर्वं विशिष्टभेदस्य सत्यत्वाङ्गीकारात् । येषां मुक्तेः पूर्वं संसारेऽपि भेदो नास्ति तेषां वैशिष्ट्यस्यापि मिथ्यात्वान्नैक्यं विरुद्ध्यते । नह्यारोपितनैल्यवैशिष्ट्येऽपि गगनस्य नीरूपत्वं विरुद्ध्यत इत्याशङ्क्य परिहरति– **यदीति** ।। मन्वादित्वस्य मन्वादिशब्दप्रवृत्ति-निमित्तधर्मस्य । इत्यादिकं सूर्यश्चाहं कक्षीवान् ऋषिरस्मि विप्रः अहं भूमिमददामित्या-दिकम् । सर्वमनर्थकं अर्थशून्यमप्रमाणमेव भवतीत्यर्थः । नच मनुरभवमित्यादेर्मिथ्यांश-त्यागेन यत्सत्यं चैतन्यं तेनैकीभूतोऽभवमित्यर्थ इति वाच्यम् । तदाऽपि भूमिमददा-मित्यादिकमनर्थमेव । किञ्च चैतन्यैक्यस्य प्रागेव सिद्धत्वान्मनुरभवमित्यादिकं निरर्थकमेवेति ।

**भाष्यम्-**

**'जीवेश्वरभिधा चैव जीवभेदः परस्परम् ।**
**जडेश्वरभिदा चैव जडभेदस्तथैव च ।**
**जडजीवभिदा चैव सत्योऽयं भेदपञ्चकः ।**
**न कदाचिन्निवर्त्योऽयं मुक्तौ संसार एव च (वा) ।**
**य एतदन्यथा ब्रूयुस्ते हि यान्त्यधरं तमः ।' इति भविष्यत्पर्वणि ।**
**'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी[१] ।**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः[२] ।**
**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।**
**मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्[३] ।' इत्यादि च ।**

---

१. भ.गी. १६.८ २. भ.गी. १६.९ ३. भ.गी. १६.२०

**टिप्पणी -**

यदुक्तं इन्द्रादिजीवानां 'प्राणो वा अहम्' इत्यादावीशैक्यं अहं मनुरभवम्' इति जीवानां च परस्परमैक्यमुच्यते। तद्भेदस्यासत्त्वादिति। तत्प्रमाणबाधितमिति भावेन तदुदाहरति– **जीवेश्वरेति** ॥ चशब्दास्तथाशब्दश्च समुच्चये। एवशब्दाः भेदाभेदव्यावृत्त्यर्थाः। सत्यत्वे हेतुः–**न कदाचिदिति** ॥ निवर्त्यो बाध्यः। कदाचिदित्यस्य विवरणम्– **मुक्ताविति** ॥ यद्वा, सत्योपाधिकृतसत्यभेदवादे मुक्तावुपाधिविनिर्गमेन न निवर्त्यः, असत्यभेदवादे संसार एव न ब्रह्मज्ञानेन बाध्यत इति योज्यम्। तात्पर्य-द्योतनायान्यथाज्ञानिनां फलमाह– **य एत-दिति** ॥ भेदादिप्रपञ्चासत्यत्वाभेदवादिनां निन्दार्थवादबलाच्च भेद एव तात्पर्यमागम-स्येति भावेनासत्यत्ववादानुवादपरं गीतावाक्यं पठति– **असत्यमिति** ॥ अनीश्वरमित्यतः परं 'अपरस्परसम्भूतं किमन्यत् कामहैतुकम्' इति वाक्यशेषोऽनुसन्धेयः। भेदवादानुसंवादपरं तत्पठति– **ईश्वर इति** ॥ सुखीत्यतः परं 'आढ्योऽभिजनवान्' इत्यादिवाक्यशेषः। असत्यवादिनां निन्दापरं कामहैतुकमित्यतः परं विद्यमानं वाक्यशेषं पठति– **एतामिति** ॥ ईश्वराभेदवादिनां निन्दापरं 'ईश्वरोऽम्' इत्यादि-प्रकरणोपसंहारस्थं वाक्यशेषं पठति– **आसुरीमिति** ॥

**भाष्यम्-**

**(सर्वान्तर्यामित्वादिना विष्णोः सर्वशब्दवाच्यत्वम्)**

**न च 'प्राणो वा अहमस्म्यृषे' इत्यादावहमस्म्यादिशब्दोऽस्मच्छब्दार्थस्थः। 'एष तपन्नेवास्मि' इत्युपरितनस्य वैयर्थ्यात्। 'प्राणो ह्येष य एष तपति' इत्युक्त-त्वात्। अतोऽहमस्मीत्यादि च भगवन्नामैव। न च जीवैक्यवचनमत्र प्रस्तुतम्। 'तावा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः प्राण एव' इति सर्वनामाभिधेयत्वं भगवत उक्त्वा तत्रैव प्रमाणत्वेन विश्वामित्रं ह्येतदहरित्याद्याख्यायिकोक्ता। तस्मात् सर्वान्तर्यामित्वात् सर्वगुणवत्त्वात् सर्वशक्तित्वाच्च सर्वनामवत्त्वमेव विष्णोरुच्यते न तु सर्वस्वरूपत्वम्।**

## (मुक्तावपि पञ्चभेदः सुनित्यः)

उक्तं च भारते-

'स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात्।
सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः ॥' इति ।

**टिप्पणी -**

'प्राणो वा अहमस्मि' इत्यादावहमस्म्यादिशब्दानामस्मच्छब्दार्थत्वमङ्गीकृत्यैक्यपरत्वेऽन्तरङ्गं च बाधकमाह– **नचेति** ॥ कुत इत्यत आह– **एष तपन्निति** ॥ अहमस्म्यादिशब्दानामस्मच्छब्दार्थपरत्वे 'ऋषे प्राणोऽहमस्मि त्वं च प्राणोऽसि सर्वाणि भूतान्यपि प्राणा भवन्ति य एष तपति सूर्यः एषोऽपि प्राणो हि' इत्युक्तत्वात् स्वाभिन्नप्राणेन सूर्यस्याभेदोक्त्या सूर्यस्यापि स्वाभेदस्य लब्धत्वात् एष तपन्नेवास्मि' इत्युपरितनवाक्यस्य वैयर्थ्यप्रसङ्गादित्यर्थः। ततश्च किमित्यत आह– **अत इति** ॥ प्रतीतार्थस्यानुपपन्नत्वादस्मदादेशतया लौकिकव्याकरणविहितमप्यहमिति पदं तस्मिन्नुपपदे उत्तमपुरुषाख्यातपदत्वेन विहितमस्मीति पदम् आदिपदेन युष्मदादेशरूपतयोक्तं त्वमिति च पदमित्यादिकं गुणसमर्पणाय भगवन्नामैवेत्यर्थः। 'प्राणो वा अहम्' इत्यादेरैक्यपरत्वे प्रकृतासङ्गतिमप्याह– **नचेति** ॥ अत्र ग्रन्थे प्राग् जीवेश्वरैक्यस्य वचनं कथनम्। प्रस्तुतमुपक्रान्तं न भवति । यत्साधनाय विश्वामित्रं ह्येतदित्याद्याख्यायिकयैक्यमुच्यत इति भावः। तर्हि किमत्र प्रकृतम्। यत्र प्रमाणत्वेनेयमाख्यायिकोक्तेत्यत आह– **ता वा एता इति** ॥ एवं स्वव्याख्याने उपपत्तिमपव्याख्यानेऽनुपपत्तिं चोक्त्वोपसंहरति– **तस्मादिति** ॥ अस्माद् व्याख्यानस्य प्रकृतसङ्गतत्वाद् अन्यस्यासङ्गतत्वात् प्राणादिसर्वान्तर्यामित्वात् तत्तत्पदप्रवृत्तिनिमित्तगुणाधिकरणत्वात् तत्सम्पादकसर्वशक्तित्वात् प्राणाहमादिसर्वनामत्वमेवात्रोच्यते। नतु सर्वस्वरूपत्वमित्यर्थः। ननु सर्वनामवाच्यत्वं प्रतिज्ञाय सर्वाभेदो युक्तित्वेनोच्यत इत्यस्त्येव सङ्गतिरिति शङ्कां भारतवाक्येन परिहरति– **उक्तं चेति** ॥ सर्वत्वं सर्वनामवाच्य-

त्वम् । यद्वा, ननु 'जीवेश्वरभिदा चैव' इत्यादिकं यथा भेदप्रमाणमस्त्येवं 'सर्वं खल्विदं ब्रह्म' 'वासुदेवः सर्वम्' इत्यादिरूपं विष्णोः सर्वात्मकत्वे प्रमाणमस्त्येवेत्यतस्तस्य गतिश्च भारत एवोक्तेत्याह– **उक्तं चेति** ।। सर्वत्वं सर्वात्मकत्वम् । 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इति वचनादिति भावः ।

**भाष्यम्-**

## (श्रुतिवचनानि नाभेदपराणि)

**'पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम्' इति पुरुषरूपेणैवेदं सर्वं व्याप्तं यद्भूतं यच्च भव्यम् । 'आतृणादाकरीषात् सर्वं भगवान् इति [१]मिथ्यादृष्टिरेव' इति च श्रुतिः । 'हिरण्मयो ह वा अमुष्मिँल्लोके सम्भवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद । अमृतो हवा अमुष्मिँल्लोके सम्भवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवत् समभवत्' इत्यादिना मुक्तानामपि भेदस्यैवोक्तेश्च ।**

**न हि भेदाभावे 'सर्वेभ्यो भूतेभ्यो ददृशे' इति युज्यते । न चामुक्तैः सर्वैर्भूतैर्मुक्तो दृश्यते । एकत्वे तु ददृश इत्येतावता पूर्यते सर्वेभ्यो भूतेभ्य इति व्यर्थम् । न च तेषां पक्षे स्वयमपि स्वात्मानं पश्यति । कर्तृकर्मविरोध इति हि ते वदन्ति । अतः सर्वश्रुतिविरोध एव जीवेश्वरैक्याङ्गीकारे ।**

**टिप्पणी -**

किञ्चैक्यपरत्वेन प्रतीयमानां श्रुतिमनूद्य श्रुत्यैव व्याख्यातत्वाच्च नैक्यपरं किञ्चिद्वाक्यमित्याह– **पुरुष एवेति** ।। अतीतैष्यत्खण्डान्तेषु भेदस्यैवोक्तेश्च नात्रैक्यं विवक्षितमित्याह– **हिरण्मय इत्यादिना** ।। सांसारिकभेदपरमेतदिति न मन्तव्यमिति भावेनोक्तम्–**मुक्तानामपीति** ।। कथमनेन भेदलाभ इत्यत आह– **नहीति** ।।

---

१. मिथ्यादृष्टिरेषा - ह.पा.

ददृश इत्यस्य प्रतिपदम् दृश्यत इति । भेदाभावे 'सर्वेभ्यो भूतेभ्यो दृश्यते' इति सर्वपदं बहुवचनं द्रष्टृदृश्यभावकथनं चायुक्तमित्यर्थः । ननु 'सर्वेभ्यो भूतेभ्य' इत्यस्य सर्वैरमुक्तैर्दृश्यत इत्यर्थः । तथाचामुक्तेभ्यो मुक्तभेदस्यानेनोक्तावपि न मुक्तानां भेद इदं प्रमाणमित्यत आह– **नचेति** ॥ 'न प्रेत्य सञ्ज्ञाऽस्ति' इत्यादावमुक्तज्ञेयत्वाभावस्योक्तत्वादिति भावः । दृष्टा च ते भगवता नारदेन' इति गीताभाष्ये साधनविशेषेण नारदेन दृश्यत्वोक्तावपि 'सर्वैर्भूतैर्न दृश्यते' इति भावेनोक्तम्– **सर्वैरिति** ॥ कथञ्चित् सत्योपाधिकृतसत्यजीवभेदवादिभिर्मिथ्योपाधिकृतमिथ्याभेदवादिभिश्च बद्धमुक्तव्यवस्थाङ्गीकारात् संसारिभिर्भूतैर्मुक्तो दृश्यत इति वक्तुं शक्यते । एकजीववादे तु सर्वेभ्यो भूतेभ्य इत्येतत् सर्वथाऽनुपपन्नमेव । तैरेक एव जीवः संसरति मुच्यते च । अन्ये तदज्ञानेन स्वरूपेण कल्पिताः । तस्य तत्त्वज्ञानेन मुक्तौ न किञ्चिदवशिष्यत इत्यङ्गीकारेणामुक्तैर्भूतैर्मुक्तस्य दृश्यत्वायोगादित्यभिप्रेत्याऽऽह– **एकत्वे त्विति** ॥ जीवैकत्वपक्ष इत्यर्थः । व्यर्थं विरुद्धार्थम् । अङ्गीकृत्यैव ददृश इति पूर्यत इत्युक्तम् । वस्तुतस्तु तदपि न सम्भवतीत्याह– **नचेति** ॥ एकजीववादिनां पक्षेऽन्यो न पश्यति । तन्मुक्त्यवस्थायामन्याभावात् । नापि स्वयं स्वात्मानं पश्यति । कुत इत्यत आह– **कर्त्रिति** ॥ ततश्च किमित्यत आह– **अत इति** ॥ मुक्तबाहुल्यस्वज्ञेयत्वस्य चानङ्गीकारात् सर्वेभ्यो भूतेभ्यो न दृश्यत इत्यादिबहुश्रुतिभिर्विरोध एवेत्यर्थः।

**भाष्यम्-**

**न च कर्तृकर्मविरोधो नामास्तीत्यत्र किञ्चिन्मानम् । श्रुत्यनुभवसिद्धत्वाच्च स्वदर्शनादेः । न च तेषां पक्षे प्राज्ञेन सर्वज्ञेन परमात्मना सर्वकामावाप्तिर्नामाङ्गीक्रियते शरीरादुत्क्रान्तस्य ज्ञानिनः । तस्माद्भेदविरुद्धवादिन एव तेऽपि ।**

**टिप्पणी -**

नन्वेकस्यां क्रियायां कर्तृकर्मणोरेकत्वं विरुद्धमिति सर्वैरङ्गीकार्यमेव । तत्किमिति ते वदन्तीत्युच्यत इत्यत आह– **नचेति** ॥ विरोधो हि नियमेन सहानवस्थिततया

दर्शनमानको भवति । नचात्र तादृशं प्रमाणमस्तीत्यर्थः । न केवलं विरोधे प्रमाणाभावः किन्त्वविरोधे प्रमाणमस्तीत्याह– **श्रुतीति** ।। 'तदात्मानमेवावेदहं ब्रह्मास्मि' इत्यादिश्रुतिर्मामहं जानामीत्यनुभवः। स्वदर्शनादेरित्यादिपदेन 'मुच्यते वत्सः स्वयमेवत्यादेः स्वमोचनादेर्ग्रहणम्। तथाचोक्तमनुव्याख्याने– 'विरोधो ह्यविरोधश्च यतो दर्शनमानकौ । अतो दृष्टे विरोधः कथम्....।।' इति। 'स एतेन प्राज्ञेन' इत्यत्र कथं मुक्तानां भेदोक्तिरित्यत आह– **नच तेषां पक्ष इति** ।। तेषामभेदवादिनां पक्षेऽस्माल्लोकाच्छरीरादुत्क्रम्येत्युक्तस्य शरीरादुत्क्रान्तस्य ज्ञानिनः प्राज्ञेन सर्वज्ञेन परमात्मना तदनुग्रहेण। सर्वकामावाप्तिर्नामाङ्गीक्रियतेऽतो भेदपक्ष एवेयं श्रुतिः समञ्जसेति भावः। उपसंहरति– **तस्मादिति** ।। 'तस्मात् प्राज्ञेनाऽत्मना' इति श्रुतिवचनादपि ते वेदविरुद्धवादिन इत्यर्थः। यद्वा, भेद-मिथ्यात्वब्रह्मैक्याद्यङ्गीकारे दूषणान्तरमाह– **तस्मादिति** ।। वेदोक्तमिथ्यात्वाङ्गीकारे मायिनोऽपि वेदविरुद्धवादिनो बौद्धा इत्यर्थः ।

**भाष्यम्-**

**(न च शून्यवादिनः कश्चिद्विशेषो मायावादिनः)**

**न च शून्यवादिनः कश्चिद्विशेषो दृश्यते। न हि सर्वावाच्यं सर्वाज्ञेयं शून्यं चेति कश्चिद्विशेषः। केनापि शब्देनावाच्यस्य लक्षणायामपि प्रमाणं नास्ति। क्षीरमाधुर्यादयोऽपि तैरेव शब्दैरुच्यन्ते।**

**'विशदं क्षीरमाधुर्यं स्थिरमाज्यस्य तीक्ष्णकम्।**

**[१]सितस्य पनसादीनां निर्हारीत्यभिधीयते ।।' इति शब्दनिर्णये।**

**टिप्पणी -**

तदुपपादयति– **नचेति** ।। ब्रह्मवादिन इति शेषः । कुत इत्यत आह– **नहीति** ।। शून्यवादिना शून्यस्य ब्रह्मवादिना ब्रह्मणोऽवाच्यत्वाद्यङ्गीकारात् सर्वावाच्यं

१. गुडस्येति सूदशास्त्रे विद्यमानः पाठः ।

सर्वाज्ञेयं शून्यं ब्रह्म चेति न कश्चिद्विशेष इत्यर्थः। एतदुपपादनं च 'अवाच्यं सर्वशब्दैस्तल्लक्ष्यते चाखिलैः पदैः। अज्ञेयं ज्ञानलभ्यं च' इति शून्यत्वादिश्लोकोदाहरणपूर्णं तत्त्वोद्योते कृतं बोध्यम्। ननुवस्ति ब्रह्मेति चेद् वेद' इत्यादेरस्तित्वावगमाद् ब्रह्मणो न शून्यत्वापत्तिरिति चेदत्र वक्त-व्यम्। कथमेषा श्रुतिर्ब्रह्मणोऽस्तित्वं बोधयति। वचनवृत्त्या लक्षणया वा। आद्यं दूषयति– **नहीति**॥ सर्वशब्दवाच्यं केनापि प्रमाणेनाज्ञेयं ब्रह्मेत्यङ्गीकृतम्। कथमेवं सत्येषा श्रुतिर्ब्रह्मणोऽस्तित्वं वचनवृत्त्या बोधयति। तथाच श्रुत्याऽस्तित्वानवगमाद् ब्रह्म शून्यं चेति न कश्चिद्विशेष इत्यर्थः। द्वितीयं दूषयति– **केनापीति**॥ ननु क्षीरमाधुर्यादयो रसविशेषा अवाच्या अपि लक्ष्या दृश्यन्त इत्यत आह– **क्षीरेति**॥ तैरेव क्षीरमाधुर्यादिशब्दैरेव। यद्वा, शास्त्रप्रसिद्धिर्नामविशेषैरित्यर्थः। किं तच्छास्त्रमित्यतस्तत् पठति– **विशदमिति**॥ शब्दनिर्णये सितस्येति पाठः। सूदशास्त्रे गुडस्येति पाठः। अतो न सुधाविरोधः।

**भाष्यम्-**

## (मुक्तावपि तारतम्यमप्रतिहतम्)

**न च सर्वगुणदोषक्रियाविनिर्मुक्तस्यास्तित्वमपि कुत्रचिद्दृष्टम्। अतः शून्यवादिन एव तेऽपि। 'अस्तीत्येवोपलब्धस्य तत्त्वभावःप्रसीदति' (कठ. २.१४) इत्यादिना प्रसादादिगुणाश्च भगवतो दृश्यन्ते। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः' (कठ. ६.११) इत्यादिकर्माणि च। 'यस्मिन् देवाः श्रिताः सर्वे' इत्यादिगुणाश्च तत्रैवोक्ताः।**

**टिप्पणी -**

एवमागमाभावेनास्तित्वं ब्रह्मणो न सम्भवतीत्युक्तम्। निर्विशेषत्वयुक्तिविरोधाच्च न सम्भवतीत्याह– **नचेति**॥ ब्रह्मणोऽस्तित्वं नाम सत्तासामान्यं वा विधिमुखप्रत्ययवेद्यत्वं वा आऽऽरोपितासत्त्वव्यावृत्तिर्वा। न पक्षचतुष्टयमपि सम्भवति। सर्वविशेषविनिर्मुक्तत्वाङ्गीकारात्। स्वरूपसत्त्वं सर्वविशेषविनिर्मुक्तस्य

युज्यत इति चेन्न । शून्यस्यापि तदापत्तेः । असत्त्वव्यावृत्तेरपि तेनाप्यङ्गीकारात् । तदुक्तम् 'नास्य सत्त्वमसत्त्वं वा न दोषो गुण एव वा' इतीत्याशयेनोपसंहरति– **अत इति** ।। ननु यदुक्तं निर्विशेषत्वान्न सत्त्वमिति तदयुक्तमप्रयोजकत्वात्। 'केवलो निर्गुणश्च' 'निष्कलं निष्क्रियं शान्तम्' इत्यादौ गुणाद्यभावस्य 'अस्ति ब्रह्मेति चेद्वेद' इत्यादिश्रुतिष्वस्तित्वस्य 'सत्तामात्रं निर्विशेषं निरीहम्' इत्यादिस्मृतिषु चोभयस्योक्तेरित्यतस्तत्प्राकृत-गुणादिविशेषाभावपरम्। काठके सत्त्वव्याप्यत्वेन विशेषाभिधानादिति भावेनाऽह– **अस्तीत्येवेति** ।। ब्रह्मास्तीत्युपलब्धस्योपलब्धिमत एव तत्त्वं प्रकृतिपुरुषाख्यं भावयत्युत्पादयतीति तत्त्वभावो विष्णुः प्रसीदतीत्यर्थः । आदिपदेन 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं विद्याच्छुक्रममृतम्' इत्यादिवाक्यशेषग्रहणम् । प्रसादो नामेच्छाविशेषो गुणान्तरं वेति सुधायामुक्तम् ।। **इत्यादिकर्माणीति** ।। 'यस्य ब्रह्म च क्षत्रम्' इति सर्वात्तृत्वम् आदिपदेन 'ऋतं पिबन्तौ' इति वाक्यशेषोक्त-कर्मफलभोगादि गृह्यते। इत्यादिगुणाः देवाश्रयत्वादिधर्माः । तत्रैव यस्यां काठकश्रुतावस्तितवमुक्तं तत्रैव ।

**भाष्यम्-**

**'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।**
**आदघ्नास उपकक्षास उत्वे ह्रदा इव स्नात्वा उत्वे ददृश्रे ।। (ऋ. १०.७१.७)**
**इति मुक्तानामपि तारतम्यं चोक्तम्।**

**'श्रुत्वा विष्णुं कर्णफलं प्राप्तत्वात् कर्णसंयुताः ।**
**अक्षण्वन्तो दर्शनाच्च विष्णोर्मुक्तास्तु ये गणाः ।**

**टिप्पणी -**

मुक्तानां तारतम्यस्योक्तत्वाद् भेदस्यासत्यत्वे तदयोगाद् भेदः सत्योऽङ्गीकार्य इत्याह– **अक्षण्वन्त इति** ।। श्रुतिं स्मृत्या व्याचष्टे– **श्रुत्वेत्यादिना** ।। अक्षण्वन्तोऽक्षिमन्तः। अतो नुडिति नुट्। अक्षिमत्त्वं कर्णवत्त्वं च संसारिसाधारणमित्यत

उक्तम्– **श्रुत्वेति** ।। दर्शनाद् दर्शनफलं प्राप्तत्वादक्षण्वन्तश्चशब्दात् प्राप्तसमस्तेन्द्रियफला इत्यर्थः । सखायः परस्परं सखायो मुक्ता इत्यस्य तात्पर्यम्– **मुक्तास्तु ये गणा इति** ।। मनोजवेषु मनोजवः प्रज्ञातिशयः । बहुवचनमाद्यर्थे ।

**भाष्यम्-**

**तारतम्यं च तेषां हि श्रुतावुदितमञ्जसा ।**
**क्षीरसागरदघ्नास्तु केचित्तिष्ठन्ति मुक्तिगाः ।**
**उपस्थिताद् ब्रह्मवनं केचिदश्वत्थमण्डलम् ।**
**ऐरे ह्रदे केचिदपि देवा एव [1]परं हरिम् ।**
**नागभोगशयं मुक्ता ददृश्रेऽधिकमोदिनः ।**
**सागरादिस्थिता विष्णुं पश्यन्ति कचिदेव हि ।।' इति ब्रह्मसारे ।**

**टिप्पणी -**

ज्ञानादिगुणेषु असमास्तारतम्योपेता बभूवुरित्यस्य तात्पर्यम्– **तारतम्यं चेति** ।। न केवलं ज्ञानादिगुणेषु किन्तु भगवत्सामीप्ये च तारतम्यमादघ्नास इत्यादिनोक्तमित्यप्याह– **तारतम्यं चेति** ।। तेषु केचिदादघ्नासः 'प्रमाणे द्वयसच् दघ्नच् मात्रच् इति पाणिन्युक्तेः दघ्नशब्दः प्रमाणवाची । तथा च आ बहु दघ्नं प्राणं यस्य स आदघ्नः क्षीराब्धिः । ततः अर्श आदिभ्योऽच् आज्जसेरसुग् इत्यसुगागमश्च । ततश्चादघ्नो बहुप्रमाणः क्षीराब्धिरेषामस्तीत्यादघ्नासः क्षीरसागरगा इति यावदित्यर्थमभिप्रेत्योक्तम्– **क्षीरसागरदघ्ना इति** ।। क्षीरसागरस्य दघ्नं प्रमाणं येषां ते क्षीरसागरदघ्ना बहुप्रमाणक्षीराब्धिगा इति भावः । तदुक्तं तत्त्वनिर्णयटीकायाम्– आदघ्ना अश आदिभ्योऽच् बहुप्रमाणक्षीराब्धिमन्तस्तत्क्रीडापराः' इति । यद्वा ज्ञानपादीयसुधायाम् 'तत्र केचिदादघ्नासः आस्यशब्दस्याभावः आस्यं परिमाणस्येत्या-दघ्नममृतम् । तदेषामस्ति स्थानमित्यर्श आदिभ्योऽच् । आस्यपरिमाणे सुधानिधौ

---

१. सदा - ह.पा.

विहरन्त इति दूरत्वमुच्यते । यद्वा, तरतमशब्द इव दघ्नशब्दोऽप्यप्रत्ययोऽस्ति । तत आ सम्यक् दघ्नमग्ना इत्युक्तत्वात् तदनुसारेण क्षीरसागरदघ्ना इत्यस्य क्षीरसागरे दघ्नमास्यप्रमाणमृतं येषां ते क्षीरसागरदघ्ना इति वा क्षीरसागरे दघ्ना मग्ना इति वाऽर्थो बोध्यः । केचिदुपगताः कक्षं वनमुप-कक्षाः । उशब्द एवार्थः । श्वेतद्वीपगतवनक्रीडारता एवेति मध्यमत्वमुच्यत इत्यर्थमभिप्रेत्योक्तम्– **उपस्थिता इति** ।। ब्रह्म वनं ब्रह्मवननामकं त्वे केचित् स्नात्वा इव स्नाता इवामृतं पिबन्तः । ह्रदाः ऐराख्यामृतह्रदस्था इति समीपगत्वमुच्यत इत्यर्थमभिप्रेत्य व्याख्यातम्– **ऐरे ह्रद इति** ।। केचिदैरे ह्रदेऽपि वर्तन्त इत्यर्थः । उक्तं च बृहद्भाष्ये । 'अमृतह्रदे च केचिच्च पिबन्ति स्नातवत् सदा' इति । उत्वे ददृश्र इत्यस्य त्वे उ केचिद् देवा एव भगवन्तं ददृश्रे ददृशिर इत्यस्य व्याख्यानम्–**देवा एवेति** ।। देवा एव सदेत्यस्य व्यावर्त्यमाह–**सागरादीति** ।। ज्ञानपादीयसुधायां तत्त्वनिर्णयटीकायां चामृतह्रदेषु स्नाता ह्रदा इव गम्भीरा इति सन्न्यायरत्नावल्यनुसारेण स्नात्वा स्नातव्यां ह्रदा इव गम्भीराः परमेश्वरं ददृशुरित्यर्थान्तरमुक्तं ज्ञेयम् ।

**भाष्यम्-**

**(वेदमन्त्रेषु मुक्तलोकवर्णनम्)**

**यत्र ब्रह्मा पवमानछन्दस्याम् इति वाचं वदन् ।**
**ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परिस्रव ।**
**यत्र ज्योतिरजस्रं यस्मिँल्लोके स्वर्हितम् ।**
**तस्मिन्मान्धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रव ।**
**यत्र राजा वैवस्वतो यत्रावरोधनं दिवः ।**
**यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।**
**यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः ।**
**लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दोपरिस्रव ।**

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।**
**कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ।।**

(ऋ. ९.११३.६-१०)

**टिप्पणी -**

**यत्र ब्रह्मेत्यादेः** अयमर्थः । एता ऋचो मारुतप्रार्थनारूपाः । संसारात् पावयित्वा महानन्दे मिनोति क्षिपतीति पवमान इन्दो इष्टप्रदानशील वायो । ब्रह्मा मुक्तश्चतुर्मुखः । यत्र यस्मिन् लोके छन्दस्यां छन्दःसम्बन्धिनीं वाचं वेदवाचम् । वदन् व्याकुर्वन् । ग्राव्णा सुतेन सोमेन सोमे सौम्यस्वरूपे भगवद्विषये इष्ट्वा प्रसन्नेन तेन सोमेन विष्णुना स्वस्याऽनन्दं व्यञ्जयन् मुक्तनिकरैः पूज्यते । तत्रस्थायेन्द्राय विष्णवे मां परिस्रव प्रापय । यत्र लोकेऽजस्रं सूर्यज्योतिर्यस्मिन् लोके स्वरानन्दरूपो विष्णुश्च हितं निहितः । अमृते मुक्तिरूपेऽक्षिते नाशरहिते तस्मिन् लोके मां धेहि निधेहि । तस्मिन्नेव लोके वर्तमानायेन्द्रायेन्दो परिस्रव । यत्र लोके वैवस्वतो राजा यमोऽस्ति । यत्र च दिवो वायुपत्न्या अवरोधनं परिवारभूता देवताश्च सन्ति । यत्र च यह्वतीः स्यन्दमाना अमूरापो गङ्गाद्यब्देवताः सन्ति तत्र लोके माममृतं कृधि । त्रिनाके कं सुखमकं दुःखं नास्त्यकं दुःखं यत्र तन्नाकं परमसुखसाधनं त्रिविधं च तन्नाकं च त्रिनाकं श्वेतद्वीपानन्तासनवैकुण्ठाख्यं धामत्रयं तस्मिन् त्रिनाके त्रिदिवशब्दवाच्ये यत्र लोके दिवो वायुपत्न्याऽन्येषां वा अनुकाममिच्छानुसारेण चारणमस्ति । कथम् ? यत्र वायुपत्न्या ज्योतिष्मन्तो लोकाः पुराणि सन्ति तत्र मामृतं कृधि । यत्र लोके विष्णोस्तत्परमं पदं स्वरूपं सुकृतकर्मभिर्देवैर्महीयते पूज्यते तत्र माममृतं कृधि । यत्र लोके आनन्दा विषयानभिव्यक्ता निरुपाधिक-भगवद्भक्त्यादिव्यङ्ग्याः सुखविशेषाः । मोदाः सजातीयभोगनिमित्तकाः । प्रमुदो विजातीयभोगविशेषनिमित्तकाः । मुदो विजातीयत्वेऽप्यल्पभोगनिमित्तकाः । आसते तिष्ठन्ति । यत्र कामस्येच्छायाः कामाः काम्यन्त इति विषयाः आप्ताः पर्याप्ताः

तत्र माममृतं कृधीत्यर्थः । एतेन भोगविशेषाल्पभोगजन्यसुखव्यतिरेकेण भोगजन्यसुखाभावान्मोदा इति व्यर्थमिति निरस्तम् । सजातीयभोगाभिप्रायेण मोदा इत्युक्तेः । विजातीयेऽपि भोगबाहुल्याल्पताविवक्षया मुदः प्रमुद इत्युक्तेः सम्भवात् । अत एव भाष्यान्ते 'सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः । प्रमोदस्तद्विशेषोत्थो मुन्नामाऽत्यल्पभोगतः' इति श्रौतपाठमतिक्रम्य प्रमुद इत्येतद्व्याख्यानानन्तरं मुद इत्येतद् व्याख्यातं बोध्यम् ।

**भाष्यम्-**

**(श्रुतिसूत्राणि मुक्तभेदावेदकानि)**

**इत्यादिना ब्रह्मसूर्ययमादीनां सर्वदेवानां दिवो देव्या अवरोधभूतानां सर्वदेवीनां गङ्गाद्यब्देवतानां च वेदव्याख्यानं सोमयागादिकं कामचरणं च मुक्तानां भेदेनावस्थितानामुच्यते । मुक्ताश्चात्रोच्यन्त इति प्रतीयते । 'अमृतं कृधि' इति वचनात् । अमुक्तानां स्वेस्वे लोकेऽवस्थानं हि तेषाम् । मुक्तानां हि विष्णुलोकेऽव-स्थानं देवानाम् । 'मुक्तः प्रतिज्ञानात्' (ब्र.सू. ४.४.२) । 'सङ्कल्पादेव च तच्छ्रुतेः' (ब्र.सू. ४.४.८) । 'जगद्व्यापारवर्जम्' (ब्र.सू. ४.४.१७) । 'भोगमात्रसाम्यलिङ्गाच्च' (ब्र.सू. ४.४.२२) । 'अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्' (ब्र.सू. ४.४.२३) । इत्यादिमुक्तसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोगादिकं च सर्वं प्रतीयते । 'ग्राव्णा सोमे महीयते' इति ब्रह्मणोऽन्यमुक्तैः पूज्यत्वं च प्रतीयते ।**

**टिप्पणी -**

उदाहृतानामृचां प्रकृतोपयोगमाह– **इत्यादिनेति** ।। आदिपदेन 'यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम् । स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधि' इत्यादेर्ग्रहणम् ।। **सर्वदेवानामिति** ।। देवैः सुकृतकर्मभिरित्युक्तेरिति भावः । सोमयागादिकमित्यादिपदेन महीयते सुकृतकर्मभिरित्युक्तं भगवदर्चनादिकं

गृह्यते । एषु वाक्येषूक्तानां मुक्तत्वे ज्ञापकमाह– **मुक्ता इति** ।। एवममृतश्रुत्या मुक्तत्वं प्रसाध्य लिङ्गेनापि साधयति– **अमुक्तानामिति** ।। श्रुत्युक्ते मुक्त-भोगादौ सूत्रसम्मतिमप्याह– **मुक्त इत्यादिना** ।। 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः' इत्यत्र मुक्त नतु क्रियाप्रतीत्या संसारी । कुतः ? 'अथ यदेनं मुक्तोऽनुप्रविशति मोदते प्रमोदते' इति बृहच्छ्रुतौ प्रतिज्ञानात् । मुक्तानां स्वसङ्कल्पादेव भोगसिद्धिः 'सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ते' इति श्रुतेः । सर्वान् कामानाप्त्वाऽमृतः समभवदिति श्रुतौ 'जगद्व्यापारवर्जम्' सर्वान् कामानाप्त्वेति विवक्षितम् । भोगमात्रस्य विशेषे सत्यपि मुक्तस्य साम्यमेव न भोगविशेषस्तद्वृद्ध्यादौ कारणम् । कुतः ? अस्मिन्नर्थे । एतमानन्दमय-मात्मानमनुप्रविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं रमते यथाकाममुपरमत इति लिङ्ग-सद्भावात् । भोगस्य भावाभावावुक्त्वापि वृद्ध्याद्यभावस्योक्तत्वात् तस्य तत्र लिङ्गत्वादिति भावः । न मुक्तस्य पुनरावृत्तिः । 'नच पुनरावर्तते' इति श्रुतेः 'सर्वान् कामानाप्त्वा' इति श्रुतेश्च । नहि कश्चिच्छुभात् पुनरावृत्तिकामोऽस्तीति भावः । अत्राऽद्यसूत्रे मुक्तेशभेदो भोगश्चोक्तः । मुक्तस्य भगवत्प्रवेशेन मोदोक्तेः। द्वितीये भोगः। तृतीये त्वैश्वर्यमर्यादोक्त्या भोगो भेदश्च । चतुर्थे आनन्दमयात्म-प्रवेशोक्त्या भेदो भोगश्च । पञ्चमे 'सर्वान् कामानाप्त्वा' इत्यपुनरावृत्तिर्भोगः । आदिशब्देन 'प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः'इत्यत्र 'ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति ।' इति मुक्तब्रह्मणः पूज्यत्वम् । 'स्थितिमाह दर्शयतश्चैवं प्रत्यानुमाने' इत्यत्र दर्शन्नेव ब्रह्म दर्शन्नेवात्मानं तस्यैवं दर्शयतो नापत्तिर्न विपत्तिः 'एतत्साम गायन्नास्ते' इति वृद्धिह्रासाभावो वेदव्याख्यानादिकं चोच्यत इति गृह्यते– **इत्यादिसूत्रेभ्यश्चेति** ।। न केवलं 'यत्र ब्रह्म' इत्यादिश्रुतिभ्यः । किन्तु पठितसूत्रेभ्यश्च मुक्तानां विष्णोर्भेदो भोग इत्येतत् प्रतीयते । आदिपदोपात्तेभ्यः प्रत्यक्षोपदेशादित्यादि सूत्रेभ्यश्च 'ग्राव्णा सोमे महीयते' इत्यादिनोक्तं ब्रह्मणोऽन्यमुक्तेः पूज्यत्वं प्रतीयत इत्यर्थः ।

**भाष्यम्-**

**(सूत्रानुसारेण श्रुतेरर्थ उपवर्णनीयः)**

**न च सूत्रेषु निश्चितार्थस्यौपचारिकत्वं वक्तुं युज्यते । निर्णयात्मकत्वात् तेषाम्। अतिप्रसङ्गश्चोपचारादिकल्पने। 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः'** (भ.गी. १३.५) **इति निश्चितानि ब्रह्मसूत्राणि ।**

**'बहुनात्र किमुक्तेन यावच्छ्वेतं न गच्छति ।**
**योगी तावन्न मुक्तः स्यादेष शास्त्रस्य निर्णयः ।।' इत्यादित्यपुराणे ।**

**टिप्पणी -**

नन्वक्षण्वन्तः यत्र ब्रह्मा त्रिनाके त्रिदिव इत्यादिश्रुतेर्गौणमोक्षपरत्वेनोपचरितार्थत्वं किन्न स्यान्मोक्षेऽभिरुचिजननाय केवलमर्थवादत्वं वा किन्न स्यादित्यत आह– **नचेति** ।। निश्चितार्थस्य वेदस्य । कुतो न युज्यत इत्यत आह– **निर्णयेति** ।। येषां सूत्राणामुपक्रमादिना श्रुत्यर्थनिर्णायकत्वान्न तन्निर्णीतार्थस्यौपचारिकत्वमित्यर्थः । सूत्रनिर्णीतार्थस्यापि वेदस्यौपचारिकत्वे बाधकमाह– **अतिप्रसङ्गश्चेति** ।। आदिपदेन रुच्यर्थमर्थवादत्वकल्पन इत्यर्थः । सूत्रनिर्णीतार्थस्योपचरितार्थत्वे 'तदनन्यत्वमारम्भणशब्दादिभ्यः' (ब्र.सू. २.१.१५) इत्यादिसूत्रनिर्णीतार्थस्य 'तत्सत्यं स आत्मातत्त्वमसि श्वेतकेतो' इत्यादिमहावाक्यार्थस्याप्युपचरितत्वप्रसङ्गेनाभेदब्रह्मसत्यत्वयोरपि प्रहाणप्रसङ्ग इत्यर्थः । ननु सूत्राणामपि निर्णेयत्वात् कथं निर्णायकत्वमित्यत आह– **ब्रह्मसूत्रेति** ।। ननु 'अभावं बादरिराह ह्येवम्' इत्यादिसूत्रैः 'यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्यत्' इत्यादिश्रुत्यवष्टम्भननिर्गुणब्रह्मभाव एव मोक्षो नतु श्वेतद्वीपादौ शरीरेन्द्रियादिवैशिष्ट्येन भूरिभोग इति निर्णीतत्वेन कथं तादृशवेदवाक्यानामुपचरिताथत्वकल्पने निर्णयात्मकसूत्रविरोधः । पठितसूत्राणामर्थान्तरपरत्वादित्याह– **बहुनेति** ।। **एष शास्त्रस्य निर्णय इति** ।। ब्रह्ममीमांसाशास्त्रेण क्रियमाणो मोक्षपरवाक्यार्थनिर्णय एष एवेत्यर्थः ।

**भाष्यम्-**

## (न मुक्तिर्भोगरहिता)

न च [१]निर्णायकानि भगवद्वाक्यान्यपहाय मानुषवाक्यैरेव तेषामुपचारत्वादि कल्प्यम्। न च भोगरहिता मुक्तिर्नामान्यास्तीत्यत्र किञ्चिन्मानम्।

भुञ्जते पुरुषं प्राप्य यथा देवग्रहादयः[२]।
तथा मुक्तावुत्तमायां विष्णुमाविश्य भुञ्जते ॥
विष्णोर्वशाश्च ते सर्वे सर्वदा दुःखवर्जिताः।
न तु विष्णुगुणान् सर्वे भुञ्जते ते कदाचन ॥
बाह्यभोगान् भुञ्जते च तारतम्येन कांश्चन।
विष्णोर्देहाद्बहिश्चापि निर्गच्छन्ति यथेष्टतः ॥' इति स्कान्दे।
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः।
सर्गेऽपि नोपजायन्ते प्रलये व्यथन्ति च ॥' (भ.गी. १४.२)
इति भगवद्वचनम्।

तस्मान्मुक्तैरपीज्यमानः सर्वस्माद्भिन्नः सर्वोत्तमः सर्वनामा सर्वशक्तिः सर्वगुण-सम्पूर्णो नारायणः सर्ववेदादिषूच्यत इति सिद्धम् ॥

**टिप्पणी -**

किञ्च स्पष्टसूत्राणामर्थान्तरं परिकल्प्य पठितश्रुतीनामुपचरितमोक्षपरत्व-स्यार्थवादत्वस्य वा कल्पनं किं स्वाचार्यवचनात् क्रियते। उत भोगादिशून्यनिर्गुणमोक्ष-सत्त्वे निरवकाशप्रमाण-बलात्। आद्यं दूषयति- **नचेति** ॥ द्वितीयं दूषयति- **नचेति** ॥ ननु सायुज्यलक्षणा प्रसिद्धोत्तमा मुक्तिरेव निर्गुणमुक्तिरित्यत आह- **भुञ्जत इति** ॥ उक्तं च गीताभाष्ये- **सायुज्यं च ग्रहवदिति** ॥ बाह्यभोगान् विष्ण्वानन्दाद्यतिरिक्तान् भोग्यान्। बाह्यभोगेऽप्यवान्तरभेदो मन्तव्य इत्याह-

---

१. निर्णयात्मकानि - ह.पा.    २. यथा चैत्र गृहादयः - ह.पा.

**तारतम्येनेति** ।। उत्तमभोग्याः नावराणामित्यर्थः । अवरभोग्यभोगेऽपि विशेषमाह– **कांश्चनेति** ।। अवरस्त्र्यादिभोगाभावादिति भावः । जनिमरणाभावलिङ्गेन परममोक्षतयाऽवगतेऽपि साधर्म्यमागता इति भेदस्योक्तत्वाद् भेदसत्यत्वं भोगादिकं सर्वं युज्यत इत्याह– **इदमिति** ।। खण्डार्थमुपसंहरति– **तस्मादिति** ।।

**।। इति तृतीयः खण्डः ।।**

**उपनिषत्-**

**(बृहतीसहस्राभिमानिदेवतयोर्निरूपणम्)**

तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य यानि व्यञ्जनानि तच्छरीरं यो घोषः स आत्मा य ऊष्माणः स प्राण एतद्ध स्मवै तद्विद्वान् वसिष्ठो वसिष्ठो बभूव तत एतन्नामधेयं लेभ एतदुहैवेन्द्रो विश्वामित्राय प्रोवाचैतदुहै वेन्द्रो भरद्वाजाय प्रोवाच तस्मात् स तेन बन्धुना यज्ञेषु हूयते तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति व्यञ्जनैरेव रात्रीरा(प्नोति)प्नुवन्ति स्वरैरहानि तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात् प्रज्ञामयो देवतामयो ब्रह्ममयोऽमृतमयः सम्भूय देवता अप्येति य एवं वेद तद्योहं सोऽसौ योऽसौ सोऽहं तदुक्तमृषिणा 'सूर्य आत्मा जगतस्तस्थुषश्च' (ऋ. १०.११४.१) इत्येतदु हैवोपेक्षेतोपेक्षेत ।। ४ ।।

**।। इत्यैतरेयोपनिषत्सु द्वितीयप्रघट्टके द्वितीयाध्यायः ।। २ ।। २ ।।**

**टिप्पणी -**

बृहतीसहस्रं भगवत्तर्पकमिति पूर्वखण्डे निरूपितम् । प्रसिद्धऋच्छाखायां बृहती छन्दोनिबद्धऋक्सहस्रादर्शनात् कथं तैः शंसनमित्यतस्तत्सम्पादनप्रकारस्तदभि-मानिदेवताः प्रतिपाद्यरूपाणि चोच्यन्ते–**तद्वा इदमिति** ।। इदं बृहतीसहस्रं बृहती-छन्दोनिबद्धाभिः सहस्रर्ग्भिः शंसनीयमिति नियममपहाय यैः कैश्चिच्छन्दोभिर्निबद्धाभी ऋग्भिः शंसिताभिः षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तद्वै तथा शंसने वै । सम्पन्नं सम्पादितं भवतीत्यर्थः । एवं बृहतीसहस्रसम्पादनप्रकारमुक्त्वाऽभिमानि-देवतोच्यते–**तस्येति** ।। तस्य बृहतीसहस्रस्य यानि व्यञ्जनानि या व्यञ्जनाभिमानिदेवता तच्छरीरं सैव प्राणिना शरीराभिमानिदेवता स्वायम्भुवो मनुः । यो घोषः ये घोषाः स्वराः अज्वर्णाः । यस्तदभिमानी स आत्मा सर्वजीवाभिमानी चतुर्मुखः । यद्वा, घोषपदेन कादिवर्गपञ्चके प्रथमद्वितीयाक्षराणि विहायान्ये वर्णाः यरलवशब्दिताः अन्तःस्था हकारश्चेत्येते घोषनामकाः । तदुक्तं वेदशिक्षायाम्– 'प्रथमांश्च द्वितीयांश्च हित्वा वर्ग्यास्त्रयस्त्रयः । अन्तःस्थाश्च हकारश्च घोषवन्तः प्रकीर्तिताः ।।' इति । य ऊष्माणः, यः शषसहाभिमानी, स प्राणः प्राणवाय्वभिमानी मुख्यवायुः । एतद्विद्यायामधिकारिणः फलं चोच्यते– **एतदिति** ।। तदेतदभि-मानिदेवतोपलक्षणमेतत् । प्रतिपाद्यं च विष्णुं विद्वान् वसिष्ठः वसिष्ठो वसतामुत्तमो बभूव । ततः प्रवृत्तिनिमित्तादेतन्नामधेयं लेभे । ज्ञानफलमुक्त्वा व्याख्यानफलमुच्यते– **एतदुहेति** ।। उ उक्तमेतदेव प्रमेयम् । इन्द्रो विश्वामित्राय प्रोवाच । अति-रहस्यमुपदिदेशेत्याश्चर्ये हशब्दः । व्याख्यैकस्यापि महाफला किमु शिष्यान्तरस्येति भावेनोच्यते– **एतदुहैवेन्द्रो भरद्वाजायेति** ।। तस्मादेतद्विद्योपदेशबलादेवेन्द्रस्तेन स्वावगतेन बन्धुना विष्णुना तत्प्रसादेन हविरादिस्वीकाराय यज्ञेष्वाहूयते । एवं बृहतीसहस्र-सम्पादनप्रकारमभिमानिदेवताः प्रतिपाद्यमधिकारिणं फलं चोक्त्वा उपसंह्रियते– **तद्वा इदमिति** ।। इदं बृहतीसहस्रं तद्वै तथा वै । यावतीभिः ऋग्भिः शंसिताभिरित्युक्तसम्पादनाप्रकारेणोक्ताभिमानिप्रतिपाद्याधिकारिकत्वेन च

सम्पादितं भवतीत्यर्थः । प्रतिपाद्यभगवद्रूपाणां स्पष्टमनुक्तत्वात् तदक्षरगतानि तत्प्रतिपाद्यानि च वक्तुमुच्यते– **तस्य वा एतस्येति** ।। तस्य तथा प्रागुक्तप्रकारेण बृहतीछन्दोबद्धऋक्छंसनमेव कार्यमिति नियममपहाय येन केनापि रूपेण स्वायम्भुवाद्यभिमन्यमानव्यञ्जनादिरूपेण च सम्पन्नस्यैतस्य बृहतीसहस्रस्य तदन्तर्गतरूपसहस्रस्य च प्रत्यृचमक्षराणां तन्नामकानां तद्गतरूपाणां च षट्त्रिंशतं भवति । अक्षरगतानां षट्त्रिंशद्रूपाणां स्वर-व्यञ्जनभेदेन प्रत्येकं षट्त्रिंशद्रूपाणां स्वरव्यञ्जनभेदेन प्रत्येकं षट्त्रिंशतं भवति । आहृत्य बृहतीसह्रसगतानामक्षराणां च सहस्राणि षट्त्रिंशतं भवन्ति । तथाऽक्षराणां व्यञ्जनानां स्वराणां तद्गतरूपाणां च प्रत्येकं सहस्राणि षट्त्रिंशतं भवन्ति । एतेषां रूपाणामधिष्ठानान्तरमुच्यते– **तावन्तीति** ।। शतसंवत्सरस्याह्नाम् । अत्राहःशब्दो दिनपरः । अहोरात्रात्मक-दिनानां सहस्राणि च तावन्ति भवन्ति । अह्नां रात्रीणां च पृथक् षट्त्रिंशत्सहस्राणि भवन्तीति ज्ञेयम् । ततश्च किमित्यत उच्यते– **व्यञ्जनैरिति** ।। व्यञ्जनगतै रूपै रात्रीराप्नोति स्वरगतैरहान्याप्नोति व्यञ्जनस्वरगतान्येव रात्र्यहगतानीति यावत् । एवं बृहतीसहस्ररूपाण्यधिष्ठानान्तराणि चोक्त्वोप-संह्रियते – **तद्वा इदमिति** ।। इदं बृहतीसहस्रं तद्गतं रूपजातं तद्वै तथा वै अहोरात्राधिष्ठिततया सम्पन्नमि-त्यर्थः । एवमुपासकस्य फलं चोच्यते– **तद्वा इदमिति** ।। इदं बृहतीसहस्रं तत्प्रतिपाद्यरूपजातं तद्वै तथा वै । अहोरात्राधिष्ठिततया सम्पन्नमुपासितं चेत् तदा शतवर्षहरिध्यानफलसम्पादकं भवतीत्यर्थः । किं तस्य फलमित्यतस्तत् प्रपञ्च्यते–**तस्य वा एतस्येति** ।। 'य एवं वेद' इत्यादावनुकृष्य व्याख्येयम् । य एवमुक्तरीत्या बृहतीसहस्रस्वरव्यञ्जनगतरूपाणामहोरात्राधिष्ठितत्वं वेद स एवं विद्वांस्तस्य बृहतीसहस्रस्यैवं सम्पन्नस्य ज्ञातस्य शंसितस्य वा परस्तादनन्तरमेवैवं ज्ञानादनन्तरमेव प्रज्ञादिमयः सम्भूय देवता अप्येतीत्यन्वयः । प्रकृष्टज्ञानरूपत्वात् प्रकर्षेणान्तर्यामिरूपेण ज्ञापकत्वाच्चानिरुद्धः प्रज्ञः । सवदेवताधिदेवतात्वात् सर्वोत्तमद्योतनादिगुणस्वरूपत्वाच्च प्रद्युम्नो देवता । पूर्णगुणत्वान्मुक्तिप्रदानेन जीवानां

बृंहणाच्च वासुदेवो ब्रह्म । अमितम् ऋतं शास्त्रं स्वविषये करोतीति वा नित्यत्वाद्वा सङ्कर्षणो अमृतम् । प्रज्ञादिश्रुतरूपो भगवान् मयः प्रधानं स्वामीति ज्ञानं यस्य स प्रज्ञादिमयः । एवं पुनः विशेषज्ञानवान् भूत्वा देवताः क्रमेण मारुतान्ता अपि शश्वत् केशवं चैतीत्यर्थः । प्राग् व्यञ्जनैरेव रात्रीराप्नोति स्वरैरहानीति बृहतीसहस्रस्वरव्यञ्जनगतानां भगवद्रूपाणामहोरात्रगतत्वमुक्तम् । न केवलमेतावत् किन्तु पुरुषोच्चार्यत्वात् तेषां स्वरव्यञ्जनगतानां द्वासप्ततिसहस्ररूपाणां पुरुषगतत्वं तदुपास्यत्वं सूर्यनियमिताहोरात्रगतानां सूर्यगतत्वं तदुपास्यत्वं चोच्यते– **तद् योऽहमिति** ।। यो यानि बृहतीसहस्रगतानि स्वरव्यञ्जनभेदेन द्वासप्ततिसहस्र-रूपाणि । तत् तानि पुरुषैरहेयत्वादहंनामकानि पुरुषगतानीत्यर्थः । सोऽसौ स तानि यान्यहोरात्रगतानि तान्येव रूपाण्यसौ सूर्ये तिष्ठन्तीत्यर्थः । यद्वा, तद् योऽहं सोऽसौ' इति विशिष्टं वाक्यम् । तस्यायमर्थः । तत् तस्मात् स्वरव्यञ्जनगतानां पुरुषगतत्वात् स्वरव्यञ्जनगतानामेव प्रागुक्तरीत्याऽहोरात्र-गतत्वादहोरात्रगतानामेव सूर्यगतत्वाद् योऽहं पुरुषैरहेयत्वादहंनामा पुरुषान्तर्गतो द्वासप्ततिसहस्ररूपी भगवान् स एवासौ सूर्येऽपि स्थित इति । न केवलं पुरुषेषु स्थितः पुरुषैरहेयः पुरुषाख्य उपास्यः । किन्तु सूर्यस्थोऽपि भास्करादिभिरुपास्य इत्युच्यते– **योऽसौ सोऽहमिति** ।। योऽसौ सूर्यगतो विष्णुः सोऽहं सूर्यादिदेवैरहेय उपास्य एवेत्यर्थः । तदुक्तमृषिणा– तत्सूर्यान्तर्गतस्य बृहतीसहस्रस्वरव्यञ्जना-होरात्राद्यचेतनगतत्वं पुरुषादिचेतनगतत्वं च मन्त्रद्रष्ट्रोक्तम् । सूर्यः सूर्यान्तर्गतो भगवान् जगतो जङ्गमस्य चेतनस्य । तस्थुषः स्थावरस्य । गमनाद्यभावसाम्यात् तस्थुष इत्यचेतनमुच्यते । तथाच तस्थुषः अचेतनस्य । आत्मा अन्तर्यामी-त्यर्थः । सूर्यान्तर्गतस्य स्वान्तर्यामित्वमवश्यं ज्ञातव्यं मुमुक्षुणेत्युच्यते– **एत-दिति** ।। एतत्सूर्यान्तर्गतं नारायणाख्यं ब्रह्मैवाधिकारी जीवः स्वस्योप समीप ईक्षेतेत्यर्थः । अध्यायान्तत्वाद् द्विरुक्तिः ।।

**भाष्यम्-**

**(बृहतीसहस्रोपासनया ब्रह्मप्राप्तिः)**

**यावतीभिर्ऋग्भिः शंसिताभिः षट्त्रिंशत्सहस्राण्यक्षराणि भवन्ति । यस्मात् कस्मादपि छन्दस्तावत्यः शंसनीयास्तदा सम्पादितं बृहतीसहस्रं भवति । तत्र या व्यञ्जनाभि(मानि)देवता सैव सर्वप्राणिनां शरीराभिमानिदेवता स्वायम्भुवो मनुः । घोषाभिमानिदेवता सर्वजीवाभिमानी ब्रह्मा । ऊष्माभिमानी वायुः ।**

**व्यञ्जनानां शरीरस्य चाभिमानी मनुः स्मृतः ।**
**घोषाणां सर्वजीवानामभिमानी चतुर्मुखः ॥**
**ऊष्माभिमानी वायुश्च प्रतिपाद्यो जनार्दनः ।**
**एतेषामधिपं विष्णुं बृहत्युक्थस्य देवताम् ॥**
**उपास्यैव वसिष्ठोऽभूद् वसिष्ठः शक्र एव च ।**
**एतां विद्यां कौशिकाय भरद्वाजाय चादरात्[1] ॥**
**एतद्विद्याबलेनैव विद्याधीशेन बन्धुना ।**
**यज्ञेष्वाहूयते नित्यमिन्द्रो विष्णुप्रसादतः ॥**

**टिप्पणी -**

अप्रतीतेस्तद्धा इदमित्येतद् व्याचष्टे– **यावतीभिरिति** ॥ व्यञ्जनादीनां शरीराद्यभेदप्रतीतेः स्ववाक्येन यथावद् व्याख्याय प्रमाणमप्याह– **तत्रेत्यादिना** ॥ **वायुरिति** ॥ प्राणवाय्वधिष्ठित इति ज्ञातव्यम् । अभिमानिदेवताज्ञानमात्रेण वसिष्टो वसिष्ठो बभूवेति प्रतीयते । यज्ञेषु हूयत इत्यत्रेन्द्र एव यज्ञेषु आहुतितया हूयत इति चान्यथाप्रतीतेर्यथावद् व्याकुर्वन् 'य ऊष्माणः स प्राणः' इत्यनन्तरमध्याहार्यमाह– **प्रतिपाद्य इति** ॥ एतद्ध स्मेत्यादि व्याचष्टे– **एतेषामिति** ॥ विष्णुमुपास्यैव नतु देवतोपासनामात्रेण वसिष्टो वसिष्ठोऽभूद् वसतामुत्तमः ।

१. चाददात् - ह.पा.

ततश्च वसिठनामाऽभूदित्यर्थः । ननु विष्णुमुपास्येति कथं ज्ञायत इत्यतः 'एतदुहैवेन्द्रो विश्वामित्राय' इत्यादिना वसिष्ठावगतविद्यामेवेन्द्रो विश्वामित्र-भरद्वाजाभ्यामुवाच तस्मादेतद्विद्याबलादेव तेन स्वविद्यावगतेन बन्धुना विष्णुना यज्ञेष्वाहूयत इत्युच्यमानत्वाद् वसिष्ठावगतविद्याविषयोऽपि स एवेत्याशयेनन 'एतदु हैवेन्द्र इत्यादि व्याचष्टे– **एतामिति** ।। विद्याधीशेन विद्याविषयतया तदधीशेन तत्फलप्रापकतया बन्धुनेत्यस्य तात्पर्यम्– **विष्णुप्रसादत इति** ।।

**भाष्यम्-**

**(स्वरव्यञ्जनगानि विष्णुरूपाणि अहोरात्रदैवतानि)**

**षट्त्रिंशद्रूपवान् विष्णुर्व्यञ्जनेषु च संस्थितः ।**
**तान्येव विष्णुरूपाणि रात्रीणामपि देवताः ।।**
**एकैकं च सहस्रं तद्व्यञ्जनेषु च रात्रिषु ।**
**रूपं विष्णोः स्थितं व्यूह्य षट्त्रिंशतिसहस्रधा ।।**
**षट्त्रिंशतिसहस्राणि स्वरगाणि हरेरपि ।**
**तान्येवाह्नां दैवतानि रूपाणि परमात्मनः ।।**
**द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेः ।**
**शताब्दानामहोरात्रदैवतान्युत्तमानि च ।।**
**बृहतीसहस्रवर्णानामपि ध्यात्वाखिलान्यपि ।**
**शतवर्षहरिध्यानफलमाप्नोति पूरुषः ।।**
**एवं ज्ञात्वापि सम्पाद्य बृहतीनां सहस्रकम् ।**
**ज्ञानान्नारायणस्यैव प्रकृष्टज्ञानसन्ततेः ।।**
**स एव मे मयो विष्णुः प्रकृष्टज्ञानरूपकः ।**

**टिप्पणी -**

बृहतीसहस्रस्य षट्त्रिंश-तमक्षराणामित्येतद् व्याचष्टे– **षट्त्रिंशदिति** ।। बृहतीसहस्रस्य प्रत्यृचं विद्यमानो विष्णुरक्षरसमसङ्ख्यया षट्त्रिंशत्सङ्ख्याकेषु चशब्दात् स्वरेषु

च स्थित इति योजना । 'व्यञ्जनैरेव रात्रीरवाप्नोति' इत्येतद् व्याचष्टे– **तान्येवेत्यादिना** ।। 'षट्त्रिंशतिसहस्राणि' इति वक्ष्यमाणमत्रापि योज्यम् । यानि व्यञ्जनगतानि षट्त्रिंशतिसहस्राणि विष्णुरूपाणि तानि रात्रीणामधिदैवताः अधिदैवतानि । यानि स्वरगतानि षट्त्रिंशतिसहस्राणि हरे रूपाणि तान्यह्नां दैवतानीति योजना । कथं स्वरव्यञ्जनगतानां रूपाणां पृथक् षट्त्रिंशतिसहस्रत्व-लाभः ? केन च रूपेण तान्यभिव्यक्तानीत्यतः षट्त्रिंशद्रूपवानिति सङ्क्षेपेणोक्तस्य विवरणम्– **एकैकं चेति** ।। सहस्रं बृहतीसहस्रं गतं विष्णोस्तत्सहस्ररूपमेकैकं षट्त्रिंशतिधा व्यूह्य विभज्य स्वाधिष्ठानभूतऋगक्षरेषु स्थितम् । एकैकमेकैकाक्षरगतं विष्णोस्तद्रूपं द्वेधा व्यूह्य विभज्य व्यञ्जनेषु स्वरेषु च स्थिमाहत्य षट्त्रिंशत्सहस्राक्षरगतं विष्णोस्तद्रूपजातं स्वरव्यञ्जनभेदेन पृथक् षट्त्रिंशतिसहस्रधा व्यूह्य व्यञ्जनेषु चशब्दात् स्वरेषु च स्थितम् । तदुभयविधं विष्णो रूपं रात्रिषु चशब्दादहःसु च स्थितमिति योजना । 'तद्वा इदं बृहतीसहस्रं सम्पन्नम्' इत्येतद् व्याचष्टे– **परमात्मन इति** ।। तत् तस्य परमात्मनो बृहतीसहस्रं बृहतीसहस्रगतं रूपसहस्रमिदमेवं द्वासप्ततिसहस्रतया शतसंवत्सराहोरात्रगततया सम्पन्नमित्यर्थ उक्तो भवति । एवमुपसंहारपरतया व्याख्याय फलकथनपरत्वेन व्याचष्टे– **द्वासप्ततिसहस्राणि रूपाण्येवं रमापतेरित्यादिना** ।। बृहतीसहस्रवर्णानां दैवतानि रमापतेरुत्तमानि द्वासप्ततिसहस्राणि रूपाण्येवमुक्तरीत्या शताब्दानामहोरात्रदैवतानि ध्यात्वा शतवर्षहरिध्यानफलमाप्नोति इति योजना । 'तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात्' इत्यादि व्याचष्टे– **एवं ज्ञात्वेत्यादिना अस्याः परत एवं चेत्यन्तेन** ।। तत्र बृहतीसहस्रस्य सम्पन्नस्य परस्तत् प्रज्ञादिमयः सम्भूय देवता अप्येतीत्यस्याक्षरार्थः । 'सम्पादनाच्च विद्याया अस्याः परत एव च । प्रज्ञादिमय एवं स भूत्वा देवान् क्रमेण च । एति मारुतपर्यन्तान्मारुतेन च केशवम्' इति । देवता अपीत्यत्रापिशब्दार्थः– **केशवं चेति** ।। विद्यासम्पादनं नाम तच्छंसनमात्रं चेत् कथं केशवान्तप्राप्तिरित्यतः प्रवृत्तम्– **य एवं वेद स एतस्य सम्पन्नस्येति** ।। य एवं बृहतीसहस्रवर्णैर्द्वासप्ततिसहस्ररूपाण्युच्यन्ते

तान्येवाहोरात्राधिष्ठितानीत्यादिरूपेण वेद तस्य बृहतीसहस्रस्यैतस्यैवं सम्पन्नस्य ज्ञातस्य शंसितस्य परस्तादित्यर्थमभिप्रेत्योक्तम्– **एवं ज्ञात्वेति** ।। सम्पाद्य शंसनं कृत्वा । अस्याः विद्यायाः शंसनात् परत इत्यन्वयः । प्रज्ञामयपदार्थमाह– **ज्ञानादिति** ।। प्रकृष्टज्ञानरूपक इति हेतुगर्भं विशेषणम् । तथाच प्रकृष्टज्ञानरूपत्वात् प्रकृष्टज्ञानसन्ततेः । प्रकृष्टज्ञानस्य सम्यक् ततेरन्तर्यामिरूपेण विस्तारकरणाच्च प्रज्ञो विष्णु स एव मे मय इति नारायणस्य ज्ञानादेवोपासकः प्रज्ञामय उच्यत इति शेषः ।

**भाष्यम्-**

**प्राधान्यं मयशब्दोऽयं वक्ति विष्णोः सदैव हि ।।**
**प्रधानोऽस्य हरिर्यस्मात् प्रज्ञारूपोऽधिदेवता ।**
**ब्रह्मामृतं तेनायं ब्रह्मादिमय उच्यते ।।**
**सर्वोत्तमस्वरूपत्वाद् विष्णुरुक्तः स देवता ।**
**ब्रह्म पूर्णगुणत्वाच्च नित्यत्वादमृतं तथा ।।**
**एतादृशं च यो विष्णुं प्रधानं वेत्ति सर्वदा ।**
**प्रज्ञादिभिर्गुणैः स्वस्मात् परेभ्यश्च सदाधिकम् ।।**
**प्रज्ञादेवब्रह्मामृतमयः स परिकीर्तितः ।**
**प्रज्ञादिमय एवं स भूत्वा देवान् क्रमेण च ।।**
**एति मारुतपर्यन्तान् मारुतेन च केशवम् ।**
**सम्पादनाच्च विद्याया अस्याः परत एव च ।।**

**टिप्पणी -**

'प्रज्ञामयो देवतामयः' इत्यादौ मयशब्दार्थमाह– **प्राधान्यमिति** ।। अयं प्रज्ञामयादिशब्दान्तर्गतः । प्रज्ञामयशब्दार्थानुवादपूर्वं देवतामयो ब्रह्ममयोऽमृतमय इति पदानामप्यर्थमाह– **प्रधान इति** ।। देवशब्दः सर्वदेवतासाधारणोऽपि मुख्ये प्रयुक्तश्चेत् सर्वदेवोत्तमत्वमेव प्रतिपादयतीति भावेन तदर्थानुवादः कृतः–

**अधिदेवतेति** ।। प्रज्ञारूपो देवतोत्तमः ब्रह्मामृतं च हरिरस्योपासकस्य यस्मात् प्रधानस्तेन कारणेनायं ब्रह्मादिमय उच्यत इत्यर्थः । प्रज्ञादिमय इति वक्तव्ये ब्रह्मादिमय इति कथमुक्तमिति चेत् । इत्थम् । प्रज्ञादिशब्दैरनिरुद्धादिमूर्तयो विवक्षिता इति वक्ष्यति । अनिरुद्धादिव्यूहे च वासुदेवान्त्यगतः प्रज्ञादिमय इत्युक्तेऽमृतपदेन वासुदेव इति प्रतीयते । तथा मा विज्ञायीति भावेनोपान्त्यब्रह्मपदस्यान्ते निवेशः कर्तव्य इति दर्शयितुं व्युत्क्रमेण ब्रह्मादिमय इत्युक्तम् । देवताशब्दं प्रकारान्तरेण निर्वक्ति– **सर्वोत्तमेति** ।। सर्वोत्तमद्योतनादिगुणस्वरूपत्वादित्यर्थः । पूर्णगुणत्वाच्चेति चशब्देन मुक्तिदानेन बृंहणादिति वक्ष्यमाणं समुच्चीयते । अमृतं तथेति तथाशब्देन अमं करोति यच्छास्त्रमिति वक्ष्यमाणं समुच्चीयते । ननु प्रज्ञादिर्मयो यस्य स प्रज्ञादिमय इत्यर्थाङ्गीकारे सम्भूयेत्ययुक्तम् । भगवत्प्रधानकत्वस्य नित्यसिद्धत्वादित्यतो ज्ञानान्नारायणस्येत्येतद् विवृणोति– **एतादृशं चेति** ।। य एतादृशं विष्णुं प्रज्ञादिभिर्गुणैः स्वस्मात् प्रधानं वेत्ति परेभ्यश्च सदाधिकं वेत्ति स प्रज्ञादिमयः प्रकीर्तित इत्यर्थः ।

**भाष्यम्-**

**(रमापतेः द्वासप्ततिसहस्ररूपाणि बृहतीसहस्रमन्त्रे सन्निहितानि)**

**द्वासप्ततिसहस्राणि रूपाणि हि रमापतेः ।**
**बृहतीसहस्रसंस्थानि स्वरव्यञ्जनभेदतः ।।**
**तान्येव पुरुषस्थानि यस्मात् पुरुषसंस्थितम् ।**
**बृहतीसहस्रं तच्छंस्यं व्यज्यते न ह्यृते नरम् ।।**
**द्वासप्ततिसहस्राणि तान्येवाहर्निशासु च ।**
**विष्णुरूपाणि सूर्येऽपि त्वहोरात्रं हि सूर्यगम् ।।**
**तस्माद्योऽयमहंनामा सदाऽहेयत्वहेतुतः ।**
**स एवासौ सूर्यसंस्थः साक्षान्नारायणः प्रभुः ।।**
**योऽसौ सूर्यगतो विष्णुः सो हेयो भास्करादिभिः ।**

**एवं मनुष्यजीवेषु सूर्यादिषु च संस्थितः ।।**
**एक एव परो विष्णुरिति जीवसमीपगम् ।**
**ईक्षेन्नारायणं देवं सर्वजीवेश्वरेश्वरम् ।। इत्यैतरेयसंहितायाम् ।**

**टिप्पणी -**

'तद् योऽहम्' इत्येतद् व्याचष्टे– **द्वासप्ततिसहस्राणीति** ।। स्वरव्यञ्जनभेदतो बृहतीसहस्रसंस्थानि रमापतेर्द्वासप्ततिसहस्ररूपाणि तत् तान्येवाहं पुरुषस्थानीत्यर्थ इति भावः । बृहतीसहस्ररूपाणां पुरषानुबन्धे निमित्तमाह– **यस्मादिति** ।। बृहतीसहस्रस्य व्याप्तत्वात् कथं पुरुषस्थितत्वमित्यत उक्तम्–**तच्छंस्यमिति** ।। तदुपपादनं नरं पुरुषमृतेन व्यज्यत इति । तस्मात् तान्येव पुरुषस्थानीति योजना । सोऽसावित्येतद् व्याचष्टे– **द्वासप्ततीति** ।। तान्यहर्निशासु विद्यमानानि द्वासप्ततिसहस्राणि विष्णुरूपाण्यसौ सूर्येऽपि स्थितानीत्यर्थ इति भावः । अहोरात्र-गतस्य सूर्यानुबन्धे हेतुमाह– **अह इति** ।। हि यस्मादहोरात्रं सूर्यगतं सूर्यनियमितं तस्मात् सूर्येऽपीति योज्यम् । 'तद् योऽहं सोऽसौ' इत्येतदेकवाक्यतयापि व्याचष्टे– **तस्मादिति** ।। यस्माद् बृहतीसहस्रगतमेव पुरुषगतमहोरात्रगतं चाहोरात्र-गतमेव सूर्यगतं तस्माद् योऽयं जीवगतः सदाऽहेयत्वादहंनामा स एव साक्षादनुप-चारेणासौ सूर्यसंस्थो नारायणः । नतु सादृश्यादभेदोपचार इत्यर्थः । 'योऽसौ सोऽहम्' इत्येतद् व्याचष्टे– **योऽसाविति** ।। 'एतदुहैवोपेक्षेत' इत्येतद् व्याचष्टे– **एवमिति** ।। एवमुक्तप्रकारेण एक एवेति हेतोः सूर्यादिस्थितं नारायणं जीवसमीपगम् ईक्षेतेत्यर्थः ।

**भाष्यम्-**

**(प्रज्ञामयादिशब्दाः विष्णुवाचकाः)**

**सम्पन्नस्य परस्तादेवान्तरमेव । न पुनः कर्मान्तरेण शरीरारम्भ एवं विदो भवति । प्रज्ञामयो देवतामय इत्यादिपृथक्पृथङ्मयशब्दोऽनिरुद्धादिचतुर्मूर्तीनामपि परस्परसाम्येन सर्वजीवेभ्य आधिक्यं ज्ञातव्यमिति दर्शयितुम् ।**

'अन्तर्यामिस्वरूपेण ज्ञापयन्ननिरुद्धकः ।
प्रज्ञेत्युक्तो द्योतनाच्च प्रद्युम्नो देवतोदितः ॥
अमं करोति यच्छास्त्रमृतं स्वस्मिन् पुनः पुनः ।
सङ्कर्षणोऽमृतं तस्माद् वासुदेवस्तु बृंहणात् ॥
जीवानां मुक्तिदानेन ब्रह्मेति कथितः प्रभुः ।
एवमेकोऽपि भगवांश्चतुर्धा समुदीरितः ॥' इत्यादि चातुरात्म्ये ।

**टिप्पणी -**

ननु बृहतीसहस्रस्य सम्पन्नस्योपासितस्स्य परस्तादनन्तरमिति न वक्तव्यं साधनानन्तरं साध्यस्य सिद्धत्वादित्यत आह – **सम्पन्नस्य परस्तादनन्तरमेवेति** ॥ एवशब्दव्यावर्त्यं दर्शयति– **न पुनरिति** ॥ विद्यान्तोरपासकानां कदाचिद् विकर्मादिकरणेन शरीरान्तरप्राप्त्योपासनाफलापरोक्षज्ञानप्रतिबन्धेनोक्तफलविलम्बो भवति । बृहतीसहस्रोपासकानां तु कर्मान्तरस्यैवाकरणेन शरीरान्तरारम्भाभावात् सम्पादनानन्तरमेव प्रज्ञामय इत्यादिविशेषज्ञानं ततश्चापरोक्षद्वारोक्तं फलमिति भावः । ननु प्रज्ञादिशब्दनां प्रकृष्टज्ञानादि-गुणसमर्पकत्वे प्रज्ञादिगुणविशिष्टो भगवान् मे मयः प्रधान इति ज्ञानवान् भूत्वेत्येकोक्त्यैव सम्भवात् पृथङ्मयशब्दो व्यर्थ इत्यत आह – **प्रज्ञामय इति** ॥ न केवलं प्रज्ञादिशब्दो भगवतो विशिष्टज्ञानादिगुण-समर्पकः किन्त्वनिरुद्धादिरूपचतुष्टपरश्चातस्तेषां परस्परमेकप्रकारतया सर्वाधिक्यं ज्ञातव्यमित्यभिप्रायेण पृथङ्मयशब्द इत्यर्थः । प्रज्ञादिशब्दानामनिरुद्धादिपरत्वं प्रज्ञादिशब्दानामर्थान्तरकथनपूर्वं प्रमाणेनाऽऽह– **अन्तर्यामीति** ॥ प्रकर्षेण ज्ञापयतीति प्रज्ञ इत्यर्थः । द्योतनाच्चेति चशब्देन क्रीडादिगुणानां ग्रहणम् । पूर्वोक्ताधिदेवतात्वस्य ग्रहणं वा । अममितम् ऋतं शास्त्रं स्वस्मिन् विषये स्वप्रतिपादकतया पुनःपुनः करोति निर्मिमीते व्याकरोतीति यत् तस्मात् । यद्वा, ममितं शास्त्रं स्वविषये ऋतमवगतं करोति यस्मात् तस्मादित्यर्थः । अधिकारिणां वेदादिसर्वशास्त्राणां स्वविषयतया बुद्धिकर्षकः सङ्कर्षण इति यावत् । ऋतमिति निष्ठा भूते प्रतीयतेऽतः

सदा ऋतमवगतमिति प्रदर्शनाय पुनःपुनरित्युक्तम् । बृंहणाद् गुणैः पूरणात् । अन्तर्यामिरूपेण ज्ञाननिरोधपरिहरकत्वादनिरुद्धः 'प्रकर्षेण द्योतमानत्वात् प्रद्युम्नः' सम्यक् पुनःपुनः स्वविषये शास्त्राणां व्याख्यानेन कर्षकत्वात् स्वविषयताबुद्धिकर्षकत्वाद्वा सङ्कर्षणः । वानेन स्वस्मिन्नवस्थापनेन मुक्तिदानेन देवयति क्रीडादिगुणाकरान् करोति वानात् सूतेर्देवनादित्युक्तरीत्या सकलगुणप्रदत्वाद् वासुदेव इति प्रज्ञादिशब्दानामनिरुद्धादिशब्दसमानार्थकत्वं बोध्यम् ।

**भाष्यम्-**

**(बृहतीसहस्रोपासनया विष्णुपारम्यज्ञानं दृढमवतिष्ठति)**

**सम्भूयेत्यत्र समित्युपसर्गाद् बृहतीसहस्रसम्पादनानन्तरं भगवदाधिक्यं पुनराधिक्येन ज्ञायत इत्युक्तं भवति । भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति ।**

'द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात् ।
आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः ॥
प्राप्नोति देवताश्चैव केशवान्ताः क्रमेण तु ।
योग्या अस्याश्च विद्याया देवा ऋषय एव च ॥' इत्यादि सत्तत्त्वे ।

**(अर्हंनामा विष्णुः)**

बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि पुरुषैरहेयत्वादर्हंनामकानि तान्येव सूर्ये स्थितानि यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादर्हंनामकानि । एतदेवोक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीप ईक्षेत ।

**(उपसर्गो न निरर्थकः)**

नात्र जीवेश्वराभेदो विवक्षितः । उप समीपे ईक्षतेऽतिसमीपे दर्शनवचनात् । न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम् । न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित् ।

**टिप्पणी -**

प्रज्ञादिमय एवं स भूत्वेत्युक्तप्रकारेण प्रज्ञादिर्मे मयः प्रधान इति ज्ञानवान् भूत्वेत्येतावता पूर्णत्वात् समित्युपसर्गः किमर्थमित्यतः संशब्दार्थकथनपूर्वं सम्भूय देवता अप्येतीति वाक्यार्थं स्ववचनप्रमाणाभ्यां स्पष्टयति– **सम्भूयेत्यादिना** ।। युगपत् सर्वदेवताप्राप्तिप्रतीतेः क्रमेणेत्युक्तम् । नितरामाधिक्यं पुनःपुनर्ज्ञायित इति योज्यम् । तद् योऽहमित्येतत् स्ववचनेन व्याचष्टे– **बृहतीति** ।। एतेन यो यानि बृहतीसहस्रस्थितानि विष्णुरूपाणि तत् तानि पुरुषस्थितानि विष्णुरूपाणि पुरुषैरहेयत्वादहंनामकानीत्यर्थः । सोऽसावित्येतद् व्याचष्टे– **तान्येवेति** ।। यान्यहोरात्रगतानि तान्येवासौ सूर्ये स्थितानीत्यर्थः । 'तद् योऽहं सोऽसौ' इत्येतदेकवाक्यतयाऽपि व्याचष्टे– **बृहतीति** ।। यानि बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषाणां तच्छंसकत्वात् तानि पुरुषेषु द्वासप्ततिसहस्रनाडीषु स्थितानि पुरुषैरहेयत्वादहंनामकानि तान्येवासौ सूर्ये स्थितानि । उत्तरायणदक्षिणायनभेदेन भिन्नद्वासप्ततिसहस्रनाडीषु तावत्सङ्ख्याकसूर्यरश्मीनामाततत्वेनानुबन्धात् । 'योऽसौ सोऽहम्' इत्येतद् व्याचष्टे– **यानीति** ।। 'एतदु हैव' इत्येतद् व्याचष्टे– **एतदेवेति** ।। समीपे स्वान्तर्गततया । अपव्याख्यामपाकरोति–**नात्रेति** ।। स चासौ यश्च तद् योऽहं स प्रसिद्धोऽसौ सूर्य एव । उपचारनिवृत्त्यर्थमुच्यते योऽसौ सोऽहमिति । तदुक्तमृषिणा- सूर्यो जगतस्तस्थुषश्चाऽत्मा स्वरूपमिति । एतदैक्यमेवोपेक्षेतेक्षेत जानीयादभ्यासस्तात्पर्यार्थः । इत्यभेदोऽत्र विवक्षित इति न वाच्यमित्यर्थः । अत्रेश्वरः सूर्यः । अभेदश्च भागत्यागलक्षणया । तथाचेश्वरपदं शुद्धचैतन्यपरमिति । ब्रह्मैवेश्वरः कुतो न विवक्षित इत्यत आह–**उपेति** ।। उप समीपे ईक्षेते त्यति समीपे दर्शनवचनान्नात्रैतच्छब्देन जीवेश्वरैक्यं परामृश्यते । नहि स्वरूपभूतमैक्यमुप समीप ईक्षणीयमतो नारायणाख्यं सूर्यस्थं ब्रह्मैवैतच्छब्दपरामृष्टमिति भावः । ननूपेत्यस्योपसर्गमात्रत्वादुपेक्षेतेत्यस्येक्षेतेत्येवार्थः । उपसर्गाणामर्थान्तराभावादित्यत आह– **नचेति** ।। कुतो न युक्तमिति चेत् किमुपसर्गाणामनर्थकत्वं

सदा ऋतमवगतमिति प्रदर्शनाय पुनःपुनरित्युक्तम् । बृंहणाद् गुणैः पूरणात् । अन्तर्यामिरूपेण ज्ञाननिरोधपरिहरकत्वादनिरुद्धः 'प्रकर्षेण द्योतमानत्वात् प्रद्युम्नः' सम्यक् पुनःपुनः स्वविषये शास्त्राणां व्याख्यानेन कर्षकत्वात् स्वविषयताबुद्धिकर्षकत्वाद्वा सङ्कर्षणः । वानेन स्वस्मिन्नवस्थापनेन मुक्तिदानेन देवयति क्रीडादिगुणाकरान् करोति वानात् सूतेर्देवनादित्युक्तरीत्या सकलगुणप्रदत्वाद् वासुदेव इति प्रज्ञादिशब्दानामनिरुद्धादिशब्दसमानार्थकत्वं बोध्यम् ।

**भाष्यम्-**

**(बृहतीसहस्रोपासनया विष्णुपारम्यज्ञानं दृढमवतिष्ठति)**

**सम्भूयेत्यत्र समित्युपसर्गाद् बृहतीसहस्रसम्पादनानन्तरं भगवदाधिक्यं पुनराधिक्येन ज्ञायत इत्युक्तं भवति । भगवदाधिक्यमधिकं ज्ञात्वा देवता अपि क्रमेण प्राप्नोति ।**

'द्वासप्ततिसहस्राणां रूपाणां पर्युपासनात् ।
आधिक्यं ज्ञायते विष्णोर्नितरां हि पुनः पुनः ।।
प्राप्नोति देवताश्चैव केशवान्ताः क्रमेण तु ।
योग्या अस्याश्च विद्याया देवा ऋषय एव च ।।' इत्यादि सत्तत्त्वे ।

**(अहंनामा विष्णुः)**

बृहतीसहस्रस्थितानि विष्णुरूपाणि पुरुषे स्थितानि पुरुषैरहेयत्वादहंनामकानि तान्येव सूर्ये स्थितानि यान्येव सूर्ये स्थितानि तान्यपि सूर्यादिभिरहेयत्वादहंनामकानि । एतदेवोक्तं नारायणाख्यं परं ब्रह्मैव सर्वदा उप समीप ईक्षेत ।

**(उपसर्गो न निरर्थकः)**

नात्र जीवेश्वराभेदो विवक्षितः । उप समीपे ईक्षतेऽतिसमीपे दर्शनवचनात् । न च निरर्थकत्वमुपसर्गस्याङ्गीकर्तुं युक्तम् । न ह्यार्षेषु वेदादिषु व्याकरणनिरुक्तादिषु चोपसर्गाणां वैयर्थ्यमङ्गीकृतं कुत्रचित् ।

**टिप्पणी -**

प्रज्ञादिमय एवं स भूत्वेत्युक्तप्रकारेण प्रज्ञादिर्मे मयः प्रधान इति ज्ञानवान् भूत्वेत्येतावता पूर्णत्वात् समित्युपसर्गः किमर्थमित्यतः संशब्दार्थकथनपूर्वं सम्भूय देवता अप्येतीति वाक्यार्थं स्ववचनप्रमाणाभ्यां स्पष्टयति– **सम्भूयेत्यादिना** ।। युगपत् सर्वदेवताप्राप्तिप्रतीतेः क्रमेणेत्युक्तम् । नितरामाधिक्यं पुनःपुनर्ज्ञायित इति योज्यम् । तद् योऽहमित्येतत् स्ववचनेन व्याचष्टे– **बृहतीति** ।। एतेन यो यानि बृहतीसहस्रस्थितानि विष्णुरूपाणि तत् तानि पुरुषस्थितानि विष्णुरूपाणि पुरुषैरहेयत्वादहंनामकानीत्यर्थः । सोऽसावित्येतद् व्याचष्टे– **तान्येवेति** ।। यान्यहोरात्रगतानि तान्येवासौ सूर्ये स्थितानीत्यर्थः । 'तद् योऽहं सोऽसौ' इत्येतदेकवाक्यतयाऽपि व्याचष्टे– **बृहतीति** ।। यानि बृहतीसहस्रस्थितानि विष्णु-रूपाणि पुरुषाणां तच्छंसकत्वात् तानि पुरुषेषु द्वासप्ततिसहस्रनाडीषु स्थितानि पुरुषैरहेयत्वादहंनामकानि तान्येवासौ सूर्ये स्थितानि । उत्तरायणदक्षिणायनभेदेन भिन्नद्वासप्ततिसहस्रनाडीषु तावत्सङ्ख्याकसूर्यरश्मीनामाततत्वेनानुबन्धात् । 'योऽसौ सोऽहम्' इत्येतद् व्याचष्टे– **यानीति** ।। 'एतदु हैव' इत्येतद् व्याचष्टे– **एत-देवेति** ।। समीपे स्वान्तर्गततया । अपव्याख्यामपाकरोति–**नात्रेति** ।। स चासौ यश्च तद् योऽहं स प्रसिद्धोऽसौ सूर्य एव । उपचारनिवृत्त्यर्थमुच्यते योऽसौ सोऽहमिति । तदुक्तमृषिणा- सूर्यो जगतस्तस्थुषश्चाऽत्मा स्वरूपमिति । एतदैक्यमेवोपेक्षेतेक्षेत जानीयादभ्यासस्तात्पर्यार्थः । इत्यभेदोऽत्र विवक्षित इति न वाच्यमित्यर्थः । अत्रेश्वरः सूर्यः । अभेदश्च भागत्यागलक्षणया । तथाचेश्वरपदं शुद्धचैतन्यपरमिति । ब्रह्मैवेश्वरः कुतो न विवक्षित इत्यत आह–**उपेति** ।। उप समीपे ईक्षेते त्यति समीपे दर्शनवचनान्नात्रैतच्छब्देन जीवेश्वरैक्यं परामृश्यते । नहि स्वरूपभूतमैक्यमुप समीप ईक्षणीयमतो नारायणाख्यं सूर्यस्थं ब्रह्मैवैतच्छब्द-परामृष्टमिति भावः । ननूपेत्यस्योपसर्गमात्रत्वादुपेक्षेतेत्यस्येक्षेतेत्येवार्थः । उपसर्गाणा-मर्थान्तराभावादित्यत आह– **नचेति** ।। कुतो न युक्तमिति चेत् किमुपसर्गाणामनर्थकत्वं

निगमनिरुक्तव्याकरणबलात् कल्प्यते । उत स्वाचार्यवचनबलात् । आद्यं दूषयति– **नहीति** ॥

**भाष्यम्-**

**उक्तं च भगवता व्यासेन-**

**'नानर्थकः स्वरो वापि वर्णो वा कुत्रचिद्भवेत् ।**
**पदं वाक्यं कुतश्च स्यान्नाल्पार्थमपि कुत्रचित् ॥**
**उच्चाराद्यर्थमपि वा नास्ति किञ्चित्स्वरादिकम् ।**
**महार्थमेव सर्वं हि वेदे वा वैदिकेऽपि वा ॥' इति ।**

**सुकरं च सर्वपदानामनर्थकत्वकल्पनम् । यैश्च वाक्यैरर्थवत्त्वं प्रतीयते तेषामप्यनर्थकत्वमेव स्याद्विशेषाभावात् । न च मानुषवाक्येन वेदपदानामानर्थक्यं कल्प्यम् ।**

**टिप्पणी -**

निरर्थकत्वं स्मृतिविप्रतिषिद्धं चेत्याह– **उक्तं चेति** ॥ उच्चाराद्यर्थमिति छन्दोभङ्गभयेन श्लोकपूरणार्थमित्यर्थः । स्वरादिकं सर्वं महार्थमेवेत्यर्थः । अतिप्रसङ्गपराहतं चेत्याह– **सुकरं चेति** ॥ उपेत्युपसर्गस्य निरर्थकत्वे ईक्षेतेत्यादिपदानामपि निरर्थकत्वं स्यादविशेषादित्यर्थः । ननु ईक्ष दर्शनाङ्कनयोः इत्यादि तद्व्याख्यापरवाक्यैरर्थवत्त्वं तेषामित्यत आह–**यैश्च वाक्यैरिति** ॥ द्वितीयं दूषयति– **नच मानुषेति** ॥ ननूपसर्गा हि धातुलीनस्यार्थस्य व्यञ्जकानर्थान्तरप्रतिपादका इति हि भवद्भिरप्यङ्गी-कृतम् । 'ज्योतिश्चरणाभिधानात्' (ब्र.सू. १.१.२४) 'न भावोऽनुपलब्धेः' (ब्र.सू. २.२.४०) 'कृष्णा सा वर्णतश्चासीदुत्कृष्टत्वाच्च योषिताम्' (म.ता.नि. १८.९६) इत्यादौ तदवगमात् । सुधादौ तथा व्याख्यतत्वात् । तथा चोपेत्युप-सर्गोऽपीक्षणस्य सम्यक्त्वलक्षणार्थविशेषक एव । तथाचोपेक्षणं नामोपपन्नतयेक्षणं सम्यगीक्षणमेव पर्यवस्यति । तर्कताण्डवोक्तरीत्योपसर्गस्यार्थान्तरपरत्वेऽपि ईक्षति-

रीक्षणमाहोपसर्ग उपपन्नत्वमतो नानर्थक्यमिति चेन्न । तथात्वे प्रेक्षेत समीक्षेतेत्याद्युपसर्गप्रयोगः स्यान्नोपेति । तस्य सामीप्ये शक्तत्वात् । तस्योपव्याख्यानमित्यादावपि तस्योङ्कारस्योप समीपे शक्यतया विद्यमानस्यार्थस्य व्याख्यानं क्रियते । नतु शक्यार्थव्यवहितस्य लाक्षणिकार्थस्येत्यर्थाङ्गीकारात् । ऐक्येनेक्षणस्यानुपपन्नत्वेन समीक्षणत्वाभावाच्चेति भावः ।

**भाष्यम्-**

**(जीवेश्वरैक्याङ्गीकारे बाधकानि)**

**जीवेश्वरैक्याङ्गीकारे यो हंसोऽसावित्येव पूर्यते पुनर्योऽसौ सोऽहमिति व्यर्थम् । न ह्यस्य तेनैक्ये तस्यानेन भेदशङ्का भवति । अस्य तस्येति भेदाङ्गीकारे नाभेदो मुख्यः । किन्तु तदधीनत्वमेवान्यस्य भवति । स्नेहविशेषो वा । चैत्रो मैत्रो मैत्रश्चैत्र इतिवत् । तत्र ह्युभयस्नेहापेक्षया पुनर्वचनं युज्यते । अभ्यासत्वे ह्येकप्रकारेण प्रयोगो दृष्टः । अत्र हि प्रयोगद्वैविध्यं दृश्यते ।**

**'एकप्रकारा बहुशो वागभ्यास इतीरितः ।**
**अर्थान्तरार्था द्विविधा प्रयुक्तेति हि निर्णयः ॥' इति गारुडे ।**

**टिप्पणी -**

एवमेतच्छब्देनैक्यपरामर्शे एतदुपेक्षेतेत्युपपदवैयर्थ्यमभिधाय तद् योऽहमित्यत्रैक्यमेव नोक्तमतश्च तत्परामर्शोऽयुक्त इति भावेनाऽह– **जीवेति** ॥ जीवेश्वरैक्यस्यैतदर्थत्वाङ्गीकार इत्यर्थः । ननु 'तद् योऽहं सोऽसौ' इत्यत्र पुरुषानुवादेन तस्य सूर्येणैक्यमुच्यते । योऽसावित्यत्र सूर्यानुवादेन तस्य पुरुषेणैक्यमतो न वैयर्थ्यमित्यत आह– **नह्यस्येति** ॥ यत्परिहारार्थं पुनर्वचनमिति शेषः । किञ्चास्य पुरुषस्य तेनाभेदस्तस्य सूर्यस्यानेन पुरुषेणाभेद इति वाक्यार्थयोः पुरुषसूर्यधर्मिकयोरभेदयोरभेदो वा भेदो वा । नाऽद्यो वैयर्थ्यानिस्तारात् । द्वितीये दोषमाह– **अस्य तस्येति** ॥ अस्य सूर्येणाभेदस्तस्य पुरुषेणाभेद इति वाक्यार्थयोः पुरुष-

सूर्यधर्मिकयोरभेदयोर्भेदाङ्गीकारे नायमभेदो मुख्यः । नहि पुरुषसूर्यधर्मिकयोरभेदयोर्भिन्नत्वे पुरुषसूर्ययोरभेदो मुख्यः स्वरूपतादात्म्यलक्षणो भवति । किन्तु 'यदधीना यस्य सत्ता तत् तदित्येव भण्यते' इत्युक्तदिशा राजा राष्ट्रं राष्ट्रमेव राजेतिवत् स्वस्वामिनोरभेदोपचारो वा । चैत्र एव मैत्रो मैत्र एव चैत्र इतिवत् स्नेहविशेषेण मत्यैक्यं वेत्यर्थः । उपचरिताभेदपक्षेऽपि पुनर्वचनं व्यर्थमित्यत आह– **तत्र हीति** ॥ ननु तात्पर्यद्योतनायाभ्यासोऽयमतो न वैयर्थ्यमित्यत आह– **अभ्यासत्व इति** ॥ द्विविधा प्रयुक्ता चेदर्थान्तरार्थाऽर्थान्तरपरा ।

**भाष्यम्-**

## (नात्राहंशब्दः जीववाची)

**अहंशब्दस्याहेयत्वाङ्गीकारे नराहेयत्वं सुराहेयत्वं चोच्यत इति न वैयर्थ्यम् । 'अः इति ब्रह्म तत्रागतमहमिति न वा अहमिमं विजानाति तस्योपनिषदहम्' इत्यादौ विष्णोरेवाहेयत्वेनाहंनामकत्वप्रसिद्धेः । अहंशब्दस्यास्मच्छब्दार्थत्वे अहमिमं न जानातीति न युज्यते । तस्य 'भूरिति शिरो भुव इति बाहू इत्यादिनाक्षिसंस्थो भगवानेव ह्यहंशब्दोदितः । न हि जीवस्याक्षिणि पृथक्शिरोबाह्वादिकं विद्यते । हृदि स्थितमेव हि तस्य [1]स्वरूपम् । जागरितेऽप्यक्ष्यादिषु विशेषसन्निहितं भवति दीपप्रकाशवत् । 'अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद् हृदि हि ।' (ब्र.सू. २.३.२५) 'गुणाद्वाऽऽलोकवत्' (ब्र.सू. २.३.२६) इति च सूत्रात् ।**

**टिप्पणी -**

तद् योऽहमित्यहंशब्दस्य पुरुषैरहेयत्वार्थाङ्गीकारे योऽसौ सोऽहमिति द्वितीयाहंशब्दस्य वैयर्थ्यमित्यत आह– **अहंशब्दस्येति** ॥ अहंशब्दस्य भगवत्परत्वे वाक्यत्रयं पठति–**अ इति ब्रह्मेति** ॥ इत्यकारेण ब्रह्मोच्यते । तत्र ब्रह्मण्यहमित्यपि नामवाचकतया गतमवगतम् । अहमहंशब्दवाच्यमिमं भगवन्तं न जानाति ।

---

१. रूपम् - ह.ती.पा.

वै । तस्य ब्रह्मण उपनिषद्रहस्यं नाम । नवा अहमिति द्वितीयश्रुतौ हंशब्दोऽस्मच्छब्दादेशो जीवपरः किन्न स्यादित्यत आह– **अहमिति** ।। पुरुष-व्यत्ययस्त्वगतिका गतिरिति भावः । ननु 'तस्योपनिषत्' इति तृतीयश्रुतौ तच्छब्देन जीवः परामृश्यत इति किन्न स्यादित्यत आह– **तस्येति** ।। 'योऽयं दक्षिणेऽक्षन् पुरुषस्तस्य भूरिति शिरः, भुव इति बाहू, सुवरिति प्रतिष्ठे, तस्योपनिषदहम्' इत्यक्षिस्थतया प्रकृतो भगवानेव परामृश्यतं इत्यर्थः । ननु 'दक्षिणेऽक्षन् पुरुषः' इति प्रक्रान्तोऽपि पुरुषो जीव एवेति चेत् स किं यस्येदमक्षि स एव स्वाक्षिणि शिरोबाह्वादिमत्त्वेनोच्यते । उतन्यस्तदिन्द्रियाद्यधिष्ठाता तत्त्वदेवादिर्जीवः । आद्येऽपि जीवरूपं शिरोबाह्वादिमत्तया हृदि वर्तत इत्यङ्गीकृत्याक्षिण्यपि पृथक् शिरोबाह्यादिकमस्तीत्युच्यते । उताक्षिण्येव वर्तते हृदि नास्तीति । आद्यं दूषयति– **नहीति** ।। प्रमाणाभावादिति भावः । प्रमाणविरुद्धं चेत्याह– **हृदीति** ।। तस्य स्वरूपं शिरोबाह्वादियुक्तं विशिष्टं रूपं हृद्येव स्थितं हि 'हृदि ह्येष आत्मा' (प्र. ३६) इत्यादिश्रुतिपसिद्धमित्यर्थः । द्वितीयमपि दूषयति–**हृदीति** ।। हृदि स्थितमेव नाक्षिस्थितमित्यर्थः । ननु जीवस्य कथम् अक्षिण्यपि शिरोबाह्वादिवैशिष्ट्येनावस्थाने प्रमाणाभावः । तत्र तत्र परिज्ञानान्यथानुपपत्तेरेव प्रमाणत्वात् । 'चक्षुरादिषु रूपाणि जाग्रत्काले तयोः सदा । बहूनि सन्ति तान्येव यदैकीभावमाप्नुयुः । हृदयस्थेन रूपेण तदा जीवो न किञ्चन । जानातीति विदुः प्राज्ञाः' इति बृहद्भाष्योदाहृतप्रमाण-सद्भावाच्चेत्यत आह– **हृदीति** ।। जागरितेऽपि हृद्येव शिरआद्यङ्गसाकल्येन स्थितं तस्य स्वरूपमक्ष्यादिष्विन्दियेषु तत्र तत्र परिज्ञानाय वक्ष्यमाणरीत्या प्रकाशतोऽंशतो वा विशेषतः सन्निहितं भवति । नतु शिरआद्यङ्गसाकल्येन । ज़क्षुरादिषु रूपाणीत्यत्रापि रूपपदेन विशेषसन्निधानमेवोक्तमिति भावः । अङ्गसाकल्येनैकत्रावस्थानेऽपि सन्निधानमन्यत्र दृष्टान्तेनाऽह– **दीपेति** ।। यथा दीपाख्यं ज्योतिः स्वरूपेण वर्त्याद्यधिष्ठितमपि प्रकाशतो गृहं व्याप्य तिष्ठति

तथेत्यर्थः । उपलक्षणमेतच्चन्दनबिन्दुवदित्यपि द्रष्टव्यम् । यद्वा, न वयमेकदैव जागरिते हृद्यक्षिणि च पृथक् शिरोबाह्वाद्यङ्गसाकल्यमस्तीति वदामः । किन्तु सुप्तौ जीवोऽङ्गसाकल्येन हृदि वर्तते । 'हृदि ह्येष आत्मा' इति वाक्यं तद्विषयम् । जाग्रदवस्थायां हृदयं परित्यज्य दक्षिणाक्षि प्रति गच्छति स्वप्ने कण्ठदेशम् । तदुक्तं 'हृदयस्थात् पराज्जीवो दूरस्थो जाग्रदेष्यति । समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन्' इति । तथा च जाग्रत्कालविवक्षया दक्षिणाक्षिस्थस्याङ्गसाकल्यान्मानमविरुद्धमित्यत आह– **हृदि स्थितमेवेति** ॥ सर्वदा हृदि स्थितमेव तस्य स्वरूपं जागरितेऽपिपदेन स्वप्नसुषुप्त्युभयावस्थामूर्च्छासु अक्ष्यादिषु अक्षिकण्ठदेशहृदयेषु विशेषतः सन्निहितं भवति दीपप्रकाशवत् । यथा दीपाख्यं ज्योतिः स्वरूपेण वर्त्यधिष्ठितं तत्प्रकाशस्तु गृहे सर्वत्र स्थितः सूक्ष्मवस्त्रेण रुद्धः । वस्त्रान्तर्भागे बहुलं सन्निहितस्तद्वद् बहिरल्पसन्निधियुक्तः घटादिना प्रदीपावरणे तत्कलाविशेषोऽपि दीपदेशमेव गच्छति । तथा जीवः सर्वदा स्थितः हृदये । जाग्रत्काले तत्र तत्र परिज्ञानाय प्रकाशतः सूक्ष्मचिद्द्रव्यरूपेण वा सर्वशरीरं व्याप्तः । दक्षिणाक्षिणि तु कलाविशेषेण सन्निहितः । तथा स्वप्नादावपि कण्ठदेशादौ कलाविशेषेण सन्निहितः पुनरविद्यावृतः सुप्तौ हृदयस्थेऽङ्गसाकल्ययुक्ते स्वस्मिन्नन्तर्भावितकलाविशेषोऽवतिष्ठते । कलाविशेषविवक्षयैव 'हृदयस्थात् पराज्जीवः' इति वचनमिति भावः । अङ्गसाकल्येन हृद्यवस्थानं चिद्गुणेन चन्दनांशवत् सूक्ष्मांशैर्वाव तस्यावस्थानमित्यत्र सूत्रसम्मतिमाह– **अवस्थितीति** ॥ ननु यदुक्तम् 'अविरोधश्चन्दनवद्' (ब्र.सू. २.३.२३) इति तदयुक्तम् । चन्दनबिन्दोर्घनी-भूतांशिनैकदेशेऽवस्थान सूक्ष्मांशैः परितोऽवस्थानमित्यवस्थितौ वैशेष्याद् युज्यते सर्वशरीरव्याप्तिर्नैवं प्रकृत इति चेज्जीवस्यापि 'हृदि ह्येष आत्मा' इति प्रमाणबलाद्धृदि समग्ररूपेणावस्थानाभ्युपगमादिति प्रथमसूत्रार्थः । यथाऽऽलोकस्य प्रकाशगुणेन व्याप्तिर्ज्योतीरूपेणाव्याप्तिरेवं चिद्गुणेन व्याप्तिर्जीवरूपेणाव्याप्तिरिति वेति द्वितीय-सूत्रार्थः ।

**भाष्यम्-**

**'आदित्ये हिरण्मयः पुरुषस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादि सूर्ये स्थितस्य विष्णो रूपमुक्त्वाक्षिस्थितस्यापि तस्यैतस्य तदेव रूपमित्यादि-कथनाच्च। 'स एष एवैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे' इत्यादिलोकाधिपत्यकथ-नाच्च। न हि कश्चिद् भिक्षुकः पातालाद्यधिपतिरित्यत्र किञ्चिन्मानम्। तस्माद् भगवानेवाहेयत्वादहंनामा। 'चक्षुर्मित्रस्य वरुणस्याग्नेः।' (ऋ. १.११४.१) 'जगतस्तस्तुषश्चात्मा' (ऋ. १.११४.१) इत्यादिजीवेभ्यो भेददर्शनाच्च।**

**'यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।**

**यच्चास्य सन्ततोभावस्तस्मादात्मेति भण्यते॥' इति भारते।**

**टिप्पणी -**

ननु 'तस्योपनिषदहम्' इति बृहदारण्यके तच्छब्देन 'योऽयं दक्षिणेऽक्षन् पुरुषः' इत्युक्तोऽक्षिस्थपुरुषः परामृश्यते। स च पुरुषो यस्येदमक्षि स जीवो न भवति। नापि विष्णुः किन्तु जीवानामक्षिस्थः सूर्याख्यो जीवविशेष एवेति प्राक् शङ्कितद्वितीयविकल्पं दूषयन् प्रथमपक्षे दूषणान्तरमाह– **आदित्यो हिरण्मय इति॥ इत्यादिकथनाच्चेति॥** इत्यादिना छान्दोग्ये समाख्यानाच्चाक्षि-संस्थितो भगवानेवाहंशब्दोदितः। अयमत्रोत्तरक्रमः। 'योऽयं दक्षिणेऽक्षन् पुरुषः' इति बृहदारण्यकेऽक्षिस्थपुरुषो विष्णुरेव। न सूर्यः नापि जीवः। 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति छान्दोग्यसमाख्यानात्। नच तत्रापि सूर्यादिर्जीवविशेष एवाक्षिस्थपुरुष इति वाच्यम्। तत्राऽदित्ये हिरण्मयपुरुषमुक्त्वा तस्य पुण्डरीकाक्षत्व-मभिधायानन्तरमेव 'य एषोऽन्तरक्षिणि पुरुषः' इत्युक्तस्याक्षिस्थितस्यापि 'तस्यैतस्य तदेतदेव रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम्' इति हिरण्मयत्व-पुण्डरीकाक्षत्वाद्यादित्यान्तःस्थपुरुषलक्षणलक्षितत्वकथनात् तस्य च विष्णुलक्षणत्वा-दिति। छान्दोग्येऽक्षिस्थपुरुषस्य जीवत्वव्यावर्तकं लिङ्गान्तरमाह– **स एष एवैतस्मादिति॥** किञ्च तद् योऽहमित्यत्राहंशब्दस्यास्मच्छब्दार्थत्वमङ्गीकृत्य तस्य

सूर्याभेदे व्याख्यायामाने 'सूर्य आत्मा' इत्युदाहृतमन्त्रविरोधस्तत्र सूर्यस्य जीवेभ्यो भेदप्रतीतेरित्याह– चक्षुरिति ।। मित्रस्य वरुणस्याग्नेस्तदितरस्य जङ्गमस्य स्थावरस्य च चक्षुर्ज्ञानप्रदः आत्मा चेत्यर्थः। सूर्य आत्मा स्वरूपमिति किन्न स्यादित्याह– यच्चेति ।। हि यस्मात् सर्वान् गुणानाप्नोति यस्मात् सर्वं भृत्यतयाऽऽदत्ते स्वीकरोति यस्माच्चेह लोके विद्यमानान् विषयानत्ति यस्माच्चास्य भावो ज्ञानादिरूपो धर्मः सत्ता वा इह काले देशे च सम्यक् ततो विस्तृतः तस्मादात्मेति भण्यत इति पृथगन्वयः ।

**भाष्यम्-**

**(नोपासकस्य देवेषु लयः)**

**देवता अप्येति प्राप्नोतीत्येव चार्थः। लयश्चेद् देवतास्वप्येतीति स्यात्। न च विनाशः पुरुषार्थः। मयट्शब्दस्य भगवत्प्राधान्यार्थत्वानङ्गीकारे सम्भूय देवता अप्येतीति ल्यप् न युज्यते। उपासनायास्तु सम्पन्नस्य परस्तादित्युक्तत्वात् पूर्वमेव सिद्धिः।**

**'सर्वस्माद्भिन्नमीशेशं जीवाभेदेन यः स्मरेत्।**
**स यात्यन्धन्तमो घोरं नित्यातिशयदुःखदम् ।।**
**सर्वोत्तमं तु यो विष्णुं भिन्नं जानाति सर्वतः।**
**नित्यानन्दमसौ याति वासुदेप्रसादतः ।।' इति चैतरेयसंहितायाम्।**

**अतः सर्वव्यतिरिक्तः सर्वोत्तमः सर्वगुणपरिपूर्णो नारायण इति सिद्धम्।**

**सर्वप्रमाणसिद्धत्वं वक्तुमाध्यायमूलतः।**
**अध्यायान्ते द्विरुक्तिः स्यात् पूर्वोक्तस्यावधारणे ।। इति शब्दनिर्णये ।। ४ ।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयभाष्ये द्वितीयप्रघट्टके द्वितीयोऽध्यायः ।। २ ।। २ ।।**

**टिप्पणी -**

न केवलं 'तद् योऽहम्' इत्यस्यैक्यपरत्वे तत्रोदाहृतमन्त्रविरोधः पूर्ववाक्यविरोधश्च किन्तु देवता अप्येतीति फलवाक्यविरोधश्च । तत्र देवताप्राप्त्युक्तेरिति भावेनाप्येतीत्यस्योक्तं प्राप्त्यर्थत्वं साधयति– **देवता अप्येतीति** ।। नन्वप्ययो लयः प्रसिद्धः तत्कथमेतीति प्राप्त्यर्थत्वमित्यत आह–**लयश्चेदिति** ।। दूषणान्तरमाह–**नचेति** ।। ननु मयटस्तादात्म्येऽपि स्मरणाद् ब्रह्ममयो ब्रह्मीभूत इति पूर्ववाक्य एवैक्योक्तेः कथं भेदस्यैवात्र प्रकृतत्वमित्यत आह– **मयट्शब्दस्येति** ।। तादात्म्यार्थाङ्गीकारे चेति ग्राह्यम् । ब्रह्मैक्यस्यानागन्तुकत्वात् सम्भूयेत्येतन्न युज्यते देवता अप्येतीति च न युज्यते । नहि ब्रह्मीभूतस्य देवताप्राप्तिस्तत्र लयो वा युज्यत इति भावः । ननु मयाऽपि ब्रह्ममयो ब्रह्मीभूतोऽहमित्युपासनावान् सम्भूयेति व्याक्रियते । अतो ब्रह्मीभावस्य नित्यसिद्धत्वेऽपि नानुपपत्तिरित्यत आह– **उपासनाया इति** ।। ननु भेदोपासनायाः पूर्वसिद्धत्वेऽपि तस्य सम्पन्नस्य परस्तात् प्रज्ञादिभेदोपासनस्याऽवश्यकत्वादित्यत आह– **सर्वस्मादिति** ।। अभेदोपासनस्य तमःप्रापकतया भेदेन सर्वोत्कर्षोपासकस्य च मोक्षोक्तेर्नैवं श्रुत्यर्थो वर्णनीय इति भावः । खण्डार्थमुपसंहरति– **अत इति** ।। बृहतीसहस्रविद्योक्तो भेदो न मुमुक्षुणोपास्यः । किन्त्वेतत् प्रज्ञामय इत्यादि सन्निहितोक्तमैक्यमेवोपेक्षेतोपासीतेति सन्निधानोक्त्यैक्योपासने तात्पर्यावधारणायाभ्यास इत्यपव्याख्यां प्रमाणेन निराचष्टे– **सर्वेति** ।। आ अध्यायमूलत अध्यायमूलं प्रारभ्योक्तस्य सर्वस्य । नतु सन्निहितस्योक्तस्य । तथाचोक्तसर्वावधारणे ऐक्यबाधान्नैक्यपरत्वमन्तिमस्यापीति भावः ।।

**।। इति श्रीमद्विट्ठलाचार्यपुत्रेण श्रीनिवासेन रचितायां ऐतरेयभाष्यार्थरत्नमालायां द्वितीयप्रघट्टके द्वितीयोऽध्यायः ।।**

**खण्डार्थः–**

यत् तदेतं महाव्रते कर्मणि नियुक्तम् । अहार्यत्वादपरिहार्यत्वादवश्यं महाव्रते उच्चारणीयत्वादहर्नाकम् । यद्वा, सुत्याहःसूच्चार्यत्वादहर्नामकं बृहतीसहस्रं शंसिष्यन्तं

प्रतिपाद्यविष्णुवायुदेवतानुस्मरणपूर्वं शंसितुं इच्छन्तं विश्वामित्रं प्रति तदाभिमुख्येन । तं प्रति वक्तुं वा । स विष्णुर्वायुश्चेन्द्रे उपनिषसादाविष्टोऽभूत् । अथ ताभ्यामाविष्टः स इन्द्रः विश्वामित्रमुपनिषसाद । शंसेत्यादरोपसत्तिपूर्वं निषण्ण उपविष्टोऽभूत् । स विश्वामित्रस्तवेदं स्तोष्यमाणं बृहतीसहस्रमन्नं भोग्यं तर्पकं खलु भूयादित्यभिव्याहृत्य प्रीत्या शासनावचनमुक्त्वाभिसम्यग् यज्ञाङ्गत्वेन भक्तिपूर्वं शशंस । तेन शंसनेनेन्द्रस्य प्रियम् । धामोप प्रियस्य धाम्नो लोकस्य समीपं तत्प्राप्तौ समीपसाधनं प्रसादमेयाय प्राप । तत्कथमित्यतः तद्वचनादित्युच्यते– **तमिन्द्र इति** ॥ हे ऋषे त्वं मे प्रियं धामोपागा इत्युवाचेति सम्बन्धः । अन्यच्चोवाचेत्युच्यते– **स इति** ॥ ऋषे लोकप्रापकप्रसादं प्राप्तवान् स त्वं द्वितीयवारं शंसेति चोवाचेत्यन्वयः । अत्र प्रियं धाम पुरम् । तृतीयवारं प्रिंय धामान्तःपुरम् । हे ऋषे त्वं मे प्रियं धामोप मदन्तःपुरप्राप्तिसाधनप्रसादमगाः । वरमभीष्टं पुनरपि ददानीतीन्द्र उवाच । स एवं प्रलोभितोऽपि विश्वामित्रः वरान्तरमपृष्ट्वेन्द्राविष्टं त्वामेव कोऽयं विष्णुश्चेत् कीदृश इति जानीयामतो ब्रूहीत्युवाचापृच्छत् । तं प्रतीन्द्रः कीदृशः इत प्रश्नस्य तावदुत्तरमुवाच । किमिति? ऋषे इन्द्राविष्टोऽहमहेयत्वादहंनामा प्रकृष्टानन्दरूपत्वात् प्राणनामा असना-च्छत्रूणां निरसनान्मिनुतेः सर्वस्य ज्ञातृत्वाज्ज्ञानरूपत्वाज्ज्ञापनाद्वाऽस्मिनामा । प्रत्यक् प्राणनामैव त्वयि स्थस्ततत्वाद् वेत्तृत्वाच्च त्वमिति नामा प्रत्यक् पराक् च वर्तमानः प्राणनामैवं परोक्षं सर्वभूतेषु स्थितः सर्वाणि सर्वगुणपूर्णत्वात् सर्वस्वामित्वाद् बहुरूपत्वाच्च सर्वाणीति नामवान् देशतः कालतो गुणतश्च सर्वरूपेषु प्रभूतत्वात् पूर्णत्वाद् बहुरूपत्वाच्च भूतानीति नामवान् प्राणनामा भगवानेव सन्निहितवस्तुषु स्थित एष इति नामवान् आसमन्तादीशत्वात् सर्वैश्वर्यस्वरूपत्वादिति यावत् । य एष परमैश्वर्ययुक्तः स एव सूर्यसंस्थः सन् लोकं तपति । अनीश्वरस्य तदयोगादिति भावः । स सूर्यान्तर्गत एवाहमेतेन रश्म्यन्तर्गतेन विष्ण्वाख्येन रूपेण सर्वा दिशोऽविष्टोऽस्मि । अतः स्वस्य सर्वलोकतापकत्वं युक्तम् ।

एतेन सर्वत्र प्रवेशनाद् विष्णुनामा चेत्यप्युक्तं भवति । एवं परमात्मनः सर्वनामकत्वमुक्त्वा तत्र युक्तिरुच्यते– **तस्येति** ।। तस्य सर्वनामवतो मेऽन्नमन्नाभिमानिनी श्रीरन्नं भोग्यं तर्पकं, कुतः? मित्रमतिप्रियम् । तत्र ज्ञापकम्– **दक्षिणमिति** ।।दक्षिणभागे इनः पतिर्यस्य तद्दक्षिणम् । अतिप्रियत्वाभावे स्वार्धशरीरतया तस्याः स्थापनानुपपत्तेरिति भावः । अन्नाभिमानिनी श्रीरित्युक्तम् । किं तदन्नमित्यत उच्यते– **तदिति** ।। तच्छ्रियाऽभिमतमन्नं विश्वामित्रेण सम्पादितत्वाद् वैश्वामित्रं बृहतीसहस्रमित्यर्थः । तथाच विष्ण्वादिसर्वनामवाच्यत्वादेव भगवतस्तद्व्याख्यानरूपं बृहतीसहस्रं भगवदन्तरङ्गरमाभिमतं सत् तर्पकं जातमन्यथा तन्न स्यादिति भावः । एतेन सहान्नमित्यभिव्याहृत्येत्येतदपि विवृतं भवति । इन्द्राविष्टः कोऽयमिति प्रश्नस्योत्तरमुच्यते– **एष इति** ।। एष इन्द्राविष्टोऽहमादित्यमण्डले स्थित्वा तपन् विष्णुरस्मीति स्वरूपप्रश्नस्योत्तरमुवाचेत्यर्थः । हेत्यादित्यमण्डलस्थस्य नारायणत्वं विश्वामित्रस्य प्रसिद्धमिति सूचयति ।। ३ ।।

**।। इति द्वितीयप्रघट्टके द्वितीयोऽध्यायः ।।**

## ॥ अथ द्वितीयप्रघट्टके तृतीयोऽध्यायः ॥

**उपनिषत्-**

**(बृहतीसहस्रे पञ्चरूपिणो भगवत उपासनम्)**

**यो हवा आत्मानं पञ्चविधमुक्थं वेद यस्माद्धीदं सर्वमुत्तिष्ठति स सम्प्रतिवित् ।**

**खण्डार्थः**

'एषः पन्थाः' इत्यादौ प्रकृतस्य नारायणस्य नारायणनारायणो नारायणवासुदेवः नारायणसङ्कर्षणः नारायणप्रद्युम्नः नारायणानिरुद्धः इति पञ्चमप्रभेदेन पञ्चधा प्रभिन्नबृहतीसहस्रादिस्थानगतत्वादिमाहात्म्यकथनपूर्वं सर्वशब्दवाच्यत्वमेव प्रपञ्च्यतेऽस्मिन् अध्याये- **यो ह वा इति** ॥ योऽधिकायाऽत्मानं नित्याततगुणं स्वयञ्च सनातनं परमचेतनं नारायणमुक्तरीत्या नारायणादिरूपेण पञ्चविधं यस्मात् कारणाद् यस्मान्नारायणादिदं सर्वमुत्तिष्ठति तस्मादुक्थनामकं पञ्चविधे बृहतीसहस्राख्ये उक्थे स्थितं वेद । स सम्प्रतिवित् सम्यग्ज्ञाता ह वा इत्यर्थः ।

**भाष्यम्-**

योऽसौ नारायणो देवः परमात्मा सनातनः ।
नित्याततगुणत्वात् स आत्मेत्युक्तः सदा श्रुतौ ॥
नारायणादिरूपेण पञ्चधाऽवस्थितः सदा ।
सर्वस्योत्थापकत्वात् स उक्थमित्यभिधीयते ॥
बृहतीसहस्ररूपे च स उक्थे पञ्चधा स्थितः ।
पञ्चभेदं हि तच्छस्त्रं तृचाशीतित्रयं च यत् ॥
पूर्वापरं तृचाशीत्या इति पञ्चात्मकं हि तत् ।
प्रथमे पञ्चकाद् भागे स्थितो नारायणः स्वयम् ।
ऋकृत्रयाशीतिके पूर्वे गायत्रीच्छन्दआत्मके ॥

वासुदेवः स्थितो नित्यमृगशीतित्रये तथा।
द्वितीये बृहतीच्छन्दस्यसौ सङ्कर्षणः स्थितः॥
यस्याऽवेशबलेनैव जीवसङ्कर्षणोऽपरः।
पृथिवीं बिभर्ति सततं तत्प्रसादात्तवैभवः॥
तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः।
प्रद्युम्नरूपी सततं स्थितो यस्यैव सन्निधेः॥
कामः प्रद्युम्ननामाऽभूत् तत्प्रसादात्तवैभवः।
उक्थस्यैवान्त्यभागे तु सोऽनिरुद्धो हरिः स्थितः॥
कामपुत्रोऽनिरुद्धाख्यां यदावेशेन लब्धवान्।
एवं पञ्चात्मकं विष्णुं बृहत्युक्थस्य देवताम्॥
यो वेद सम्यग् वेत्ता सः .......... ।

**टिप्पणी -**

'यो ह वा आत्मानम्' इत्यत्र शरीरोपादानत्वादात्मानं पञ्चविधं पृथिव्यादिभूतमङ्कुराद्युत्थापकत्वादुक्थं वेदेत्यन्यथा प्रतीयते। किञ्चाऽत्मा पञ्चविध इत्यनुक्तत्वात् पञ्चविधमात्मानं यो वेदेति सिद्धवन्निर्देशोऽयुक्तः। तथा वेदनमात्रमेवोपक्षितम्। वस्तुतो न पञ्चविधत्वमिति च प्रतीयतेऽत 'आत्मा पञ्चविध उक्थः' इति वाक्यं भित्त्वाऽऽत्मा पञ्चविध इत्यंशं तावद् व्याचष्टे– **योऽसाविति**॥ तत्राऽत्मेत्यस्य पतिपदम् नारायण इति। प्राङ्नारायणस्याप्रकृतत्वात् कथमनुवाद इत्यत 'एष पन्थाः' इति प्रकृतत्वं दर्शयितुम्– **योऽसाविति**॥ परमात्मा परमचेतनः सनातनो नित्य इत्यात्मशब्दस्य प्रवृत्तिनिमित्तद्वयं विशेषणरूपेणोक्त्वा निमित्तान्तरमुक्तम्– **नित्येति**॥ नित्यगुणत्वाद् व्याप्तगुणत्वाच्चेत्यर्थः। गुणानां नित्यत्वेऽपि गुणसम्बन्धः कादाचित्क इति भ्रमं वारयितुं सदेत्युक्तम्। नारायणादिरूपेण नारायणनारायणो नारायणसङ्कर्षण इत्यादिरूपेणेत्यर्थः। यस्मादिदं सर्वमुत्तिष्ठति तस्मादुक्थ इत्यस्यार्थः– **सर्वस्येति**॥ पञ्चविधमुक्थमित्यस्यार्थान्तरमाह–

## ॥ अथ द्वितीयप्रघट्टके तृतीयोऽध्यायः ॥

**उपनिषत्-**

**(बृहतीसहस्रे पञ्चरूपिणो भगवत उपासनम्)**

योहवा आत्मानं पञ्चविधमुक्थं वेद यस्माद्धीदं सर्वमुत्तिष्ठति स सम्प्रतिवित् ।

**खण्डार्थः**

'एषः पन्थाः' इत्यादौ प्रकृतस्य नारायणस्य नारायणनारायणो नारायणवासुदेवः नारायणसङ्कर्षणः नारायणप्रद्युम्नः नारायणानिरुद्धः इति पञ्चमप्रभेदेन पञ्चधा प्रभिन्नबृहतीसहस्रादिस्थानगतत्वादिमाहात्म्यकथनपूर्वं सर्वशब्दवाच्यत्वमेव प्रपञ्च्यतेऽस्मिन् अध्याये– **यो ह वा इति** ॥ योऽधिकायाऽत्मानं नित्याततुगुणं स्वयञ्च सनातनं परमचेतनं नारायणमुक्तरीत्या नारायणादिरूपेण पञ्चविधं यस्मात् कारणाद् यस्मान्नारायणादिदं सर्वमुत्तिष्ठति तस्मादुक्थनामकं पञ्चविधे बृहतीसहस्राख्ये उक्थे स्थितं वेद । स सम्प्रतिवित् सम्यग्ज्ञाता ह वा इत्यर्थः ।

**भाष्यम्-**

योऽसौ नारायणो देवः परमात्मा सनातनः ।
नित्याततगुणत्वात् स आत्मेत्युक्तः सदा श्रुतौ ॥
नारायणादिरूपेण पञ्चधाऽवस्थितः सदा ।
सर्वस्योत्थापकत्वात् स उक्थमित्यभिधीयते ॥
बृहतीसहस्ररूपे च स उक्थे पञ्चधा स्थितः ।
पञ्चभेदं हि तच्छस्त्रं तृचाशीतित्रयं च यत् ॥
पूर्वापरं तृचाशीत्या इति पञ्चात्मकं हि तत् ।
प्रथमे पञ्चकाद् भागे स्थितो नारायणः स्वयम् ।
ऋक्त्रयाशीतिके पूर्वे गायत्रीच्छन्दआत्मके ॥

वासुदेवः स्थितो नित्यमृगशीतित्रये तथा।
द्वितीये बृहतीच्छन्दस्यसौ सङ्कर्षणः स्थितः॥
यस्याऽवेशबलेनैव जीवसङ्कर्षणोऽपरः।
पृथिवीं बिभर्ति सततं तत्प्रसादात्तवैभवः॥
तृतीयायां तृचाशीत्यामुष्णिक्छन्दसि केशवः।
प्रद्युम्नरूपी सततं स्थितो यस्यैव सन्निधेः॥
कामः प्रद्युम्ननामाऽभूत् तत्प्रसादात्तवैभवः।
उक्थस्यैवान्त्यभागे तु सोऽनिरुद्धो हरिः स्थितः॥
कामपुत्रोऽनिरुद्धाख्यां यदावेशेन लब्धवान्।
एवं पञ्चात्मकं विष्णुं बृहत्युक्थस्य देवताम्॥
यो वेद सम्यग् वेत्ता सः ..........।

**टिप्पणी -**

'यो ह वा आत्मानम्' इत्यत्र शरीरोपादानत्वादात्मानं पञ्चविधं पृथिव्यादिभूतमङ्कुराद्युत्थापकत्वादुक्थं वेदेत्यन्यथा प्रतीयते। किञ्चाऽत्मा पञ्चविध इत्यनुक्तत्वात् पञ्चविधमात्मानं यो वेदेति सिद्धवन्निर्देशोऽयुक्तः। तथा वेदनमात्रमेवोपक्षितम्। वस्तुतो न पञ्चविधत्वमिति च प्रतीयतेऽत 'आत्मा पञ्चविध उक्थः' इति वाक्यं भित्त्वाऽऽत्मा पञ्चविध इत्यंशं तावद् व्याचष्टे– **योऽसाविति**॥ तत्राऽत्मेत्यस्य पतिपदम् नारायण इति। प्राङ्नारायणस्याप्रकृतत्वात् कथमनुवाद इत्यत 'एष पन्थाः' इति प्रकृतत्वं दर्शयितुम्– **योऽसाविति**॥ परमात्मा परमचेतनः सनातनो नित्य इत्यात्मशब्दस्य प्रवृत्तिनिमित्तद्वयं विशेषणरूपेणोक्त्वा निमित्तान्तरमुक्तम्– **नित्येति**॥ नित्यगुणत्वाद् व्याप्तगुणत्वाच्चेत्यर्थः। गुणानां नित्यत्वेऽपि गुणसम्बन्धः कादाचित्क इति भ्रमं वारयितुं सदेत्युक्तम्। नारायणादिरूपेण नारायणनारायणो नारायणसङ्कर्षण इत्यादिरूपेणेत्यर्थः। यस्मादिदं सर्वमुत्तिष्ठति तस्मादुक्थ इत्यस्यार्थः– **सर्वस्येति**॥ पञ्चविधमुक्थमित्यस्यार्थान्तरमाह–

**बृहतीति** ।। हि यस्मात् तच्छस्त्रं बृहतीसहस्रंपञ्चप्रभेदं तस्माद् बृहतीसहस्रंरूपे तत्प्रभेदे स नारायणः पञ्चधा स्थित इत्यन्वयः । केन प्रकारेण बृहतीसहस्रस्य पञ्चभेदत्वम् तत्राऽऽह– **तृचेति** ।। यत् तृचाशीतित्रयं तिसृणाम् ऋचां समाहारस्तृचं तस्याशीतित्रयं यच्च तृचाशीत्यास्तृंचाशीतित्रयस्य पूर्वमपरं चेति भागद्वयमस्ति इति तेन प्रकारेण तच्छस्त्रं पञ्चात्मकमित्यर्थः । शस्त्रभागपञ्चकेन नारायणादिमध्ये कस्य कुत्रावस्थानं तृचाशीतिनामके छन्दोनिबद्धत्वे त्रैविध्यं किंनिबन्धनमित्यत आह– **प्रथम इत्यादिना** ।। पञ्चकात् पञ्चकस्य । नायं सङ्कर्षणः शेष इति भावेनाऽऽह–**यस्येति** ।। यस्य भगवद्रूपस्य सङ्कर्षणस्याऽऽवेशबलेनैव जीवोऽपरः सङ्कर्षणः सङ्कर्षणनामा । तत्र सङ्कर्षणपदप्रवृत्तिनिमित्तस्य भगवादयत्त-त्वाच्छब्दस्यामुख्यत्वमित्याह– **तत्प्रसादेति** ।। 'यो ह वा आत्मानं पञ्चविधमुक्थं वेद स सम्प्रतिवित् इति यथाश्रुतं वाक्यं व्यांचष्टे– **एवमिति** ।।

**उपनिषत्-**

**(पञ्चभूतेषु पञ्चरूपिणो हरेरुपासनम्)**

**पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येत्ययनं हवै समानानां भवति य एवं वेद ।।**

**खण्डार्थः**

पञ्चविधबृहतीसहस्रप्रतिपाद्यानां तद्गतानां पञ्चरूपाणाम् अधिष्ठानान्तरं तत्तन्नामकत्वमुत्थापकत्वं चोच्यते– **पृथिवीति** ।। 'एष वा आत्मा बृहत्यन्तर्गतो नारायण एव पृथिवी वायुराकाश आपो ज्योतींषि' इति नामकनारायणादिरूपेण तदन्तस्थः पञ्चविधं पञ्चविध उक्थनामकः । कुतः ? एतस्मात् पृथिव्यादिस्थाद् हि यस्मादिदं सर्वमुत्तिष्ठति तस्मादित्यर्थः । न केवलमुत्पादकत्वादुक्थत्वं किन्त्विदं जगदेतमेवाप्येति मुक्तौ लये च प्रविशति । न केवलं मुक्तौ लये चोपजीव्य-

त्वम् । किन्त्वेतदेव सर्वेषां सदायनमाश्रयं प्रसिद्धमित्यर्थः । एतद्वेत्तुः फलमुच्यते– **अयनं हवै समानानामिति** ।। य एवं वेदोपासनापूर्वमपरोक्षतो वेद स समानजातीयानां मुक्तावयनमाश्रयो भविष्यतीत्यर्थः ।

**भाष्यम्-**

............ तानि रूपाणि वै हरेः ।
स्थितानि पञ्चभूतेषु पृथिव्याद्यभिधानि च ।।
तदावेशात् पृथिव्यादिनाम भूतेषु पञ्चसु ।।
पृथुत्वात् पृथिवीनामा भूमौ नारायणः स्थितः ।
बलज्ञानस्वरूपत्वाद् वायुनामा स एव च ।।
वायौ सङ्कर्षणो नित्यं स्थित आकाशनामकः ।
व्याप्तत्वाद् वासुदेवस्तु सदाऽऽकाशे स्थितः प्रभुः ।।
अनिरुद्धस्तथैवाप्सु बहुरूपो व्यवस्थितः ।
अम्नामा पालनान्नित्यं प्रद्युम्नो ज्योतिषि स्थितः ।।
ज्योतिर्नामा द्योतनाच्च बहुरूपः पृथक्पृथक् ।
यद्यप्यस्य हरेः सर्वरूपाण्यप्यखिलैर्गुणैः ।।
पूर्णान्यथापि चैवैकरूपेषु स पृथग्गुणैः ।
व्यवहारान् पृथग् देवः करोतीव हि लीलया ।।
तस्मात् पृथगिवास्येति नाम विष्णोः परात्मनः ।
सर्वत्र सर्वनाम्नोऽपि व्यवहारार्थमीर्यते ।

**(पञ्चरूपोपासनायाः फलम्)**

एतस्माद्धि हरेर्नित्यं जगदुत्तिष्ठति प्रभोः ।।
मुक्तौ लये च तं याति स च सर्वाश्रयः प्रभुः ।
य एवं वेत्ति तं विष्णुमुपास्ते चाऽपरोक्षतः ।।

**स मुक्तः समजातीनामाश्रयश्च भविष्यति ।**
**स्वजातीनामुत्तमत्वपदयोग्या हि ये सुराः ॥**
**ब्रह्मेन्द्राद्यास्ते हि योग्याः साक्षादस्मिन्नुपासने ।**
**अन्येषां ज्ञानमात्रेण योग्यमाधिक्यमाप्यते ॥**

**टिप्पणी -**

अत्रैवं बृहतीसहस्रलाभप्रकारः – गायत्री तृचाशीतिः षष्ट्युत्तरशतबृहत्यो भवन्ति । बृहती तृचाशीतिश्चत्वारिंशदधिकद्विशतबृहत्यो भवन्ति । उष्णिक् तृचाशीतिस्तु षडशीत्युत्तरशतबृहत्यो भवन्ति । गायत्री चैका भवति । आहत्य तृचाशीतित्रयस्य षडशीत्युत्तरपञ्चशतबृहत्यो गायत्री चैका भवति । पूर्वमपरं च प्रत्येकं बृहतीशतद्वयं दशगायत्र्यः । पञ्च जगत्यो वा । यद्वा, पूर्वमपरं च प्रत्येकं दशोत्तरत्रिशतगायत्र्यः पञ्चपञ्चाशदुत्तरशतजगत्यो वा भवन्तीति ज्ञेयम् । ननु यस्मात् कस्मादपि छन्दस इत्युक्तत्वात् कथमुक्तछन्दस्त्रयनियम इति चेन्न । तृचाशीतित्रयस्य छन्दोविशेषनियमगर्भत्वेऽपि पूर्वोत्तरभागयोस्तदभावात् तृचाशीतित्रयस्याप्येकछन्दोनियमनाभावाच्चाविरोधात् । पञ्चधेत्यत्र प्रभेद-विवक्षायामुक्तछन्दोनियमेऽपि तदविवक्षायां यस्मात् कस्मादपि छन्दस इत्युक्तिसम्भ-वाच्च । 'पृथिवी वायुः' इत्यादि व्याचष्टे– **तानीति** ॥ ननु पृथिव्यादिशब्दानां प्रसिद्धिबलाद् भूतेषु मुख्यत्वात् तत्परित्यागेन कथं भगवत्परिग्रह इत्यत आह– **तदावेशादिति** ॥ समाकर्षन्यायेनेति भावः । पृथिव्यादिशब्दान् नारायणादौ निर्वक्ति– **पृथुत्वादित्यादिना** ॥ आप इति बहुवचनार्थमाह–**बहुरूप इति** ॥ आप इत्यस्यासमन्तात् पालनादित्यर्थ इति भावेनोक्तम्–**नित्यं पालनादिति** ॥ ज्योतींषीति बहुवचनार्थमाह– **बहुरूपः पृथक् पृथगिति** ॥ बहुरूपः सन् पृथक् पृथक् ज्योतिषि स्थित इत्यर्थः । ननु सर्वेष्वपि रूपेषु पृथिव्यादिसर्वशब्द-प्रवृत्तिनिमित्तसर्वगुणानां सद्भावादत एव तद्गुणानुसारेण सर्वक्रियाप्रवर्तकत्वात् सर्वस्थानगतत्वाच्च कथं नामभेद इत्याशङ्क्यापाकरोति– **यद्यपीति** ॥ यद्यप्यस्य

हरेः सर्वाण्यपि रूपाण्यखिलैः शब्दप्रवृत्तिनिमित्तगुणैः पूर्णानि सर्वक्रियाप्रवर्तकानि च तथाऽयेकैकरूपेषु स पृथग्गुणैः तत्तत्प्रवृत्त्युपयुक्तगुणैः पृथक् पृथक् स्थानेषु पृथग्विधान् व्यवाहरान् प्रवृत्तिरूपान् लीलया करोतीव । तस्मात् सर्वत्र सर्वनाम्नोऽपि विष्णोः पृथग् व्यवहारार्थमुच्चारणार्थमुपासनार्थं चेत्युक्तदिशा 'नाम पृथगिवेर्यत' इति योजना । 'एतस्माद्धीदं सर्वमुत्तिष्ठति । एतमेवाप्येति । अयनं ह वै' इति वाक्यत्रयं व्याचष्टे– **एतस्मादिति** ॥ तथाच श्रुतिः - 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छां. ६.७.४) इति । एवमयनं हवा इत्यंशस्यैतद् ब्रह्मायनं सर्वाश्रयमित्यर्थमुक्त्वा 'अयनं ह वै समानानाम्' इत्येकवाक्यतया व्याचष्टे– **य एवमिति** ॥ साम्ये आश्रयत्वायोग इत्यतो जातीयत्वेन साम्येऽप्याधिक्यं सम्भवतीत्युक्तं लक्ष्यनिष्ठतयाऽऽह– **स्वजातीनामिति** ॥ स्वजातीयानां मध्ये यदुत्तमत्वाख्यं पदं तद्योग्या ये ब्रह्मेन्द्राद्याः सुरा इत्यर्थः । तथाचोक्तम् 'देवेषु वायुः पुरुषोत्तमादृते' 'देवानामस्मि वासवः'(भ.गी.१०.२२) इति ।

**उपनिषत्-**

**(अन्नभोजने पञ्चरूपोपासनम्)**

**तस्मिन् योऽन्नं चान्नादं च वेदा हास्मिन्नन्नादो जायते भवत्यस्यान्नमापश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ॥**

**ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्यावपनमाकाश आकाशे हीदं सर्वं समोप्यत आवपनं हवै समानानां भवति य एवं वेद ॥**

**खण्डार्थः**

एतेषां रूपाणां भोक्तृभोग्यभावोऽस्तीत्युच्यते– **तस्मिन्निति** ॥ तस्मिन् रूपपञ्चके योऽन्नमन्नस्थितत्वात् तर्पकतयोपजीव्यत्वाच्चान्ननामकरूपद्वयं भोक्तृषु स्थित्वा

भोक्तृशक्तिप्रदत्वात् स्वयं भोक्तृत्वाच्चान्नादनामकं रूपद्वयं च वेद। सोऽस्मिन् स्वसमानजातावन्नादोऽतिशयेन भोक्ता भवति। अस्य विष्णोः प्रसादतोऽस्य स्वजातिवर्गस्यान्नमद्यमुपजीव्यं तर्पकश्च भवतीत्यर्थः। किं तदन्नमन्नादं चेत्यत उच्यते– **आपश्चेति**।। आपश्च पृथिवी चानिरुद्धनारायणावन्नमित्युच्यते। कुतः? हि यस्मात् प्रसिद्धान्नान्येतन्मयान्येताभ्यां व्याप्तान्यधिष्ठितानीति यावत्। यद्वैतयो-रधीनानि एतन्नियमिततर्पकत्वशक्तियुक्तानीति यावत्। ज्योतिश्च वायुश्च प्रद्युम्न-सङ्कर्षणावन्नादम्। कुतो हि यस्मादिदं सर्वं भोक्तृजातमेताभ्यां प्रद्युम्नसङ्कर्षणाभ्याम् अधिष्ठातृभ्यां भोक्तृशक्तिप्रदाभ्यां स्वयं च भोक्तृभ्यामन्नमत्ति तस्मादित्यर्थः। आकाशो नभस्थितो वासुदेव आवपनम्। अवकाशप्रदः। कथं ? हि यस्मादिदं सर्वं चेतनाचेतनात्मकमाकाशे वासुदेवे तद्दत्तावकाशे ओप्यते समाप्यते स्थाप्यते। य एवं वेद स समानानामावपनमवकाशप्रदो भवति।

**भाष्यम्-**

**सङ्कर्षणश्च प्रद्युम्नस्तत्र भोक्तृषु संस्थितौ।**
**भोक्तृशक्तिप्रदौ नित्यं भोक्तारौ च विशेषतः।।**
**नारायणानिरुद्धौ तु भोग्यवस्तुषु संस्थितौ।**
**तर्पकौ सर्वलोकानां तस्माद् भोग्यौ न चर्व्यतः।।**
**अवकाशप्रदो नित्यं वासुदेवो नभःस्थितः।**
**एवं पञ्चात्मकं विष्णुं य उपास्ते सदैव तु।।**
**अवकाशप्रदः सोऽपि स्वजातीनां भविष्यति।**
**भोक्ता चाप्यायकश्चैव तस्य विष्णोः प्रसादतः।।**
**ब्रह्मेन्द्राद्याः स्वजातीशपदयोग्या अमुष्य च।**
**योग्या उपासनस्य स्युस्तदन्ये ज्ञानमात्रके।।**

**टिप्पणी -**

'तस्मिन् योऽन्नं चान्नादं च' इत्यारभ्य 'आवपनं हवै समानानां भवति'

इत्यन्तानि वाक्यानि व्याचष्टे– **सङ्कर्षणश्चेत्यादिना** ।। 'तस्मिन् योऽन्नं चान्नादं च' इत्यत्रोक्तान्नादस्वरूपविवरणपरस्य 'ज्योतिश्च वायुश्चान्नादम्' इत्यादेरर्थ उक्तः ।। **सङ्कर्षणश्चेति** ।। योऽन्नं चेत्युक्तान्नस्वरूप-विवरणपरस्यापश्च पृथिवी चान्नमित्यादेरर्थः– **नारायणेति** ।। यस्माद् भोग्यवस्तुषु संस्थितौ सर्वलोकानां तर्पकौ । तस्माद् भोज्यान्तर्गतत्वात् तर्पकत्वाच्च भोज्यावन्नमित्युच्येते । नतु चर्वणयोग्यत्वादित्यर्थः । आवपनमित्यस्यार्थः– **अवकाशेति** ।। 'आवपनं हवै समानानां भवति य एवं वेद' इत्यत्र एवं वेदेति वासुदेवोपासनानुवादांशं 'योऽन्नं चान्नादं च वेद' इति चतूरूपोपासनांशं चैकोक्त्या व्याचष्टे– **एवं पश्चेति** ।। आवपनं भवतीति वासुदेवोपासनाफलांशं व्याचष्टे– **अवकाशप्रद इति** ।। अन्नादो जायत इति सङ्कर्षणप्रद्युम्नोपासनाफलांशं व्याचष्टे–**भोक्तेति** ।। स्वजातीयानामाधिक्येन स्वयं भोक्तेत्यर्थः । भवत्यस्यान्नमिति नारायणानिरुद्धोपासनाफलांशं व्याचष्टे– **आप्यायक इति** ।। एतेन योऽन्नं वेद सोऽस्य विष्णोः प्रसादतोऽस्य स्वजातिवर्गस्यान्नमाप्यायको भवतीत्यर्थ उक्तो ज्ञेयः । स्वजातीयपदयोग्याः स्वजातीयानामीशत्वमुत्तमत्वमेव पदं तद्योग्या इत्यर्थः ।

**उपनिषत्-**

**(स्थावरजङ्गमानां प्राणिमनुष्याणां चान्नम्)**

तस्मिन् योऽन्नं चान्नादं च वेदा हास्मिन्नन्नादो जायते
भवत्यस्यान्नमोषधिवनस्पतयोऽन्नम् ।।

प्राणभृतोऽन्नादमोषधिवनस्पतीन् हि प्राणभृतोऽदन्ति
तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहितास्तेऽन्नादा
अन्नमितरे पशवस्तस्मात् त इतरान् पशूनधीव चरन्त्यधीव
ह्यन्नेऽन्नादो भवत्यधीव ह समानानां जायते य एवं
वेद ।।

**खण्डार्थः**

न केवलं भूतेषु स्थितानां भोक्तृभोग्यभावः किं तर्हि स्थावरजङ्गमात्मक-सर्वप्रपञ्चगतानामपीत्युच्यते– **तस्मिन्निति** ।। व्याख्यातप्रायमेतत् । किं तदन्नमन्नादमित्यत उच्यते– **ओषधीति** ।। ओषधीषु स्थितस्तन्नामा नारायणः वनस्पतिषु स्थितस्तन्नामानि-रुद्धश्चान्नं प्राणभृतः प्राणभृत्सु चेष्टावत्सु जङ्गमेषु व्यवस्थितौ तन्नामानौ सङ्कर्षणप्रद्युम्नावन्नादम् । ओषधिवनस्पतीनामन्नत्वं प्राणभृतामन्नादत्वं चोपपाद्यते– **ओषधिवनस्पतीनिति** ।। हि यस्मादोषधिवनस्पतीन् तद्गतभगवन्नियमितान् प्राणभृतो जङ्गमजीवा अदन्ति भक्षयन्ति । तद्गतभगवद्रूपमप्युपजीवन्ति । तस्य तत्र स्थित्वा तर्पकत्वात् । ओषध्यादिस्थितं भगवद्रूपद्वयं च जङ्गमेषु स्थितं रूपद्वयमत्ति तद्भोग्यं करोति तस्मादित्यर्थः । जङ्गमेष्वपि पुरुषपश्वादिभेदभिन्नेषु स्थितानां भगवद्रूपाणां भोक्तृभोग्यभाव उच्यते– **तेषामिति** ।। तेषां जङ्गमानां मध्ये ये उभयतो दन्ता अधरोत्तरदन्तवन्तः । पुरुषस्य पुरुषाकारस्य पुरुषनामकस्य क्षीराब्धि-शयनस्य विष्णोरनुविधां सदृशाकारतां प्राप्ता देवगन्धर्वमर्त्याद्यास्तेऽन्नादास्तेषु स्थितौ पुरुषाकारौ सङ्कर्षणप्रद्युम्नावन्नादौ स्वयं भोक्तारौ स्वसन्निधानात् स्वाधिष्ठानभूतानां देवादीनां भोजकौ च । पुरुषेभ्य इतरेतर एव पशवो गवाश्वादयः । यद्वा, देवानामप्यात्ममखे पशुत्वात् मानुषादीनां पशुप्रायत्वात् तेभ्य इतरे पशवस्तदन्तस्थौ तदाकारौ । नारायणानिरुद्धावन्नं स्वयं भोग्यावखिलस्य तृप्तिप्रदौ चेत्यर्थः । यद्यप्यश्वादीनामप्युभयतो दन्तत्वमस्ति तथाऽपि पुरुषेषूभयतो दन्तनियमवत् पशुजातौ न तन्नियमः गोगवय-महिषादावभावादेतद्विवक्षया 'य उभयतोदन्ताः' इत्युक्तमिति ज्ञेयम् । अधिष्ठानभूतानां देवादीनामन्नादत्वमधिष्ठेयानां पशूनामन्नत्व-मुपपाद्यते– **तस्मादिति** ।। तस्माद् भोक्तृभूतसङ्कर्षणप्रद्युम्नसन्निधानादेव ते नरादय इतरान् पशूनधिरुह्य चरन्ति । स्वातन्त्र्याभावादिवशब्दः । सङ्कर्षणप्रद्युम्नयोरन्नादत्वं नारायणानिरुद्धयोरन्नत्वं चोपपाद्यते– **तस्मादिति** ।। तस्मात् सङ्कर्षण-प्रद्युम्नयोरारोढृषु नरादिषु सन्निहितत्वादेव ते नरादयस्तदधिष्ठितौ सङ्कर्षणप्रद्युम्नाविति यावत् ।

इतरान् पशून् तदन्तर्गतौ नारायणानिरुद्धौ अधिरुह्य चरन्तीव । अत्र भगवद्रूपाणां गुणवैशेष्याभावादिवशब्दः । प्रमाणप्रसिद्ध ऽ चैतदित्युच्यते– **अधीवेति** ।। अन्नेऽन्न-नामकभगवद्रूपेऽन्नादनामकभगवद्रूपं अधीव भवतीत्यैतरेयसंहितादौ हि प्रसिद्धं खल्वित्यर्थः । य एवं वेद स समानानां मध्येऽधीव चरति वाहनमधिरुह्य चरति हि । अस्वातन्त्र्यादिवेति ।।

**भाष्यम्-**

सङ्कर्षणश्च प्रद्युम्नो जङ्गमेषु व्यवस्थितौ ।
नारायणानिरुद्धौ तु स्थावरान्तर्गतौ प्रभू ।।
तत्राप्याकाशगो नित्यं वासुदेवो निरञ्जनः ।
प्राणानां भरणान्नित्यं प्राणभृन्नाम तद्धरेः ।।
नह्यन्यः प्राणभर्ताऽस्ति तमृते पुरुषोत्तमम् ।
ओषणाच्च निधानाच्च स एवौषधिनामकः ।।
वननीयपतित्वाच्च स एव हि वनस्पतिः ।
अन्ने स्थित्वा तृप्तिदत्वं तस्याऽद्यत्वमपीष्यते ।।
पुरुषस्य हरेर्ये तु सदाऽऽकारेण संस्थिताः ।
देवगन्धर्वमर्त्याद्यास्तेषु सङ्कर्षणो हरिः ।।
प्रद्युम्नश्च स्थितो नित्यं पुरुषाकृतिरेव तु ।
तौ भोक्तारौ च भोग्यानां भोजकावखिलस्य च ।।
नारायणानिरुद्धौ तु तथाऽन्यपशुषु स्थितौ ।
वृषभाश्वादिरूपेण तृप्तिदावखिलस्य च ।।
वाहनोपानहादीनामारोढारो नरादयः ।
यतः सङ्कर्षणश्चैव प्रद्युम्नस्तेषु संस्थितौ ।।
ततस्तयोर्हि सञ्चार उपरीव भविष्यति ।

**आकाशगो वासुदेवः पञ्चमोऽत्राप्युपास्यते ॥**

**वाहनादियुतो मुक्तौ भवेदेतदुपासकः ॥ इत्याद्यैतरेयसंहितायाम् ॥**

**टिप्पणी -**

'प्राणभृतोऽन्नादम्' इत्यस्यार्थमाह– **सङ्कर्षणश्चेति** ॥ जङ्गमेषु भोक्तृषु व्यवस्थिताविस्यर्धतः परं 'भोक्तृशक्तिप्रदौ नित्यभोक्तारौ च विशेषतः' इति शेषतया द्रष्टव्यम् । 'ओषधिवनस्पतयोऽन्नम्' इत्यस्यार्थमाह– **नारायणेति** ॥ स्थावरेषु भोग्येष्वन्तर्गताविति योज्यम् । अत्रापि 'तर्पकौ सर्वजीवानाम्' इति शेषो द्रष्टव्यः । आवपनमाकाश इत्यादि पूर्वग्रन्थस्य मध्यगतत्वादेतच्छेषतयाऽप्यर्थमाह– **तत्रापीति** ॥ एतेनावपनं ह वै समानानामित्यारभ्यौषधिवनस्पतय इत्येतत्पर्यन्तस्य व्याख्या-नमपि कृतं ज्ञेयम् । प्राणभृदादिशब्दान् प्रसिद्धार्थप्रतीतेर्व्याचष्टे– **प्राणा-नामित्यादिना** ॥ ओषणाद् दहनात् । उष प्लुष दाह इति धातुः । वननीयानां भजनीयानां पतित्वात् वन षण सम्भक्ताविति धातुः । यद्योषधिवनस्पतिशब्दाभ्यां भगवान् गृह्यते कथं तर्हि तस्यान्नत्वमद्यत्वायोगादित्यत आह–**अन्न इति** ॥ उपजीव्यत्वमेवाद्यत्वमिति भावः । 'तेषां य उभयतोदन्ता' इत्यत्र तेषां ये उभयतोदन्तत्वेन प्रसिद्धपुरुषसादृश्यं प्राप्ता व्याघ्रादयस्तेऽन्नादाः इतरे गो-महिषादयोऽन्नमित्यन्यथाप्रतीतेर्व्याचष्टे– **पुरुषस्येति** ॥ 'पुरुषस्यानुविधां विहिताः' इत्येतद् भगवद्रूपे योजयति– **पुरुषाकृतिरिति** ॥ वृषभाश्वादिरूपेण वृषभाश्वाद्याकारेणान्यपशुषु स्थिताविस्यर्थः । 'तस्मात् त इतरान् पशूनधीव चरन्ति' इत्येतद् व्याचष्टे– **वाहनेति** ॥ सङ्कर्षणश्च प्रद्युम्नस्तेष्वारोढृषु संस्थितस्तस्मात् ते नरादय इतरान् पशूनधीव चरन्ति वृषभाश्वादिवाहनानां महिषादिचर्म-विनिर्मितोपानहादीना-मारोढारो भवन्तीति भावः । 'तस्मात्त इतरान्' इति वाक्यमधिष्ठिभगवद्रूप-परतयाऽपि योजयति– **यत इति** ॥ यतः सङ्कर्षणः प्रद्युम्नश्च तेष्वारोढृषु संस्थितौ ततस्तयोः सङ्कर्षणप्रद्युम्नयोः सञ्चारस्तयोः पश्चाद्यधिष्ठित-नारायणानिरुद्धयोरुपरीव भविष्यतीत्यर्थः । एतेन 'अधीव ह्यन्नेऽन्नादो भविष्यति' इति वाक्यमपि व्याख्यातं भवति । आवपनमाकाश इत्येतदत्राप्याकृष्य व्याख्येय-

मित्याह– **आकाशग इति** ।। 'अधीव हि समानानाम्' इति फलवाक्यं व्याचष्टे– **वाहनेति** ।। एतेन समानानां मध्ये स्वयं वाहनमधिरुह्य चरतीति मूलार्थ इत्युक्तं भवति । वाहनादीत्यादिपदेन स्वजातीनामवकाशप्रदानशक्तियुक्तश्चेति गृह्यते । तेन 'आवपनं हवै समानानाम्' इत्येतदत्रापि संयोज्यमित्युक्तं भवति ।

**भाष्यम्-**

**(भगवत्परमेतदन्नान्नादप्रकरणम्)**

**आत्मशब्दाच्च न भूतमात्रमत्रोच्यते । नच मुख्यार्थं परित्यज्योपचारार्थोऽङ्गी-कर्तव्यो विरोधाभावे । सर्वनामवत्त्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र । 'वप नीरोमकरणावकाशप्रदानबीजवर्धनेषु' इति च धातुः ।**

**टिप्पणी -**

यो ह वा आत्मानमित्युपक्रम्य कोऽयं पञ्चविध आत्मेत्यतः पृथिवीत्यादिना भूतान्येव पञ्चविधात्मतयोच्यन्त इत्यपव्याख्यानं व्याख्यानरूपप्रमाणेन निरस्त-मप्यन्तरङ्गबाधकेनापि निराचष्टे– **आत्मशब्दादिति** ।। भूतमात्रं भूतान्येव । विष्णुस्तु नोच्यत इति न वाच्यमित्यर्थः । नन्वात्मशब्दस्य शरीरपरत्वात् तदुपादानत्वेन भूतेष्वात्मशब्दो युक्त एवेत्यत आह– **नच मुख्येति** ।। यद्वा, न भूतमात्रमुच्यते किन्तु तदभिमानिनोऽपि । तेषु त्वात्मशब्दः सम्भवतीत्यत आह – **नच मुख्येति** ।। ननु भूतपरत्वे आत्मश्रुतिविरोधवद् भगवत्परत्वे पृथिव्यादिश्रुतिविरोध इत्यत आह–**सर्वनामवत्त्वमिति** ।। श्रुत्यैव 'ता वा एताः सर्वा ऋचः' इत्युप-निषदैव । 'नामानि सर्वाणि' इत्यादि श्रुत्या वा । आवपनमाकाश इत्येतदवकाशप्रद इति प्रमाणेन व्याख्यातम् । तन्मूलभूतं धातुव्याख्यानं पठति– **वपेति** ।।

**भाष्यम् -**

**(परकीयानामेतदन्नान्नादोपासनाफलानवबोधः)**

**तस्मिन् पञ्चके चोऽन्नमन्नादं च वेद सोऽस्मिन् स्वजातियूथे विशेषेणान्नाद आ**

**आकाशगो वासुदेवः पञ्चमोऽत्राप्युपास्यते ॥**

**वाहनादियुतो मुक्तौ भवेदेतदुपासकः ॥ इत्याद्यैतरेयसंहितायाम् ॥**

**टिप्पणी -**

'प्राणभृतोऽन्नादम्' इत्यस्यार्थमाह– **सङ्कर्षणश्चेति** ॥ जङ्गमेषु भोक्तृषु व्यवस्थिताविवत्यर्धतः परं 'भोक्तृशक्तिप्रदौ नित्यभोक्तारौ च विशेषतः' इति शेषतया द्रष्टव्यम् । 'ओषधिवनस्पतयोऽन्नम्' इत्यस्यार्थमाह– **नारायणेति** ॥ स्थावरेषु भोग्येष्वन्तर्गताविति योज्यम् । अत्रापि 'तर्पकौ सर्वजीवानाम्' इति शेषो द्रष्टव्यः । आवपनमाकाश इत्यादि पूर्वग्रन्थस्य मध्यगतत्वादेतच्छेषतयाऽप्यर्थमाह– **तत्रापीति** ॥ एतेनावपनं ह वै समानानामित्यारभ्यौषधिवनस्पतय इत्येतत्पर्यन्तस्य व्याख्या-नमपि कृतं ज्ञेयम् । प्राणभृदादिशब्दान् प्रसिद्धार्थप्रतीतेर्व्याचष्टे– **प्राणा-नामित्यादिना** ॥ ओषणाद् दहनात् । उष प्लुष दाह इति धातुः । वननीयानां भजनीयानां पतित्वात् वन षण सम्भक्ताविति धातुः । यद्योषधिवनस्पतिशब्दाभ्यां भगवान् गृह्यते कथं तर्हि तस्यान्नत्वमद्यत्वायोगादित्यत आह–**अन्न इति** ॥ उपजीव्यत्वमेवाद्यत्वमिति भावः । 'तेषां य उभयतोदन्ता' इत्यत्र तेषां ये उभयतोदन्तत्वेन प्रसिद्धपुरुषसादृश्यं प्राप्ता व्याघ्रादयस्तेऽन्नादाः इतरे गो-महिषादयोऽन्नमित्यन्यथाप्रतीतेर्व्याचष्टे– **पुरुषस्येति** ॥ 'पुरुषस्यानुविधां विहिताः' इत्येतद् भगवद्रूपे योजयति– **पुरुषाकृतिरिति** ॥ वृषभाश्वादिरूपेण वृषभाश्वाद्याकारेणान्यपशुषु स्थिताविवत्यर्थः । 'तस्मात् त इतरान् पशूनधीव चरन्ति' इत्येतद् व्याचष्टे– **वाहनेति** ॥ सङ्कर्षणश्च प्रद्युम्नस्तेष्वारोढृषु संस्थितस्तस्मात् ते नरादय इतरान् पशूनधीव चरन्ति वृषभाश्वादिवाहनानां महिषादिचर्म-विनिर्मितोपानहादीना-मारोढारो भवन्तीति भावः । 'तस्मात्त इतरान्' इति वाक्यमधिष्ठिभगवद्रूप-परतयाऽपि योजयति– **यत इति** ॥ यतः सङ्कर्षणः प्रद्युम्नश्च तेष्वारोढृषु संस्थितौ ततस्तयोः सङ्कर्षणप्रद्युम्नयोः सञ्चारस्तयोः पश्वाद्यधिष्ठित-नारायणानिरुद्धयोरुपरीव भविष्यतीत्यर्थः । एतेन 'अधीव ह्यन्नेऽन्नादो भविष्यति' इति वाक्यमपि व्याख्यातं भवति । आवपनमाकाश इत्येतदत्राप्याकृष्य व्याख्येय-

मित्याह– **आकाशग इति** ॥ 'अधीव हि समानानाम्' इति फलवाक्यं व्याचष्टे– **वाहनेति** ॥ एतेन समानानां मध्ये स्वयं वाहनमधिरुह्य चरतीति मूलार्थ इत्युक्तं भवति । वाहनादीत्यादिपदेन स्वजातीनामवकाशप्रदानशक्तियुक्तश्चेति गृह्यते । तेन 'आवपनं हवै समानानाम्' इत्येतदत्रापि संयोज्यमित्युक्तं भवति ।

**भाष्यम्-**

**(भगवत्परमेतदन्नान्नादप्रकरणम्)**

**आत्मशब्दाच्च न भूतमात्रमत्रोच्यते। नच मुख्यार्थं परित्यज्योपचारार्थोऽङ्गी-कर्तव्यो विरोधाभावे। सर्वनामवत्त्वं च भगवतः श्रुत्यैवोपपादितं पूर्वत्र। 'वप नीरोमकरणावकाशप्रदानबीजवर्धनेषु' इति च धातुः।**

**टिप्पणी -**

यो ह वा आत्मानमित्युपक्रम्य कोऽयं पञ्चविध आत्मेत्यतः पृथिवीत्यादिना भूतान्येव पञ्चविधात्मतयोच्यन्त इत्यपव्याख्यानं व्याख्यानरूपप्रमाणेन निरस्त-मप्यन्तरङ्गबाधकेनापि निराचष्टे– **आत्मशब्दादिति** ॥ भूतमात्रं भूतान्येव। विष्णुस्तु नोच्यत इति न वाच्यमित्यर्थः। नन्वात्मशब्दस्य शरीरपरत्वात् तदुपादानत्वेन भूतेष्वात्मशब्दो युक्त एवेत्यत आह– **नच मुख्येति** ॥ यद्वा, न भूतमात्रमुच्यते किन्तु तदभिमानिनोऽपि । तेषु त्वात्मशब्दः सम्भवतीत्यत आह – **नच मुख्येति** ॥ ननु भूतपरत्वे आत्मश्रुतिविरोधवद् भगवत्परत्वे पृथिव्यादिश्रुतिविरोध इत्यत आह–**सर्वनामवत्त्वमिति** ॥ श्रुत्यैव 'ता वा एताः सर्वा ऋचः' इत्युप-निषदैव । 'नामानि सर्वाणि' इत्यादि श्रुत्या वा। आवपनमाकाश इत्येतदवकाशप्रद इति प्रमाणेन व्याख्यातम् । तन्मूलभूतं धातुव्याख्यानं पठति– **वपेति** ॥

**भाष्यम् -**

**(परकीयानामेतदन्नान्नादोपासनाफलानवबोधः)**

**तस्मिन् पञ्चके चोऽन्नमन्नादं च वेद सोऽस्मिन् स्वजातियूथे विशेषेणान्नाद आ**

जायते ह । 'तस्मिन् वेद' 'अस्मिन् आ जायते' इति पृथक्पृथक् पुनः-पुनर्विशेषणादुपासकस्य स्वजातिसन्निधानाच्च स्वजाताविति ज्ञायते।

क्षीराब्धिशायिनं विष्णो रूपं यत् पुरुषाभिधम्।
सङ्कर्षणश्च प्रद्युम्नस्तदाकारौ नृषु स्थितौ॥
नारायणानिरुद्धौ तु पश्वाकारौ पशुस्थितौ॥ इति सत्तत्त्वे॥

गुणवैशेष्याभावेन वाहनादिषु चरणमात्रात् 'अधीव चरन्ति' इत्यादाविवशब्दः॥

**टिप्पणी -**

'तस्मिन् योऽन्नं चान्नादं च वेद' इत्यस्य तस्मिन् भूतपञ्चके योऽन्नमन्नादं च वेद सोऽस्मिन्नेव भूतपञ्चकमध्ये पृथिवीलोकेऽन्नादो जायत इत्येतदप-व्याख्यानमिति भावेन स्ववचनेनापि विवृणोति– **तस्मिन्निति**॥ विशेषेणे-त्याद्योऽर्थः। तस्मिन्निति तच्छब्दस्य रूपपञ्चकपरत्वमस्मिन्नितीदंशब्दस्य स्वजाति-परत्वं चोक्तम्। तदुपपादयति– **तस्मिन् वेदेति**॥ तस्मिन् वेद अस्मिन्नाजायत इति पृथक् पृथगापश्च पृथिवी चान्नमिति प्रकरणे ओषधिवनस्पतयोऽन्नमिति प्रकरणे च तस्मिंस्तस्मिन्नित्युपास्ययूथस्य पुनःपुनर्विशेषणादस्मिन्नाजायतेऽस्मिन्नाजायत इत्युपासकस्यापि पुनःपुनर्विशेषणात् तस्मिन् रूपपञ्चकेऽस्मिन् स्वजातियूथ इत्यर्थ उपपद्यत इति पूर्वेणान्वयः।

अयं भावः– प्रथमप्रकरणे तस्मिन्नित्यस्य पृथिव्यादिशब्दितपञ्चविधात्म-परामर्शकत्वमविवादम्। यदि तत्र भूतान्येव विवक्षितानि तर्हि द्वितीयप्रकरणेऽपि तच्छब्देन भूतपञ्चकमेव परामर्शविषयः स्यात्। तेषामेव पूर्वं प्रकृतत्वात्। नचासौ युक्तः। तद्विवरणपरेण 'ओषधिवनस्पतयोऽन्नमित्यादिना विरोधात्। नारायणादिरूपपञ्चकपरामर्शकत्वे त्वधिष्ठानमात्रभेदेऽपि प्रकरणद्वयेऽप्येकविधमेव तदधिष्ठितं प्रधानपञ्चकं परामृश्यत इत्यविरोधः। 'अस्मिन्नाजायते' इत्यस्यापि प्रथमप्रकरणे स्वोपास्यभूतमध्यगतपृथिवीलोके अन्नादे आजायते। द्वितीयप्रकरणे

त्वस्मिन् सर्वोपास्यप्राणिसमुदायेऽन्नादो जायत इति व्याख्यानमयुक्तम् । प्रथम-प्रकरणेऽस्मिन्नित्यनेन परामृष्टस्यैव द्वितीयप्रकरणेऽपीदंशब्देन परामर्ष्टुं युक्त-त्वात् । प्राणिसमुदायपरामर्शायोगात् । स्वयूथपरामर्शे तु प्रकरणद्वयश्रुतेरिदं-शब्दयोरेकविषयत्वलाभादिति । नन्वस्तु तर्हि द्वितीयप्रकरणेऽप्यस्मिन्नित्यस्य पृथिवीलोक इत्यर्थ इत्यतो दूषणान्तरमाह– **उपासकस्येति** ।। प्रकरणद्वयेऽपि योऽन्नमन्नादं च वेदाहामस्मिन्नन्नादो जायत इत्युक्तस्योपासकस्य 'आयनं ह वै समानानां भवत्यावपनं ह वै समानानां भवति' इति स्वजातिवाचकपदसमवधानात् पृथिवीपदस्यासन्निधानाच्चास्मिन्नित्यस्य स्वजातावित्यर्थो ज्ञायत इति । 'पुरुष-स्यानुविधाम्' इत्येतत् पुरुषस्य हरेरिति व्याख्यातम् । तदयुक्तम् । हर्याकारसादृश्यस्य पशुष्वपि सद्भावाद् हरेः सर्वाकारत्वेन पश्वाकारस्याप्युपपत्तेरित्यतः पुरुष-पदेन पुरुषाकारस्तन्नामको रूपविशेषो विवक्षित इति प्रमाणेनाऽऽह– **क्षीराब्धीति** ।। इतरान् पशूनधीव चरन्ति अधीव ह्यन्नेऽन्नादो भवतीत्यत्र चेवशब्दाभिप्रायमाह– **गुणेति** ।। गुणवैशेष्याभावाद् वाह्यवाहकभगवद्रूपाणाम् ।। १ ।।

**।। इति प्रथमः खण्डः ।।**

**उपनिषत्-**

**(तारतम्यानुसारि भगवत्सन्निधानम्)**

**तस्य य आत्मानमाविस्तरां वेदाश्नुते हाऽविर्भूय ओषधि-वनस्पतयो यच्च किञ्च प्राणभृत् स आत्मानमाविस्तरां वेदौषधिवनस्पतिषु हि रसो दृश्यते ।।**

**चित्तं प्राणभृत्सु प्राणभृत्सु त्वेवाऽविस्तरामात्मा तेषु हि रसोऽपि दृश्यते न चित्तमितरेषु ।।**

**पुरुषे त्वेवाऽविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो**

विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ ॥

मर्त्येनामृतमीप्सत्येवं सम्पन्नोऽथेतरेषां पशूनामशनापिपास एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि सम्भवाः ॥

भाष्यम्-

(स्थावरजङ्गमेषु भगवत्सन्निधाने तारतम्यम्)

आविर्भावं तारतम्याद् यो वेद परमात्मनः ।
स तस्यैव विशेषेण प्रीतियोगाद् भविष्यति ॥
स्थावरं जङ्गमं चैव भूयस्त्वेनाश्नुते हरिः ।
आविर्भूतस्तेषु सदा सम्यक् स्वात्मानमेव च ॥
तारतम्यात् सन्निहितं सर्वभूतेषु केशवः ।
वेत्त्येक एव विष्णोर्यद् विशेषावेशनं सदा ॥
जङ्गमेषु च वृक्षेषु नैव तादृक् शिलादिषु ।
तस्माद् वृक्षादिषु रसश्चित्तं चलनवत्सु च ॥
दृश्यते न शिलाद्येषु सन्निधिर्नहि तादृशी ।

(सन्निहितभगवद्रूपेषु तारतम्याभावः)

शिलाद्येषु स्थितो विष्णुर्भारदार्ढ्यादिकारणम् ॥
नैव चित्तादिकस्यातो वृक्षाद्या उत्तमास्ततः ।
विशेषोऽयं पदार्थानां नतु विष्णोः कथञ्चन ॥
यत्र विष्णुर्गुणाधिक्यं दर्शयेद् वस्तु तद् वरम् ।
गुणपूर्णो हि सर्वत्र स्वयं विष्णुः सनातनः ॥

वृक्षेभ्योऽप्यधिकं विष्णुर्जङ्गमेषु प्रकाशितः।
तेभ्योऽपि पुरुषे विष्णुर्गुणाधिक्यप्रकाशकः॥ इत्यादि च॥

**य आत्मानं परमात्मानमाविस्तराम् आविर्भावतारतम्येन वेद स तस्य विष्णोरेव। सर्वेषां तदीयत्वेऽपि प्रियत्वात् तदीयत्वविशेषणम्। ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् तत् सर्वं शिलादिभ्यो भूयस्त्वेन तेष्वाविर्भूतोऽश्नुते भगवान्। स एव च नारायणः सम्यक् स्वात्मानमाविस्तरां वेद। ज्ञानानुसारेण ह्युत्पत्तयः सम्भवाः॥**

**टिप्पणी -**

ब्रह्मण एव नानाधिष्ठानेषूपाधिवशात् स्वरूपतारतम्यमुच्यते इत्यन्यथाप्रतीतेः खण्डं प्रमाणेन व्याचष्टे– **आविर्भावमिति**॥ य आत्मानं तरां तारतम्येनाविर्भूतं वेदेत्यस्य तात्पर्यम्– **आविर्भावमिति**॥ य इति निर्दिष्ट एव तस्येति षष्ठ्यन्तेनोच्यत इत्यन्यथाप्रतीतिनिवारणाय स इत्यध्याहारेण व्याचष्टे– **स तस्येति**॥ नन्वज्ञान्यपि तदीय एव को विशेषो ज्ञानिन इत्यत उक्तम्– **विशेषेणेति**॥ तमेव विशेष्यं व्यनक्ति– **प्रीतीति**॥ ज्ञानिनि प्रीतिसम्भवात् प्रीत्याख्यविशेषेण तदीयो भविष्यतीत्यर्थः। 'अश्नुते ह्याऽविर्भूय' इत्यादि व्याचष्टे– **स्थावरमिति**॥ शिलादिभ्यो भूयस्त्वेन तेष्वाविर्भूतः स्थावरादिकमश्नुत इति योजना। 'स आत्मानमाविस्तराम्' इत्येतद् व्याचष्टे– **सम्यगिति**॥ तरामित्यस्यार्थः– **सम्यगिति**॥ तरामित्यस्यार्थान्तरम्– **तारतम्या-दिति**॥ शिलादिभ्योऽतिशयेन स्थावरजङ्गमेषु सन्निधानाधिक्ये ज्ञापकमुक्तम्– **ओषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्स्विति**॥ तद् व्याचष्टे– **विष्णोरित्यादिना**॥ यद् यस्माद् यद् यादृशम्। तादृक् तादृशम्। तस्मात् तस्मादेव। न शिलाद्येषु रसश्चित्तं च दृश्यत इत्यर्थः। ननु शिलादावपि भारदार्ढ्यादिकमस्त्यतस्तत्रापि विशेषसन्निधानमङ्गीकार्यमित्यत आह– **सन्निधि-रिति**॥ हि यस्माच्छिलाद्येषु विष्णोर्यादृशी वृक्षादिषु तादृशी सन्निधिर्नास्ति। केवलं शिलादिषु शुष्कदार्वादिभ्योऽतिशयेन स्थितो विष्णुर्भारदार्ढ्यादि-

कारणम्। चित्तादिकस्य चित्तरसयोः। वृक्षाद्याः वृक्षौषधिपश्वाद्याः। अपव्याख्यानं दूषयति— **विशेष इति**॥ ननु पूर्वपूर्वेभ्य उत्तरोत्तरं भगवतः सन्निधानतारतम्येनाधिष्ठान-तारतम्यमेतद्ग्रन्थार्थतया भवद्भिर्व्याख्यातम्। सन्निधानतारतम्यं नामाल्प-पदार्थेष्वल्पगुणतयोत्तमेषु ततोऽपि गुणाधिक्येनावस्थानमिति वाच्यम्। तथाच नीचोच्चपदार्थेष्ववस्थितस्य स्वरूपतारतम्यं प्राप्तमेवेत्यत आह— **यत्रेति**॥ अस्माभिर्हि गुणपूर्णो हि सर्वत्र स्वयं विष्णुः सनातन इत्यङ्गीकृत्य यत्र पदार्थे विष्णुः स्वस्य गुणाधिक्यं दर्शयेत् तद्वस्तु वरमित्युच्यते। नतु विष्णोरेव गुणतारतम्यम्। 'सन्निधानं हि तत् प्रोक्तं सामर्थ्यव्यञ्जनं हरेः' इत्युक्तत्वादिति भावः। प्राण-भृत्सुत्वेवाविस्तरामात्मा पुरुषेष्वाविस्तरामित्येतद् व्याचष्टे— **वृक्षेभ्य इति**॥ तस्य आत्मानमित्यादि स्पष्टं स्ववचनेन व्याचष्टे— **य आत्मानमिति**॥ प्राक् तरां तारतम्येनाविः सन्निहितमिति भिन्नपदतया व्याख्यातम्। अधुनाऽविस्तरामित्येकपदत्वेन व्याख्याति— **आविर्भावतारतम्येनेति**॥ अश्नुत इत्याद्यपेक्षिताध्याहारेण व्याचष्टे— **ओषधीति**॥ स इत्यस्यार्थः— **भगवान्नारायण इति**॥ स इत्येतदात्मानमाविस्तरामित्युत्तरवाक्येनापि सम्बद्ध्य व्याचष्टे— **स एवेति**॥ प्राणभृच्छब्दः पश्वादिजङ्गमविषयतया व्याख्यातः। तत्कथं शब्दलब्धमित्यत आह— **अन चेष्टायामिति**॥ यथाप्रज्ञमित्येतद् व्याचष्टे— **ज्ञानानुसारेणेति**॥ सम्भवा इत्यनूद्योत्पत्तय इति व्याख्या॥ २॥

**॥ इति द्वितीयः खण्डः॥**

**उपनिषत्-**

**(ऐश्वर्यलाभे न विस्मर्तव्यो लक्ष्मीपतिः)**

**स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेऽत्येनं मन्यते यद्यन्तरिक्षलोकमश्नुतेऽत्येनं मन्यते यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत॥**

**भाष्यम्-**

**योऽस्मिन् पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान् स एष पुरुषः समुद्रः समुद्रिक्तोऽन्येभ्यः। 'अन चेष्टायाम्' इति धातोश्चेष्टावत्त्वमेव प्राणभृत्त्वं पश्वादीनाम्। स जीवो यद्यपि भगवत्प्रसादात् सर्वलोकाधिपो भवति, सवलोकानतीत्य यत्किञ्चिदलौकिकं मोक्षाख्यमप्यश्नुते, तथाऽपि तमेनमात्मशब्देन प्रस्तुतं विष्णुमत्येव मन्यतेऽधिकमेव मन्यते स्वात्मनः सर्वस्माच्च। मुक्तोऽपि न तेन साम्यं तद्भावं वा मन्यते 'कृष्णो मुक्तैरिज्यते वीतमोहैः' (म.ता.नि. २.५८) 'मुक्तानां परमा गतिः' (वि.स.ना.), 'अमृतस्यैष सेतुः' (मुण्डक. २.५) इत्यादिवाक्याच्च।**

**टिप्पणी -**

अत्र स एष पुरुषो जीवः समुद्र इव न केनापि कामेन पूर्यते। कुतः? सर्वलोकमतिक्रम्य यत्किञ्चिदश्नुते एनं विषयं चातिक्रम्य ततोऽप्यतिशयितं मन्यते इच्छतीत्याद्यपव्याख्यानिरासाय यथावद् व्याचष्टे– **योऽस्मिन्निति**॥ ननु यद्ययं पुरुषो विष्णुस्तर्हि सर्वं लोकमतीत्यादौ तस्यैव कर्तृत्वेनान्वयः स्यादित्यत आह– **स जीव इति**॥ 'स एष पुरुषः समुद्रः' इत्यत्राधिष्ठितस्य पुरुषस्य समुद्रत्वमुक्तम्। 'सर्वं लोकम्' इत्यादौ तदधिष्ठानभूतस्य जीवस्य परामर्शेन कर्तृत्वेनान्वय इति भावः। 'सर्वलोकमत्यश्नुते यदत्येवैनं मन्यते' इत्यंशस्यार्थमाह– **यद्यपीति**॥ यदित्यस्य यद्यपीत्यर्थः। यद् यस्माद्भगवत्प्रसादादित्यर्थान्तरम्। अत्यश्नुत इत्यस्याधिप इत्यर्थः। तदपीत्यतः परं तदऽपि सर्वस्माच्चेत्यन्तं योज्यम्। 'सर्वं लोकमति यद्ध किञ्चाश्नुते इत्यादिविशिष्टवाक्यस्यार्थान्तरमाह– **सर्वलोकानित्यादिना**॥ अधिकमेवेत्येवकारव्यावर्त्यमाह– **मुक्तोऽपीति**॥ मुक्ताधिक्ये भगवतो 'यद्ध किञ्च' इति हशब्दसूचितं प्रमाणमाह– **कृष्ण इति**॥

**उपनिषत्-**

**(शरीरे पञ्चरूपात्मकहरेः सान्निध्यम्)**

स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतस्ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानस्ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति प्राणस्य ह्यन्वपायमेता अपियन्ति ॥

**भाष्यम्-**

**(न प्रियमिन्द्रपदमिन्द्रस्य)**

यद्यपि देवलोकाधिपत्यं तद्योग्यस्य विष्णुर्ददाति तदप्यश्नुवीतैव । बहुगणिकादिपरिवाररूपमशुचीदं पदमित्यादिबुद्ध्या नापह्नुवीत । एनं भगवन्तमतिमन्येतैव च सर्वथा स्वतः सर्वस्माच्चाधिकमेव मन्येत । यद्यमुं लोकमश्नुते प्राप्नोति अश्नुवीत भुञ्जीत । पृथिवीलोके विष्णोराधिक्यं सत्पुरषो मन्यत इति प्रत्यक्षसिद्धत्वान्न पृथगुक्तम् । अतिशब्दाद् 'यद्ध किञ्च' इति प्रथमोक्तो मोक्ष इति सिद्धम् । अन्तरिक्षप्राप्तेरल्पत्वान्मोक्षे स्वतः सिद्धत्वाच्च 'अति मन्यते' इति सिद्धवचनमेव कृतम् । स्वर्गादिप्राप्तेरधिकैश्वर्याद् भगवत्समोऽहं भगवत्स्वरूप इति वा मन्तुं प्राप्तिरस्तीति 'अत्येवैनं मन्येत' इति सावधारणविधिः ।

**(सम्पत्तिं नैव वाञ्छन्ति देवाः सद्भक्तियोगिनः)**

नच मन्यत इति काममात्रम् । 'मन अवबोधने' इति धातोः । न ह्यवबोध एव कामः । अन्यथा राज्यं जानन्नपि राज्यकाम इति स्यात् । नच मन्यते मन्येतेति द्विविधः प्रयोगस्तस्मिन् पक्षे युज्यते । नच सर्वलोकमतीत्याश्नतो मुक्तस्य मुक्तेरन्यत्र

**कामो विद्यते। सर्वलोकाधिकं च मुक्तिं विना नान्यत्। तस्मान्मुक्तैरमुक्तैरपि भगवान् सर्वोत्तमत्वेन चिन्त्य इति सिद्धम्।**

**टिप्पणी -**

यद्यमुं लोकमित्यादिकं देवताविषयतया व्याकुर्वन् यद्यमुं लोकमश्नुवीतेत्यंशं तावद् व्याचष्टे–**यद्यपीति** ।। यदीत्यस्य प्रतिपदम्–**यद्यपीति** ।। यदपीत्यर्थः । अश्नुवीतेत्यस्य प्रापयतीत्यर्थं मत्वोक्तम्– **विष्णुर्ददातीति** ।। तदपीत्यध्याहार-प्रदर्शनम् । आश्नुवीतेत्यावृत्तस्यैवार्थः– **अश्नुवीतैवेति** ।। भुञ्जीतैवेत्यर्थः । एवकारव्यावर्त्यमाह– **बहुगणिकेति** ।। 'यद्यमुं लोकमश्नुवीतात्येवैनं मन्येत' इति समग्रवाक्यं व्याचष्टे– **यद्यपीति** ।। अस्यां योजनायामश्नुवीतैव बहुगणिका-दिपरिवारयुक्तमशुचीदं पदमिति बुद्ध्या नापह्नुवीतेत्यंशं विहाय भाष्यं योज्यम् । तथाहि । यद्यपि देवलोकाधिपत्यं तद्योग्यस्य विष्णुरश्नुवीत प्रापयीत ददाति । तदपि तथाऽप्येनं विष्णुमतिमन्येतैव । तस्यैव विवरणम्– **सर्वथेति** ।। सर्वथा सर्वैर्गुणैः स्वतः सर्वस्माच्चाधिकमेव मन्येतेत्यर्थः । 'यद्यमुं लोकम्' इत्येतदेव वाक्यं यज्ञादिफलतया स्वर्गादिप्राप्तिविषयतयाऽपि व्याचष्टे– **यद्यमुमिति** ।। सर्वथेति वाक्यमत्रानुवर्तते । उपनिषदि यद्यमुं लोकमित्यतः परं 'अन्तरिक्षं लोकमश्नुते' इत्यतोऽश्नत इत्यनुवर्तत इति भावेनोक्तम्– **अश्नुते प्राप्नोतीति** ।। तथा च योजना । यद्यमुं लोकमश्नुते प्राप्नोति तर्ह्यश्नुवीत भुञ्जीतैव केवलम् । नैतावताऽहंभावं कुर्यात् किन्तु सर्वथा स्वतः सर्वस्माच्चाधिकमेव मन्येतेति । यदीमं लोकमश्नुतेऽत्येनं मन्यत इत्यनुक्तेः कारणमाह– **पृथिवीति** ।। प्रत्यक्षसिद्धत्वादनुभवसिद्धत्वात् । 'सर्वं लोकमति यद्ध किञ्च' इति प्रथमवाक्यं मुक्तविषयतयाऽपि व्याख्या-तम् । तत्र ज्ञापकमाह– **अतिशब्दादिति** ।। सर्वं लोकमतीति सर्वलोकाति-क्रमणवाचकातिशब्दाद् यद्ध किञ्चेत्यलौकिकत्ववाचकशब्दाच्च प्रथमवाक्योक्तो मोक्ष इति सिद्धमित्यर्थः ।

ननु द्वितीयवाक्येऽन्तरिक्षगतोऽत्येनं मन्यत इति प्रथमवाक्येऽपि सर्वलोकाधिपतिर्हिरण्यगर्भादिर्मुक्तोऽप्यत्येनं मन्यत इति सिद्धवन्निर्देशः कृतः। यद्यमुं लोकमिति तृतीयवाक्ये तु अत्येवैनं मन्येत जानीयादिति सावधारणविधिरित्येवं प्रयोगद्वैविध्ये किं कारणमित्यत आह– **अन्तरिक्षेति** ॥ अन्तरिक्षप्राप्तेरल्पत्वात् तद्गतानां विष्णुसमोऽहमित्यादि भावाप्रसक्तेः मोक्षे सर्वाज्ञानमिथ्याज्ञानविधूननावस्थायामपि तादृशभावस्याप्रसक्तेश्च शब्दात् सत्यलोकाधिपतेर्हिरण्यगर्भस्यापि सर्वदोषविदूरस्य तादृशभावाप्रसक्तेः विष्णुः सर्वोत्तम इत्येवं ज्ञानस्य स्वतःसिद्धत्वान्मन्यत इति सिद्धवचनमेव कृतम् । स्वर्गादिप्राप्तेस्तदाधिपत्यस्य यागादिफलतया तत्प्राप्तेश्चाधिकैश्वर्यरूपत्वाद्भगवत्समो वा भगवत्स्वरूप इति वा मन्तुं प्राप्तिरस्तीत्यत्येवैनं मन्येतेति सावधारणविधिरित्यर्थः । स्वर्गाधिपतयो हिरण्यकनहुषप्रभृतयस्तादृग्भावं कुर्वन्तीति। तत्प्रसङ्गकैश्वर्यवानत एव कदाचित् पारिजातहरणादावसुरावेशेनेषत्प्रसक्तिमान्योऽपीन्द्रादिरेवं न मन्येतेति विधिरिति भावः। अत्येनं मन्यत इत्यस्य प्राप्तं प्राप्तं लोकं अतिक्रम्य पुनरधिकमिच्छतीति यदपव्याख्यानं तदपाकरोति–**नचेति** ॥ अन्यथा अवबोध एव कामश्चेत् । बाधकान्तरमाह– **नच मन्यत इति** ॥ द्विविधः प्रयोगः। सिद्धरूपो विधिरूपश्च न युज्यते। किन्तु मन्यत इत्येव स्यान्नतु मन्येतेति। इच्छाया अविधेयत्वादिति भावः । मन्यत इत्यस्येच्छार्थत्वाङ्गीकारे बाधकान्तरमाह– **नचेति** ॥ अश्नतो भोगाननुभवतः। तस्मादपव्याख्यानस्यायुक्तत्वात्। चिन्त्य इत्युपनिषदर्थ इति सिद्धमित्यर्थः।

**उपनिषत्-**

**(यज्ञे पञ्चरूपात्मकहरेः सान्निध्यम्)**

**स एष वाचश्चित्तस्योत्तरोत्तरिक्रमो यद् यज्ञः स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः स एष यज्ञानां सम्पन्नतमो यत् सोम**

एतस्मिन् ह्येताः पञ्चविधा अधिगम्यन्ते यत् प्राक् सवनेभ्यः सैका विधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी ॥

भाष्यम्-

पुरुषस्थपञ्चभूतेषु पञ्चरूपो हरिः स्थितः।
प्रद्युम्नादिस्वरूपेण ज्योतिरादौ पृथक् पृथक् ॥
स एव तु पुनर्वायौ पञ्चधाऽवस्थितः प्रभुः।
प्राणादिरूपे वसति ह्यनिरुद्धादिरूपवान् ॥
अनिरुद्धः सप्रद्युम्नस्तथा सङ्कर्षणः प्रभुः।
वासुदेवो नारायणः पञ्चरूप इति क्रमात् ॥
पञ्चरूपोऽपि भगवान् यस्माद् वायौ विशेषतः।
स्थितस्तेन च खादिभ्यो वायुरेव विशिष्यते ॥
अत एव पृथिव्यादिस्वरूपा मनआदयः।
देवाः प्राणाश्रिता नित्यं गच्छन्ति प्राणमन्वपि ॥
पृथिवीमयं मनस्तत्र शेषवीन्द्रशिवेन्द्रकाः।
कामानिरुद्धौ देवगुरुर्मनोदेवाः सचन्द्रकाः ॥
श्रोत्रमाकाशरूपं च मित्रधर्मजलाधिपाः।
कुबेरश्च दिशां देवाः श्रोत्रदेवा इति श्रुताः ॥
ज्योतीरूपं तथा चक्षुश्चक्षुर्देवो रविः स्मृतः।
किञ्चित् तेजोयुता वाक् च विशेषेण त्वबात्मिका ॥
उपचीयते ततः साऽद्भिस्तदभावे च शुष्यति।
तृषितस्य हि वागेव पूर्वं मन्दा प्रवर्तते ॥
वाग् देवते ततो वह्निरुमा चापि प्रकीर्तिते।
चक्षुष्ट्वमग्नेः श्रोत्रत्वं चन्द्रस्यापि सहोच्यते ॥

**स्वाहाया अपि वाक्त्वं च पर्जन्यस्य मनःस्थितिः।**
**द्वितीयमेतदास्थानं श्रुतिवाक्यप्रमाणतः ॥**
**शेषवीन्द्रशिवादीनां मनआदिस्वरूपिणाम्।**
**आश्रयो वायुरेवैकस्तस्य नारायणः स्वयम् ॥**

**टिप्पणी -**

स एष पुरुषः पुरुषदेहः पञ्चविध इति प्रतीतिनिरासाय प्रमाणेन व्याचष्टे– **पुरुषस्थेत्यादिना** ॥ ज्योतिरादौ ज्योतिरादिषु 'स एष वायुः पञ्चविधः' इत्येतद् व्याचष्टे– **स एवेति** ॥ प्राणादिरूपे वायावित्यन्वयः। 'ता एता देवताः' इत्याद्यसङ्गतमित्याशङ्क्य वायोरन्यभूतेभ्य उत्तमत्वोपपादकत्वान्नासाङ्गत्यं उत्तमत्वप्रतिपादनं च पृथिव्यादिभ्यो विशेषेण वायौ पञ्चरूपस्य स्थित्युपपादकमिति भावेन सङ्गतिं करोति– **पञ्चरूप इत्यादिना** ॥ यद्यपि ज्योतिरादिभ्य इति वक्तव्यम्। 'यदुष्णं तज्ज्योतिः' इति पूर्वत्र चक्षुःश्रोत्रमित्युत्तरत्र श्रवणात्तथाप्याकाशाद् वायुरित्याकाशस्य कारणत्वश्रवणादुत्तमत्वं न भ्रमितव्यमिति भावेन खादिभ्य इत्युक्तम्। ननु वायोर्भूतोत्तमत्वे युक्त्योपपादनीये चक्षुःश्रोत्रमितीन्द्रियाणां वाय्वाश्रितत्वकथनमसङ्गतमित्यतो व्याचष्टे– **अत एव** वायो उरुत्तमत्वादे-वेति ॥ यद्यपि ज्योतिरादिस्वरूपाश्चक्षुराद्या इति वक्तव्यं तथाऽपि पृथिवीमयस्य मनसः साक्षात्प्राणावरशेषाद्यभिमतत्वात् पृथिव्यादिस्वरूपा इत्युक्तम्। 'प्राणस्य ह्यन्वपायम्' इत्येतद् व्याचष्टे– **गच्छन्तीति** ॥ मनआदिस्वरूपं तदभिमानिनश्चाऽह– **पृथिवीमयमित्यादिना** ॥ 'अन्नमयं हि सोम्य मनः' इति श्रुतेः पृथिवीविकारान्नमय-मित्यर्थः ॥ **कुबेरश्चेति** ॥ ये दिशां देवाः प्रसिद्धास्ते श्रोत्रदेवा इति योज्यम्। वागबात्मिकेत्यन्वयः। ननु तेजोमयी वागिति श्रुतेः कथमबात्मकत्वमित्यत उक्तम्– **किञ्चित्तेजोयुता वाक् तु विशेषेण त्वबात्मिकेति** ॥ अबात्मकत्वे ज्ञापकमाह– **उपचीयत इति** ॥ ततश्च अबात्मकत्वादेव। शुष्यति ह्रसति। ह्रासोपचययोर्ज्ञापकमाह– **तृषितस्येति** ॥ वाक् वाग्व्यवहारः। पश्चादुदकपाने उच्चा प्रवर्तत इति भावः।

तत अभिमन्यमानस्योभयप्रकृतिकत्वादेव । वाक् अग्निः । 'उमा वै वाक् समुद्दिष्टा'(ब्र.सू.४.१.१.) इत्यादौ वह्निरुमा च वाग्देवते प्रकीर्तितेइत्यर्थः । चक्षुरादीनां सूर्याद्यभिमतत्वमुक्तम् । श्रुत्यन्तरेऽन्यथोक्तेर्गतिमाह– **चक्षुष्ट्व-मिति** ॥ चक्षुरभिमानित्वं सहोच्यते वागभिमानित्वे नेति शेषः । वागभिमानित्वमविहायेति यावत् । चन्द्रस्य मनोभिमानित्वेन सह श्रोत्रत्वम् । स्वाहाया मन्त्राभिमानित्वेन वात्त्वम् । 'स्वाहा वै मन्त्रदेवता' (षट्प्र.भा. ६.६) इत्युक्तेः । पर्जन्यस्येन्द्रिय-गोलकाभिमानित्वेन सह 'लोकाभिमानी पर्जन्यः' (षट्प्र.भा. ६.६) इत्युक्त-त्वात् । आस्थानं अधिष्ठानम् । 'स एष वाचश्चित्तस्य' इत्यस्य सङ्गत्यप्रतीतेः सङ्गतिं कुर्वन् व्याचष्टे– **शेषेत्यादिना** ॥ एतेन यद् यस्मादेता देवताः प्राणापानयोर्निविष्टा वाय्वाश्रयाः प्राणाद्यभिधो वायुश्च तन्नामके हरौ निविष्टस्तस्माद् यद् यज्ञो यो यज्ञः स एष वाचश्चित्तस्य वायुवशानां वागाद्यभिमानिदेवतानाम् उत्तरोत्तरक्रमः क्रमवृत्तिभ्यो जातः तस्मिन् यज्ञेऽनिरुद्धादिरूपेणावस्थित इति उपनिषदर्थ उक्तो भवति ।

**भाष्यम्-**

**तस्माद् वायुवशानां हि वाक्चित्तादिस्वरूपिणाम् ।**
**देवानां क्रमवृत्तिभ्यो जाते यज्ञेऽपि केशवः ॥**
**अग्निहोत्रादिके नित्यमनिरुद्धादिरूपकः ।**
**पञ्चधाऽवस्थितः सोमे पञ्चरूपो व्यवस्थितः ॥**
**सवनत्रयात् पूर्वके च सवनत्रितये परे ।**
**अनिरुद्धादिरूपेण क्रमेणैव व्यवस्थितः ॥**
**तमेतं परमं विष्णुं मुक्तोऽप्यत्येव मन्यते ।**
**अधिकं ह्येव तस्मात् तं मन्येतान्योऽपि सर्वदा ॥ इत्यादि च ॥**

**पञ्चरूपभगवद्ध्यानार्थमेव चैतत् पञ्चविधत्वं सर्वत्रोक्तम् ॥**

**टिप्पणी -**

'स एष यज्ञानां सम्पन्नतमो यः सोमः' इत्यादि व्याचष्टे–**पञ्चधेति** ॥ पूर्वके प्राच्याङ्गे । परे उदीच्याङ्गे । एवं तारतम्यान्तगत्वेन सर्वोत्तमत्वमभिधाय मुमुक्षुणाऽयमुत्कर्षो ज्ञेयः मुक्तैरपि तथा ज्ञानादिति भावेनाह– **तमेतमिति** ॥ तमेतं परममुक्तविधोत्कर्षवन्तम् । एतेन 'स एष पुरुषः समुद्रः' इत्युत्कर्षं प्रतिज्ञाय कैमुत्यन्यायेन तज्ज्ञानं सर्वं लोकमतीत्यादिना विधायोत्कर्षोपपादनं 'स एष पुरुषः पञ्चविधः' इत्यादिना खण्डसमाप्तेः क्रियत इति खण्डाभिप्राय उक्तो भवति । बहुषु स्थलेषु पञ्चविधत्वोक्तेः प्रयोजनमाह– **पञ्चरूपेति** ॥ सर्वत्र पञ्चरूपभगवद्ध्यानार्थमेवातत्पञ्चविधत्वं सर्वत्राधिष्ठाने सर्वत्र बहुषु खण्डेषूक्तमिति योज्यम् ॥ ३ ॥

**खण्डार्थः -**

पूर्वखण्डे अचेतनस्य भोग्यत्वं चेतनस्य भोक्तृत्वं तेष्वपि स्थावराणां भोग्यत्वं जङ्गमानां भोक्तृत्वं तेष्वपि पश्वादीनां भोग्यत्वं पुरुषाणां भोक्तृत्वमिति निरूपितम् । कुत इदं पदार्थतारतम्यमित्यतो भगवत्सन्नि-धानतारतम्यादिति भावेनायं खण्डः । य आत्मानं परमात्मानम् । तरां तारतम्येनाविराविर्भूतं वेद स तस्य तदीयो भवति तदन्तरङ्गप्रियो भवति । यद्वाऽऽविस्तरामित्यस्याविर्भावतारतम्येनेत्यर्थः । सन्निधानतारतम्यं प्रपञ्च्यते– **अश्नुत इति** ॥ ओषधिवनस्पतयः स्थावराणि । यच्च किञ्चित् प्राणभृच्चलनयुक्तं जङ्गमम् । तत्सर्वं स नारायणः। भूयो भूयस्त्वेन शिलादिभ्यो विशेषेण तेष्वाविर्भूतः सन्नश्नुते प्राप्नोति । सन्निधानं तारतम्यज्ञानं च भगवत्येव पूर्णमन्येषु यथायोग्यमिति भावेनोच्यते– **स इति** ॥ स नारायण एव सर्वभूतेषु तारतम्येनाविः सन्निहितं स्वात्मानं तरां नितरां सम्यग् वेद नान्य इत्यर्थः । शिलादिभ्यः स्थावरजङ्गमेषु सन्निधानाधिक्ये कार्यदर्शनं प्रमाणमुच्यते– **ओषधीति** ॥ ओषधिवनस्पतिषु रसः क्षीरादिः । प्राणभृत्सु चित्तं स्मृतिकारणं वृत्तिविशेषो दृश्यते । तच्च सन्निधानविशेषादेवोप-

पद्यते । अन्यथा तन्न स्यादिति भावः । पश्वादिभ्यः पुरुष एव स आत्मा तरामतिशयेनाविः सन्निहितः कुतः? हि यस्मात् पुरुष एव प्रज्ञानेन सम्पन्नतमोऽतिशयेन सम्पन्नः । कुतः? मनसा विज्ञातं वाचा वदति । विज्ञातं पूर्वमनुभूतं पश्यति प्रत्यभिजानाति । **श्वस्तनं** सर्वकालोपलक्षणम् । एष्यत्कालं पूर्वकालं च वेद । लोकालोकौ पुण्यपापसाध्यौ स्वर्गनरकलक्षणौ वेद । मर्त्येन शरीरेणामृतं मोक्षमीप्सतीच्छत्येवमेष पुरुषः प्रज्ञानेन सम्पन्नतमः । अथ तेभ्य इतरेषां पशूनामशनापिपासाविषय एवाभिविज्ञानम् । एवशब्दव्यावर्त्यमुच्यते– **न विज्ञातमित्यादिना** ॥ तस्मात् ते पश्वादयो ज्ञानेनैतावन्तः परिमिता भवन्तीत्यर्थः । कुत इदं ज्ञातिवैचित्र्यमित्यत उच्यते– **यथाप्रज्ञमिति** ॥ पश्वादीनां यथाप्रज्ञं प्रज्ञानुसारेण सम्भवा उत्पत्तय इत्यर्थः ॥

पूर्वखण्डे सामर्थ्यव्यञ्जनापरपर्यायं सन्निधानं पुरुषेऽधिकमित्युक्तम् । तदेव सामर्थ्याधिक्यं उपास्त्यर्थमुच्यतेऽस्मिन् खण्डे– **स एष इति** ॥ योऽस्मिन् पुरुषे पश्वादिभ्य आधिक्येन सन्निहितो भगवान् स एष पुरुषः सर्वेभ्यो गुणतो रूपतश्च समुद्रः समुद्रिक्तः । ततश्च किमित्यतस्तथा जानीयादिति विधातुमाचारो वा कैमुत्ययुक्तिर्वा प्रमाणत्वेनोच्यते– **सर्वं लोकमिति** ॥ स जीवो ब्रह्मादिर्यद्यपि यस्माद् भगवत्प्रसादात् सर्वं लोकमति अतिशयेनाश्नुते प्राप्नोति तदाऽप्येनमात्मानं भगवन्तमति सर्वोत्कृष्टत्वेन मन्यते । न केवलं संसारी ब्रह्मादिरतिमन्यते किन्तु मुक्तोऽपीत्युच्यते– **सर्वमिति** ॥ सर्वं लोकं सर्वलोकानतीत्य यत्किञ्चिदलौकिकं मोक्षाख्यमश्नुते प्राप्नोति तदाऽपि तमेनं विष्णुं स्वात्मनः सर्वस्माच्चाधिकं मन्यत इत्यर्थः । यदैवं सर्वलोकाधिपत्यं मोक्षं च प्राप्तानामपि विष्णूत्कर्षज्ञानं तदाऽत्यल्पमन्तरिक्षं प्राप्तानामहंभावे कारणाभावात् सिद्धमेव तथा ज्ञानमित्युच्यते– **यद्यन्तरिक्षमिति** ॥ एवमाचारं कैमुत्यं चोक्त्वा ये स्वर्गाद्याधिपत्यं प्राप्ता नहुषप्रभृतयस्तेषामहमेवेश्वर इति भावोऽस्ति । ये च कर्मफलतया स्वर्गप्राप्तास्तेषां केषाञ्चित् क्रियाफले स्वातन्त्र्याभावोऽस्तीन्द्रादीनां च महैश्वर्यवशेन पारिजात-

हरणादावसुरावेशवशेन कृष्णो मदवम इति भावोऽस्ति तानुपलक्षणीकृत्याहंभावप्रसक्तिमतां सर्वेषामपि भगवदुत्कर्षज्ञानं विधीयते— **यद्यमुमिति** ।। विष्णुर्यद्यमुं स्वर्गलोकं देवलोकाधिपत्यं वा तद्योग्यस्याश्नुवीत प्रापयीत ददाति तथाप्येनं भगवन्तमतिमन्येतैवाधिकं जानीयादेव । ननु स्वर्गभोगस्य बहुवेश्यादिपरिवारयुक्तत्वेनाशुचित्वादीश्वरेण प्रदत्तेऽपि कथं तत्परिगृह्णीयुरिन्द्राद्या इत्यतश्चोक्तम्— **यद्यमुमिति** ।। यदप्यमुं देवलोकाधिपत्यं विष्णुर्ददाति तदप्यश्नुवीतैव भुञ्जीतैव बहुवेश्यादियुक्तमिति बुद्ध्या तत्त्यागो न कार्यः । यद्वा, यः कश्चित् साधनानुष्ठाता यद्यप्यमुं लोकं स्वर्गाद्यश्नुते प्राप्नोति तदाप्यश्नुवीतैव ईश्वरप्रसादादिदं प्राप्तमिति बुद्ध्या केवलं भुञ्जीतैव । न फले स्वातन्त्र्यमतिं कुर्यात् किन्त्वेनमेवाधिकं मन्येतेत्यर्थः।

पुरुषे सन्निधानाधिक्यविवरणायोपक्रान्तं रूपतः समुद्रेकं तत्तच्छब्दप्रवृत्तिनिमित्तगुणोद्रेकं चोपपादयितुमुच्यते— **स एष पुरुषः पञ्चविध इत्यादिना** ।। स एष पुरुषो हरिः पुरुषशरीरस्थपञ्चभूतेषु ज्योतिरादिषु प्रद्युम्नादिरूपेण पञ्चविधः स्थितः । तस्य पुरुषस्य यदुष्णमुपलभ्यते तज्ज्योतिरग्निभूतं तत्र ज्योतिर्नामा प्रद्युम्नः । यानि खानि विवराणि स आकाशस्तत्राऽकाशनामा वासुदेवः । यल्लोहितं रक्तं श्लेष्मा रेतस्ता आपः तास्वम्नामाऽनिरुद्धः । यच्छरीरं परिदृश्यमानं स्थूलं सा पृथिवी तत्र पृथिवीनामा नारायणः । यः प्राणः श्वासोच्छ्वासादिलक्षणः स वायुस्तत्र वायुनामा सङ्कर्षणः । स एष प्राणशब्दितो वायुः प्राणोऽपानो व्यान उदानः समान इति पञ्चविधः । वाय्वन्तर्गतः सङ्कर्षणोऽप्यनिरुद्धादिरूपेण पञ्चविधः प्राणादिनामा प्राणादिषु वर्तते । वायौ पञ्चभी रूपैः विशेषसन्निधानमुक्तम्, तत्र को हेतुरित्यत आकाशादिभूतेभ्य उत्तमत्वं हेतुरिति भावेनोत्तमत्वे ज्ञापकमुच्यते— **ता इति** ।। ता अग्न्यादिस्वरूपाश्चक्षुःश्रोत्रं मनोवागित्येता देवता प्राणापानयोर्निविष्टा आश्रिता । मुख्यप्राणस्य प्राणापानाख्यरूपद्वयेन विशेषप्रवृत्तिरिति भावेन द्वयोरुपादानं वस्तुतस्तु रूपपञ्चकेऽप्याश्रिता इति बोध्यम् । वायुरपि प्राणादिनामके विष्णावाश्रित इति च बोध्यम् । ज्ञापकान्तरमुच्यते— **प्राणस्येति** ।। प्राणस्यापायं शरीरादुत्क्रमणमनुसृत्यैता देवता अपियन्ति गच्छन्ति ।

वाक्चित्तादीनां सवृत्तिकानां वायुराश्रयः । तस्य नारायण आश्रय इत्युक्तम् । तत्र ज्ञापकमुच्यते– **स एष वाच इति** ।। यद् यस्मान्नारायणो वायुद्वारा वाक्चित्तादीनामाश्रयस्तस्माद् यद्यज्ञो यो यज्ञः । स एष वाचश्चित्तस्योपलक्षणमेतत् वाक्चित्तादिस्वरूपिणां देवानामुत्तरोत्तरिक्रमः क्रमयुक् । 'मनसा वाऽग्रे सङ्कल्पयत्यथ वाचा व्याहरति' इत्युक्तदिशा सङ्कल्पनव्याहरणादिक्रमिकवृत्तिभ्यो जातः । स एष वाक्चित्तादीन्द्रियवृत्तिभ्यो जातो यज्ञः । अग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम इति पञ्चविधः । स एष यज्ञो यज्ञान्तर्गतो भगवानपि पञ्चविधेऽग्निहोत्रादिके तत्तन्नामानिरुद्धादिरूपेण पञ्चधाऽवस्थित इत्यर्थः । वायुद्वारा वाक्चित्तादिनियामकत्वादेव हरेस्तद्वृत्तिजन्ये यज्ञेऽप्याश्रयतया पञ्चरूपेणावस्थानमिति भावः । न केवलं यज्ञे पञ्चधाऽवस्थानम् । किन्तु पञ्चविधयज्ञमध्ये प्रधाने सोमे चेति भावेन सोमस्यातिशयमुक्त्वा तत्र पञ्चधाऽवस्थानमुच्यते– **स एष यज्ञानामिति** ।। यत्सोमो यः सोमः । स एष यज्ञानां मध्ये सम्पन्नतमोऽतिशयेन गुणाढ्यः । यज्ञानामतिशयेन सम्पत्तिकारणं वा । एतस्मिन् सोमे एताः पञ्चविधाः शास्त्रतोऽधिगम्यते । कास्ताः ? सवनेभ्यः प्रातर्माध्यन्दिनतृतीयसवनेभ्यः प्राग् यदङ्गं प्राच्याङ्गं सैका विधा । त्रीणि च सवनानि तिस्रो विधाः । सवनेभ्यो यदूर्ध्वमुदीच्याङ्गं सा पञ्चमी विधा । एतस्मिन् सोम एता भगवन्मूर्तयोऽनिरुद्धादिक्रमेण पञ्चधाऽधिगम्यन्ते । कथम्? यत् प्राक् सवनेभ्यः तत्रैका विधा भगवन्मूर्तिरित्यादि योजना ।

**।। इति तृतीयः खण्डः ।।**

**उपनिषत्-**

**(स्तोमसामचितिछन्दश्शस्त्रेषु पञ्चरूपोपासनम्)**

**यो हवै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूळ्हं स सम्प्रतिविदेष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूळ्हो यदेतन्महदुक्थं तदेतत् पञ्चविधं त्रिवृत् पञ्चदशं सप्तदश-**

मेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद् भद्रं राजनमिति सामतो गायत्र्युष्णिग् बृहती त्रिष्टुब् द्विपदेति च्छन्दस्तः शिरो दक्षिणः पक्ष उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् ॥

**भाष्यम्-**

यज्ञेषु यज्ञनामानं याज्यत्वात् पुरुषोत्तमम् ।
अधिरूढं तथाऽहस्सु चाहर्नामानमेव तु ॥
अहार्यत्वाद्धि देवेषु देवं सर्वोत्तमत्वतः ।
एवं च सर्वनामानं सर्वेषु स्थितमच्युतम् ॥
स्तोमादिषु च यो वेद स सम्यग्विदिति श्रुतः ।
य एष उक्थनामाऽसौ सर्वोत्थापनको हरिः ॥
महांश्च परिपूर्णत्वात् सहस्रबृहतीस्थितः ।
अहरह्वां स यज्ञानां यज्ञो देवाधिकोऽपि सः ॥
अनिरुद्धादिरूपेण स विष्णुः पञ्चधा स्थितः ।
स्तोमसामचितिच्छन्दःशस्त्रेष्वपि पृथक् पृथक् ।
एकैकमेव तद् रूपमनिरुद्धादिपञ्चकम् ॥

**टिप्पणी -**

'यो ह वा' इत्यादौ बृहतीसहस्रस्यैव यज्ञादिष्वधिरूढत्वं तत्तन्नामकत्वमुच्यत इत्यन्यथाप्रतीतिनिरासाय प्रमाणेन व्याचष्टे– **यज्ञेष्वित्यादिना** ॥ यज्ञेष्वधि-रूढम् । याज्यत्वाद् यज्ञनामानम् । पुरषोत्तममित्यनेन पुरुषस्य 'यज्ञेन यज्ञमयजन्त' (तै.आ.३.१२) इति पुरुषसूक्ते तत्प्रसिद्धम्निति हवेति द्योतयतीत्युक्तं भवति । तुरप्यर्थे । तथा अहःस्वप्यधिरूढमहार्यत्वाद्धर्तुमशक्यत्वादेव वाऽहर्नामानम् । देवेष्वधिरूढं सर्वोत्तमत्वतः सर्वोत्तमत्वद्योतनादिगुणवत्त्वतो देवं देवनामानमित्यर्थः।

हिशब्देन यजेर्हरतेर्दीव्यतेश्चोक्तार्थत्वे धातुव्याख्यानप्रसिद्धिं सूचयति। एतदुपलक्षणम्। वक्ष्यमाणस्तोमादिषु च यो वेदेत्याह– **एवञ्चेति** ॥ एवमेव स्तोमादिषु सर्वेषु स्थितं स्तोमादिसर्वनामानमित्यन्वयः । ह वा इत्यस्यार्थः–**इति श्रुत इति** ॥ 'एष वै यज्ञे यज्ञः' इत्यादि व्याचष्टे–**य एष इति** ॥ योऽसौ हरिः सर्वोत्थापकत्वादुक्थनामा परिपूर्णत्वान्महांश्च सहस्रबृहतीस्थितत्वाच्च महदुक्थनामा स एषः अहनि अह्नाम् । अहः अहस्त्वप्रदः स देवेषु देवो देवानां देवत्वप्रदः। देवाधिकोऽपीति यावदिति योजना। एतेन 'यज्ञे यज्ञः' इत्यादेर्यज्ञादावधिरूढो यज्ञादीनां यज्ञत्वादिप्रद इत्यर्थान्तरमुक्तं भवति । यज्ञानां यज्ञ इतिवद् देवानां देव इत्यनुक्तत्वादेवाधिक इत्यनेन देवेषु मध्ये देवो देवोत्तम इत्यप्यर्थान्तरमुक्तं ज्ञेयम्। अत एव यज्ञ इत्यादिवद् देव इत्येकवचनमप्रयुज्य देवेष्विति बहुवचनमिति भावः । 'यदेतन्महदुक्थं तदेतत् पञ्चविधम्'इत्येतद् व्याचष्टे– **अनिरुद्धादीति** ॥ बृहतीसहस्रगतो विष्णुः स्तोमादिषु पञ्चसु क्रमेणानिरुद्धादिरूपेण पञ्चविधः स्थितः। पृथक् पृथगित्येकैकं रूपमेकैकत्रेत्यर्थः। श्रुतौ छन्दसां पूर्वमुक्तत्वेऽप्यनिरुद्धादिरूपस्थितिक्रममपेक्ष्य व्युत्क्रमेणोपादानम्। तदेतत्पञ्चविधमिति प्रकारान्तरेण व्याचष्टे– **एकैकमिति** ॥ तत् स्तोमादिगतमनिरुद्धादिकमेकैकं रूपं पृथक् पृथक् प्रत्येकं प्रत्येकम् अनिरुद्धादिपञ्चात्मकमित्यर्थः । अनेन पञ्चविधमपि प्रत्येकं पञ्चविधमिति योजितं भवति ।

**उपनिषत्-**

**पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति ॥**

**तत् स्तोभसहस्रं भवत्येवं ह्येताः पञ्चविधा अनुशस्यन्ते यत् प्राक् तृचाशीतिभ्यः सैका विधा तिस्रस्तृचाशीतयो यदूर्ध्वं सा पञ्चमी ॥**

**भाष्यम्-**

**प्रस्तावादिष्वपि विभुः पञ्चधैव व्यवस्थितः।**
**प्रस्तावादीन् पञ्चकृत्वस्तस्मादेव प्रकुर्वते॥**
**पञ्चरूपं तमेवैकं स्तोतुमेव पृथक् पृथक्।**
**तत्र ये स्तोभशब्दाश्च संस्थिता बहुकोटयः॥**
**पृथक् पृथक् तेऽपि विष्णोः प्रादुर्भावान् प्रचक्षते।**

**टिप्पणी -**

पञ्चकृत्वः प्रस्तौतीति वाक्यलब्धार्थमाह– **प्रस्तावादिष्विति**॥ प्रस्तावादिषु पञ्चसु पञ्चरूपी क्रमेण तिष्ठतीत्यर्थः। प्रस्तावादिषु विद्यमानः पञ्चरूपी विष्णुः प्रत्येकं प्रत्येकं पञ्चधैव व्यवस्थित इत्यर्थः। इदानीमुक्तार्थे हेतुपरतया पञ्चकृत्व इत्यादि व्याचष्टे– **प्रस्तावादीनिति**॥ तस्मादेव एकैकपञ्चरूपावस्थानादेव। एकं निर्भेदमेव। पञ्चरूपोपेतं पृथक् पृथक् स्तोतुमेव। अन्यथा सकृदनुष्ठानं स्यादिति भावः। तत् तत्र सामसु। स्तोभानां सहस्रं बहुकोटय आश्रिता भवन्ति। तद् भगवद्रूपजातं बृहतीसहस्रप्रतिपाद्यं स्तोभसहस्रप्रतिपाद्यं च भवतीति मूलार्थमभिप्रेत्य व्याचष्टे– **तत्रेति**॥ न केवलं बृहतीसहस्राणि किन्तु ते स्तोभा अपि पृथक् पृथग् बहून् प्रादुर्भावान् प्रचक्षत इत्यर्थः। एवं ह्येता इत्यादेर-तिरोहितार्थत्वादव्याख्यानम्।

**उपनिषत्-**

**(बृहतीसहस्रं सहस्रनामव्याख्यानम्)**

**तदेतत् सहस्रम्। तत् सर्वं तानि दश दशेति वै सर्वम्।**

**भाष्यम्-**

अनन्तरूपो हि हरिः शब्दोऽप्येष ह्यनन्तधा॥

विष्णोः सहस्रनाम्नस्तु यद् तद् रूपसहस्रकम् ।
बृहतीसहस्रमेतच्च तद् वक्ति हि पृथक् पृथक् ॥
सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः ।
नामानि विष्णोरुच्यन्ते सहस्रमिति चाऽख्यया ॥
अनन्तनामवचने त्वशक्तत्वात् सहस्रकम् ।
नाम्नां पृथगिदं प्रोक्तमनन्ततनुवाचकम् ॥
विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये ।
आसीत् सहस्रमित्याख्या सहस्रं मुख्यतोऽमितम् ॥
ब्रह्म यावत् तावती वागिति वेदप्रमाणतः ।
सहैवानन्तरूपैस्तु सरणेन सहस्रकम् ॥
नाम्ना सह सृतेरेव रूपाणां वा सहस्रता ।
बृहतीसहस्रं चैतस्माद् रूपानन्ताभिधायकम् ॥
पृथक् पृथग्घि नामार्था ऋच एताः प्रकीर्तिताः ।
सर्वनामात्मकं तस्माद् ऋक्सहस्रमिदं हरेः ॥
सर्वरूपाण्यतो विष्णोः संस्तुतान्यमुनैव हि ।

**टिप्पणी-**

तत् स्तोभसहस्रमित्येतत् सङ्गततया तदेतत् सहस्रमित्यादि व्याख्यातुं चेति बोध्यम् । ननु स्तोभानां मितत्वात् कथममितभगवद्रूपपरत्वमित्यत उच्यते– **तदेतत् सहस्रं तत् सर्वमिति** ॥ तदेतत् सहस्रं स्तोभसहस्रप्रतिपाद्यं रूपजातं तत्सर्वं अनन्तम् । तदेतत् सहस्रं स एष स्तोभसहस्रलक्षणः शब्दोऽपि सर्वम् अनन्तः । जातिविवक्षया बहुकोटित्वेऽप्यनन्तेषु सामस्वनन्तधा वर्तत इत्यर्थः । तद् व्याचष्टे–**अनन्तरूप इति** ॥ एषशब्दः स्तोभलक्षणः । ननु बृहतीसहस्राक्षराणां तद्वाच्यरूपाणां च परिमितत्वात् कथं तेषाममितस्तोभाक्षरप्रतिपाद्यत्वमित्य-तश्चोक्तम् – **तदेतत् सहस्रं तत्सहस्रं तत्सर्वमिति** ॥ यत् तदेतत् सहस्रं

**भाष्यम्-**

**प्रस्तावादिष्वपि विभुः पञ्चधैव व्यवस्थितः।**
**प्रस्तावादीन् पञ्चकृत्वस्तस्मादेव प्रकुर्वते ॥**
**पञ्चरूपं तमेवैकं स्तोतुमेव पृथक् पृथक्।**
**तत्र ये स्तोभशब्दाश्च संस्थिता बहुकोटयः ॥**
**पृथक् पृथक् तेऽपि विष्णोः प्रादुर्भावान् प्रचक्षते।**

**टिप्पणी -**

पञ्चकृत्वः प्रस्तौतीति वाक्यलब्धार्थमाह– **प्रस्तावादिष्विति** ॥ प्रस्तावादिषु पञ्चसु पञ्चरूपी क्रमेण तिष्ठतीत्यर्थः। प्रस्तावादिषु विद्यमानः पञ्चरूपी विष्णुः प्रत्येकं प्रत्येकं पञ्चधैव व्यवस्थित इत्यर्थः। इदानीमुक्तार्थे हेतुपरतया पञ्चकृत्व इत्यादि व्याचष्टे– **प्रस्तावादीनिति** ॥ तस्मादेव एकैकपञ्चरूपावस्थानादेव। एकं निर्भेदमेव। पञ्चरूपोपेतं पृथक् पृथक् स्तोतुमेव। अन्यथा सकृदनुष्ठानं स्यादिति भावः। तत् तत्र सामसु। स्तोभानां सहस्रं बहुकोटय आश्रिता भवन्ति। तद् भगवद्रूपजातं बृहतीसहस्रप्रतिपाद्यं स्तोभसहस्रप्रतिपाद्यं च भवतीति मूलार्थमभिप्रेत्य व्याचष्टे– **तत्रेति** ॥ न केवलं बृहतीसहस्राणि किन्तु ते स्तोभा अपि पृथक् पृथग् बहून् प्रादुर्भावान् प्रचक्षत इत्यर्थः। एवं ह्येता इत्यादेर-तिरोहितार्थत्वादव्याख्यानम्।

**उपनिषत्-**

**(बृहतीसहस्रं सहस्रनामव्याख्यानम्)**

तदेतत् सहस्रम्। तत् सर्वं तानि दश दशेति वै सर्वम्।

**भाष्यम्-**

अनन्तरूपो हि हरिः शब्दोऽप्येष ह्यनन्तधा ॥

विष्णोः सहस्रनाम्नस्तु यद् तद् रूपसहस्रकम् ।
बृहतीसहस्रमेतच्च तद् वक्ति हि पृथक् पृथक् ॥
सहस्रशब्दोऽप्यमितं यतो वक्त्यमितान्यतः ।
नामानि विष्णोरुच्यन्ते सहस्रमिति चाऽख्यया ॥
अनन्तनामवचने त्वशक्तत्वात् सहस्रकम् ।
नाम्नां पृथगिदं प्रोक्तमनन्ततनुवाचकम् ॥
विष्णोरनन्तरूपाणामुक्त्या पञ्चशतद्वये ।
आसीत् सहस्रमित्याख्या सहस्रं मुख्यतोऽमितम् ॥
ब्रह्म यावत् तावती वागिति वेदप्रमाणतः ।
सहैवानन्तरूपैस्तु सरणेन सहस्रकम् ॥
नाम्ना सह सृतेरेव रूपाणां वा सहस्रता ।
बृहतीसहस्रं चैतस्माद् रूपानन्ताभिधायकम् ॥
पृथक् पृथग्घि नामार्था ऋच एताः प्रकीर्तिताः ।
सर्वनामात्मकं तस्माद् ऋक्सहस्रमिदं हरेः ॥
सर्वरूपाण्यतो विष्णोः संस्तुतान्यमुनैव हि ।

**टिप्पणी-**

तत् स्तोभसहस्रमित्येतत् सङ्गततया तदेतत् सहस्रमित्यादि व्याख्यातुं चेति बोध्यम् । ननु स्तोभानां मितत्वात् कथममितभगवद्रूपपरत्वमित्यत उच्यते— **तदेतत् सहस्रं तत् सर्वमिति** ॥ तदेतत् सहस्रं स्तोभसहस्रप्रतिपाद्यं रूपजातं तत्सर्वं अनन्तम् । तदेतत् सहस्रं स एष स्तोभसहस्रलक्षणः शब्दोऽपि सर्वम् अनन्तः । जातिविवक्षया बहुकोटित्वेऽप्यनन्तेषु सामस्वनन्तधा वर्तत इत्यर्थः । तद् व्याचष्टे—**अनन्तरूप इति** ॥ एषशब्दः स्तोभलक्षणः । ननु बृहतीसहस्राक्षराणां तद्वाच्यरूपाणां च परिमितत्वात् कथं तेषाममितस्तोभाक्षरप्रतिपाद्यत्वमित्यतश्चोक्तम् – **तदेतत् सहस्रं तत्सहस्रं तत्सर्वमिति** ॥ यत् तदेतत् सहस्रं

सहस्रबृहतीप्रतिपाद्यं भगवद्रूपजातं तत्सर्वमनन्तम् । यत् तदेतत् सहस्रं तदपि सर्वमनन्तमित्यर्थः । तदेतद् व्याचष्टे– **अनन्तरूप इति** ।। बृहतीसहस्रस्य परिमितत्वेऽप्यनन्तेषु रूपेषु शक्तत्वादानन्त्यमिति भावेनानन्तधानन्तप्रकारेण तेषु रूपेषु वर्तत इत्युक्तम् । ननु यदुक्तं बृहतीसहस्रस्यानन्तरूपप्रतिपादकत्वं तदेव कुत इत्यतस्तस्य सहस्रनामव्याख्यानरूपत्वात् सहस्राणां च नाम्नामनन्त-रूपपतिपादकत्वाद् बृहतीसहस्रमप्यनन्तरूपाभिधायकमित्यभिप्रेत्य सहस्र-नामव्याख्यानरूपत्वं तावदुच्यते– **तदेतत् सहस्रमिति** ।। यद् विष्णोः सहस्रनाम्नोऽर्थ-भूतं रूपसहस्रं तदेतत्सहस्रं बृहतीसहस्रम् । वक्तीति शेषः । तद् व्याचष्टे– **विष्णोरिति** ।। पृथक् पृथगित्येकैका ऋगेकैका ऋगेकैकनामार्थं वक्तीत्यर्थः । नन्वेवं सहस्रनाम्नां बृहत्यृचां च व्याख्येयव्याख्यानभावे तत्प्रतिपाद्यानां मितत्वमेव सहस्रशब्दस्य पञ्चशतद्वयवाचित्वादित्यत उक्तम्–**सर्वमिति** ।। तत्सहस्रमिति पदं सर्वममितं वक्ति यतोऽतस्तत्सहस्रनामेत्यनेनोक्तं नाम जातं सर्वमनन्तमेवेत्यर्थमभिप्रेत्य व्याचष्टे– **सहस्रशब्द इति** ।। तर्हि पञ्चशतद्वयनामदृष्टिविरोध इत्यतश्चोक्तम्– **तत्सर्वमिति** ।। तत् प्रसिद्धं नामसहस्रकं सर्वमनन्तरूपजातं वक्तीत्यर्थमभिप्रेत्य व्याचष्टे– **अनन्तनामवचन इत्यादिना** ।। इदं प्रसिद्धं नाम्नां सहस्रकं अनन्त-तनुवाचकमित्यर्थः । तथाच नाम्नां पञ्चशतद्वयतया प्रदर्शनेऽप्यनन्तरूपेषु शक्ततया शक्तिविवक्षयाऽनन्तत्वं न विरुद्ध्यत इति भावः । नन्वनन्तानां रूपाणामनन्तानि पृथक् नामानि सन्त्येव तत् किमनेन पञ्चशतद्वयेनानन्तरूपप्रतिपादनाभिप्रायेण भारते पृथक्कृत्य तद्व्युत्पादनेनेत्यत उक्तम्– **अनन्तनामेति** ।। अनन्तानां नाम्नां वचने पठनेऽधिकारिणामशक्तत्वा-दनन्ततनुवाचकमिदं नाम्नां सहस्रकं पृथक्कृत्य भारते प्रोक्तमित्यर्थः । भवेदेवं यदि नाम्नां पञ्चशतद्वयस्यानन्ततनुवाचकत्वं स्यात् तदेव कुत इत्यतोऽनन्ते मुख्यस्य सहस्रशब्दस्यात्र प्रयोगान्यथानुपपत्तेरेवेति भावेनोक्तम्– **तदेतत् सहस्रं तत्सर्वमिति** ।। तत् पञ्चशतद्वयात्मकं नामसहस्रं यतः सर्वमनन्तानि रूपाणि वक्ति । तत् तस्मादेव हेतोरेतत् पञ्चशतद्वयं

नामसहस्रममिते मुख्येन सहस्रमिति शब्देनोच्यते । अन्यथा तन्न स्यादिति भावः । तदेतद् व्याकरोति– **विष्णोरिति** ।। यतः **सहस्रं** सहस्रंशब्दो मुख्यतो मितं वक्ति । अतः पञ्चशतद्वये विष्णोरनन्तरूपाणामुक्त्यैव सहस्रमित्याख्याऽऽसीदित्यङ्गीकर्तव्यमित्यर्थः । स्वरूपानन्त्ये बाधिते सत्यर्थानन्त्येनैव तत्राऽनन्त्ये मुख्यतः सहस्रशब्दो निर्वाह्य इति भावः । न केवलमनन्ते रूढस्य सहस्रशब्दस्य नामसु प्रयोगान्यथानुपपत्त्या पञ्चशतद्वयस्यानन्तरूपप्रतिपादकत्वम् । किन्तु नामसु प्रयुक्तः सहस्रशब्द एव प्रतिपाद्यानन्त्यं साक्षादाहेत्युच्यते– **तदेतत् सहस्रमिति** ।। तन्नाम जातमेतदेतैः प्रतिपाद्य भगवद्रूपैः सह प्रतिपादकतया सृतं स्थितमिति व्युत्पत्त्या सहस्रमित्युच्यत इत्यर्थः । तद् व्याचष्टे– **ब्रह्मेति** ।। परं ब्रह्म यावद्रूपैर्विष्ठितं विशेषेण स्थितम् । वाक् नाम जातरूपाणि तावती सामान्यतो विशेषतश्च तावद्रूपप्रतिपादिकेति वेदप्रमाणतः अनन्तरूपैः सह प्रतिपाद्यप्रतिपादकभावानुसारेणैव नाम जातं सहस्रमित्युच्यत इत्यर्थः । ननु 'यावद् ब्रह्म विष्ठितं तावती वाक्' इति श्रुतिरन्यत्र ब्रह्म यावद्देशकालव्यापि वेदवागपि तावती । तावद्देशकालव्यापिनीति व्याख्यातम् । कथमेतत् ? सत्यम्, व्याख्यानान्तरत्वात् । यद्वा, वाक्पदस्य वेदपरत्वं भवतु । यावद् ब्रह्मेत्यस्य ब्रह्म यावद्रूपैः स्थितं वाग् वेदवागपि तावती तावद्रूपप्रतिपादिका । केषाञ्चिद्रूपाणां विशेषतोऽन्येषां वेदानुक्तमाहात्म्यस्य वेदेनैव गम्यत्वादित्युक्तरीत्या सामान्यतो वेदोक्तत्वात् । तथाच 'शास्त्रेषु भारतं सारं तत्र नामसहस्रकम्' (गी.भा. म.व.) इत्युक्तरीत्या विश्वादिनाम्नां वेदोक्तानन्तरूपप्रतिपादकत्वमनया श्रुत्या लभ्यत इति ज्ञेयम् । नन्वेवं चेद् विष्णुसहस्रनामप्रतिपाद्यं रूपसहस्रकमिति प्रसिद्धिविरोध इति चेत् तत्रापि सहस्रशब्दस्यानन्ते मुख्यत्वादिति परिहारे सिद्धेऽपि सहस्रनामप्रतिपाद्येष्वनन्तेषु रूपेषु सहस्रशब्दो निरुच्यते– **तदेतत् सहस्रमिति** ।। तद् भगवद्रूपजातं सर्वमनन्तमपि यस्मादेतदेतैर्नामभिर्वाच्यतया सह सृतं तत् तस्मात् सहस्रमुच्यत इत्यर्थमभिप्रेत्य व्याचष्टे–**नाम्नेति** ।। वाशब्दश्चशब्दार्थे ।

नतु परिमितत्वादित्येवार्थः । अस्त्वेवं वैष्णवनामसहस्रस्यानन्तरूपप्रतिपादकत्वम् । ततश्च किमित्यत उपसंह्रियते– **तदेतत् सहस्रमिति** ।। तद् बृहतीसहस्रमेतदेतस्मात् कारणादनन्तरूपप्रतिपादकनामसहस्रव्याख्यानरूपत्वात् सर्वमनन्तं भगवद्रूपं वक्तीत्यर्थमभिप्रेत्य व्याचष्टे– **बृहतीसहस्रं चैतस्मादिति** ।। अस्त्वेव बृहतीसहस्रं सहस्रनामार्थरूपानन्त्याभिधायकम् । ततश्च किमित्यत उपसंह्रियते– **तदेतदिति** ।। यस्मात् पृथक् पृथङ्नामार्था एता ऋचस्तत् तस्मादेतदिदं बृहतीसहस्रं तत् सर्वं तस्य हरेः सर्वं विश्वादिसर्वनामात्मकमित्युच्यते । व्याख्यानव्याख्येययोरभेदोपचारादिति भावेनैतदर्थमाह– **पृथगिति** ।। हि यस्मात् । अस्त्वेवं सर्वनामात्मकत्वं, ततः किमित्यत उच्यते– **तत् सर्वमिति** ।। तस्मात् तेन बृहतीसहस्रशंसकेनामुनाऽधिकारिणा । तेन बृहतीसहस्राख्यशस्त्रेण करणेन तत् सर्वं तस्य सर्वं रूपजातमपि संस्तुतं भवतीति शेषः । तस्मादेवं ज्ञात्वा बृहतीसहस्रं शंसनीयमित्युपनिषदर्थमभिप्रेत्य व्याचष्टे– **सर्वरूपाणीति** ।। न केवलं बृहतीसहस्राख्यशस्त्रस्य यत् प्राक् तृचाशीतिभ्य इत्युक्तरीत्याऽनिरुद्धादिपञ्चरूपप्रतिपादकत्वमपि तु मत्स्यादिवामनान्तपञ्चरूपाभिधायकत्वं च । बृहतीसहस्रऋगारूढतया गानकाले प्रस्तावादिसामभक्तीनां तदन्तर्भावात् ।

**उपनिषत्-**

**(बृहतीसहस्रं साम च मत्स्यादिनामव्याख्यानरूपम्)**

**एतावती हि सङ्ख्या दशदशतस्तच्छतं दश शतानि ।।**

**तत् सहस्रं तत् सर्वम् ।**

**(अन्नमिव प्रीतिकरं बृहतीसहस्रम्)**

**तानि त्रीणि च्छन्दांसि भवन्ति त्रेधा विहितं वा**

**इदमन्नमशनं पानं खादस्तदेतैराप्नोति ।।**

**भाष्यम्-**

**मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः ॥**
**कृष्णबुद्धौ च कल्कीति रूपाणां दशकं हरेः ।**
**पञ्चभेदविभिन्नेन ह्यृक्सहस्रेण शंस्यते ॥**
**रूपाणां पञ्चकं पूर्वमपरं पञ्चकं हरेः ।**
**प्रस्तावाद्यैरानिधनैः स्तूयते सामभक्तिभिः ॥**
**तानि रूपाण्यस्य दश सर्वरूपात्मकानि च ।**
**दशनामानि चास्यैव सर्वरूपाभिधान्यपि ॥**
**पञ्चकं सामभक्तीनामृक्सहस्रं च तद्द्वयम् ।**
**स्तावकं सर्वरूपाणामत एव रमापतेः ॥**

**टिप्पणी-**

भार्गवादिकल्क्यन्तानां तत्पतिपाद्यत्वं चेति वक्तुं रूपसङ्ख्या तावदुच्यते– **तानि दशेति** ।। तद् व्याचष्टे–**मत्स्य इति** ।। 'अस्त्वेवं रूपाणां दशकम् । ततश्च किमित्यत उच्यते– **तानि दशेति** ।। तानि दशरूपाणि यानि दश-शस्त्रतदारूढसामभक्त्याख्यानि तानि तत्प्रतिपाद्यानीत्यर्थः । तदेतद् विवेकेनाऽह– **पञ्चभेदेति** ।। पूर्वं पञ्चकं मत्स्यादिवामनान्तम् । अपरं पञ्चकं भार्गवादि । सामभक्तिपञ्चकस्य पञ्चप्रभेदशस्त्रस्य च न दशरूपाभिधायित्वेनाल्पार्थत्वम् । दशरूपाणां सर्वरूपात्मकत्वादिति भावेनोच्यते– **तानि दश तत् सर्वमिति** ।। तत् तस्य तानि मत्स्यादिदशरूपाणि सर्वं सर्वरूपात्मकानि । मत्स्यमत्स्यः मत्स्यकूर्मः मत्स्यवराहः मत्स्यसिंहः मत्स्यवामन इत्यादिस्वव्यूहान्तर्गतसर्वरूपात्मकानि च । कूर्मादावप्येवं बोध्यमित्यर्थः । तद् व्याचष्टे– **तानि रूपाणीति** ।। ननु मत्स्यादिरूपाणामनन्तरूपात्मकत्वेन मत्स्यादिनामदशकस्य तत्परत्वम् । मत्स्यकूर्मो मत्स्यवराह इत्याद्यनन्तनाम्नामेव तत्परत्वस्य वक्तव्यत्वादित्यत उच्यते– **तानि दश तत् सर्वमिति** ।। तत् तस्य तानि दशनामान्येव सर्वं सर्वरूपाभिधायीनि

इत्यर्थः। तद् व्याचष्टे– **दशनामानीति**॥ दशैव नामानीत्यन्वयः। तत्तल्लक्षणानां दशभिरेव नामभिर्वक्तुं शक्यत्वादिति भावः। ततश्च किमित्यत उच्यते– **तानि दश तत् सर्वमिति**॥ तत् तस्मान्मत्स्यादिनामार्थानां रूपाणामनन्तत्वात् तद्व्याख्यानभूतानि सामभक्तीनां पञ्चकं शस्त्रपञ्चकं चेत्येतानि दश। तस्य विष्णोः सर्वं रूपजातं वक्तीति शेष इत्यभिप्रेत्य व्याचष्टे– **पञ्चकमिति**॥

**भाष्यम्-**

**दशेति सर्वनामैतत् प्रथितं मुख्यतः श्रुतौ।**
**शंरूपं भगवन्तं यद् दद्याद् व्यक्त्या समस्तशः॥**
**दशेत्यमितनाम्नां तदाख्या रूपेषु शं ददेः।**
**सर्वनामार्थवचनात् पञ्चकद्वितयस्य च॥**
**अभूद् दशेति वै नाम तस्मादेतद् दशाखिलम्।**
**दशैव मूलसङ्ख्या च तद्भिभेदाः शतादयः॥**
**ऋक्सहस्रमिदं तस्मादनन्तगुणमच्युतम्।**
**अनन्तशक्तिममितरूपनामानमेव च॥**
**वक्ति ..............।**

**टिप्पणी-**

ननु यदुक्तं दशनाम्नामनन्तरूपाभिधायकत्वं तदेव कुत इत्यतोऽनन्ते मुख्यदश-शब्दस्य नामसु प्रयोगान्यथानुपपत्तेरेवेति वक्तुं दशशब्दस्यानन्तार्थकत्वं तावदुच्यते– **दशेति वै सर्वमिति**॥ दशेति शब्देन सर्वमनन्तमुच्यत इति वै श्रुतिप्रसिद्धमि-त्यर्थः। तद् व्याचष्टे– **दशेति सर्वनामेति**॥ सर्वनाम सर्ववाचि। न केवलमनन्ते रूढदशशब्दस्य वक्ष्यमाणदिशा नामसु प्रयोगान्यथानुपपत्त्या पञ्चकद्वितयस्यानन्त-रूपप्रतिपादकत्वं किन्तु दशशब्दस्य योगार्थविचारेऽपि तज्ज्ञायत इत्युच्यते– **तानि दश दशेति वै सर्वमिति**॥ दशेति ददति व्यक्तीकुर्वन्ति शं रूपं सर्वं भगवद्रूपजातमिति हेतोस्तानि मत्स्यादिनामानि दशेति वै प्रसिद्धानीत्यर्थः।

तद् व्याचष्टे– **शंरूपमिति** ।। यद् यस्माच्छंरूपं समस्तशोऽनन्तसङ्ख्याकं भगवन्तं व्यत्त्या दद्याद् व्यक्तिरूपेण दद्यात् । प्रकृत्या चारुरितिवत् । तत् तस्मादमित-नाम्नाममितार्थप्रतिपादकानां मत्स्यादिनाम्नां दशेत्याख्येत्यर्थः । नन्वेवं मत्स्यादि-नाम्नामनन्तरूपप्रतिपादकत्वे मत्स्यादिनामप्रतिपाद्यानि दशरूपाणीति प्रसिद्धविरोध इति चेत् । तत्रापि दशशब्दस्यानन्ते रूढत्वादिति परिहारे स्थितेऽपि दश-शब्दस्यानन्तेषु रूपेषु योगश्चोच्यते– **तानि दश दशेति वै सर्वमिति** ।। सर्वमनन्तानि तानि रूपाणि दशेति ददति शं स्वोपासकानामिति हेतोर्दशेत्युक्तानीत्यर्थः । तद् व्याचष्टे– **तदाख्या रूपेषु शं ददेरिति** ।। तदाख्या दशेत्याख्या । यत् प्राक् मत्स्यादिदशनाम्नामनन्तरूपप्रतिपादकत्वमन्यथानुपपत्त्या साधयितुं तदुपपादकं दशपदस्यानन्तरूढत्वमुक्तं तदिदानीमर्थापत्तिप्रमाणमुच्यते– **तानि दश दशेति वै सर्वमिति** ।। यस्मात् तानि मत्स्यादिदशनामानि सर्वं सर्वरूपाभिधायीन्यत एवानन्ते रूढेन दशेति शब्देनोच्यन्ते । अन्यथा पञ्चकद्वितयेऽनन्ते रूढदशशब्दस्य प्रयोगासम्भवात् । तथाच तदन्यथानुपपत्त्याऽर्थानन्त्येनानन्तार्थक-दशशब्दवाच्यत्वं वक्तव्यमिति भावः । तदेतद् व्याचष्टे– **सर्वनामार्थेति** ।। पञ्चकद्वितयस्यापि सर्वनामार्थभगवत्प्रतिपादकत्वादेवामिते रूढं दशेति नामाभूदन्यथा तन्न स्यादि-त्यर्थः । एवमर्थापत्त्या योगेन च दशनाम्नामनन्तरूपाभिधायकत्वमुक्त्वोपसंहृतम्– **दशेति वै सर्वमिति** ।। इत्युक्तप्रकारेण दशनामानि सर्वमखिलं वक्तीत्यर्थः । तद् व्याचष्टे– **तस्मादिति** ।। यद्वा, अस्त्वेवं दशनाम्नां सर्वरूपाभिधायक-त्वम् । ततश्च पञ्चभेदविभिन्नशस्त्रस्य तदारूढसामभक्तिपञ्चकस्य च किमायात-मित्यतः उपसंह्रियते– **दशेति वै सर्वमिति** ।। यस्मादेवमनन्तरूपप्रतिपादकानां मत्स्यादिनाम्नां शस्त्रसमाभक्तीनां च व्याख्यानव्याख्येयभाव इति तस्माद् दश शस्त्रपञ्चकं भक्तिपञ्चकं चेत्येतद् दश सर्वमखिलरूपस्तावकमित्यर्थः । तद् व्याचष्टे– **तस्मादेतद् दशाखिलमिति** ।। एवं वैदिकप्रयोगावगतरूढ्या शं ददातीति योगेन च दशशब्दस्य सर्ववाचित्वमुक्तम् । इदानीं लोकरूढ्या दशशब्दस्य पञ्चकद्वितय-

परत्वमङ्गीकृत्यापि सर्वोपस्थापकत्वमुच्यते– **एतावती हि सङ्ख्येति** ।। शतादिलक्षणा सर्वाऽपि सङ्ख्यैतावती दशसङ्ख्यामूलिका तत्प्रभेदरूपा हि यस्मात् तस्माद् दशेति वै सर्वं सर्वाः सङ्ख्यामूलभूतसङ्ख्यावाचिदशशब्देनोच्यन्त इत्यर्थः । कथं सा सर्वमूलमित्यत उक्तम्– **दशदशत इति** ।। दशदशतो दशगुणितदशत्वसङ्ख्या तत्तत् प्रसिद्धं शतं भवति । दशगुणितशतानि प्रसिद्धं सहस्रम् । तत् सहस्रं बहुधा गुणितं सत् लक्षकोट्यादिसर्वसङ्ख्यात्मकं वतीत्यर्थः । तद्वाक्यजातं व्याचष्टे– **तस्मादिति** ।। यस्माद् दशैव मूलसङ्ख्या शतादयश्च तद्विभेदाः तस्मादेतदखिलं शतादिकं दशेत्यर्थः । अनेनैव सहस्रशब्दस्यामितवाचित्वमप्युपपादितं भवति । तदेतत् सहस्रं तानि दशेति प्रकारद्वयार्थमुपसंहरति– **ऋक्सहस्रमिति** ।। तस्मादनन्त-रूपगुणशक्तिवाचकसहस्रनाममत्स्यादिनामव्याख्यानरूपत्वात् सहस्र-नाम्नाममितनामार्थप्रतिपादकत्वादमितनामानमित्युक्तम् ।

**भाष्यम्-**

**..... च्छन्दस्त्रयं चात्र तृचाशीतित्रयात्मकम् ।**
**अशनादित्रिकं तच्च भूत्वा विष्णुमुपैति च ।**

**(सर्वशब्दवाच्यत्वेन सर्वगुणपूर्णो भगवान्)**

**सर्वच्छन्दोऽभिधश्चैव सर्वदेवाभिधस्तथा ।।**
**सर्वमुन्यभिधश्चैव सर्ववस्त्वभिधो हरिः ।**
**अनन्तपूर्णगुणकस्तस्माज्ज्ञेयो रमापतिः ।।**
**मुख्यतोऽस्यां च विद्यायां योग्य एकश्चतुर्मुखः ।**
**एकदेशपरिज्ञाने त्वन्ये योग्याः शिवादयः ।। इत्यादि च ।।**

**टिप्पणी -**

यदुक्तं बृहतीसहस्रस्यानन्तरूपगुणादिविशिष्टभगवद्वाचित्वं तत्र किं प्रमाण-मित्यतः तस्यातिशयेन भगवत्तर्पकत्वयुक्तिः प्रमाणम् । यद् यस्यातिशयेन स्तावकं तत् तस्यातिशयेन तर्पकमिति व्याप्तेरिति भावेन 'अन्नमशीतयोऽन्नेन हीदं सर्व-

मश्नुते' इत्युक्तमशीतीनामन्नत्वं स्मारणाय पुनरुच्यते– **तानि त्रीणि छन्दांसि भवन्तीति** ।। तानि त्रीणि तृचाशीतित्रयात्मकं तच्छस्त्रं तानि त्रीणि छन्दांसि गायत्रीबृहत्युष्णिगिति छन्दांसि भवन्ति । छन्दस्त्रयबद्धं भवतीत्यर्थः । तद् व्याचष्टे– **छन्दस्त्रयमिति** ।। अस्तु तृचाशीतित्रयस्य क्रमेण गायत्र्यादिछन्दोबद्धत्वम् । ततश्च किमित्यत उक्तम्– **त्रेधेति** ।। इदं तृचाशीतित्रयं विष्णोरन्नं कथं तच्चैतैः गायत्रीबृहत्युष्णिग्लक्षणछन्दोबद्धैः स्वभागैः क्रमेणाशनमश्यं पानं पेयं खादः खाद्यमिति त्रेधा विहितं सत् तद् ब्रह्माप्नोति । तस्य तर्पकमिति यावत् । जडविवक्षायामन्नपानभक्ष्यभोगजन्यानन्दसजातीयानन्दप्रयोजकत्वम् अभिमानि-विवक्षायां तदभिमानिदेवाः स्वयमशनादित्वं साक्षात् प्राप्नुवन्तीति ज्ञेयम् । तदेतत् तात्पर्यतो व्याचष्टे– **अशनादित्रिकमिति** ।। खण्डार्थमुपसंहरति– **सर्वेति** ।। न केवलं गायत्र्यादिपञ्चछन्दोऽभिधः । किन्त्वेवं सर्वच्छन्दोऽभिधः । 'देवेषु देवमध्यूह्ळम्' इत्युक्तदिशा सर्वदेवाभिधः ।। **सर्वमुन्यभिध इति** ।। प्रकृतबृहतीसहस्रादिद्रष्टृ-ऋष्यभिध इत्यर्थः । छन्दोदेवताप्रसङ्गे मुनीनामप्युपलक्षणीयत्वात् । सर्ववस्त्वभिधो ज्ञेयः । स्तोमसामचित्यादिसर्ववस्त्वभिधः । तथा 'प्रद्युम्नः पञ्चभूतेषु' इत्यादि-वक्ष्यमाणदिशा सर्ववस्त्वभिधो ज्ञेयः । कुतः? यस्मात् तत्तच्छब्दप्रवृत्ति-निमित्तानन्तपूर्णगुणकस्तस्मादिति योजना। यद्वा, यस्मात् सर्वाभिधस्तस्मादनन्तपूर्ण-गुणको ज्ञायते । शब्दानां यौगिकत्वाद् 'अतोऽनन्तगुणो यच्छब्दा योगवृत्तयः' (स.शा.सं. ७) इति सङ्ग्रहभाष्योक्तेरिति ज्ञेयम् । एतद्विद्याधिकारिण आह– **मुख्यत इति** ।।

**भाष्यम्-**

### (त्रिवृदादिस्तोमनामसमन्वयः)

**त्रिविधो ह्यनिरुद्धोऽसावध्यात्मादिविभेदतः ।**
**अतस्त्रिवृदिति प्रोक्तस्तथा पञ्चदशात्मकः ।।**
**प्रद्युम्नः पञ्चभूतेषु ह्यध्यात्मादिविभेदतः ।**
**लिङ्गसप्तदशस्थत्वात् तावान् सङ्कर्षणः श्रुतः ।।**

**सप्तधातुषु संस्थः सन्नध्यात्मादिविभेदतः।**
**एकविंशो वासुदेवो मनआदिचतुष्टये ॥**
**गुणत्रये च प्रकृतावध्यात्मादिविभेदतः।**
**मूलरूपेण च सह पञ्चविंशात्मकः प्रभुः ॥**
**नारायणस्त्वचिन्त्यात्मा स एकोऽपि ह्यनन्तधा।**

**टिप्पणी -**

त्रिवृदादिशब्दानां त्रिवृदादिगते लाक्षणिकत्वे केवलरूढत्वे वा गुणपूर्त्यलाभान्निर्वक्ति– **त्रिविध इत्यादिना** ॥ अध्यात्मादित्रये त्रेधा वर्तत इति त्रिवृदनिरुद्धः। यद्यपि प्रद्युम्नादीनामप्यध्यात्मादिभेदं वक्ष्यति तथाऽपि तेषां भूताद्येकदेशेऽध्यात्मादि-भेदेनावस्थानमस्य तु सर्वत्रेति भेदो बोध्यः ॥ **पञ्चदशात्मक इति** ॥ अध्यात्मं शरीरे विद्यमानेषु पञ्चभूतेषु अधिभूतं पृथिव्यादौ पञ्चीकरणप्रक्रियया विद्यमानेषु पञ्चभूतेषु अधिदैवं देवतालोकस्थशरीरे विद्यमानेषु पञ्चभूतेषु स्थितप्रद्युम्नः पञ्चदशात्मक इत्यर्थः। सङ्कर्षणो लिङ्गसप्तदशस्थत्वाल्लिङ्गशरीरगतपञ्चभूतेषु दशेन्द्रियेषु मनोबुद्ध्योश्च स्थितत्वात् तावान् सप्तदश श्रुतः। मनोबुद्ध्योरेकत्वविवक्षया लिङ्गस्य षोडशकलत्वमन्यत्रोक्तमित्यविरोधः। भूताभिमानिषु स्वलोकस्थदेवेषु च सप्तधातूनां सत्त्वादधिभूतादिगतत्वं बोध्यम्। मनआदिचतुष्टये मनोबुद्ध्य-हङ्कारचित्तेषु। गुणत्रये प्रकृतावित्यष्टसु अध्यात्मादिविभेदतश्चतुर्विंशतिसङ्ख्याकासु स्थितः प्रभुः मूलरूपेण सह पञ्चविंशात्मक इत्यर्थः। मनआद्यष्टकमध्यात्मं प्राणिदेहे 'प्रकृतिस्वात्मसंश्लिष्टान् गुणान् सत्त्वादिकानपि' (भा.ता. १.१५.३) इत्युक्तन्यायेन वर्तते। भूतेष्वपि व्याप्तं कार्येषु कारणमित्युक्तन्यायेन भूतानां परम्परया गुणत्रयप्रकृतिकार्यत्वात्। 'प्राणा एवेदमग्र आसुस्तेभ्यो भूतानि जज्ञिरे' इत्युक्तदिशा मनआदिकार्यत्वाच्च अधिदैवं देवेषु मनआद्यष्टकं तु सिद्धम्। यद्वा, अध्यात्मं प्राणिशरीरगेषु देवेषु भूताभिमानिषु स्वलोकस्थेषु च देवेष्विति स्थानत्रयेऽपि देवताविवक्षायां मनआद्यष्टकस्यावस्थानं सुकरमेव। बहुत्वेन

प्राप्तभेदशङ्कां वारयति– **नारायण** इति ।। स नारायण एकोऽप्यचिन्त्यस्वरूपत्वादेकोऽपि बहुधा भवतीत्यर्थः ।

**भाष्यम्-**

**(गायत्रादिसामनामसमन्वयः)**

गायकानां त्राणतोऽसौ गायत्रमनिरुद्धकः ।।
प्रद्युम्नो हि रथारूढस्तेन चोक्तो रथन्तरम् ।
बृहद्रूपो बृहन्नामा तथा सङ्कर्षणः प्रभुः ।।
भद्रं तु वासुदेवोऽसौ भद्रमोक्षप्रदो यतः ।
नारायणो राजनं स्याद् राजयत्येष मोक्षिणः ।।

**(गायत्र्यादिछन्दोनामसमन्वयः)**

गायत्री त्वनिरुद्धोऽसौ त्रिकाले गीयते यतः ।
उष्णिगुष्णस्वरूपत्वात् प्रद्युम्नोऽग्न्यादिसंस्थितः ।।
स्त्रीरूपो बृहतीनामा बृहत्सङ्कर्षणः प्रभुः ।
वासुदेवस्तथा त्रिष्टुप् त्रिवेदैः स्तूयते यतः ।।
नारायणस्तु स्त्रीरूपो द्विधैवासौ व्यवस्थितः ।
द्विपदेति ततो नाम सर्वच्छन्दोऽभिधा इमे ।।
वनितातनवः प्रोक्ता .................. ।

**(चितौ पञ्चरूपोपासनम्)**

.................. मध्यं नारायणः प्रभुः ।
वासुदेवोऽस्य पुच्छं च वामदक्षौ च पक्षकौ ।।
सङ्कर्षणश्च प्रद्युम्नः क्रमादेवं प्रकीर्तितौ ।
अनिरुद्धः शिरश्चैव तथैकोऽपि हि पञ्चधा ।।
प्रस्तावनामाऽनिरुद्धो रक्षन् संस्तूयते यतः ।

**टिप्पणी -**

रथारूढः देहाख्यरथारूढः । 'तॄ प्लवनतरणयोः' इति धातुव्याख्यानेऽपि धातूनामनेकार्थत्वाद् रथारूढ इत्युक्तम् । यद्वा, रथेन तरति प्लवति गच्छति तरति शत्रूनिति वा रथन्तरं इत्यस्य तात्पर्यम्– **रथारूढ इति** ।। त्रिकाले त्रिसन्ध्याकाले सवनत्रये वा भूतभविष्यद्वर्तमानकाल इति वा, द्वे पदे रूपे यस्याः सा द्विपदा । यद्वा, द्विरूपेण वर्तत इति द्विपदा । पदॢ गताविति धातोः । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (महाना. ९.५) 'द्विरूपोऽन्तर्बहिर्यतः' इत्यादेरिति भावः । सर्वच्छन्दोऽभिधा इमे भवगद्रूपसङ्घा वनितातनवः प्रोक्ता इत्यर्थः ।। 'शिरो दक्षिणः पक्षः' इत्यादेरर्थः– **मध्यमि-त्यादि** ।। आत्मेत्यस्यार्थः– **मध्यमिति** ।। प्रकर्षेण स्तूयतेऽवति रक्षति चेति प्रस्ताव इत्यभिप्रेत्योक्तः– **रक्षन् संस्तूयते यत इति** ।।

**भाष्यम्-**

**सृजन् जगच्च रमया प्रद्युम्नस्तत्र गीयते ।।**
**उद्गीथनामा तेनासौ जगदुद्गमनेन वा ।**
**संहारात् प्रतिहाराख्यस्तथा सङ्कर्षणः प्रभुः ।।**
**मोचयित्वा समीपं हि द्रावयेद् वासुदेवकः ।**
**तेनोपद्रवामाऽसौ निधीयन्ते यतोऽखिलाः ।।**
**मुक्ता नारायणे देवे तेनासौ निधनाभिधः ।। इत्यादि च ।।**
**स्तूयमानत्वात् स्तोमः । समत्वात् साम । छन्द्यत्वाच्छन्दः ।।**

**टिप्पणी -**

उद्गमयन् सृजन् गिरा सर्ववागभिमानिन्या रमया गीयत इत्युद्गीथ इत्यर्थमभिप्रेत्य व्याचष्टे– **सृज-न्निति** ।। तत्र सृष्टिकाले जगति वा । उत्पूर्वस्य गमेः सर्वशरीरान्निर्गम-लक्षणसृष्टिपरत्वं 'वाग् गीः' इति श्रुतेः 'सर्ववागात्मिका या तु श्रीः' इति स्मृतेश्च गीत्यस्य गिरा वागभिमानिन्या लक्ष्म्येत्यर्थकत्वम् उत्पूर्वस्य गैशब्दे गा

गान इति वा धातोः कर्मणि स्थक्प्रत्यये गीथ इत्यस्य गीयत इत्यर्थकत्वम् । यद्वा, गीतशब्द एवायम् । तकारस्य थकार इति भावः । उत्पूर्वस्य गमेः थन्प्रत्यये उद्गमयतीत्युद्गीथ इत्यर्थान्तरमाह– **जगदुद्गमनेनेति** ॥ प्रमाणेत्युक्तत्वात् स्तोमादिनाम स्वयं निर्वक्ति– **स्तूयमानत्वादिति** ॥ समत्वाद् गुणैः सर्वभूतेषु समत्वात् । 'समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः' (भ.गी. ९.२९) इत्युक्तरीत्या समत्वाद्वा । छन्द्यत्वादुत्तमाधिकारिणां स्वयमेवेष्टत्वात् । अन्येषां तत्प्रसादस्यापेक्षितत्वेनेष्टत्वात् । 'अकामितोऽवाग्गतिमेव दद्याद्' (म.ता.नि. २९.३) इति भारततात्पर्यवचनात् । चिति शस्त्रपदयोः खण्डेऽभावान्न व्याख्यानं कृतम् ॥ १६ ॥

**खण्डार्थः-**

पूर्वखण्डे पुरुषान्तर्गतस्य गुणतो रूपतश्चोद्रेकमुपपादयितुं तत्तन्नामतयाऽध्यात्मं भूतेषु वायुप्रभेदेषु प्राणेषु प्राणाधीना वाक्चित्तादिकमवृत्तिजातेषु अग्निहोत्रादियज्ञेषु सोमप्रभेदेषु च तत्तन्नामतया पञ्चविधत्वमुक्तम् । अत्र तु पूर्वप्रकृतबृहतीसहस्रप्रतिपाद्यस्य प्रकृतयज्ञानुबन्धमुक्त्वा तस्य बहुधा पाञ्चविध्यमनन्तरूपत्वं पूर्णगुणत्वं चोच्यते । तत्र श्रोतॄणां बुभुत्साजननाय वक्ष्यमाणविद्याफलेन प्रशस्यते तावत्– **यो ह वा इति** ॥ यो यज्ञेऽध्यूढं याज्यत्वाद् यज्ञत्वप्रदत्वाच्च यज्ञं यज्ञनामानम् । अहन्यध्यूढमहार्यत्वादहस्त्वप्रदत्वाच्चाहर्नामानं देवेष्वध्यूढं द्योतनादिगुणवत्त्वाद् देवत्वप्रदत्वाच्च देवनामानम् । उपलक्षणमेतत् । वक्ष्यमाणस्तोमसामचितिच्छन्दःशास्त्रेष्वध्यूढं तत्तन्नामकं च वेद स सम्प्रतिवित् सम्यग्ज्ञानीति ह वै श्रुत्यन्तरप्रसिद्धमित्यर्थः । यज्ञादिषु यज्ञादिनामा क इत्यत उच्यते– **एष वा इति** ॥ यदेतत् तत्तच्छब्दप्रवृत्तिनिमित्तगुणैः पूर्णत्वान्महत् उत्थापकत्वादुक्थम् । यद्वा, महदुक्थं बृहतीसहस्रप्रतिपाद्यं भगवद्रूपम् । एष भगवान् वै यज्ञेष्वधिरूढो यज्ञनामेत्यादि योजना । यदेतन्महदुक्थं बृहतीसहस्रप्रतिपाद्यं यज्ञादावधिरूढं भगवद्रूपं तदेतदनिरुद्धादिरूपेण पञ्चविधं सत् स्तोमसाम-

चितिच्छन्दःशास्त्रेषु पञ्चसु क्रमाद् वर्तत इत्यर्थः । स्तोमेऽनिरुद्धः साम्नि प्रद्युम्नः श्येनाकारचितौ सङ्कर्षणः छन्दःसु वासुदेवः शस्त्रे नारायण इति भावः ।

किञ्च तदेतत् स्तोमादिगतं चानिरुद्धादिकं प्रत्येकं पञ्चविधम् । कथं स्तोमगतस्यानिरुद्धस्य पाञ्चविध्यमित्यतःस्तोमस्य पञ्चविधत्वात् तद्गतोऽनिरुद्धाऽनिरुद्धोऽनिरुद्धप्रद्युम्नोऽनिरुद्धसङ्कर्षणोऽनिरुद्धवासुदेवोऽनिरुद्धनारायण इति पञ्चविध इत्युच्यते– **त्रिवृदित्यादिना** ।। त्रिवृदादिपञ्चभेदभिन्न ऋक्समुदायरूपस्तोमतस्तोमे स्थितोऽनिरुद्धः स्तोमस्य पञ्चविधत्वात् पञ्चविध इत्यर्थः । सामतः साम्नि स्थितः प्रद्युम्नः साम्नः पञ्चविधत्वात् प्रद्युम्नानिरुद्धः प्रद्युम्नप्रद्युम्न इत्यादिरूपेण पञ्चविधः । छन्दस्तः छन्दोगतो वासुदेवः छन्दसां पञ्चविधत्वाद् वासुदेवप्रद्युम्नो वासुदेवसङ्कर्षणो वासुदेववासुदेव इत्यादिक्रमेण पञ्चविधः । श्येनाकारचित्यन्तर्गतस्य सङ्कर्षणस्य सङ्कर्षणानिरुद्धः सङ्कर्षणप्रद्युम्नः सङ्कर्षणसङ्कर्षणः सङ्कर्षणवासुदेवः सङ्कर्षणनारायण इति क्रमेण शिर आरभ्य मध्यदेहान्तमवस्थानात् शिर इत्याद्याख्यानं नाम । यद्वा, चितिगतस्येत्याख्यानं स्थाननिर्देशः । शस्त्रस्य पाञ्चविध्यान्नारायणस्यानिरुद्धादिभेदेन पाञ्चविध्यं वक्ष्यति ।

अत्र तावत् स्तोम सामेति सामप्रसङ्गे प्रस्तावोद्गीथप्रतिहारोपद्रवनिधननामकसामभक्तिगतस्याप्यनिरुद्धादिरूपेण पञ्चविधत्वं प्रस्तावादिष्वेकैकत्रापि पृथक् पञ्चविधत्वमभिप्रेत्य । तत्र युक्तिरुच्यते– **पञ्चकृत्व इत्यादिना** ।। यद्यपि सामभक्तीनां प्रस्तावादीनां गायत्र्यादिसामसन्नि-धावेवाभिधानं युक्तम् । नतु शस्त्रसन्निधाने । तथाऽपि 'तानि दश' इत्यत्र सामप्रतिपाद्यानि पञ्चरूपाणि शस्त्रप्रतिपाद्यानि पञ्चरूपाणीति सम्भूय तानि रूपाणि दशेत्युक्तिसौकर्याय शस्त्रसन्निधानेऽभिधानं ज्ञेयम् ।

पञ्चरूपप्रकरणत्वेऽपि सामप्रसङ्गान्महदुक्थाक्षरगतरूपाणां सामस्तोभाक्षरप्रतिपाद्यत्वमुच्यते– **तदिति** ।। तत् तत्र । सामसु स्तोभाक्षराणां सहस्रं बहुकोटयो भवन्ति । तथा तन्महदुक्थप्रतिपाद्यं भगवत्प्रादुर्भावजातं स्तोभसहस्रनामकं

भवति । स्तोभानां सहस्रं प्रतिपादकं यस्य तत् स्तोभसहस्रं तत् प्रतिपाद्यं च भवतीत्यर्थः ।

शस्त्रे पञ्चविधरूपव्युत्पादनार्थमुच्यते– **एवं ह्येता इति** ।। बृहत्युक्थशस्त्रगताः पञ्चप्रकारा एवमनुशस्यन्ते । कथम्? तृचाशीतिभ्यो यत् प्राक् यः प्राक्तनो भागः सैका विधा । तिस्रः तृचाशीतयस्तिस्रो विधाः । यदूर्ध्वं यस्ताभ्य उपरितनो भागः सा पञ्चमी विधा । हि यस्मात् तद्गता एता अनिरुद्धादिमूर्तयः शस्त्रभेदैरनुशस्यन्ते स्तूयन्त इत्यर्थः । यद्यपि प्रथमे पञ्चकाद्भागे स्थितो नारायणः प्रभुरित्यादिना प्राङ्नारायणादिक्रमेण शस्त्रेऽवस्थानमुक्तम् । तथाऽपि स्तोमसामादिपञ्च-विवक्षायामनिरुद्धादिक्रमेण शस्त्रगतो नारायणः स्वयं नारायणानिरुद्धः नारायणप्रद्युम्न इत्यादिक्रमेण पञ्चकस्य प्रथमभागादौ वर्तत इत्यविरोधः । तदेतत् सहस्रमित्यादेरावृत्त्यनुवृत्तिभ्यां बह्वर्थत्वेन दुरवबोधत्वात् प्रतिपत्तिसौकर्यायावतारपूर्वं भाष्यव्याख्यानदशायामेव तद् व्याख्यास्यामः ।

**।। इति चतुर्थः खण्डः ।।**

**उपनिषत्-**

**(किंछन्दो बृहतीसहस्रस्य)**

तद् वा इदं बृहतीसहस्रं सम्पन्नं तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते किमन्यत् सदन्यद् ब्रूयामेति त्रिष्टुप्-सहस्रमेके जगतीसहस्रमेकेऽनुष्टुप्सहस्रमेके ।।

**भाष्यम्-**

तदिदमुक्तप्रकारेणैव बृहतीसहस्रं सम्पन्नं भवति । तदेके नानाच्छन्दसां सहस्रं शंसितव्यमेव, बृहतीसहस्रसम्पादनमविवक्षितमिति प्रतिजानते । केचित् त्रिष्टुप्सहस्रमेव शंसितव्यमिति ।

**टिप्पणी -**

अत्र यत् तदिदं बृहतीसहस्रं सम्पन्नं तदेके नानाच्छन्दसां सहस्रं प्रतिजानत इत्यन्यथाप्रतीतेर्व्याचष्टे— **तदिदमिति** ।। तदिदमित्यस्य तात्पर्यम्— **उक्तप्रकारेणेति** ।। उक्तप्रकारेण सम्पन्नं सम्पादितं बृहतीसहस्रमेव शंसनाय सम्पन्नमुपपन्नं भवतीत्यर्थः । तदेके तत्रैके । एतदित्यस्यार्थः— **शंसितव्यमिति** ।। नु नानाच्छन्दस्सु त्रिष्टुबादेरप्यनुप्रविष्टत्वादविरोधादेक इति किमर्थमित्यतो व्याचष्टे— **केचिदिति** ।। नानावादिषु प्रस्तुतेषु कैस्तदुक्तमिति प्रमाणमुच्यत इत्यत आह—**अनुष्टुबिति** ।।

**उपनिषत्-**

**(अनुष्टुप्छन्दोमहिमा)**

**तदुक्तमृषिणा— अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषेति ।। वाचि वै तदैन्द्रं प्राणं न्यचायन्नित्येतत् तदुक्तं भवति ।**

**भाष्यम्-**

अनुष्टुप्ससहस्रमेवेति वदन्तोऽनुष्टुप्प्रशंसात्मिकामृचं दर्शयन्ति । बीभत्सूनां जगद् भर्तुमिच्छूनाम् । अपां सयुजं सहैव चरन्तं चाऽहुः । विष्णुं हंसस्वरूपिणम्, अनुष्टुभं चर्चूर्यमाणं पुनःपुनर्वदन्तं परमेश्वरं ददृशुश्च ।

**(नृसिंहानुष्टुम्मन्त्रोपासम्)**

मेघसंस्थं हंसरूपं तं विष्णुं परमेश्वरम् ।
विरिञ्चिशिवपूर्वेभ्यो नृसिंहानुष्टुभं पराम् ।।
उच्चारयन्तमर्थांश्च व्याचक्षाणं समन्ततः ।
ददृशुर्मुनयो दिव्या आचार्यं ब्रह्मशर्वयोः ।।
एवं वायुं च ददृशुस्तत्र हंसस्वरूपिणम् ।
शिवादिभ्यो व्याहरन्तं तामेवानुष्टुभं पराम् ।। इत्यादि च ।।

**वागाख्यायामनुष्टुभ्युच्चार्यमाणायां हि मुनयो विष्णुं ददृशुः। अतो ब्रह्मादयोऽपि विष्णोः सकाशादनुष्टुभर्थं सदा शृण्वन्तीति ज्ञायतेऽतोऽनुष्टुबेव च्छन्दसां वरेति चोक्तं भवति।**

**टिप्पणी -**

ननु ऋचि अनुष्टुप् शंसनीयेत्यनुक्तत्वात् कथमुक्तार्थे प्रमाणमित्यतः अनुष्टुभः प्रशंसया तदुत्तमत्वं लभ्यते। तेन च हेतुना तस्या एव यज्ञे शंसनीयत्वं लभ्यत इति भावेनोक्तम्– **अनुष्टुब् प्रशंसात्मिकामिति** ।। ऋचमादित एव व्याचष्टे– **बीभत्सूनामिति** ।। चर्चूर्यमाणमित्यत्र 'हलादिः शेषः' इति विधेः 'चरफलोश्च' इति विहितनुगागमस्य चाभावः छान्दस इत्यभिप्रेत्य यथाविधानमनुवदति– **चर्चूर्यमाणमिति** ।। 'क्रियासमभिहारे यङ्' इति स्मरणादुक्तम्– **पुनः-पुनरिति** ।। चरतिरत्रोच्चारणार्थ इत्यभिप्रेत्योक्तम्– **वदन्तमिति** ।। उच्चरतीत्यादावुत्पूर्वस्य चरतेरनुवादार्थत्वदर्शनादिति भावः। इन्द्रमित्यस्यार्थः– **परमेश्वरमिति** ।। प्रमाणेनोत्तरार्धं विवृणोति–**मेघेति** ।। अपां सङ्घ्यार्थं चरन्तमित्यस्य तात्पर्यम्– **मेघसंस्थमिति** ।। वायुविषयतयाप्येतद् व्याचष्टे– **एवमिति** ।। 'वाचि वै तदैन्द्रं प्राणम्' इत्यत्र इन्द्रेण सहितं वायुम्' इत्युक्त्या विष्णुमिति लभ्यत इति भावेन व्याचष्टे– **वागाख्यायामिति** ।। उच्चार्यमाणायां ब्रह्मादीन् प्रतीति शेषः। व्याचायन्निति यत् तत् तस्मादेतदनष्टुबाख्यच्छन्दस्तेन विष्णुना तेभ्य उक्तं भवतीति। त्रायत इत्यस्य तात्पर्यार्थः– **अत इति** ।। मुनिभिर्दृष्टत्वादित्यर्थः। यस्मादितरपरित्यागेन विष्णोः सकाशादनुष्टुबर्थं शृण्वन्ति तत् तस्मादेतच्छन्दस्तदुत्तममित्येतत्प्रमेयं तेन मन्त्रेणोक्तं भवतीत्यर्थान्तरमाह– **अतोऽनुष्टुबिति** ।। एतच्छन्दस्तदिति तच्छब्देन प्राक् सदिति प्रकृतमुत्तमत्वं परामृश्य इति भावेनोक्तम्– **वरेति** ।।

चितिच्छन्दःशास्त्रेषु पञ्चसु क्रमाद् वर्तत इत्यर्थः । स्तोमेऽनिरुद्धः साम्नि प्रद्युम्नः श्येनाकारचितौ सङ्कर्षणः छन्दःसु वासुदेवः शस्त्रे नारायण इति भावः ।

किञ्च तदेतत् स्तोमादिगतं चानिरुद्धादिकं प्रत्येकं पञ्चविधम् । कथं स्तोमगतस्यानिरुद्धस्य पाञ्चविध्यमित्यतःस्तोमस्य पञ्चविधत्वात् तद्गतोऽनिरुद्धाऽनिरुद्धोऽनिरुद्धप्रद्युम्नोऽनिरुद्धसङ्कर्षणोऽनिरुद्धवासुदेवोऽनिरुद्धनारायण इति पञ्चविध इत्युच्यते– **त्रिवृदित्यादिना** ।। त्रिवृदादिपञ्चभेदभिन्न ऋक्समुदायरूपस्तोमतस्तोमे स्थितोऽनिरुद्धः स्तोमस्य पञ्चविधत्वात् पञ्चविध इत्यर्थः । सामतः साम्नि स्थितः प्रद्युम्नः साम्नः पञ्चविधत्वात् प्रद्युम्नानिरुद्धः प्रद्युम्नप्रद्युम्न इत्यादिरूपेण पञ्चविधः । छन्दस्तः छन्दोगतो वासुदेवः छन्दसां पञ्चविधत्वाद् वासुदेवप्रद्युम्नो वासुदेवसङ्कर्षणो वासुदेववासुदेव इत्यादिक्रमेण पञ्चविधः । श्येनाकारचित्यन्तर्गतस्य सङ्कर्षणस्य सङ्कर्षणानिरुद्धः सङ्कर्षणप्रद्युम्नः सङ्कर्षणसङ्कर्षणः सङ्कर्षणवासुदेवः सङ्कर्षणनारायण इति क्रमेण शिर आरभ्य मध्यदेहान्तमवस्थानात् शिर इत्याद्याख्यानं नाम । यद्वा, चितिगतस्येत्याख्यानं स्थाननिर्देशः । शस्त्रस्य पाञ्चविध्यान्नारायणस्यानिरुद्धादिभेदेन पाञ्चविध्यं वक्ष्यति ।

अत्र तावत् स्तोम सामेति सामप्रसङ्गे प्रस्तावोद्गीथप्रतिहारोपद्रवनिधननामकसामभक्तिगतस्याप्यनिरुद्धादिरूपेण पञ्चविधत्वं प्रस्तावादिष्वेकैकत्रापि पृथक् पञ्चविधत्वमभिप्रेत्य । तत्र युक्तिरुच्यते– **पञ्चकृत्व इत्यादिना** ।। यद्यपि सामभक्तीनां प्रस्तावादीनां गायत्र्यादिसामसन्नि-धावेवाभिधानं युक्तम् । नतु शस्त्रसन्निधाने । तथाऽपि 'तानि दश' इत्यत्र सामप्रतिपाद्यानि पञ्चरूपाणि शस्त्रप्रतिपाद्यानि पञ्चरूपाणीति सम्भूय तानि रूपाणि दशेत्युक्तिसौकर्याय शस्त्रसन्निधानेऽभिधानं ज्ञेयम् ।

पञ्चरूपप्रकरणत्वेऽपि सामप्रसङ्गान्महदुक्थाक्षरगतरूपाणां सामस्तोभाक्षरप्रतिपाद्यत्वमुच्यते– **तदिति** ।। तत् तत्र । सामसु स्तोभाक्षराणां सहस्रं बहुकोटयो भवन्ति । तथा तन्महदुक्थप्रतिपाद्यं भगवत्प्रादुर्भावजातं स्तोभसहस्रनामकं

**उपनिषत्-**

**(अनुष्टुप्सहस्रपठनफलम्)**

स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माऽहा ॥

**भाष्यम्-**

अनुष्टुभां सहस्रं तु यः शंसीतात एव तु ।
भवितुं चेश्वरः स स्याद् भावो मुक्तिर्न चान्यथा ॥
यशस्वी स प्रसिद्धः स्याच्छुभकीर्तिश्च सर्वदा ।
स्वच्छन्दमृत्युता च स्यात् तस्येत्याहैतरेयकः ॥

**टिप्पणी -**

सोऽनुष्टुप्छन्दसः क ईश्वरो भवितुमीश्वरः समर्थ इत्यन्यथाप्रततेः प्रमाणेन व्याचष्टे– **अनुष्टुभामिति** ॥ अत एव शंसनादेव भवितुमीश्वरः स्याद् भावश्च मोक्ष इत्येवार्थो नान्यथार्थ इत्यर्थः । 'दिक्षु यानाद् यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति वचनं मनसि निधायाऽह– **यशस्वीति** ॥ 'आयुषः पुरा प्रैतोरीश्वरः' इत्यस्य तात्पर्यम्– **स्वच्छन्देति** ॥ इति ह स्माहेत्येतद् व्याचष्टे– **इत्याहैतरेयक इति** ॥ कः कुत्सने । महिदासाद् भगवतोऽन्यस्तच्छिष्य इत्यर्थः ।

**उपनिषत्-**

**(बृहतीछन्दोमहिमा)**

अकृत्स्नो ह्येष आत्मा यद् वागभि हि प्राणेन मनसेस्यमानो वाचा नानुभवति बृहतीमभिसम्पादयेदेष वै कृत्स्न आत्मा यद् बृहती ॥

**भाष्यम्-**

महैतरेयो भगवांस्तन्नेत्याह रमापतिः ।
नानाच्छन्दःप्रशंसादिप्रमाणरहितत्वतः ॥
परिहाराय चापूर्णमैतरेयमुने शृणु ।
त्वं तु मन्त्रमुदाहृत्य यस्मादेतदवोचथाः ॥
तस्माद् वक्ष्याम्युत्तरं ते प्रियः शिष्योऽसि मे यतः ।
उमैव वागिति प्रोक्ता साऽनुष्टुबभिमानिनी ॥
अकृत्स्ना सा ततो नैव ब्रह्मेत्युक्ता कथञ्चन ।
वागिन्द्रियाभिमानिन्यां नहि ब्रह्मवचः क्वचित् ॥
वायुना प्राणरूपेण मनोरूपशिवेन च ।
अभ्यस्यमानोऽनुभवेत् पुमान् वाचा तु न क्वचित् ॥
अभिमानी बृहत्यास्तु वायुरेव यतः प्रभुः ।
तस्मादेषा च्छन्दसां हि वरिष्ठा बृहती स्मृता ॥
पूर्णो हि वायुर्देवानां तस्माद् ब्रह्मेति चोच्यते ।
माहात्म्याधिक्यतश्चैव बृहतीत्येव नाम तत् ॥

**टिप्पणी -**

इति ह स्माह इति पर्वपक्षे दूषणमाह– **महैतरेय इति** ॥ पक्षान्तरमदूषयित्वा किमिति तत्पक्षो दूष्यत इति शिष्यहार्दशङ्कापरिहारपरत्वेनापीति ह स्माह । कृत्स्नो ह्येष इत्येतद् व्याचष्टे– **नानेति** ॥ कृत्स्न इत्यध्याहारं एष त्वदीयः पक्षः कृत्स्नः परिहाराय पर्याप्त इत्यर्थमभिप्रेत्य तात्पर्यमाह– **त्वं त्विति** ॥ 'एष त्वं ममात्मा' इत्येतद् व्याचष्टे– **प्रिय इति** ॥ ममाऽत्मा भद्रसेन इत्यादावात्मशब्दस्य गौण्या प्रियपरत्वादिति भावः । 'अकृत्स्नो ह्येष आत्मा यद् वाक्' इत्यस्यार्थमाह– **उमेति** ॥ अकृत्स्ना अपूर्णा प्रतिमा । तत्र ज्ञापकपरतया कृत्स्नेत्येतत् प्रकारान्तरेण व्याचष्टे– **नैव ब्रह्मेति** ॥ 'अभि हि प्राणेन' इत्यादि

भवति । स्तोभानां सहस्रं प्रतिपादकं यस्य तत् स्तोभसहस्रं तत् प्रतिपाद्यं च भवतीत्यर्थः ।

शस्त्रे पञ्चविधरूपव्युत्पादनार्थमुच्यते– **एवं ह्येता इति** ।। बृहत्युक्थशस्त्रगताः पञ्चप्रकारा एवमनुशस्यन्ते । कथम्? तृचाशीतिभ्यो यत् प्राक् यः प्राक्तनो भागः सैका विधा । तिस्रः तृचाशीतयस्तिस्रो विधाः । यदूर्ध्वं यस्ताभ्य उपरितनो भागः सा पञ्चमी विधा । हि यस्मात् तद्गता एता अनिरुद्धादिमूर्तयः शस्त्रभेदैरनुशस्यन्ते स्तूयन्त इत्यर्थः । यद्यपि प्रथमे पञ्चकाद्भागे स्थितो नारायणः प्रभुरित्यादिना प्राङ्नारायणादिक्रमेण शस्त्रेऽवस्थानमुक्तम् । तथाऽपि स्तोमसामादिपञ्च-विवक्षायामनिरुद्धादिक्रमेण शस्त्रगतो नारायणः स्वयं नारायणानिरुद्धः नारायणप्रद्युम्न इत्यादिक्रमेण पञ्चकस्य प्रथमभागादौ वर्तत इत्यविरोधः । तदेतत् सहस्रमित्यादेरावृत्त्यनुवृत्तिभ्यां बह्वर्थत्वेन दुरवबोधत्वात् प्रतिपत्तिसौकर्यायावतारपूर्वं भाष्यव्याख्यानदशायामेव तद् व्याख्यास्यामः ।

**।। इति चतुर्थः खण्डः ।।**

**उपनिषत्-**

**(किंछन्दो बृहतीसहस्रस्य)**

तद् वा इदं बृहतीसहस्रं सम्पन्नं तद्धैतदेके नानाच्छन्दसां सहस्रं प्रतिजानते किमन्यत् सदन्यद् ब्रूयामेति त्रिष्टुप्-सहस्रमेके जगतीसहस्रमेकेऽनुष्टुप्सहस्रमेके ।।

**भाष्यम्-**

तदिदमुक्तप्रकारेणैव बृहतीसहस्रं सम्पन्नं भवति । तदेके नानाच्छन्दसां सहस्रं शंसितव्यमेव, बृहतीसहस्रसम्पादनमविवक्षितमिति प्रतिजानते । केचित् त्रिष्टुप्ससहस्रमेव शंसितव्यमिति ।

व्याचष्टे– **वायुनेति** ।। अभि सर्वतो विषयेष्वस्य मानः क्षिप्यमाणः । अनुभवेत् विषयानिति शेषः । कुतो बृहतीमभि सम्पादयेदित्यतः प्रवृत्तम् एष वै यद् बृहती' इत्यंशं तावद् व्याचष्टे– **अभिमानीति** ।। यद् यतः एष वायुरेव बृहती बृहत्यभिमानी तस्माद् यद्बृहती वरिष्ठेत्यावर्त्य योजनेति भावः । यद् बृहती यो बृहत्यभिमानी वायुरेष वै कृत्स्न आत्मेत्येतद् व्याचष्टे–**पूर्ण इति** ।। कृत्स्न इत्येतत् तत्समानार्थब्रह्मशब्दवाच्य इत्येवं प्रकारान्तरेण व्याचष्टे– **तस्मादिति** ।। वायोः पूर्णत्वे छन्दसोऽपि तदभिमन्यमानत्वादिनाऽऽधिक्ये च बृहतीशब्द एव प्रमाणमित्युक्तं यद् यस्मात् कृत्स्नस्तस्माद् बृहतीति । तद् व्याचष्टे– **माहात्म्याधिक्यत इति** ।। वायोः छन्दसश्चेति शेषः ।

**उपनिषत्-**

**(छन्दस्सु बृहती श्रेष्ठा)**

**सोऽयमात्मा सर्वतः शरीरैः परिवृतस्तद् यथाऽयमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहती सहेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माऽह कृत्स्नो ह्येष आत्मा यद् बृहती तस्माद् बृहतीमेवाभिसम्पादयेत् ।।**

**भाष्यम्-**

अङ्गेभ्य एव सम्भूतान्यन्यच्छन्दांसि चाब्जजात् ।
मध्यात्तु बृहती जाता तस्मात् सा मध्यमुच्यते ।।
पठ्यते तेन मध्ये सा च्छन्दसां प्रवरा सती ।
छन्दांस्यन्यान्यङ्गवत् स्युर्मध्यवद् बृहती परा ।।
सप्तच्छन्दांसि चैवं हि प्रतिमा वैष्णवी मता ।

(छन्दस्सु गायत्रीस्थानम्)

गायत्रीदेवतात्वं च लक्ष्म्या यत्राभिधीयते ॥
बृहतीदेवता तत्र भगवान् पुरुषोत्तमः ।
आधिक्यं छन्दसां यत्र गायत्र्यास्तु विवक्षितम् ॥
तत्र तत्पुत्रको वायुर्बृहतीदेवता मता ।
ऋचामाधिक्ययोगार्थं नाङ्गीकर्तव्यमत्र तत् ॥
प्रधानत्वाद् बृहत्यास्तु जगत्याद्यं न युज्यते ।

(बृहतीसहस्रपठनफलम्)

सम्पादनाद् बृहत्यास्तन्मुक्तो भवितुमीश्वरः ॥
स्यात् प्रसिद्धः सुकीर्तिश्च च्छन्दोमृत्युर्गुणाधिकः ।
इति प्राह स्वयं विष्णुर्महिदासाभिधः प्रभुः ॥ इत्यादि च ॥
इतोऽन्यत् सत् किमित्याहुर्नानाच्छन्दस्त्ववादिनः ।
अन्यत् सद् रूपमित्याहुस्त्रिष्टुब्वादिन एव ते ॥

**टिप्पणी -**

मध्यं ह्येषामित्यत्र बृहत्या मध्यत्वं नाम चतुर्मुखमध्योत्पन्नत्वं तृचाशीतित्रयमध्ये पठ्यमानत्वं सप्तच्छन्दोरूपवैष्णवप्रतिमाया मध्याङ्गत्वमिति त्रेधा व्याचष्टे– **अङ्गेभ्य इत्यादिना** ॥ मध्ये तृचाशीतिमध्ये । ननु वाय्वभिमतत्वेन बृहत्या उत्तमत्वे महालक्ष्म्यभिमतत्वेन गायत्र्या उत्तमत्वप्रसङ्ग इत्यत आह– **गायत्रीति** ॥ गायत्रीदेवतात्वं गायत्र्यभिमानिदेवतात्वम् । बृहतीदेवता बृहतीलक्षणप्रतिमाधिष्ठात्री । तन्नियामिका देवतेत्यर्थः । तथाच तदपि बृहत्येवाधिकेति सैव शंसनीयेति भावः ।

ननु 'गायत्री छन्दसामहम्' इत्यादौ गायत्र्याः छन्दःप्रवरत्वस्य स्पष्टमुक्तत्वाद् भगवतो बृहत्यधिष्ठातृत्वे लक्ष्म्यवरत्वप्रसङ्गः गायत्री च शंसनीयेत्यापन्नमित्यत

आह– **आधिक्यमिति** ।। यत्र वाक्ये । तत्पुत्रो लक्ष्मीपुत्रः । नन्वस्यां विवक्षायां विष्णोर्गायत्र्यवरत्वप्राप्त्यभावेऽपि बृहत्यपेक्षया गायत्र्या उत्तमत्वेन तस्या एव शंसनीयत्वप्रसङ्ग इत्यत आह– **ऋचामिति** ।। तद् गायत्रीशंसनं नाङ्गी-कार्यम् । कुतः ? अत्र ऋचामाधिक्ययोगार्थं गायत्रीसहस्रशंसनमकृत्वा बृहतीसहस्रशंसने कृते स पञ्चशतगायत्र्यो भवन्तीति तदाधिक्यघटनार्थमित्यर्थः । ननु यदि ऋगाधिक्यलाभार्थं बृहतीसहस्रशंसनं स्यात् तर्हि जगत्यादिशंसने बृहत्या अपि ऋगाधिक्यलाभात् तत्कर्तव्यमित्यत आह– **प्रधानत्वादिति** ।। न केवलमृगाधिक्यलाभाय बृहतीशंसनं ब्रूमः येन जगतीशंसनप्रसङ्गः । किन्तु मध्यदेहोत्पन्नत्वेन मध्ये पठनीयत्वेन सप्तच्छन्दोलक्षणप्रतिमाया मध्याङ्गत्वेनावश्योपासनीयद्वासप्तति-सहस्राक्षरघटितत्वेन जीवोत्तमप्राणाभिमतत्वेन च प्रधानत्वादित्यर्थः । ननु बृहत्युपासकस्योक्तं सहेश्वर इत्यादिफलमनुष्टुबुपासकस्यापि सममिति को विशेष इत्यतः प्रैतोरित्यतः परं कृत्स्नो ह्येष इत्यस्यानुकर्षमभिप्रेत्य व्याचष्टे– **सम्पादना-दिति** ।। एष कृत्स्न इत्यस्यार्थः– **गुणेति** ।। मुक्ताविति शेषः । 'इति ह स्माह' इत्यस्यार्थः– **इति प्राहेति** ।। किमन्यत् सदन्यद्रूपादित्येतद् व्याचष्टे– **इतोऽन्यदिति** ।।

**भाष्यम्-**

**ऐन्द्रं प्राणं परमेश्वरसहितं वायुम् । प्राणेन मनसा च । अभि इस्यमानोऽभ्य-स्यमानः । 'तृतीयोऽतिशये' इति सूत्रादकारस्येकारः । 'मथनान्मिथिलो जातः सहनात् सिंह उच्यते' इत्यादिवच्च । 'हत्वी दस्यून्' इत्यादिवच्च । अभ्यस्यमानः अभितः क्षिप्यमाणो विषयेषु बहुशः । कृत्स्न आत्मा कृत्स्नप्रतिमा विष्णोः ।**

**एकाऽपि प्रतिमा विष्णोर्बृहती च्छन्दसां वरा ।**
**अन्यच्छन्दोऽभिधा यत् स्यात् प्रतिमा मध्यमेव तत् ।। इति च ।।**

**एवं ब्रह्मादिभिः श्रूयमाणाऽनुष्टुबपि बृहत्या अङ्गमिति बृहत्या एवाऽधिक्यमुक्तं भवति ।।**

**टिप्पणी -**

ऐन्द्रं प्राणमित्यत्रेन्द्रसम्बन्धिनः प्राणस्यैकस्यैव न्यचाय्यन्नित्युक्तं दर्शनमित्यन्यथाप्रतीतेर्व्याचष्टे– **ऐन्द्रमिति** ।। 'प्राणेन मनसा' इत्यत्र विशेषणविशेष्यभावप्रतीतेराह– **प्राणे मनसा चेति** ।। अभीत्यस्य व्यवहितेनान्वयं दर्शयति– **अभि इत्यस्य मान इति** ।। तस्य प्रतिपदम् अभ्यस्यमान इति । अकारस्थाने इकारप्रापकमाह– **तृतीय इति** ।। यो वर्णो भवितव्यस्थाने प्राप्तस्य तृतीयो वर्णोऽतिशयार्थे भवतीति सूत्रार्थः । अतिशयितेऽर्थे तृतीयवर्णस्य सूत्रप्राप्तिमुक्त्वा प्रयोगमप्याह– **मथनादिति** ।। यद्यपि हिसि हिंसायामिति धातोः सिंहशब्दो निष्पन्नः 'सिंहो वर्णविपर्ययात्' इत्यभियुक्तवचनात् सिंह इति रूपं च । तथाऽपि सिंहशब्दस्य भगवति वृत्तौ सह मर्षण इति धात्वन्तरजत्वं चोपेत्य सहनात् सिंह इत्युक्तम् । हत्वी हत्वा । आकारस्य तृतीय ईकार इति भावः । अभ्यस्यमान इत्यस्य प्रकृतोपयुक्तमर्थमाह– **अभीति** ।। तृतीयवर्णप्राप्तिनिमित्तमतिशयं व्यनक्ति– **बहुश इति** ।। 'कृत्स्न आत्मा' इत्येतद् व्याचष्टे– **कृत्स्न इति** ।। उक्तार्थे प्रमाणमाह– **एकापीति** ।। यद् यस्मादन्यच्छन्दोभिधा प्रतिमा मध्यमैव स्यत् तत् तस्माद् बृहत्येका प्रतिमाऽपि बहुप्रतिमानां छन्दसां सकाशाद् वरेत्यर्थः । यद्वा, छन्दसां मध्ये बृहत्येकाऽपि विष्णोः परा प्रतिमा । यद् याऽन्यच्छन्दोभिधा प्रतिमा । तत् सा मध्यमैवेत्यर्थः । ननु ब्रह्मादिभिरनुष्टुभः श्रूयमाणत्वात् तस्या उत्तमत्वमित्यनुष्टुभमनुचर्चूर्यमाणमिति प्रमाणोदाहरणपूर्वं शिष्येण शङ्कितस्य महिदासेन किमुक्तं भवति प्रमाणस्य च किं तात्पर्यमुक्तं भवतीत्यत आह– **एवमिति** ।। ब्रह्मादिभिः श्रूयमाणानुष्टुबपि एवं 'अकृत्स्नो ह्येष आत्मा कृत्स्नो ह्येष आत्मा' इत्यादिना मध्यं छन्दसां बृहतीत्यन्तेनोक्तप्रकारेण । बृहत्या अङ्गं स्वस्यावरदेवताभिमतत्वादितराङ्गोत्पन्नत्वाच्छन्दःप्रतिमाया अङ्गरूपत्वाच्च बृहत्यास्तु वाय्वभिमतत्वादङ्गित्वाच्च तस्या एवाऽधिक्यमिति महिदासेन समाधानमुक्तं भवति । बृहत्या एवाऽधिक्यमिति मन्त्रतात्पर्यं चोक्तं

भवति । कथम् ? एवमुक्तप्रकारेण ब्रह्मादिभिः श्रूयमाणमपि बृहत्या एवाङ्गं तदा किमु वक्तव्यं तदाधिक्यमिति कैमुत्यसूचकत्वादिति भावः ॥ १७ ॥

**खण्डार्थः -**

बृहतीसहस्रशंसनं कर्तव्यमित्युक्तम् । तत्र पूर्वपक्षप्रतिक्षेपपूर्वं द्रढयितुमयं खण्डः ॥ **तद्वा इति** ॥ तदिदमुक्तप्रकारेण सम्पन्नं सम्पादितं बृहतीसहस्रमेव सम्पन्नं शंसनायोपपन्नं भवति । तत् तत्र । शंसकेषु मध्ये के नानाछन्दसां सहस्रमेतच्छंसनीयं प्रतिजानते । किंमन्यत् नानाछन्दःप्रशंसनादन्यत् सत् प्रशस्तं किं . न किमप्यतः प्रशस्तस्यान्यस्याभावादेतदेव प्रशंसनीयमिति प्रतिजानत इत्यर्थः । एके वादिनः नानाच्छन्दःशंसनादन्यत् सत् प्रशस्तं त्रिष्टुप् सहस्रं ब्रूयामेति प्रतिजानते । एके जगतीसहस्रं शंसनीयं प्रतिजानते । एकेऽनुष्टुप्सहस्रं प्रशस्तं प्रतिजानते । तत्कथमित्यतस्ते स्वप्रतिज्ञातार्थेऽनुष्टुप्प्रशंसात्मिकाम् ऋचं प्रमाणत्वेनोदाहरन्तीत्युच्यते– **तदुक्तमृषिणेति** ॥ तदनुष्टुभः प्रशस्तत्वम् ऋषिणा मन्त्रद्रष्ट्रोक्तमन्त्र उदाह्रियते– **अनुष्टुभमिति** ॥ बीभत्सूनां सयुजं हंसमाहुरपां दिव्यानां सख्ये चरन्तम् । अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचक्युः कवयो मनीषेति समग्रमन्त्रस्यायमर्थः । कवयो दिव्यदृष्टिमन्तो ज्ञानिनः मनीषा मनीषया ज्ञान-सामर्थ्येन बीभत्सूनां जगद् बिभर्तुमिच्छूनां दिव्यानामपामब्देवानां सख्ये सख्यार्थं सयुजं चरन्तं मेघचक्रे सहैव चरन्तं हंसमाहुः हंसस्वरूपिणं विष्णुं वायुं चाऽहुः । नच तद्वचनं विप्रलम्भवचनवद् दृष्टार्थविषयं विरिञ्चादिभ्यो नृसिंहानुष्टुभमनु-सम्यक् चर्चूर्यमाणमुच्चार्यमाणमर्थवत्तया व्याचक्षाणम् इन्द्रं परमेश्वरं हंसरूपिणं विष्णुं तथा शिवादिभ्योऽनुष्टुभमुच्चारयन्तं व्याचक्षाणं वेन्द्रं हंसरूपं वायुं मनीषया दिव्यदृष्ट्या ददृशुश्चेति । किमनेन मन्त्रेणोक्तं भवतीत्यत उच्यते– **वाचीति** ॥ वागाख्यायामनुष्टुभ्युभाभ्यामुच्चार्यमाणायां हि ऐन्द्रमिन्द्रेण परमेश्वरेण सहितं प्राणम् ऋषयो न्यचायन् ददृशुरिति यत् तत् तस्मादेतदनुष्टुभाख्यछन्दस्तेन विष्णुना तेभ्य उक्तं भवतीति ज्ञायते । तत् तस्मादेतदनुष्टुप्छन्द एव तत् प्रशस्तमिति

एतत्प्रमेयं तेन मन्त्रेणोक्तं भवतीत्यर्थः । फलाधिक्याच्चानुष्टुप्छन्दः सहस्रमेव शंसनीयमित्युच्यते– **सहेति** ।। योऽनुष्टुभां सहस्रं शंसीत स भवितोर्भवितुं मोक्षं गन्तुमीश्वरः समर्थः यशस्वी दिक्षु प्रसिद्धः कल्याणकीर्तिः शुभकीर्तिश्च भवति । 'दिक्षु यानाद् यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति वचनात् । आयुषः पुरा प्रैतोः प्रैतुं मर्तुं चेश्वरः स्वच्छन्दमृत्युश्च स्यादित्यैतरेयकः विष्णोरन्य ऐतरेय आह स्मेत्यर्थः । एवं पूर्वपक्षान् प्रापय्य दूषणमुक्तं भगवता महैतरेयेणेत्युच्यते– **इति ह स्मेति** ।। इत्यस्मिन्ननुष्टुप्सहस्रपक्षे दूषणमाह ऐतरेय इत्यर्थः । पक्षान्तराणां परिहारमनुक्त्वा कुतोऽत्रैव दूषणमुक्तं तेनेत्यतस्तेनैव स्वशिष्यं प्रति पक्षान्तराण्युपेक्ष्यानुष्टुप्सहस्रपक्षदूषणे कारणमुक्तमित्युच्यते– **इति ह स्मेति** ।। एष नानाच्छन्दःप्रशंसादिपक्षः । अकृत्स्नः प्रकरणविकलत्वेन परिहारायाप्यपूर्णः निर्दलतयोपेक्षणीयः । एष त्वदीयः पक्षः प्रमाणपूर्वकत्वात् कृत्स्नः परिहाराय पूर्णश्चेति ग्राह्यम् ।

किञ्चैष त्वं ममाऽत्मा अन्तरङ्गप्रियशिष्य इति ह स्म इत्यपि स्वशिष्यं प्रत्याह महैतरेय इत्यर्थः । एवं पक्षान्तराणां निर्दलत्वं शिष्यपक्षस्य सदलत्वमुक्त्वा दूषणमुच्यते– **अकृत्स्न इति** ।। यद् वाग् याऽनुष्टुबाख्यवागभिमानिन्युमा एष भगवतो कृत्स्न आत्मा असम्पूर्णप्रतिमा तत्र ज्ञापकमुच्यते–**अकृत्स्न इति** ।। कृत्स्नशब्दार्थप्रतिपादकब्रह्मशब्दवाच्य इत्यर्थः । सम्पूर्णप्रतिमात्वे वायोरिव ब्रह्मशब्दवाच्यत्वप्रसङ्गादिति भावः । असम्पूर्णत्वे युक्त्यन्तरमुच्यते– **अभि हीति** ।। प्राणेन वायुना मनसा शिवेनाभि इस्यमानः अभितो विषयेषु प्रेर्यमाणः अनुभवति विषयान् वाचा नानुभवति । वाङ्मन्त्रेण विषयभोगो न भवतीत्यर्थः । अस्त्वेवमनुष्टुभोऽवरत्वं ततश्च किमित्यत उच्यते– **बृहतीमित्यादिना** ।। बृहतीमभि सम्पादयेत् कुतः । यद् यस्मादेष प्रकृतो वायुरेव बृहती बृहत्यभिमानी । तस्माद् यद् बृहती या बृहती । सा छन्दसां मध्ये बृहती वरिष्ठा । वायुरपि कश्चिद् देवः तदभिमन्यमानकत्वमात्रेण कथं बृहत्या वरिष्ठत्वमिति चेद् यद् बृहती यो बृहत्यभिमानी वायुरेष वै देवानां मध्ये कृत्स्नः पूर्ण आत्मा विष्णु-

प्रतिमा । पूर्णत्वे ज्ञापकमुक्तम्– **कृत्स्न इति** ।। यस्मात् पूर्णत्वं तस्मादेव खलु कृत्स्नः कृत्स्नशब्दपर्यायब्रह्मशब्दवाच्यः । 'द्युभ्वाद्यायतनं स्वशब्दाद्' इति यथा । बृहत्यभिमानिनः पूर्णत्वे बृहतीशब्दोऽपि प्रमाणमुच्यते–**एष वा इति** ।। यद् यस्मात् कृत्स्नः माहात्म्येनाधिकस्तस्मादेव बृहतीशब्दवाच्य इत्यर्थः । बृहत्या इतरच्छन्दोभ्य आधिक्ये ज्ञापकमुच्यते– **एष वा इति** ।। यद् यस्मादेषः छन्दोविशेषः कृत्स्नः बृहतीशब्दवाच्यपरिपूर्णवाय्वभिमतत्वेन माहात्म्याधिक्योपेतः तस्मादेव बृहतीत्युच्यत इत्यर्थः । प्रकारान्तरेण सदृष्टान्तं बृहत्या उत्तमत्वमुच्यते– **स इत्यादिना** ।। सोऽयमात्मा मध्यदेहः । सर्वतः सर्वशरीरैः शरीरावयवैः परिवृतः। ततश्च किमित्यत उक्तम्– **तद् यथेति** ।। अत्र तदित्येतत् मध्यं ह्येषामित्यनेन सम्बद्ध्यते । यथाऽयमात्मा सर्वशरीरैः परिवृतः एवमेव बृहती सर्वतः छन्दोभिः परिवृता । मध्यदेहबृहत्योरितराङ्गच्छन्दःपरिवृतत्वे ज्ञापकमुच्यते– **मध्यमिति** ।। तत् तस्मादितराङ्गपरि-वृतत्वादेवायमात्मैषामङ्गानां मध्यमित्युच्यते बृहत्येषां छन्दसां मध्यमित्युच्यत इत्यर्थः । इतरच्छन्दसां चतुर्मुखेतराङ्गपरिवृतत्वादेवायमात्मैषामङ्गानां मध्यमित्युच्यते बृहत्येषां छन्दसां मध्यमित्युच्यत इत्यर्थः । इतरच्छन्दसां चतुर्मुखेतराङ्गसमुद्भूतत्वाद् बृहत्यास्तु मध्यदेहोत्पन्नत्वात् तृचाशीतित्रये मध्ये पठ्यमानत्वात् सप्तच्छन्दोलक्षणवैष्णवप्रतिमायां मध्याङ्गत्वाच्चेत्येवं तत्परिवृतत्वादेव मध्यत्वव्यवहार इति भावः । यदुक्तमनुष्टुप्छंसने मोक्षादिफलसद्भावात् तच्छंसनं प्रशस्तमिति तन्न । ततोऽप्यधिकफलत्वाद् बृहतीशंसनस्येत्युच्यते– **सहेश्वर इत्यादिना** ।। नन्वेतत्फलमनुष्टुबुपासकस्यापि सममित्यतः परं 'कृत्स्नो ह्येषः' इत्याकृष्य व्याख्येयम् । एष उपासकः मुक्त्यादौ कृत्स्नो गुणाधिक इति ह स्म महिदासः प्राहेत्यर्थः । उपसंह्रियते– **कृत्स्न इति** ।। यद् बृहती या बृहती एष तदभिमानी वायुर्हि यस्मात् कृत्स्न आत्मा सम्पूर्णप्रतिमा एष च्छन्दोविशेषोऽपि कृत्स्न आत्मा भगवतो विशिष्टप्रतिमा । तस्माद् बृहतीमेवाभिसम्पादयेदिति ।

**।। इति पञ्चमः खण्डः ।।**

**उपनिषत्-**

**(महिम्नि बृहत्त्वे च बृहत्याः महत्त्वम्)**

तद् वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानि भवन्ति ।। पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा कनीयः ।।

**भाष्यम्-**

बृहतीसम्पादनेऽनुष्टुप्च्छंसनमात्रात् पञ्चविंशोत्तरशतानुष्टुबाधिक्यं च भवति । अत आधिक्याद् बृहतीसम्पादनमेव वरम् । तस्यात्रैवान्तर्भावात् । जगत्यादिकं त्वधिकत्वेऽपि बृहतीवन्माहात्म्याभावादेवोपेक्ष्यते ।

**टिप्पणी -**

'तस्य वा एतस्य' इत्येतद् बृहतीसहस्रशंसनस्य कर्तव्यत्वे हेतुत्वेन व्याचष्टे– **बृहतीति** ।। 'तद्वा इदम्' इति प्रथमवाक्यं साध्यपरतया व्याचष्टे–**अत इति** ।। तदित्यस्य तस्मादित्यर्थमभिप्रेत्य प्रतिपदमत इति । आधिक्यादनुष्टुबाधिक्यलाभात् । सम्पादनं शंसनम् । आत्तं वेत्यस्यार्थः ।। **तस्यात्रैवेति** ।। यथाऽनुष्टुभो बृहत्यामन्तर्भावस्तथा बृहत्या अपि जगत्यादावन्तर्भावात्तच्छंसनमेव वरमित्यतो मूलोक्तं वरत्वं नाक्षराधिक्यमात्रं किन्त्वभिमान्याधिक्यमर्थाधिक्यादिकं चेत्याह– **जगतीति** ।।

**उपनिषत्-**

**(बृहत्याः बृहत्त्वे ऋषिसम्मतिः)**

तदुक्तमृषिणा वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति नवस्रक्तिमिति बृहती सम्पद्यमाना नवस्रक्त्यृतस्पृशमिति सत्यं वै वागृचा स्पृष्टेन्द्रात् परि

तन्वं मम इति ॥ तद् यदेवैतद् बृहतीसहस्रमनुष्टुप् सम्पन्नं भवति तस्मात् तदैन्द्रात् प्राणाद् बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते ॥

**भाष्यम्-**

**(विष्णुप्रतिमास्थानीयं बृहतीसहस्रम्)**

'वाचमष्टापदीमहम्' इत्यनुष्टुभो बृहतीसम्पादनवचनाच्च। अष्टचतुरक्षराण्यनुष्टुप्। तस्या एव बृहतीसम्पादने नव स्रक्तयो भवन्ति। ऋचा वाक् ऋग्रूपेण वाक् ऋतं स्पृष्टा सत्यरूपं विष्णुं स्पृष्टा भवति। इन्द्रस्य परमेश्वरस्य विष्णोः सम्बन्धी नितरां प्रियत्वाद् यः प्राणदेवता वायुः तस्य प्रतिमारूपमिदं बृहतीसहस्रम्। स च वायुर्विष्णोर्मुख्यप्रतिमा। तस्माद् विष्णोरेव प्रतिमा बृहतीसहस्रम्।

**(उमादेव्यपि भगवत्प्रतिमास्थानीया)**

तस्मात् तस्यैव बृहतीसहस्रत्वेन सम्पन्नस्य पञ्चविंशोत्तरैकादशशतानुष्टुप्त्वेन सम्पादने बृहतीदैवतप्राणरूपाद् वायोरनुष्टुब्देवताया वाग्रूपाया उमाया उत्पत्तिः संस्मृता भवत्येवं जानतः। ततश्चोमाया अपि भगवत्प्रतिमात्वाद् विष्णुप्रतिमास्थापक एव भवत्येतत् सर्वं सम्यग् ध्यायन्।

**(विष्णुरेव हि बृहत्याः प्राणस्याधिष्ठातृदेवता)**

विष्णुरेव बृहत्याः प्राणस्याधिष्ठातृदेवता। प्रतिमाधिष्ठितदेवतावत्। तस्माद् बृहत्याः सकाशादनुष्टुप्सम्पादने तस्यैव विष्णोः प्रतिमान्तरं तस्मादेव निर्मितं भवति। अत एव 'इन्द्रात् परि तन्वं ममे' इत्युक्तम्। बृहतीस्थविष्णोर्बलादेव तत् सम्पद्यते। स हि तस्या षट्त्रिंशदक्षरादित्वमपि नियमयति तत्प्रसादाद् वायुश्च। वायुरेव यद् भगवन्नियतो नियमयति तस्माद् 'इन्द्रात् परि' इत्यस्यैन्द्रात् प्राणादिति व्याख्या कृता।

## (बृहतीसहस्रछन्दांसि श्रीहरिवायुप्रतिमास्थानीयानि)

यावत् सहस्रं बृहती तावच्छंसेदनुष्टुभाम् ।
छन्दसां वा तदन्येषां बृहतीत्वं स्मरेत् ततः ।।
तेन सर्वगतो विष्णुः सर्वस्मादधिकोऽर्चितः ।
भवेदेवं जानतस्तु कृता च प्रतिमा भवेत् ।।
तथा वायोरपि कृता वायुर्हि प्रतिमा हरेः ।
तस्माद् वायुकृतं सर्वं क्रियते विष्णुनैव हि ।।
बृहतीसहस्रं सम्पन्नमेकादशशतं पुनः ।
अनुष्टुभां स्मरेत् पञ्चविंशोत्तरमुदारधीः ।।
तेन वायोरुमोत्पत्तिः सम्यग् ज्ञानात् स्मृता भवेत् ।
ततो द्वितीयप्रतिमा विष्णोरेव कृता भवेत् ।।
विष्णुनाऽनुप्रविष्टौ यदुमा वायुश्च तद्वशौ ।। इत्यादि च ।।

स्रक्तयो विभागाः । 'स्रक्तिरंशो विभागश्च विदळं चेति कथ्यते ।।' इति हि शब्दनिर्णये ।।

**टिप्पणी -**

'तदुक्तमृषिणा वाचमष्टापदीम्' इत्येतद् बृहतीशंसनस्य वरत्वे युक्त्यन्तरपरत्वेन व्याचष्टे– **वाचमिति** ।। बृहतीसम्पादनमेव वरमित्यनुवर्तते । अनुष्टुप्सहस्रस्यैव शंसनीयत्वे ताभिर्बृहतीसम्पादनोक्तिवैयर्थ्यादिति भावः । यद्वाऽनुष्टुप्सहस्रमात्र-शंसने उमालक्षणैकप्रतिमास्थापनं ताभिर्बृहतीं सम्पाद्य पुनर्बृहत्यानुष्टुप्त्वेन स्मरणे तूमावायुलक्षणप्रतिमाद्वयस्थापनगुणलाभादेवमेव बृहतीशंसनं कार्यमिति 'तद्वा इदम्' इत्यादिनोक्त्वा तदुक्तमृषिणेत्युक्तस्यार्थमाह– **वाचमिति** ।। अनुष्टुभ इति पञ्चमी षष्ठी च । अनुष्टुभः सकाशाद् बृहत्याः सम्पादनवचनाद् अनुष्टुभां बृहत्या सम्पादनवचनाच्चेत्यर्थः। 'अष्टौ हि चतुरक्षराणि' इत्येतद् व्याचष्टे–**अष्टेति** ।। 'बृहती सम्पद्यमाना' इत्यस्यार्थमाह– **तस्या एवेति** ।। 'सत्यं वै वागृचा स्पृष्टा'

इत्येतद् व्याचष्टे– **ऋचेति** ।। नेयं करणे तृतीया किन्तु 'इत्थम्भूतलक्षणे' इति भावेन ऋग्रूपेणेत्युक्तम् । सत्यरूपं नित्यरूपम् । निर्दोषज्ञानरूपं वा । सदेर्गत्यर्थत्वात् । तद् यदैवैतदित्यस्य तदनुष्टुब्यदैतद् बृहतीसहस्रं सम्पन्नं तदैन्द्रात् प्राणादैन्द्रस्य प्राणस्य बृहंत्यैव बृहत्याख्यां तन्वं सन्निर्मिमीत इत्यर्थमभिप्रेत्य व्याचष्टे– **इन्द्रस्येति** ।। एतेनैन्द्रात् प्राणादिति पञ्चमी षष्ठ्यर्थे बृहत्या इति चतुर्थी द्वितीयार्थे इत्युक्तं भवति । मन्त्रेष्टापदीं नवस्रक्तिं कुर्वन्नहमिन्द्रादिन्द्रस्य विष्णोस्तन्वं प्राणाख्यामत एव बृहतीसहस्राख्यां च तन्वं स निर्मिमीत इत्यर्थस्य स्फुटत्वादुपनिषद्येवमर्थस्यानुक्तत्वेऽपि स्वयमाह– **स च वायुरिति** ।। तस्माद् बृहतीप्रतिमाकवायुप्रतिमाकत्वात् । अथ तद् यदैतदित्यादेस्तदनुष्टुभा सम्पन्नमेतद् बृहतीसहस्रं यस्माद् यदा पुनरनुष्टुप् सम्पन्नं भवति तदा तस्मादेव हेतोर्बृहत्यै बृहतीप्रतिमाकादैन्द्रात् प्राणादनुष्टुभं वाचमनुष्टुबभिमानिनीमाख्यां वाचं निर्मिमीत इत्यर्थान्तरमाह– **तस्मादित्यादिनैवं जानत इत्यन्तेन** ।। तस्माद् यस्माद्वायोः प्रतिमारूपमिदं बृहतीसहस्रं तस्मादित्यर्थः । तस्यैवानुष्टुभ एव । ननु बृहतीरनुष्टुप्त्वेन शंसितुः कथमुमोत्पादकत्वं स्मृतं भवतीत्यत उक्तम्– **एवमिति** ।। बृहती देवता वायुः अनुष्टुप् देवतोमेत्येवं जानत इत्यर्थः । वाचमित्यनुक्त्वा तन्वमित्युक्तेरभिप्रायमाह– **ततश्चेति** ।। उमाया उत्पत्तेः संस्मृतत्वादेव । वायोरुमोत्पत्तिज्ञाने विष्णुप्रतिमास्थापनं कथमित्यतक्तम्– **एतत्सर्वमिति** ।। वक्ष्यमाणं सर्वम् । मन्त्रे नवस्रक्तिं बृहतीमष्टापदीमनुष्टुभं कुर्वन्नहं बृहतीप्रतिमाकात् प्राणाधिष्ठितादिन्द्राद् विष्णोर्वाक्छब्दोदितोमाख्यां तन्वं सन्निर्मिमीत इत्यर्थस्य स्फुटत्वादुपनिषद्येवमर्थस्यानुक्तत्वेऽपि स्वयमर्थं वक्तुमाह–**विष्णुरेवेति** ।। प्राणस्य बृहत्याः प्राणाभिमन्यमानायाः बृहत्याः । यद्वा, बृहत्याः बृहत्यभिमानिनः प्राणस्येत्यर्थः । विष्णोरधिष्ठातृत्वं नेतरेषामिवाभिमानित्वेनेति भावेनोक्तम्– **प्रतिमेति** ।। प्रतिमां प्रतिमान्तःस्थां ध्यायेत् तेजोमयीमित्याद्युक्तप्रकारेण बृहतीप्रतिमा तदन्तःस्था प्राणप्रतिमा तत्राधिष्ठितो वासुदेव इति भावः । अस्त्वेवं ततश्च किमित्यतो यदा नवस्रक्त्यष्टापदी भवति

तदेन्द्रात् परितन्वमित्येतद् योजयति– **तस्मादिति** ।। विष्णोर्बृहत्यधिष्ठातृत्वादित्यर्थः । तस्मादेव विष्णोरेव । ननु मन्त्रेऽहं वाचं तन्वं परिममे निर्मितवानस्मीति मन्त्रद्रष्ट्रोक्तत्वात् कथं प्रतिमान्तरं तस्मादेव निर्मितमिति व्याक्रियत इत्यत आह– **अत एवेति** ।। अत एव निर्माणस्य भगवत्कर्तृत्वादेवेत्यर्थः । अन्यथेन्द्रस्येत्येवावक्ष्यदिति भावः । अहं निर्मम इत्युक्तिस्तु भगवतोमाख्या प्रतिमा निर्मितेति ज्ञानमादाय प्रतिमास्थापनफलमादाय वोपपन्नेति ज्ञेयम् । ननु भवत्वनुष्टुब्देवताया उमायाः निर्माणं भगवता, उपासकस्य तदयोगात् । अभिमन्यमानानुष्टुप्सम्पादनं तु बृहत्या एवानुष्टुप्त्वेन पर्यवसानात् तयैव वा तथा स्मर्त्रा वा युज्यते । तथा चेन्द्रादिति पञ्चम्ययुक्तेत्यत आह–**बृहतीस्थेति** ।। नतु बृहतीशक्त्या पुंशक्त्या वेत्येवार्थः । तथा च तदाऽपीन्द्रादित्युपपन्नमिति भावः । कैमुत्यन्यायेन बृहत्या एवानुष्टुप्त्वेन भवनमित्येतत् प्रतिक्षिपति– **स हीति** ।। संसर्गबोधकत्वमादिपदार्थः । किमु तद्गतां प्रतिमान्तरभवनयोग्यतामित्यपेरर्थः । तर्हि वायोर्बृहत्यभिमानित्वभङ्ग इत्यत आह– **तत्प्रसादादिति** ।। तत्प्रसादादिति कुतः ? स्वातन्त्र्येणेति किं न स्यादित्यतो ज्ञापकमाह– **वायुरेवेति** ।। वायुर्यस्माद् भगवन्नियत एव नियामयति तस्मादिन्द्रात्परीत्यस्योपलक्षणत्वविवक्षयेन्द्रात् प्राणाच्चेति वक्तव्ये ऐन्द्रात् प्राणादितीन्द्रनियमितात् प्राणादित्युक्तमिति भावः । वायुर्नियामयतीति कथमवगतमित्यतो वाऽऽह– **वायुरेवेति** ।। यस्माद् वायुर्नियामयत्येव तस्मादित्युपलक्षणमित्यभिप्रेत्यैन्द्रात् प्राणादिति लक्षणाबीजसम्बन्धप्रदर्शनपूर्वं व्याख्या कृतेत्यर्थः । 'तद्वा इदं बृहती सहस्रम्' इत्यादिना तद्वै तथा वै उक्तप्रकारेणानुष्टुबादिभिः सम्पन्नमिदं बृहतीसहस्रं पुनरनुष्टुप्सम्पन्नं चेत्तदा विष्णोर्बृहतीप्राणाख्यमनुष्टुबुमाख्यं प्रतिमाद्वयं सम्पन्नं सम्पादितं स्यात्तथा वायोरपि बृहत्याख्यमनुष्टुबाख्यं प्रतिमाद्वयं सम्पादितं स्याद् वायोरुमोत्पत्तिज्ञापनं च सम्पादितं स्यादित्युक्तेऽर्थे 'वाचमष्टापदीम्' इति मन्त्र उदाहृतः तं स्पष्टस्मृत्या व्याचष्टे– **यावदित्यादिना** ।। सर्वगतः बृहत्यादिसर्वगतः । ऐन्द्रात् प्राणादित्यस्य

तात्पर्यम्– **तथा वायोरिति** ।। उभयोर्बृहत्याख्यैकप्रतिमात्वे साम्यं स्यादित्यत आह– **वायुरिति** ।। बृहत्यां वायुर्वायौ विष्णुरिति भावः। वायोर्भगवत्प्रतिमात्वे युक्तिः–**तस्मादिति** ।। वायोः प्रतिमात्वादेव तेन यत्कृतं तत्तदधिकं च सर्वं तेन क्रियत इत्यर्थः। एवमनुष्टुबादिभिः सम्पन्नं बृहतीसहस्रं विष्णोर्वायोश्च प्रतिमाभूतं सम्पन्नमित्यंशं मन्त्रे चाष्टापदीं वाचं नवस्रक्तिं कुर्वन्नहमिन्द्रस्य विष्णोर्वायोश्च बृहत्याख्यां तन्वं सन्निर्मितवानित्यंशं च व्याख्याय बृहतीसहस्रं पुनरनुष्टुप् सम्पन्नं चेत्तदा वायोरुमोत्पादनज्ञानं सम्पादितं स्याद् विष्णोर्वायोश्चोमाख्यां तन्वं सन्निर्मम इत्यंशं च व्याख्याति– **बृहतीसहस्रमित्यादिना** ।। द्वितीयप्रतिमा बृहतीस्थप्राणापेक्षया । तदुपपादनम्– **विष्णुनेति** ।। विभागः स्रक्तिरित्यादिशब्दैः कथ्यत इत्यर्थः ।

**उपनिषत्-**

**(अकारव्याख्यानपरं बृहतीसहस्रम्)**

**स वा एष वाचः परमो विकारो यदेतन्महदुक्थम् ।**

**भाष्यम्-**

**'स वा एष वाचः परमो विकारः'**, अकाराख्यवाग्विकारेषूत्तमो बृहतीसहस्राख्यः।

**अकारः प्रथमं नाम विष्णोः सर्वगुणान् ब्रुवन् ।**
**सर्वदोषविरुद्धत्वाद् गुणानामन्यतामपि ।।**
**विष्णोर्वदति जीवेभ्यो जडेभ्यश्चैव सर्वदा ।**
**अभावं चैव दोषाणां सर्वेषां केशवे वदेत् ।।**
**सम्यग् वक्तृत्वतस्तस्मादकारो मुख्यनाम हि ।**
**तदर्थानेकदेशेन शब्दाः सर्वेऽपि चोचिरे ।।**
**व्याख्याव्याख्येयरूपत्वं विकारित्वमिहोदितम् ।**

**विकारित्वं च नान्यत् स्यान्नित्या वेदा यतोऽखिलाः ॥**

**वाचकेषु तथा विष्णोः सहस्रबृहतीमयम् ।**

**उक्थमुत्तममुद्दिष्टं व्याख्याऽकारस्य सा परा ॥**

**अन्येऽपि शब्दाः सर्वेऽपि ह्यकारार्थाभिधायिनः ।**

**येषां परममुक्थं तत् ..................... ॥**

**टिप्पणी -**

'स वा एष वाचः परमो विकार' इत्यत्र वाक्पदेन वाचमनुष्टुभमिति प्रस्तुतानुष्टुभो ग्रहणं प्रतीयते, तदयुक्तम् । तथात्वे बृहतीसहस्रस्यानुष्टुबवरत्वप्राप्तेरित्यतः 'स वा एष वाचः परमो विकारो यदेतन्महदुक्थम्' इत्येतद् व्याचष्टे– **स वा एष इति** ॥ नन्वकारस्य कोऽतिशयो यतः तद्व्याख्यानेषूत्तमत्वमात्रेण बृहतीसहस्रस्यैव शंसनीयत्वमित्यत आह– **अकार इति** ॥ प्रथमं मुख्यम् । कथमकारस्य मुख्यनामत्वमित्यतस्तद्विरुद्धतदभ्यतदभाववाचित्वादिति भावेनोक्तम्– **सर्वगुणानित्यादि** ॥ गुणानां सर्वदोषविरुद्धत्वात् सर्वगुणान् ब्रुवन्नित्यर्थः । ततश्च किमित्यत उक्तम्– **सम्यगिति** ॥ सम्यग्वक्तृत्वतः अकारो मुख्यनाम । सम्यग् वक्तृत्वे हेतुः– **तस्मादिति** ॥ उक्तरीत्या सर्वदोषविरुद्धगुणादिविशिष्टयावद्-ब्रह्मप्रतिपादनशक्तित्वादिति भावः । एतेन 'स वा एष वाचः' इत्यत्र वाक्पदमकारे मुख्यमिति तस्यैव ग्रहणमिति सूचितम् । शब्दान्तरस्यापि गुणपूर्त्यादिप्रतिपादकत्वात् कोऽस्य विशेष इत्यत आह– **तदर्थानिति** ॥ केचिद्गुणान् केचिद्दोषाभावं गुणेष्वपि केचित् कांश्चिदित्येकदेशेनेत्यर्थः । विकारस्तत्परिणामविशेष इति प्रतीतेर्व्याचष्टे– **व्याख्येति** ॥ 'स वा एष वाचः' इत्यत्र पदार्थमुक्त्वा वाक्यार्थमाह– **वाचके-ष्विति** ॥ परमो विकार इत्यस्यार्थः– **परा व्याख्येति** ॥ परमशब्दव्यावर्त्यकथनम्– **अन्येति** ॥ नतूक्थवन्मुख्यन्याख्यानत्वेनेति भावः । 'तदेतत् पञ्चविधमितममितम्' इत्यत्र महदुक्थस्यैव परामर्शप्रतीतेर्व्याचष्टे– **येषामिति** ॥

उपनिषत्-

(वाङ्मयमखिलं पञ्चविधम्)

तदेतत् पञ्चविधं मितममितं स्वरः सत्यानृते इत्यृग् गाथा कुम्ब्या तन्मितम् ॥ यजुर्निगदो वृथा वाक् तदमितं सामाथो यः कश्च गेष्णः स स्वर ओमिति सत्यं नेत्यनृतं तदेतत् पुष्पं फलं वाचो यत् सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतम् ॥ तद् यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद् दयेत त्वेनेन पराग् वा एतद् रिक्तमक्षरं यदेतदोमिति ॥ तद् यत्किञ्चोमित्याहात्रैवास्मै तद् रिच्यते स यत् सर्वमोङ्कुर्याद् रिच्यादात्मानं स कामेभ्यो नालं स्यादथैतत् पूर्णमभ्यात्मं यन्नेति ॥ स यत् सर्वं नेति ब्रूयात् पापिकाऽस्य कीर्तिर्जायेत सैनं तत्रैव तस्मात् काल एव दद्यात् काले न दद्यात् । तत् सत्यानृते मिथुकीकरोति । तयोर्मिथुनात् प्र जायते भूयान् भवति ॥ यो वै तां वाचं वेद यस्या एष विकारः स सम्प्रतिविदकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति ॥ तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात् तत् तिर इव तिर इव ह्यशरीरमशरीरो

हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात् तदाविराविर्हि शरीरम् ॥

**भाष्यम्-**

**(समस्तवाङ्मयमूलमकारः)**

................तदेतत् पञ्चधा स्थितम् ॥

व्याख्यानमेवाकारस्य सहैवोक्थेन सर्वशः ।
मितामिते स्वरः सत्यमनृतं चेति पञ्चधा ॥
तस्मादकार एवायं सर्ववागात्मकः श्रुतः ।
तस्यैव व्यक्तिरूपोऽयं सर्ववेदादिविस्तरः ॥
तस्मात् सर्वगुणान् विष्णोरकारो वक्ति यत् प्रभोः ।
तद्व्यक्तयोऽपि शब्दा ये सर्वे विष्णुगुणब्रुवाः ॥

**टिप्पणी -**

येषामकारव्याख्यानानां मध्ये तदुक्थं परमं तदेतत् पञ्चधा स्थितमित्यस्यैव विवरणम्– **व्याख्यानमिति** ॥ उक्थेन सहैव स्थितं सर्वशः सर्वमेवाकारस्य व्याख्यानम् । मितामिते स्वरः सत्यमनृतं चेति पञ्चधा स्थितमित्यर्थः । पञ्चविध-शब्दराशेरकारव्याख्यानत्वे श्रौतलिङ्गप्रतिपादकं 'अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिः' इत्येतद् व्याचष्टे– **तस्मादिति** ॥ यस्मात्तस्याऽकारस्य सर्ववेदादिविस्तरो व्यक्तिरूपो व्याख्यानरूपस्तस्माद् 'अकारः सर्वा वाग्' इत्यादिश्रुतौ चाकारः सर्ववागात्मकः श्रुतः प्रसिद्धः व्याख्यानव्याख्येययोरभेदोपचारादन्यथाऽनुपपत्तेरिति भावः । सर्ववेदादिविस्तर इत्युक्त्या स्पर्शोष्मभिरित्युपलक्षणम् । अन्तःस्थादिरूपेण पदवाक्यादिरूपेण च व्यज्यमानेत्यपि ग्राह्यमित्युक्तं भवति । नन्वस्त्वेवमकारस्य सर्वासामपि वाचां च व्याख्यानव्याख्येयभावस्तथाऽपि प्रकृते किमायातमित्यत आह– **तस्मादिति** ॥ यद् यस्मादकारो विष्णोः सर्वान् गुणान् वक्ति तस्मात्तद्व्यक्तयो ये सर्वे शब्दास्तेऽपि विष्णुगुणान् ब्रुवन्तीति विष्णुगुणब्रुवाः । किमु व्याख्यानोत्तमं

बृहतीसहस्रमाधिक्येन विष्णुगुणान् वक्तीति वक्तव्यमिति भावः। ननु बृहत्युक्थादि-सर्ववाग्व्याख्येयत्वेनाकारस्योत्तमत्वं तद्व्याख्यानत्वाद् बृहत्युक्थस्योत्तमत्व-मित्युक्तावन्योन्याश्रयत्वमिति चेन्न। स्यादिदमन्योन्याश्रयत्वं यदि बृहत्युक्थमात्र-व्याख्येयत्वेनाकारस्योत्तमत्वं तद्व्याख्यानत्वादुक्थस्योत्तमत्वं ब्रूमः। नचैवम्। किन्तु बृहतीसहस्रादियावच्छब्दजातस्याप्युक्थेनोक्तेस्तदुत्तममित्युच्यमानत्वेन दोषानवकाशात्।

**भाष्यम्-**

**(उच्चैर्मन्त्रोच्चारणं न प्रशस्यते)**

**अकारस्य तथोपांशोरभिमानी तु मारुतः।**
**देहेन्द्रियान्तःकरणनाम्नोऽस्य द्विविधस्य च॥**
**स्थूलसूक्ष्मशरीरस्य सर्वेषामभिमानिनी।**
**भारत्युच्चोदितस्यापि ह्यकारस्याभिमानिनी॥**
**तस्मादुच्चादुपांशुर्हि जपादिषु फलाधिकः।**
**वायुः पतिर्हि भारत्या उपांशोर्देवता मतः॥**

**(अकारव्याख्यानपरः ओङ्कारः)**

**अकारस्य विकारोऽयमोङ्कार इति कथ्यते।**
**अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः॥**
**अकारेणैव तत् सर्वमुक्तमाधिक्यवक्तृतः।**
**अधिकोच्चस्वरूपोऽसौ माता चाधिक एव हि॥**

**(अकारव्याख्यानपरो नारायणशब्दः)**

**एकार्थत्वादकारोऽसौ नकारत्वमुपागतः।**
**दीर्घीभूतः पुनस्तेनैवाकारेण सह स्थितः॥**
**अभाववाच्यकारस्य ह्यर्थो रेफः क्षयं वदन्।**
**सोऽप्यकारेण सहितो दीर्घत्वं समुपागतः॥**

अभाववाच्यकारः स [1]एकार्थाद् गत्यभावयोः ।
यकारत्वं गतस्तस्मान्नो रेफस्योत्तरत्वतः ॥
णत्वं गतो ह्यकारोऽसौ नो विरुद्धार्थवाचकः ।
अन्यत्वात् सर्वजीवेभ्यो जडेभ्यश्च सदैव हि ॥
सर्वदोषोज्झितत्वाच्च सर्वतोऽप्यधिकत्वतः ।
निरासनाच्च दोषाणां स्वभक्तेभ्यः समन्ततः ॥
सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः ।
नारायण इति प्रोक्तो ह्यकारार्थोऽयमेव हि ॥
तस्मादकारबीजेयं विष्णोर्नारायणाभिधा ।
प्रणवश्च .............................. ॥

(हरिरेव अकारवाच्यः)

.......ततोऽकारः प्रधानं नाम चक्रिणः ॥

**टिप्पणी -**

'तस्य यदुपांशु' इत्यादि व्याचष्टे– **अकारस्येत्यादिना** ॥ तच्छरीरमिति शरीरपदेन तन्मात्रं न विवक्षितमिति भावेनोक्तम्– **देहेति** ॥ स्थूलसूक्ष्मशरीरस्येत्येवं सर्वेषामभिमानिनी भारत्युच्चोदितस्याकारस्याप्यभिमानिनीत्यर्थः । प्राणभारत्योरुपांशूच्चारणाभिमानित्वे ज्ञापकमाह– **तस्मादिति** ॥ हि यस्माद् भारत्याः पतिर्वायुरुपांशोर्देवता तस्मादुच्चादुपांशुः फलाधिक इत्यर्थः । एवं खण्डं सामान्यतो व्याख्यायोमिति सत्यमित्येतद् विवृणोति– **तत इत्यादिना** ॥ ततः अकारस्य सर्ववाग्व्याख्येयत्वादित्यर्थः । समुदीरितः 'अकारेणाधिकं प्रोक्तमुकारेणोच्चमिष्यते । तथा मितं सर्ववेदैः' इत्यादौ समुदीरित इत्यर्थः । तत्सर्वमोङ्कारवर्णत्रयोक्तं सर्वम् । आधिक्यवक्तृत्वादित्युक्तं त्रेधा विशदयति– **अधिकोच्चेति** ॥ अधिक

---

१. ऐकार्थ्यात्- ह.पा.

बृहतीसहस्रमाधिक्येन विष्णुगुणान् वक्तीति वक्तव्यमिति भावः। ननु बृहत्युक्थादि-सर्ववाग्व्याख्येयत्वेनाकारस्योत्तमत्वं तद्व्याख्यानत्वाद् बृहत्युक्थस्योत्तमत्व-मित्युक्तावन्योन्याश्रयत्वमिति चेन्न। स्यादिदमन्योन्याश्रयत्वं यदि बृहत्युक्थमात्र-व्याख्येयत्वेनाकारस्योत्तमत्वं तद्व्याख्यानत्वादुक्थस्योत्तमत्वं ब्रूमः। नचैवम्। किन्तु बृहतीसहस्रादियावच्छब्दजातस्याप्युक्थेनोक्तेस्तदुत्तममित्युच्यमानत्वेन दोषानवकाशात्।

**भाष्यम्-**

**(उच्चैर्मन्त्रोच्चारणं न प्रशस्यते)**

अकारस्य तथोपांशोरभिमानी तु मारुतः।
देहेन्द्रियान्तःकरणनाम्नोऽस्य द्विविधस्य च॥
स्थूलसूक्ष्मशरीरस्य सर्वेषामभिमानिनी।
भारत्युच्चोदितस्यापि ह्यकारस्याभिमानिनी॥
तस्मादुच्चादुपांशुर्हि जपादिषु फलाधिकः।
वायुः पतिर्हि भारत्या उपांशोर्देवता मतः॥

**(अकारव्याख्यानपरः ओङ्कारः)**

अकारस्य विकारोऽयमोङ्कार इति कथ्यते।
अधिकोच्चत्वमानं हि तस्यार्थः समुदीरितः॥
अकारेणैव तत् सर्वमुक्तमाधिक्यवक्तृतः।
अधिकोच्चस्वरूपोऽसौ माता चाधिक एव हि॥

**(अकारव्याख्यानपरो नारायणशब्दः)**

एकार्थत्वादकारोऽसौ नकारत्वमुपागतः।
दीर्घीभूतः पुनस्तेनैवाकारेण सह स्थितः॥
अभाववाच्यकारस्य ह्यर्थो रेफः क्षयं वदन्।
सोऽप्यकारेण सहितो दीर्घत्वं समुपागतः॥

**अभाववाच्यकारः स [1]एकार्थाद् गत्यभावयोः ।**

**यकारत्वं गतस्तस्मान्नो रेफस्योत्तरत्वतः ॥**

**णत्वं गतो ह्यकारोऽसौ नो विरुद्धार्थवाचकः ।**

**अन्यत्वात् सर्वजीवेभ्यो जडेभ्यश्च सदैव हि ॥**

**सर्वदोषोज्झितत्वाच्च सर्वतोऽप्यधिकत्वतः ।**

**निरासनाच्च दोषाणां स्वभक्तेभ्यः समन्ततः ॥**

**सर्वदोषविरुद्धोरुगुणपूर्णस्वरूपतः ।**

**नारायण इति प्रोक्तो ह्यकारार्थोऽयमेव हि ॥**

**तस्मादकारबीजेयं विष्णोर्नारायणाभिधा ।**

**प्रणवश्च ............................ ॥**

**(हरिरेव अकारवाच्यः)**

**.......ततोऽकारः प्रधानं नाम चक्रिणः ॥**

**टिप्पणी -**

'तस्य यदुपांशु' इत्यादि व्याचष्टे– **अकारस्येत्यादिना** ॥ तच्छरीरमिति शरीरपदेन तन्मात्रं न विवक्षितमिति भावेनोक्तम्– **देहेति** ॥ स्थूलसूक्ष्मशरीरस्येत्येवं सर्वेषामभिमानिनी भारत्युच्चोदितस्याकारस्याप्यभिमानिनीत्यर्थः । प्राणभारत्योरुपांशूच्चारणाभिमानित्वे ज्ञापकमाह– **तस्मादिति** ॥ हि यस्माद् भारत्याः पतिर्वायुरुपांशोर्देवता तस्मादुच्चादुपांशुः फलाधिक इत्यर्थः । एवं खण्डं सामान्यतो व्याख्यायोमिति सत्यमित्येतद् विवृणोति– **तत इत्यादिना** ॥ ततः अकारस्य सर्ववाग्व्याख्येयत्वादित्यर्थः । समुदीरितः 'अकारेणाधिकं प्रोक्तमुकारेणोच्चमिष्यते । तथा मितं सर्ववेदैः' इत्यादौ समुदीरित इत्यर्थः । तत्सर्वमोङ्कारवर्णत्रयोक्तं सर्वम् । आधिक्यवक्तृत्वादित्युक्तं त्रेधा विशदयति– **अधिकोच्चेति** ॥ अधिक

---

१. ऐकार्थ्यात्- ह.पा.

एव ह्यधिक एव खल्वधिकोच्चस्वरूपोऽधिको माता चेत्यर्थः । एतदुभय-माधिक्येऽन्तर्गतमिति भावः । यद्वा, आधिक्यवाचिनोऽकारस्येतरान्वित-स्वार्थाभिधायकत्वादुच्चत्वमप्यधिकमिति प्रतिपादनशक्तिसद्भावादिति भावः। नारायणशब्दोऽप्योङ्कारव्याख्यानरूपत्वादकारार्थ इत्याह– **एकार्थत्वादिति** ।। अन्यत्वार्थकोकारोऽसावेकार्थत्वान्नकारत्वमुपागतः। पुनस्तेनान्यत्ववाचिनाकारेण सह स्थितो दीर्घीभूतः। रीङ् क्षय इति धातोः क्षयं वदन् रेफोऽभाववाच्यकार-स्यार्थः । सोऽपि रेफोऽप्याधिक्यवाचिनाकारेण सहितो दीर्घत्वं समुपागतः । सोऽभाववाच्यकार एव गतिरपगतिर्विनाश इति गत्यभावशब्दयोरेकार्थत्वाद् यकारत्वं गतः । या प्रापण इति धातोर्यातिर्गत्यर्थत्वात् । तस्माद् यकारात्परो नो नकारः रेफात्परत्वाद् 'रषाभ्यां नो णः समानपदे' इति सूत्रानुसारेण णत्वं गतः। असौ णत्वं गतो नकारो विरुद्धार्थवाचकोकार एवेत्यर्थः । ननु यकारात्परोऽन्तिमणकारात्परश्चाकारोऽस्ति। तस्यार्थः कुतो नोक्त इति चेन्न। तस्योच्चारणार्थत्वात् । सर्वत्रास्योच्चारणार्थस्याकारस्यार्थस्यानुक्तत्वात् । अत एवाऽद्यद्वितीयवर्णयोर्दैर्घ्यम् 'अकः सवर्णे दीर्घः' (पा.सू. ८.४१) इति स्मरणादिति ज्ञेयम् । एवं नारायणशब्दस्याकारात्मकत्वं तत्प्रतिनिधित्वं चोक्त्वाऽर्थमाह– **अन्यत्वादिति** ।। अन्यत्वात् सर्वजीवेभ्य इति नकारार्थः। जडेभ्य इत्यकारार्थः। यद्वा, जीवेभ्यो जडेभ्योऽन्यत्वादिति नकारस्यैवार्थः। दीर्घीभूतः पुनस्तेनेत्यत्राप्या-धिक्यवाचिनाकारेणेत्यर्थः। किं तदन्यत्वे आधिक्यमित्यत उक्तम्–**सदैवेति** ।। नेदमन्यत्वमौपाधिकं कादाचित्कं किन्तु स्वाभाविकं सार्वकालिकमिति नकारात्परात्पराकारस्यार्थ इति भावः। सर्वदोषोज्झितत्वादिति रेफार्थः। सर्वतोऽ-प्यधिकत्वत इति तत्पराकारार्थः । निरसनाच्च दोषाणामिति यकारार्थः । सर्वदोषविरुद्धेति णकारार्थ इति विवेकः । उपसंहरति– **अकारार्थ इति** ।। हि यस्मादयमेवाकारार्थस्तस्मादकारबीजेऽयं नारायणाभिधा प्रणवश्चेत्यर्थः। ततः सर्वशब्दमूलत्वात् ।

भाष्यम्-

अकारनामा नान्योऽस्ति तमृते पुरुषोत्तमम् ।
ब्रह्मरुद्रादिनामानि ब्रह्मादिष्वप्यमुख्यतः ॥
वर्तन्ते न त्वकारोऽयं वर्तते केशवं विना ।
नारायणादिनामानि नृणां नामक्रियास्वपि ॥
विहितान्यकारो नैवायं विहितस्तमृते प्रभुम् ।
वायुर्ब्रह्माऽपि चाऽकारदेवते नतु नामिनौ ॥
यथा वेदाभिधेयोऽन्यो वेदाख्या देवताऽपरा ।
एवं नामाभिमानी तु वायुर्वाच्यो जनार्दनः ॥
तस्माद इति नामैतद् विष्णोः केवलमेव हि ।

**(हरेरतिप्रीतिकरं बृहतीसहस्रम्)**

विशेषतोऽस्य व्याख्यानं बृहतीनां सहस्रकम् ॥
तस्मात् प्रीतो भवेद् विष्णुः शंसनादस्य सर्वदा ।
तस्माद् यज्ञेऽपि वा शंसेदयज्ञेऽपि रहः पुमान् ॥
ध्यात्वा नारायणं देवं विष्णोरन्नं हि तत् परम् ॥ इत्यादि ब्रह्मसारे ॥

**(वाङ्मयस्य पाञ्चविध्यं किम् ?)**

परमविकारेण सह विकारमात्रस्यापि प्रस्तुतत्वात् 'तदेतत् पञ्चविधम्' इति परामर्शः ।

स्वराणां नियमो यत्र ह्यृचो नामैव ताः स्मृताः ।
अन्या मिताक्षरा यास्तु ता गाथाः परिकीर्तिताः ॥
खण्डवाक्यानि कुम्ब्याः स्युरसमानि परस्परम् ।
यज्ञाङ्गं यजुरुद्दिष्टं निगदं वाक्यमात्रकम् ॥ इत्यादि शब्दनिर्णये ॥

**टिप्पणी -**

ननु सर्वाणि पदानि हरिनामान्येव किमकारस्य विशिष्य नामत्वमुच्यत इत्यत आह– **अकारनामेति** ।। तदुपपादयति– **ब्रह्मेति** ।। यानि ब्रह्मरुद्रादिविष्णुनामानि तानि ब्रह्मादिष्वप्यमुख्यतो वर्तन्ते अयमकारः केशवं विना कुत्रापि न वर्तते । तदुक्तमुपपन्नमिति भावः । ननु 'ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम्' (ब्र.सू.भा. १.३.३) इत्यादिना नारायणादिनाम्नामन्यत्रावृत्तिः श्रूयत इत्यत आह– **नारायणादीति** ।। नारायणादिनामान्यपीत्यन्वयः । ननु ब्रह्मवाय्वोरप्यकारनामत्वं कचिदुच्यतेऽतः कथं विष्ण्वेकनामत्वं तस्येत्यत आह– **वायुरिति** ।। वाशब्देन शिवः । 'अकारो ब्रह्मविष्णवीशकमठेषु' इति नानार्थरत्नमालायाम् । ब्रह्मशिवनामत्वमपि तदभिमन्य-मानत्वादेव नतु तत्र गुणसमर्पकत्वेनेति भावः । बृहतीसहस्रस्यैव शंसनीयत्वे उक्तयुक्त्यन्तरमुपसंहरति– **तस्मादिति** ।। तदेतत्पञ्चविधमित्यतः प्रागितर-विकाराणामप्रकृतत्वात् कथं तत्परामर्शो व्याख्यात इत्यत आह– **परमेति** ।। 'एष परमो विकारः' इत्यत्र परमत्वावधित्वेन विकारमात्रस्य प्रस्तुतत्वादित्यर्थः। ऋग्गाथाकुम्ब्येत्येतद् व्याचष्टे– **स्वराणामिति** ।। अन्यामिताक्षराः स्वरनियम-रहिताः छन्दोबद्धाः । परस्परं पूर्वोत्तरार्धयोरसमानि विषमसङ्ख्याक्षराणि खण्ड-वाक्यानि । यजुर्निगद इत्येतद् व्याचष्टे– **यज्ञेति** ।। वृथा वागिति स्तोभाक्षराणीति प्रसिद्धमिति भावः ।

**भाष्यम्-**

**(अकारार्थप्रपञ्चो विशालः; नकारप्रयोगपरिणामो गम्भीरः)**

**अकारार्थत्वान्नकारस्य किञ्चिन्मूलमिव । तस्मान्मूलत्वादकारार्थोऽपि ज्ञेय एव । नायोग्यानां सम्यग् वाच्यमिति स्वल्प एव प्रकाशितोऽस्माभिः । वाच उद्धर्तनाशक्तेः स्वयमेवोद्धर्तते । यद्धि देवतासु करोति तदात्मन्यापतति । तस्माद् द्रव्यदानं ज्ञानदानं वा काले पात्राद्यनुसारेणैव कुर्यात् ।**

## (वाङ्मयप्रपञ्चे सत्यमनृतं च)

**अकारस्योङ्कारता त्वकारलोपेनैव जातेति सत्यमोङ्कारः। अकारस्याऽदौ स्थितत्वेन च यथार्थरूपत्वात्। उकारादिविकारसहितत्वात् पुष्पफलात्मकश्च। अकारस्यार्थरूपः सन्नेव च भगवांस्तमेवोङ्कारो वक्ति। अतश्च सत्यमेवोङ्कारः। यमर्थमकारो वक्ति तमेव वक्तीति। नकारस्त्वच्छिन्नस्कत्वान्मूलभूतस्याकारस्यान्ते स्थितिरूपत्वाद् अयथास्थितेरसत्यरूपः। तथाऽप्यकारस्य नकारस्य चैकार्थत्वान्मूलभूतश्च। तस्मादकारस्यैतद् वृथा वागादिकमपि व्याख्यानम्। तस्माद् विजानतः सर्वमपि भगवन्नामैव ॥**

**टिप्पणी -**

अथैतन्मूलं वाचो यदनृतमिति नकारस्याकारमूलत्वोक्त्या प्राधान्यप्रतीतिं निवारयति– **अकारार्थत्वादिति** ॥ नकारस्याकारैकदेशार्थप्रतिपादकत्वेन किञ्चिदकारार्थत्वादकारस्य मूलमिव शब्दोत्पत्तिकारणत्वाभावेऽप्यर्थज्ञानोपायत्वात्। ननु ज्ञानादियोग्याय तदनुच्चारणमिव तदर्थाप्रतिपादनमपि किं न कार्यमित्यत आह–**तस्मादिति** ॥ अर्थज्ञानहेतुत्वेन मूलत्वात्। तस्मान्नकारादप्यकारार्थो ज्ञेय एवातः तदर्थव्युत्पादनं कार्यमिति भावः। यदि सर्वैरपि शब्दैरकारार्थो ज्ञेयः तर्हि ओङ्कारनारायणशब्दाभ्यामेव कुतो न प्रदर्शित इत्यत आह– **नायोग्यानामिति** ॥ साम्यप्रपञ्चेन स्वल्प एव दिक्प्रदर्शनाय प्रदर्शितः। तेन योग्यानामुत्तमानां यथायोग्यं बोधो भविष्यतीति भावः। ननु वाङ्मूलस्य नकारस्य ज्ञानान्नदानयोग्येभ्यः प्रकटने वृक्षवद् वागुद्धर्तनेन भाव्यं कथं स्वस्य तदित्यत आह–**वाच इति** ॥ यदाऽयं नकारप्रदर्शनेन योग्येभ्यो वाचं नोपदिशति यदा चान्नं सत्पात्राय दरिद्राय न प्रयच्छति तदाऽपि तेषामन्नाभावेन विद्यास्वप्रवृत्तेर्वाच उद्धर्तनं प्रसक्तम्। तच्चाशक्यं वेदानां नित्यत्वाद् देवानां तदधीनत्वात् स्वयमेवोद्धर्तत इत्यर्थः। अन्यत्र प्रसक्तमुद्धर्तनं कथमन्यत्राऽपततीत्यत आह– **यद्धीति** ॥ यदा ज्ञानान्नयोरदानेन

वाचा योग्येष्वप्रसारणं तदा 'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्' (भाग. २.८.५) इत्युक्तरीत्या वाक्प्रतिपाद्यानां विष्णवादीनां तदभिमानिनां रमादीनां च तत्रासन्निधापनात्। तद्गुणाज्ञापनात् तदुपभोग्यान्नादेरप्रदाना च। देवतास्वपराधमेव करोति यद्धि देवतासु करोति तदात्मन्यापतति। 'अपूजिता अधर्मादिदातारस्ते तथाऽभिधाः' (तं.सा.सं. १.३३) इत्यादिवचनात्। तथाच स्वयं धर्मज्ञानादिशोषं नरकाद्यनर्थं च प्राप्नोत्येवेति भावः। तस्मात् काले दद्यात् काले न दद्यादित्येतत् देयप्रदर्शनपूर्वं व्याचष्टे– **तस्मादिति**॥ अयोग्येभ्यो दानेऽनर्थप्राप्तेर्योग्येभ्योऽप्रदानेऽपि तथात्वादित्यर्थः। एवशब्देनादिशब्दोक्तापात्रानुसारेण न कुर्यादिति लभ्यते। ओमिति सत्यमित्यत्रोङ्कारस्य सत्यत्वं घटयति– **अकारस्येति**॥ व्याख्येयमनतिक्रम्य वर्तमानं हि सत्यम्। ओङ्कारे चाकारश्रवणेन तल्लोपाभावात् सत्यत्वमिति भावः। प्रकारान्तरेण सत्यत्वमाह– **अकारस्य चेति**॥ व्याख्येयं प्रथमतोऽनूद्य व्याख्यानं हि सत्यम्। अकारस्यादावेव स्थितत्वेन यथा मूलानुवादेनोङ्कारस्यार्थनिरूपकत्वाच्च सत्यमोङ्कार इत्यर्थः। तदेतत् पुष्पं फलं वाच इत्येतद् विवृणोति–**उकारेति**॥ ओङ्कार इति वक्ष्यमाणमनुकृष्यते। इतश्चोङ्कारः सत्यमित्याह– **अकारस्यार्थरूप इति**॥ सन्नेव उत्तम एव। तथा च सदुत्तमं ब्रह्म प्रतिपादकतया यातीत्योङ्कारः सत्यमिति व्युत्पत्तिरिति भावः। अकारार्थाव्यभिचारित्वं च सत्यत्वमोङ्कारस्येति पक्षान्तरमाह– **यमेवेति**॥ इत्यतश्च सत्यमोङ्कार इति योज्यम्। नेत्यनृतमित्येतद् व्याचष्टे– **नकारस्त्विति**॥ अच्छिरस्कत्वादकारशिरस्कत्वात्। तस्य विवरणम्– **मूलेति**॥ 'अथैतन्मूलं वाचो यदनृतम्' इत्येतद् व्याचष्टे– **तथाऽपीति**॥ यद्यपि मूलं प्रथमतोऽनूद्य अपवृत्तेरसत्यरूपस्तथाऽप्येकार्थत्वादर्थज्ञानोपयुक्तत्वेन ज्ञप्तिविवक्षयाऽकारस्य मूलभूतश्चेत्यर्थः। ननु वृथा वाचोऽर्थशून्यत्वाद्गानविशेषस्यापि तथात्वात् कथमकारव्याख्यानत्वमित्यत आह– **तस्मादिति**॥ वृथा वाचामकारोकार-मकारनकारात्मकत्वात्केषाञ्चिद्घटितत्वाद् गानस्य च तद्व्यञ्जकत्वादित्यर्थः। खण्डार्थमुपसंहरति– **तस्मादिति**॥ ६॥

**खण्डार्थः -**

प्रागभिमान्याधिक्यादिना बृहतीसहस्रस्य कर्तव्यत्वमुक्तम् । तदेव युक्त्यन्तरेण प्रसाध्यतेऽस्मिन् खण्डे । तस्य बृहतीसहस्रस्यैतस्यैवं सम्पन्नस्य सत एकादशानुष्टुभां शतानि भवन्ति । पञ्चविंशतिश्चानुष्टुभो भवन्ति । तत् तस्मादक्षराधिक्यादुक्तप्रकारेण सम्पन्नं सम्पादितमिदं बृहतीसहस्रमेव सम्पन्नं वरं कथं बृहतीसम्पादनेऽनुष्टुबाधिक्यमित्यत उक्तम्– **आत्तमिति** ।। भूयसा कनीयोऽल्पमात्तमन्तर्भावितम् । किञ्च यद्यनुष्टुप्सहस्रस्यैव शंसनीयत्वं तर्ह्यनुष्टुभो बृहतीसम्पादनं कर्तव्यमिति श्रौतं वचनं न स्यात् तेन ज्ञायते बृहतीसहस्रस्यैव शंसनीयत्वमिति भावेनोच्यते– **तदुक्तमिति** ।। यद्वा, तद्वै तथोक्तप्रकारेणानुष्टुभान्येन वा छन्दसा सम्पन्नमिदं बृहतीसहस्रं पुनः पञ्चविंशोत्तरैकादशशतानुष्टुप् सम्पन्नं चेत् तदा विष्णोर्बृहतीप्राणाख्यमनुष्टुबुमाख्यं प्रतिमाद्वयं सम्पादितं स्यात् तथा च वायोरपि बृहत्यनुष्टुबुमाख्यं प्रतिमाद्वयं सम्पादितं स्याद् वायोरुमोत्पत्तिज्ञानं च सम्पादितं स्यादतस्तथा शंसनीयमिति 'तद्वा इदम्' इत्यादेरर्थः तत्र प्रमाणमुच्यते– **तदुक्तमिति** ।। 'वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् । इन्द्रात् परितन्वं मम' इति मन्त्रस्यायमर्थः । ऋतं शश्वदेकप्रकारम् । नित्यमिति यावत् । 'पूर्वावगतवत् सदा । स्थितेब्रह्मर्तमित्युक्तम्' इति वचनात् । यद्वा, ऋतं यथार्थज्ञानस्वरूपमं। 'ऋतं यथार्थविज्ञानम्' इति वचनात् । तं भगवन्तमृग्रूपेण स्पृशति प्रतिपादयतीति ऋत स्पृशमष्टापदीमष्टचतुरक्षरां वाचमनुष्टुभं नवस्रक्तिं ऋगन्तराच्चतुरक्षरसंयोजनेन नवधा विभक्तां बृहतीं कुर्वन् अहमिन्द्रादिन्द्रस्यैन्द्रस्य प्राणस्य च बृहत्याख्यां तन्वं प्रतिमां परिममे निर्मितवान् स्थापितवानस्मि । तथाच पुनर्नवस्रक्तिं बृहतीमष्टापदीं वाचं कुर्वन् अहमिन्द्राद् बृहतीप्रतिमाकवायुप्रतिमाकाद् विष्णोरैन्द्रात् प्राणाच्चानुष्टुबभिमानिन्या उमायास्तन्वं शरीरं परिममे शरीरलाभलक्षणोत्पत्तिं ज्ञातवानस्मि । ततश्चोमाया अपि भगवत्-प्रतिमात्वाद् भगवतोऽप्युमाख्यां तन्वं प्रतिमां परिममे प्रतिष्ठितवानस्मि । वाचमष्टापदीमित्याद्यनूद्य व्याक्रियते– **वाचमित्यादिना** ।। अष्टौ हि चतुरक्षराणि

भवन्त्यनुष्टुभ इति शेषः ।। **बृहतीति** ।। अनुष्टुप् चतुरक्षरसाहित्येन बृहतीसम्पद्यमाना न विभक्ता भवतीत्यर्थः ।। **सत्यमिति** ।। वागनुष्टुब् ऋचा ऋग्रूपेण सत्यं नित्यं 'सनातनं सत्यमिति नित्यमित्युच्यते बुधैः' इति वचनात् । यथार्थज्ञानरूपं भगवन्तं स्पृष्ट्वा विषयीकुर्वन्तीति यावत् ।। **तद् यदैवैतदिति** ।। तदनुष्टुप्छन्दोबद्धम् ऋग्जातं यदैवैतद् बृहतीसहस्रं सम्पन्नं तदा तस्मादेव हेतोरिन्द्रस्य विष्णोरैन्द्रस्य प्राणस्य च बृहत्यै बृहत्याख्यां तन्वं प्रतिमां सन्निर्मिमीते स्थापयतीत्यर्थः । तथा तदनुष्टुभा सम्पन्नं बृहतीसहस्रं यद् यस्माद् यदाऽनुष्टुप्सम्पन्नं भवति तदा तस्मादेव हेतोर्बृहत्यै बृहत्याः बृहतीप्रतिमाकादैन्द्रात् प्राणात् । उपलक्षण-मेतत् । प्राणाधिष्ठितादिन्द्राद् विष्णोश्चानुष्टुभमनुष्टब्देवतां वाचमुमां सन्निर्मिमीते ताभ्यामियमुत्पन्नेति स्मरतीति यावत् । ततश्च विष्णोर्वायोश्चोमाख्यां तन्वं प्रतिमां सन्निर्मिमीते प्रतिष्ठापयतीत्यर्थः । बृहतीसहस्रस्याकारव्याख्यानरूपत्वेनोत्पन्नत्वात् तच्छंसनमेव वरमिति भावेनोच्यते– **स वा एष इत्यादिना** ।। यदेतन्महदुक्थं बृहतीसहस्राख्यं स वा एष वाचोऽकारस्य परमो विकार उत्तमा व्याख्या ।

नन्वकारस्य कोऽतिशयस्तस्य व्याख्यानं च कियद्विधं यन्मध्ये परम-विकारत्वमुक्थस्येत्यत उच्यते– **तदेतत् पञ्चविधमित्यादिना** ।। **अकारो वै सर्वा वागित्यन्तेन** ।। तदेतदकारव्याख्यानमुक्थेन सह पञ्चविधम् । कथम् ? मितममितं स्वरः सत्यानृते इति । मितादिकं विविच्योच्यते– **ऋगित्यादिना** ।। स्वरनियमवती वाग् ऋक् । तद्रहितामिताक्षरा वाग् गाथा । परस्परसमानविषमसङ्ख्यकाक्षराणि खण्डवाक्यानि कुम्ब्याः । इति यत् त्रिविधं तन्मितम् । यज्ञाङ्गं वाक्यं यजुः । वाक्यमात्रं निगदः । स्तोभाक्षराणि वृथा वाक् । तदेतदमितम् । यत्सामाथो यः कश्चन गेष्णः गानं स स्वरः । ओमिति यदक्षरं तत् सत्यम् । नेति यदक्षरं तदनृतम् । ओङ्कारस्याकारव्याख्यानपरत्वं प्रपञ्च्यते– **तदेतदिति** ।। यत् सत्यमकारस्याऽदौ पठ्यमानत्वेन व्याख्येयाव्यभिचारित्वात् सत्यमोङ्कारस्तदेतद् वाचोऽकारस्य पुष्पं फलमुकारादिविकारसहितत्वात् पुष्पफलात्मकश्च । पुष्पफलयोर्वृक्ष-

विस्ताररूपत्ववदकारव्याख्यानगर्भोकारादिगर्भत्वात् पुष्पफलात्मक इति भावः। ओङ्कारस्य सत्यत्वमोमिति वक्तुर्महाफलेन सम्भावकेनोच्यते– **सहेति** ।। योऽकारस्य वाचः पुष्पफलरूपं सत्यमोङ्कारं वदति स यशस्वी कल्याणकीर्तिर्भवितोर्भवितुं मोक्षं प्राप्तुमीश्वरश्च स्यात् । नन्वनृतस्य कथमकारव्याख्यानरूपत्वमित्यत उच्यते– **अथेति** ।। यद्यपि यन्नेत्येतदनृतमसत्यं व्याख्येयाकारस्य नकारात्परं श्रवणेनायथा-स्थितम् । अथ तथाऽपि । एतद्वाचोऽकारस्य निषेधार्थकस्य किञ्चिन्मूलं तदेक-देशार्थप्रकटनात् । यद्वा, वाचः सर्वासां वाचां मूलं किञ्चिन्मूलं निषेध-वाच्यकारेणैकार्थत्वादित्यर्थः । नकारस्य निषेधार्थकत्वम् । नेति तद्वक्तुः फलनिषेधेन प्रत्युत विपरीतफलेन च सम्भावकेनोपपद्यते– **तद् यथेति** ।। वृक्षो मृदुपगमनेनाविर्मूलः प्रकटितमूलः शुष्यति । स शुष्को वृक्ष उद्वर्तते पतति । तन्निदर्शनं यथा । एवमेवानृतं वदन् । वाङ् मूलभूतमनृतं नकारं ज्ञानादियोग्याय प्रकटयन्नोपदिशे तत्त्वं न दास्येऽन्नादिकमिति च वदन्नात्मानमाविर्मूलं करोति स्वयोग्यताव्यञ्जनेन प्रकटितमूलं करोति । स शुष्यति प्राग् विद्यमानधर्मज्ञानापनयेन गतसारो भवति । स उद्वर्तते नरकादिकं प्राप्नोति । तस्मादेवमनर्थप्राप्तेरनृतं न वदेन्नेति न वदेत् । एतेन कारणेन दयेत दयां कुर्यादेव । नन्वेवं तर्हि नकारवचन-स्यानर्थहेतुत्वादेतादृशमिदं कथं पुरुषार्थहेत्वकारव्याख्यानं स्यादित्यतो नेति वचनं स्वस्य पूर्णत्वस्यापि कारणमित्यकारव्याख्यानं भवत्येवेति वक्तुं यद्यनृतं न वदेत् तर्हि सर्वान् प्रति नेत्यनुक्त्वा ज्ञानादिकं दास्य इति सर्वमोङ्कुर्यात् किमित्यतो नेत्युच्यते– **परागिति** ।। यदोमित्यक्षरमेतत् पराग् बहिर्मुखमयोग्येभ्य उदाहृतं चेद्रिक्तं स्वस्य रिक्तत्वकारणम् । अयोग्येभ्यो ज्ञानमन्नादिकं वा दास्य इति वचनं न जन्मान्तरे स्वस्य हान्यापादकं किन्तु तदैवेत्युच्यते–**तद् यदिति** ।। यत्किञ्च यत्किञ्चित्तद् ज्ञानं द्रव्यादिकं वा स्वकीयमयोग्येभ्य ओमित्याह– **ददामीति** ।। ब्रूयादत्रैव तदैव तदस्मै रिच्यतेऽस्मादपगच्छति । ज्ञानं क्षीयते । द्रव्यं च तेन दोषेण चोरादिभिरपह्रियत इति भावः । यद्येवं प्रतिज्ञामात्रेण

हानिस्तदा किमु वाच्यं दानेनेत्युच्यते– **स यदिति** ।। स यदि सर्वं सर्वान् प्रति योग्यायोग्यसाधारण्येन स्वस्य विद्यमानं यत्किञ्चिदोङ्कुर्याद् दद्यात् तदात्मानं रिच्याद् रिक्तं कुर्यात् सकामेभ्यः स्वेष्टपुरुषार्थेभ्यो नालं स्यात् समर्थो न स्याद् यस्मादेवमथ तस्मादयोग्येभ्यो यन्न दास्ये ज्ञानादिकमिति वचनं तदभ्यात्मं आत्मनः प्रतिपूर्णम् । स्वस्य पूर्णत्वकारणम् । यथायोग्यायोग्यसाधारण्येन नोङ्कुर्यात् तथा नेति च न ब्रूयात् किन्त्वयोग्यं प्रत्येव नेति ब्रूयाद् योग्यं प्रति नेति ब्रूयादिति भावेन योग्यं प्रति नेति वचने पूर्वोक्तदोषादकीर्तिलक्षणं दोषान्तरमुच्यते– **स यदिति** ।। स यदि सर्वं योग्यायोग्यसाधारण्येन सर्वान् प्रति नेति ब्रूयादस्य दुष्कीर्तिर्जायते । साऽपकीर्तिरेनं तत्रैव तदैव हन्याद् हतप्रायं कुर्यात् । 'सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते' (भ.गी. २.३४) इति हि भगवद्वचनम् । तस्मान्नेत्युक्तेरनर्थ-हेतुत्वात् पुरुषार्थहेतुत्वाच्च पुण्यकाले सत्पात्रेभ्यो दद्यादेव पुण्येऽपि कालेऽप्यपात्रेभ्यो न दद्यात् तस्माल्लोके विवेकी जनः सत्यानृते मिथुनीकरोति । तयोर्मिथुनीकरणात् प्रकृष्टो जायते । 'स एष वाचः परमो विकारः' इत्यादिवेत्तुः फलमुच्यते– **भूयानिति** ।। यस्या वाचः अकारस्यैव । बृहतीसहस्रलक्षणः शब्दसमूहो मुख्यामुख्यलक्षणो विकारः । यो वैतां वाचमकारं वेद स सम्प्रतिवित् सम्यग्ज्ञानी भूयात् पूर्णो भवतीत्यर्थः । पञ्चविधशब्दराशेरकारव्याख्यानरूपत्वे श्रौतं लिङ्गमुच्यते– **अकारो ह वेति** ।। 'अकारः सर्वा वाग्' इति ह वै श्रुतिरस्ति । नच मुख्यतः सर्वाभिर्वाग्भिरकारस्यैक्यं युक्तमतः सैषाकाराख्या वाक् स्पर्शोष्मभिर्व्याख्यान-रूपैर्व्यज्यमाना व्यज्यमानार्था बह्वी पञ्चविधा नानारूपा वेदपञ्चरात्रादिविलक्षणरूपा च भवतीत्यङ्गीकार्यम् । व्याख्यानव्याख्येययोरभेदोपचारात् । अतो युक्तमकारविकारत्वं सर्ववाचामिति भावः । सर्वोत्तमाभ्यां वार्णीप्राणाभ्यामभिमतत्वाच्चाऽकारस्योत्तमत्वमिति भावेनोच्यते– **तस्यै यदुपांश्वित्यादिना** ।। तस्यै तस्याः । यदुपांशूच्चारणं स तस्याभिमानी प्राणः । यदुच्चैरुच्चारणं तत् तस्य स्थूलसूक्ष्मात्मकसर्वशरीराभि-मानिनी । यदुपांश्वित्यत्र ज्ञापकमुच्यते– **तस्मादिति** ।। यस्मादुपांश्वभिमानिचेतनमशरीरं

तस्मात् तदुपांशूच्चारणं तिर इव तिरोभूतमिव । अशरीराभिमतत्वे तिरोभूतत्वं कुत इत्यत उक्तम्– **तिर इव ह्यशरीरमिति** ।। अशरीरमप्रत्यक्षमिवेत्यर्थः । किमशरीरमित्यत उक्तम्– **अशरीरो हीति** ।। यदुच्चैस्तच्छरीरमित्यत्र ज्ञापकमुच्यते– **अथेति** ।। यद् यस्मादुच्चैरुच्चारणस्य शरीरं भारत्यभिमानिनी तस्मादेव तदुच्चैरुच्चारणमाविः स्पष्टं ज्ञायते । भारत्यभिमतत्वमात्रेण कथमाविर्भूतत्वमित्यत उक्तम्– **आविर्हीति** ।। शरीराभिमानिनी भारती प्राणापेक्षयाविराविर्भूता व्यक्ता खलु । अव्यक्तस्वभावं स्वातन्त्र्येण ब्रह्म । 'तदव्यक्तमाह हि' (ब्र.सू. ३.२.२३) इति भगवद्वचनम् । श्रीरप्यव्यक्तस्वभावा । तदुक्तं गीतातात्पर्ये–

सूक्ष्मत्वादवितर्क्यत्वाद् गुणबाहुल्यतस्तथा ।
अनिर्देश्यौ तथाऽव्यक्तावचिन्त्यौ श्रीश्च माधवः ।। इति ।।

इयांस्तु विशेषः । श्रीः परतन्त्रत्वाद् भगवदिन्द्रियाभिव्यक्ता न त्वीश्वरवत् स्वेतरसमस्तेन्द्रियगोचरत्वलक्षणमुख्याव्यक्तत्वयुता । प्राणस्तु स्वावरेन्द्रियागोचरोऽपि रमात आधिक्येन स्वसमब्रह्मेन्द्रियगोचरत्वादव्यक्तमिव नत्वव्यक्तस्वभावः । भारती तु जीवेष्वपि ब्रह्मवायुसरस्वत्याख्यत्रीन्द्रियगोचरत्वात् प्राणवन्मुख्याव्यक्तत्वाभावादाविर्हीत्युक्तेति भावः ।।

**।। इति षष्ठः खण्डार्थः ।।**

**उपनिषत्-**

**(प्राधान्येनेन्द्रशब्दवाच्यो हरिरेव)**

**तद् वा इदं बृहतीसहस्रं सम्पन्नं तद् यशः स इन्द्रः स भूतानामधिपतिः स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात् प्रैतीति ह स्माऽह महिदास ऐतरेयः ।।**

**भाष्यम्-**

विद्यान्तरोपदेशार्थम्, 'तद् वा इदं बृहतीसहस्रम्' इति पुनःपुनः परामर्शः । तदिदं

बृहतीसहस्रं तद्यशः तस्य नारायणस्य यशः । यस्य नारायणस्यैतद् यशः स भगवानेवेन्द्रनामा । स हि यत् प्रथमत इन्द्रो बभूव स्वेच्छया यज्ञनामा । तस्मात् तमेव वेदा इन्द्रशब्देन वदन्ति मुख्यतः । 'इदि परमैश्वर्ये' इति धातोश्च । तस्यैव हि परमैश्वर्यम् । अन्येषां तु द्वादशानां तेन दत्तमेवेन्द्रत्वं न तु मुख्यतः ।

**(वेदेषु विष्णुरेवेन्द्रशब्दवाच्यः)**

**अतो विष्णावेवेन्द्रशब्दं प्रयुङ्क्ते श्रुतिः– 'मत्सि सोम वरुणं मत्सि मित्रं मत्सीन्द्र-मिन्दो पवमान विष्णुम्' इति ।**

**टिप्पणी -**

ननु बृहतीसहस्रं तस्य नारायणस्य यश इत्येतावता पूर्णत्वात् 'तद्वा इदं सम्पन्नम्' इत्यधिकम् । पूर्वखण्डेष्वपि बृहतीसहस्रस्य सम्पन्नस्यैकादशानुष्टुभां शतानीत्यादिना पूर्णत्वात् 'तद्वा इदम्' इत्यादि पुनःपुनः परामर्शो व्यर्थ इत्यत आह–**विद्यान्तरेति** ।। पूर्वसङ्गततया विद्यान्तरोपदेशार्थमित्यर्थः । अत्र यत्प्रीणनार्थं विश्वामित्रेण बृहतीसहस्रं सम्पादितं तदिदं तस्य यशः । स क इत्यत उक्तम् । स इन्द्रः प्रसिद्धः शचीपतिरित्यन्यथाप्रतीतिं निवारयन् व्याचष्टे–**तदिदमिति** ।। ननु 'तद्यशः' इत्यत्र यदि तच्छब्देन नारायणः परामृश्येत तर्हि 'स इन्द्रः' इति तस्येन्द्राभेदः स्यादित्यत आह– **यस्येति** ।। नात्र स इन्द्र इत्यनेन प्रसिद्धेन्द्रस्य बृहतीसहस्रपतिपाद्यत्वं वा तत्प्रतिपाद्येनाभेदो वोच्यते किन्तु 'इन्द्रवायू बृहस्पतिम्' इत्यादिबृहतीसहस्रशंसनीयानामृचां भगवत्परत्वसिद्धये उपलक्षणया तस्येन्द्रनामकत्व-मुच्यत इति भावः । ननु स्वर्गपदं प्राप्त एवेन्द्रशब्दप्रसिद्धेः कथं विष्णोस्तदित्यतः स एवेन्द्रः प्राप्तेन्द्रपद इति प्रकारान्तरेण व्याचष्टे– **स हीति** ।। प्रथमतः प्रथममन्वन्तरे । तस्मात् प्राप्तेन्द्रपदत्वात् । इन्द्रशब्दप्रवृत्तिनिमित्तभूताधि-पत्याख्यैश्वर्याच्चेन्द्रनामत्वमिति भावेन 'स भूतानामधिपतिः' इत्यस्य तात्पर्यमाह– **इदि परमेति** ।। अधिकः पतिरित्यधिपतिशब्दार्थविवरणम्– **अन्येषामिति** ।। श्रुत्यन्तरे इन्द्रशब्दस्य विष्णौ प्रयोगाच्च स एवेन्द्रः प्रसिद्ध इत्यर्थान्तरं सूचयितुमाह–

**अतो विष्णाविति** ।। अतस्तत्रैवेन्द्रशब्दस्य मुख्यत्वात् । का सा श्रुतिरित्यतस्तामुदाहरति–**मत्सीति** ।। सोम सोमाभिमानिन् । मत्सि मदयसि । इन्दो इष्टप्रदः । पवमान वायो । अत्रेन्द्रं विष्णुं मत्सीतीन्द्रशब्दस्य विष्णुशब्दसामानाधिकरण्यादिन्द्रशब्दस्य विष्णुपरत्वं ज्ञायत इति भावः ।

**भाष्यम्-**

**नचेन्द्रं विष्णुं चेति पृथगन्वयः क्रियते । तदा वरुणादिषु पृथक् पृथङ् मत्सिशब्ददर्शनादत्रापि पृथङ् मत्सिशब्दो दृश्येत । नहि सर्वेषां पृथङ् मत्सिशब्ददर्शने एकस्यै-वान्यथात्वं युज्यते । न चात्र द्वित्वगमकं चकारादिकं विद्यते । तस्मात् 'प्रातर्भगं पूषणं ब्रह्मणस्पतिम्' इत्याद्यप्येकस्यैव विष्णोर्विशेषणम् ।**

**(मुख्यतो विष्णावेवेन्द्रादिशब्दाः)**

**यत्र चैवम्भूतेष्वेकत्वे विरोधो दृश्यते तत्र तेनैव विरोधेन द्वित्वं भवति । अन्यथैकत्वमेव । 'यो देवानां नामधा एक एव' इति चोक्तम् । बहुरूपत्वाद् बहुवचनं च विष्णोरेव युज्यते । तस्मान्मुख्यतो विष्णावेवेन्द्रादिशब्दा अन्येषामुपचारतः । 'मत्सि महामिन्द्रमिन्दो मदाय' इत्यन्येन्द्रस्य पृथगुक्तेश्च 'मत्सीन्द्रमिन्दो पवमान विष्णुं' इति पूर्वोक्त इन्द्रो विष्णुरेवेति सिद्धम् ।**

**टिप्पणी -**

नन्विन्द्रं विष्णुं चेति पृथगन्वयसम्भवान्न सामानाधिकरण्यमित्याशङ्क्य निषेधति–**नचेति** ।। कुतो नेत्यतः पृथगन्वये बाधकमाह– **तदेति** ।। साधकाभावं चाऽह–**नचेति** ।। ननु 'प्रातरग्निं प्रातरिन्द्रं हवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रं हुवेम । प्रातर्जितं भगमुग्रं हुवेम' (ऋ.सं. ७.४१.१) इति श्रुतौ 'प्रातर्भगं पूषणं ब्रह्मणस्पतिम्' इत्यत्र प्रातः पूषणं प्रातर्ब्रह्मणस्पतिमिति पृथक् प्रातःपदप्रयोगाभावेऽपि उत रुद्रं हुवेमेत्यत्रेव-समुच्चायकोतपदाभावेऽपि प्रातःपदस्योतपदस्य वा संयोजनेन देवतात्रयप्रतिपादकत्व-वत् प्रकृतेऽपि मत्सिपदस्य चशब्दस्य वा संयोजनेन देवताद्वयं किं न स्यादित्यतो

दृष्टान्तोऽपि सम्प्रतिपन्न इति भावेनोक्तं न्यायं तत्राप्यतिदिशति– **तस्मादिति** ।। पृथक् प्रातःपदाभावात् चशब्दाभावाच्चेत्यर्थः । विशेषणं गुणसमर्पकम् । इत्यादीत्यादि-पदेन प्रयोगान्तरपरिग्रहः । अन्यथा 'प्रातर्जितं भगम्' इति भगशब्देन पौनरुक्त्य-प्रसङ्ग इति भावः । ननु 'ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम्' (महानारा. १३.२४) इत्यादौ यथा चकाराद्यभावेऽपि वाक्यभेदः कल्प्यते तथाऽत्रापि किन्न स्यादित्यत आह– **यत्र चैवमिति** ।। एवम्भूतेषु वाक्यभेदज्ञापकचकारादिरहितेषु । एकत्वे एक-वाक्यत्वे । विरोधः पुनरुक्त्यादिः । नचात्र विरोधं पश्याम इति भावः । 'इन्द्रवायू बृहस्पतिम्' इत्यत्रेन्द्रादिशब्दा भगवत्परा एव मुख्यतः । सोमस्य देवतामदहेतुत्वप्रतिपादकतया तत्समाख्यावाक्ये 'मत्सि सोमम्' इत्यत्र विष्णाविन्द्र-पदप्रयोगादित्युक्तम् । भगवतः सर्वशब्दवाच्यत्वस्य समर्थितत्वाच्चेन्द्रशब्दस्तत्पर इत्याह– **यो देवानामिति** ।। ननु 'आदित्यान्मारुतं गणम्' इति बहुवचनं गणत्वं च कथमित्यत आह– **बहुरूपत्वा-दिति** ।। चशब्दाद्गणत्वं च । उपसंहरति– **तस्मादिति** ।। इतोऽपि मत्सीन्द्रमिन्दोपवनविष्णुमित्यत्रेन्द्रशब्दो विष्णुपर इति सिंहावलोकनन्यायेनाऽह– **मत्सीति** ।। 'मत्सि महामिन्द्रमिन्दो मदाय' इत्युत्तरवाक्ये पुरन्दरस्य पृथगुक्तेः प्रोक्तो न पुरन्दर इति ज्ञायते ।

**भाष्यम्-**

## (महेन्द्रे न स्वतो महत्त्वम्)

**महत्त्वं च तस्यादितिपुत्रत्वेऽग्रजत्वमात्रं नतु सामर्थ्यतः । 'मह पूजायाम्' इति धातोः । पूज्यो ह्यग्रजो भवति । 'आ यो विवाय सचथाय दैव्य इन्द्राय विष्णुः सुकृते सुकृत्तरः । वेधा अजिन्वत् त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत्' इतीन्द्रस्य परमं दैवं जनको यज्ञभागादिप्रदाता च विष्णुरेव हि श्रूयते । इन्द्रश्च यजमानः । तस्मात् तत्प्रसादादवताराग्रजत्वमेव तस्य महत्त्वम् ।**

**टिप्पणी -**

ननु 'महामिन्द्रम्' इति महत्त्वविशेषणात् कथमयमिन्द्रशब्दः पुरन्दविषय इत्यत आह– **महत्त्वं चेति** ।। न केवलमवतारे कालज्यैष्ठ्यं महत्त्वं किन्तु पूज्यत्वं चेति सयुक्तिकमाह– **महेति** ।। सामर्थ्याधिक्यं विष्णोरेव । पुरन्दरस्य त्वग्रत्वेन पूज्यत्वमेव महत्त्वमित्येतत् श्रुत्या दर्शयति–**आय इति** ।। सुकृत्तरः सुष्ठु कुर्वतां मध्ये श्रेष्ठः । दैव्यो देवस्येन्द्रस्येष्टं दैवम् । यो विष्णुः सुकृते सुष्ठुमहाव्रतं कुर्वते इन्द्राय । सचथाय सख्याय । आविवाय संयुक्तोऽभूत् । त्रिषधस्थः श्वेत-द्वीपादिस्थानत्रयगतः । वेधाः विशेषेण धारणपोषणकर्ता । आर्यं पूज्यम् । इन्द्रमजिन्वदजनयत् । यजमानं महाव्रतेनात्मानं यजमानं इन्द्रम् । ऋतस्य यज्ञस्य । भागे आभजत् आभाजयत् । यज्ञभागादियुक्तं पदमदादित्यर्थः । दैव्य इत्यस्यार्थः– **इन्द्रस्य परमं दैवमिति** ।। अजिन्वदित्यस्य जनक इति । ऋतस्य भाग इत्यस्य यज्ञभागादीतीति विवेकः । नन्वत्र यजमान इन्द्र इति कुत इयत आह– **इन्द्रश्चेति** ।। सुकृते सुष्ठु कृते इन्द्रायेति प्रकृतत्वादिति भावः । महत्त्वं चागजत्वमात्रमित्युक्तमुपसंहरति– **तस्मादिति** ।।

**भाष्यम्-**

**(इन्द्रो वायोरवरः)**

**अन्येन्द्रो हि– 'अहं प्रथमः पिबेयमहं प्रथमः पिबेयम्' इति वायुना विवदमान आजौ पराजितो वायुं प्रसादयित्वा चतुर्थे वायुना सह ग्रहमाप । विष्णुस्तु 'क्रतुं सचन्त मारुतस्य वेधसः' इति वायोरपि विधाता श्रूयते । 'डुधाञ् धारणपोषणयोः' इति धातोर्विशेषेण धारणपोषणकर्ता हि वेधाः । तस्माद् भगवत एवैतद् यशो बृहदुक्थादिकम् ।**

**(इन्द्रो महेन्द्राभिध इत्यत्र निमित्तम्)**

**ऋक्सहस्रात्मकं विष्णोर्यश इन्द्राभिधस्य हि ।**
**इन्द्रो हि प्रथमो विष्णुर्यज्ञनामा जगत्पतिः ।।**

तत्प्रसादादथेन्द्रत्वं द्वादशान्ये प्रपेदिरे।
पुरन्दरस्त्वेक एव वासुदेवप्रसादतः।।
द्विवारमिन्द्रतामाप तस्माद् द्वादश ते परे।।
अग्रजत्वाददित्यां तु महेन्द्रो नाम चाभवत्।
महाव्रतं कर्म कृत्वा चैव नाम्ना महेन्द्रकः।।
महत्त्वं मुख्यतो विष्णोर्नह्यन्यस्य कदाचन।
एवं यो वेद तं विष्णुं विस्रस्तो बन्धतोऽखिलात्।
अस्माल्लोकाद्धरेर्लोकमेति नास्त्यत्र संशयः।।
इत्याह भगवान् विष्णुर्महिदासस्वरूपकः।

**टिप्पणी -**

प्रसिद्धेन्द्रस्य भगवदनुग्रहादेव यज्ञभागो भगवतस्तु स्वातन्त्र्येणेत्यत्र श्रुत्यन्तरसम्मतिमाह– **अन्येन्द्र इति**।। चतुर्थे अह्नि। ग्रहं सोमपात्रम्। सोमपानमिति यावत्। ब्राह्मणे द्वितीयपञ्चके नवमेऽध्याये प्रथमखण्डे। 'देवा वै सोमस्य राज्ञोऽग्रपेयेन समपादयन्नहं प्रथमः पिबेयमहं प्रथमः पिबेयमित्येवाकामयन्त। ते सम्पादयन्तोऽब्रुवन्। हन्ताजिमयाम स यो न उज्जेष्यति स प्रथमः सोमस्य पास्यतीति तथेति त आजिमयुः। तेषामाजिंयतामभिसृष्टानां वायुर्मुखं प्रथमं प्रत्यपद्यत। अथेन्द्रोऽथ मित्रावरुणावथाश्विनौ। सोऽवेदिन्द्रो वायुमुद्वेजयतीति तमनु परापतत्। सहनावथोज्जयावेति। स नेत्यब्रवीदहमेवोज्जेष्यामीति। तृतीयं मेऽथोज्जयावेति नेति हैवाब्रवीदहमेवोज्जेष्यामीति। तुरीयं मेऽथोज्जयावेति। तथेति तन्तुरीयेतर्जत। तत्तुरीयभागिन्द्रोऽभवत् त्रिभाग् वायुस्तौ सहैवेन्द्रवायू उदजयताम्' इत्यत्रेदं प्रमेयं स्पष्टमिति भावः।। **विष्णोस्त्विति**।। मारुतस्य वेधसो विधातुर्विष्णोः क्रतुं यज्ञं सचन्तायोजयन्निति विष्णोस्तु वायोरपि विधातृत्वं श्रूयत इत्यर्थः। अस्य विष्णुसूक्तगतत्वाद् विष्णोरिति विशेष्यमुपक्षिप्तम्। वेधस इति विधातुरित्युक्तार्थे मूलभूतधातुव्याख्यानं पठित्वा समर्थयते– डु

धात्रिति ।। उपसंहरति– **तस्मादिति** ।। उक्तार्थे प्रमाणमाह– **ऋक्सहस्रात्मक-मिति** ।। त्रयोदशेति वक्तव्यम् । कथं द्वादशेत्युक्तिरित्यत आह– **पुरन्दर इति** ।। अदित्यां तु अदित्यामेव । वामनाग्रजत्वान्नतु सर्वत्र । विष्णुप्रीत्यर्थं महाव्रतं कर्म कृत्वैव नतु स्वतः । स य एतमेवमिन्द्रमित्यादि व्याचष्टे– **एवमित्यादिना महिदासस्वरूपक इत्यन्तेन** ।।

**उपनिषत्-**

**(रमारमणस्य रतिक्रीडाप्रकारः कीदृशः ?)**

**प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति तदाहुर्यदनेन रूपेणामुं लोकमभिसम्भवती३ ।। अथ केन रूपेणेमं लोकमा भवती३ ।।**

**भाष्यम्-**

श्वेतद्वीपादिकान् प्राप्य स इन्द्राख्यो हरिः स्वयम् ।।
महिदासाभिधो भूत्वा लोकेष्वेषु विराजति ।
तत्र पृच्छन्ति केचित्तु यद्येष भगवान् हरिः ।
महिदासादिरूपेण भूमिष्ठो रमते प्रभुः ।।
तदा यदा स्त्रिया विष्णू रमते नित्यसत्सुखः ।।
कया स्त्रिया रतिं कुर्यान्नह्यन्यरतिरच्युतः ।
स्त्रीरूपे तत् स्वयं स्वस्मिन् रमतेऽसावितीदृशम् ।
वाच्यं तत्र तु भूमिष्ठरूपेण तु दिवि स्थितम् ।
स्त्रीरूपं किमसौ गच्छेदथ यद्येवमत्र च ।
स्त्रीरूपं पृथिवीसंस्थं केन रूपेण संव्रजेत् ।
नह्यन्यगम्यो भगवांस्त्रीरूपोऽपि जनार्दनः ।।

**टिप्पणी -**

य एतमेवमिन्द्रं वेद स प्रेत्य मृत्वेन्द्रो भूत्वैषु लोकेषु विराजतीत्यप्याह महिदास इत्यन्यथाप्रतीतेः महिदास ऐतरेय इत्याद्युत्तरवाक्येनापि सम्बद्ध्य व्याचष्टे– **श्वेतद्वीपादिकानिति** ।। सर्वेषामवताराणां श्वेतद्वीपपतिना विश्लिष्याऽगतत्वाद् यज्ञनामेन्द्रः श्वेतद्वीपं प्राप्य श्वेतद्वीपपतिनैकीभूय पुनस्तेनैवांशेन महिदासो भूत्वा एषु लोकेषु विराजतीत्यर्थः । नेदं वाक्यमधिकारिणः फलकथनपरं बाधितत्वात् किन्तु स इन्द्र इति यत्परमैश्वर्ययोगेन यज्ञेन्द्रस्येन्द्रशब्दार्थत्वमुक्तं तत्परमैश्वर्यं महिदासादिरूपेण राजनेन विवरितुं प्रवृत्तमिति भावः । विराजनविवरणपरं तदाहुर्यदनेनेत्यादि । तत्र तदाहुर्यदनेन रूपेणेमं लोकमाभवति । अथ केन रूपेण भवतीत्यध्याहृतकर्तृनिर्देशरूपः । अनेन रूपेण भवतीति व्यवहितमन्वयमभिप्रेत्य व्याचष्टे– **तत्रेत्यादिना** ।। तदित्यस्यार्थः – **तत्रेति** ।। आहुरित्यस्य कर्त्रध्याहारः– **केचिदिति** ।। यदित्यस्यार्थः- **यदिति** ।। एष भगवान् हरिरित्येतत् आभवती-त्यस्याध्याहृतकर्तृनिर्देशरूपम् । अनेन रूपेणेत्यस्यार्थः **महिदासेति** ।। 'इमं लोकमाभवति' इत्यस्य तात्पर्यम्– **भूमिष्ठ इत्यादि** ।। अथ केन रूपेणाभवतीत्यस्यार्थः– **तदा यदेत्यादि** ।। कया न कयाऽपि । कुतः? हि यस्मादच्युतोऽन्यरतिर्न भवति । तस्मादिति योज्यम् । यत्तत्र समाधानमाहुस्तत्तत्राप्याहुः शङ्केयुः किमिति? अनेन भूमिष्ठेन रूपेणामुं दिवि स्थितं स्वस्त्रीरूपमभिसम्भवति यद् गच्छेत् किमित्यर्थतया समाधानप्रदर्शनपूर्वं तदाहुरित्यादि व्याचष्टे– **स्त्रीरूप इति** ।। तत्तत्र चोद्य ईदृशं समाधानं वाच्यम् । तत्र तु तत्रापि भूमिष्ठेन रूपेण दिवि स्थितं रूपं स्त्रीरूपमसौ गच्छेत् किमिति चाऽहुः पृच्छेयुरिति योज्यम् । 'अथ केन रूपेण' इत्येतद् व्याचष्टे– **अथेति** ।। अत्र विषये यद्येवमङ्गीक्रियते अथ तथाऽपीमं पृथिवीसंस्थलोकं स्त्रीरूपं केन रूपेण भवेत् संव्रजेदित्यर्थः । ननु को व्रजेदिति प्रष्टव्ये रूपविशेषप्रश्नः किमर्थ इत्यतस्तात्पर्यमाह–**नहीति** ।। न केवलं पुंरूपोऽन्यस्त्रिया न रमते अपितु स्त्रीरूपो भवतीत्यर्थः ।

उपनिषत्-

तद् यदेतत् स्त्रियां लोहितं भवत्यग्नेस्तद् रूपम् ॥ तस्मात् तस्मान्न बीभत्सेताथ यदेतत् पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात् तस्मान्न बीभत्सेत सोऽयमात्मेममात्मानममुष्मा आत्मने सम्प्रयच्छत्य-सावात्माऽमुमात्मानमस्मा आत्मने सम्प्रयच्छति तावन्योन्यमभिसम्भवतोऽनेना ह रूपेणामुं लोकमभि-सम्भवत्यमुना रूपेणेमं लोकमा भवति ॥

भाष्यम्-

**(शुक्रशोणितयोरसह्यभावो न साधुः)**

इति पृष्टः स्वशिष्यैः स महिदासोऽवदद्धरिः ।
स्त्रीषु यल्लोहितं लोके तत्राग्निस्थो जनार्दनः ।
स्त्रीरूपः सोऽग्निनामैव ज्वज्ज्वालासमप्रभः ।
तस्माद् विष्णोः सन्निधानाद् भर्ता भार्याशरीरगात् ।
न बीभत्सेतैव रक्तात् तथा पुंरेतसि स्थितः ॥
आदित्ये संस्थितो विष्णुरादेरादित्यनामकः ।
तस्मान्न रेतसो भार्या बीभत्सेत पतिस्थितात् ।
पुंरूपो भगवान् विष्णू रेतसिस्थो द्युमत्प्रभः ।

**(विष्णोः स्त्री-पुरुषरूपाणि)**

तस्माद् यद् भूमिगं विष्णोः स्त्रीरूपं तत् स्वयं हरिः ।
प्रादुर्भावगतो दद्याद् दिविस्थितपुमात्मनः ।
सूर्यगस्य तथा पुंसो रेतसिस्थस्य चाऽत्मनः ।
देवीपु यल्लोहितगं स्त्रीरूपं परमात्मनः ।

तत् स सूर्यगतो विष्णुः पुंरेतःस्थस्य चाऽत्मनः।
दद्यात् भूमिगतस्यैव रूपद्वयमिदं ततः।
परस्परं सम्भवति विष्णोर्नित्युखात्मकम्।
प्रादुर्भावस्थितं रूपं यच्च भूमौ पुमात्मकम्।
विष्णोस्तदपि देवीषु स्थितस्त्रीरूपकात्मना।
एवमन्योन्यतो विष्णू रतः स्वस्मिन् नचान्यतः।

**(स्वरमणस्य नारायणस्य रमारमणत्वं कथम् ?)**

**रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना।
रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः।
रमया रमणं तस्माद् रमाया रतिपात्रता।
नैवास्या रतिदातृत्वं विष्णोर्नह्यन्यतो रतिः॥ इत्यादि च॥**

**टिप्पणी -**

'इति ह स्माह महिदास ऐतरेय' इत्येतदत्राप्यनुवर्त्य व्याचष्टे—**इति पृष्ट इति**॥ 'तद् यदेतत् स्त्रियाम्' इत्येतद् व्याचष्टे— **स्त्रीष्वित्यादिना**॥ तदित्यस्यार्थः **लोक इति**॥ सर्वेष्वपि लोकेष्वित्यर्थः। अग्नेस्तद्रूपमित्यस्य तात्पर्यम् **तत्राग्निस्थ इति**॥ तस्मादित्यस्यानूद्यार्थमाह— **तस्माद्विष्णोरिति**॥ द्वितीयस्य तस्मादित्यस्यार्थः **भार्याशरीरगाद्रक्तादिति**॥ 'अथ यदेतत् पुरुषे रेतः' इत्यादि व्याचष्टे— **तथेत्यादिना**॥ आदेः सर्वस्य कारणत्वादादित्यः। आदिशब्दस्य स्वरादिगणपाठात् 'स्वरादिनिपातमव्ययम्' इत्यव्ययसञ्ज्ञायाम् 'अव्ययात् त्यब्' इत्यपि कृते आदित्यशब्दो निष्पन्न इति भावः। तस्मात् तस्मादित्येतद् व्याचष्टे— **तस्मादित्यदिना तस्मादित्यन्तेन**॥ अत्र योजना। तस्माद् द्युमत्प्रभः तत्रस्थः पुंरूपो भगवान् रेतःसंस्थः। तस्मात्पतिस्थितात् तस्माद्रेतसो भार्या न बीभत्सेतेति। सोऽयमात्मेत्यादि व्याचष्टे— **यद्भूमिगमित्यादिना**॥ भूमिगं पृथिवीलोकगतम्। महिदासादिस्त्रीरूपम्। स्त्रीलोहितगतं चेत्यर्थः। दिवि स्थितपुमात्मनः तथा

सूर्यगतस्य तथा पंसो देवादिलक्षणस्य द्युगतस्य पुंसो रेतसिस्थस्येत्यर्थः। सावात्मेत्यादि व्याचष्टे– **देवीष्विति**॥ असावात्मा दिवि सूर्यगतो विष्णुरात्मनो द्युस्थस्य परं यद्रूपं यच्च देवीषु लोहितगतं स्त्रीरूपं तद्भूमिगतस्य। तथा पुरेतःस्थस्य मानुषरेतःस्थितस्य चाऽत्मन एव दद्यादित्यर्थः। 'तावन्योन्यम्' इत्येतद् व्याचष्टे– **रूपद्वयमित्यादिना**॥ प्रकारान्तरेण व्याचष्टे– **प्रादुर्भावेति**॥ भूमौ प्रादुर्भावात्मना स्थितं यत्पुमात्मकं तद् देवीषु स्थितस्त्रीरूपेणाऽत्मना चापिशब्दाभ्यां यच्च दिवि पुमात्मकं रूपं तदपि मानुषीषु स्थितेन स्त्रीरूपेणाऽत्मनेत्येवमन्योन्यतो विष्णुः स्वस्मिन् रमत इत्यर्थः। 'तावन्योन्यमभिसम्भवतः' इत्यादेस्तात्पर्यमाह– **नचान्यत इति**॥ तत् कैमुत्येनोपपादयति– **रमयेति**॥ यदैवं रमया रममाणोऽपि तत्स्थेन स्त्रिया स्त्रीरूपेणाऽत्मना रमते तदा किमु वाच्यं नित्यव्यक्तसुखात्मनः क्वाप्यन्यतो रतिर्नास्तीतीत्यर्थः। ननु यदि रमया रतिर्नास्ति तर्हि रमया रमणं नाम किमित्यत आह– **रमयेति**॥ हि यस्माद् विष्णोरन्यतो रतिर्नास्तीति प्रसिद्धं तस्मादिति योज्यम्। यद्यपि 'मत्सीन्द्रमिन्द्रो पवमानविष्णुम्' इत्यादौ सोमादीनामपि भगवत्सुखप्रयोजकत्वमुक्तं तथापि सोमस्वरूपं सम्पाद्य तत्र प्राणरमासन्निधानं सम्पाद्य स्वयं चानन्दरसात्मकस्तमधिष्ठाय सोमादेर्विषयत्वशक्तिं च दत्वा तन्निमित्तेन स्वयं रमत इति निमित्तत्वमात्रेण तदुक्तिरिति ज्ञेयम्। अत एव रमया भगवतः क्वचित् सुखोक्तिरप्यविरुद्धेति ज्ञेयम्।

**भाष्यम्-**

**स एव महिदास इन्द्रनामा प्राप्येमं लोकमत्र भूत्वा प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्यैषु लोकेषु राजति। नात्र प्रेत्यशब्दो मरणवाची। किन्तु, 'प्रेतां यज्ञस्य शम्भुवा' इत्यादिवत् प्राप्तिवाच्येव। नहि मृतः पुनरेषु लोकेष्वेव राजति।नच यशोमात्रराजनेन स्वस्य राजनं भवति। भिन्नपदार्थत्वात्। यद्वा 'एति च प्रेति च' इत्यादौ प्राप्त्यर्थेऽपि वेदेषु प्रसिद्धत्वाच्च। 'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदितः' इति च स्कान्दे।**

तत् स सूर्यगतो विष्णुः पुंरेतःस्थस्य चाऽत्मनः ।
दद्यात् भूमिगतस्यैव रूपद्वयमिदं ततः ।
परस्परं सम्भवति विष्णोर्नित्युखात्मकम् ।
प्रादुर्भावस्थितं रूपं यच्च भूमौ पुमात्मकम् ।
विष्णोस्तदपि देवीषु स्थितस्त्रीरूपकात्मना ।
एवमन्योन्यतो विष्णू रतः स्वस्मिन् नचान्यतः ।

**(स्वरमणस्य नारायणस्य रमारमणत्वं कथम् ?)**

रमया रममाणोऽपि तत्स्थेनैव स्त्रियात्मना ।
रमते नान्यतः क्वापि रतिर्विष्णोः सुखात्मनः ।
रमया रमणं तस्माद् रमाया रतिपात्रता ।
नैवास्या रतिदातृत्वं विष्णोर्नह्यन्यतो रतिः ।। इत्यादि च ।।

**टिप्पणी -**

'इति ह स्माह महिदास ऐतरेय' इत्येतदत्राप्यनुवर्त्य व्याचष्टे–**इति पृष्ट इति** ।। 'तद् यदेतत् स्त्रियाम्' इत्येतद् व्याचष्टे– **स्त्रीष्वित्यादिना** ।। तदित्यस्यार्थः **लोक इति** ।। सर्वेष्वपि लोकेष्वित्यर्थः । अग्नेस्तद्रूपमित्यस्य तात्पर्यम् **तत्राग्निस्थ इति** ।। तस्मादित्यस्यानूद्यार्थमाह– **तस्माद्विष्णोरिति** ।। द्वितीयस्य तस्मादित्यस्यार्थः **भार्याशरीरगाद्रक्तादिति** ।। 'अथ यदेतत् पुरुषे रेतः' इत्यादि व्याचष्टे– **तथेत्यादिना** ।। आदेः सर्वस्य कारणत्वादादित्यः । आदिशब्दस्य स्वरादिगणपाठात् 'स्वरादिनिपातमव्ययम्' इत्यव्ययसञ्ज्ञायाम् 'अव्ययात् त्यब्' इत्यपि कृते आदित्यशब्दो निष्पन्न इति भावः । तस्मात् तस्मादित्येतद् व्याचष्टे– **तस्मादित्यदिना तस्मादित्यन्तेन** ।। अत्र योजना । तस्माद् द्युमत्प्रभः तत्रस्थः पुंरूपो भगवान् रेतःसंस्थः । तस्मात्पतिस्थितात् तस्माद्रेतसो भार्या न बीभत्सेतेति । सोऽयमात्मेत्यादि व्याचष्टे– **यद्भूमिगमित्यादिना** ।। भूमिगं पृथिवीलोकगतम् । महिदासादिस्त्रीरूपम् । स्त्रीलोहितगतं चेत्यर्थः । दिवि स्थितपुमात्मनः तथा

सूर्यगतस्य तथा पंसो देवादिलक्षणस्य द्युगतस्य पुंसो रेतसिस्थस्येत्यर्थः । सावात्मेत्यादि व्याचष्टे– **देवीष्विति** ।। असावात्मा दिवि सूर्यगतो विष्णुरात्मनो द्युस्थस्य परं यद्रूपं यच्च देवीषु लोहितगतं स्त्रीरूपं तद्भूमिगतस्य । तथा पुंरेतःस्थस्य मानुषरेतःस्थितस्य चाऽत्मन एव दद्यादित्यर्थः । 'तावन्योन्यम्' इत्येतद् व्याचष्टे– **रूपद्वयमित्यादिना** ।। प्रकारान्तरेण व्याचष्टे– **प्रादुर्भावेति** ।। भूमौ प्रादुर्भावात्मना स्थितं यत्पुमात्मकं तद् देवीषु स्थितस्त्रीरूपेणाऽत्मना चापिशब्दाभ्यां यच्च दिवि पुमात्मकं रूपं तदपि मानुषीषु स्थितेन स्त्रीरूपेणाऽत्मनेत्येवमन्योन्यतो विष्णुः स्वस्मिन् रमत इत्यर्थः । 'तावन्योन्यमभिसम्भवतः' इत्यादेस्तात्पर्यमाह– **नचान्यत इति** ।। तत् कैमुत्येनोपपादयति– **रमयेति** ।। यदैवं रमया रममाणोऽपि तत्स्थेन स्त्रिया स्त्रीरूपेणाऽत्मना रमते तदा किमु वाच्यं नित्यव्यक्तसुखात्मनः क्वाप्यन्यतो रतिर्नास्तीतीत्यर्थः । ननु यदि रमया रतिर्नास्ति तर्हि रमया रमणं नाम किमित्यत आह– **रमयेति** ।। हि यस्माद् विष्णोरन्यतो रतिर्नास्तीति प्रसिद्धं तस्मादिति योज्यम् । यद्यपि 'मत्सीन्द्रमिन्द्रो पवमानविष्णुम्' इत्यादौ सोमादीनामपि भगवत्सुखप्रयोजकत्वमुक्तं तथापि सोमस्वरूपं सम्पाद्य तत्र प्राणरमासन्निधानं सम्पाद्य स्वयं चानन्दरसात्मकस्तमधिष्ठाय सोमादेर्विषयत्वशक्तिं च दत्वा तन्निमित्तेन स्वयं रमत इति निमित्तत्वमात्रेण तदुक्तिरिति ज्ञेयम् । अत एव रमया भगवतः क्वचित् सुखोक्तिरप्यविरुद्धेति ज्ञेयम् ।

**भाष्यम्-**

**स एव महिदास इन्द्रनामा प्राप्येमं लोकमत्र भूत्वा प्रादुर्भूय मनुष्यदृष्टिगोचरतां प्राप्यैषु लोकेषु राजति । नात्र प्रेत्यशब्दो मरणवाची । किन्तु, 'प्रेतां यज्ञस्य शम्भुवा' इत्यादिवत् प्राप्तिवाच्येव । नहि मृतः पुनरेषु लोकेष्वेव राजति ।नच यशोमात्रराजनेन स्वस्य राजनं भवति । भिन्नपदार्थत्वात् । यद्वा 'एति च प्रेति च' इत्यादौ प्राप्त्यर्थेऽपि वेदेषु प्रसिद्धत्वाच्च । 'लक्ष्मणः प्रेत्य सुग्रीवं बभाषे रामचोदितः' इति च स्कान्दे ।**

## (यच्छब्देन किंशब्देन च प्रश्नद्वयम्)

'यदनेन रूपेणामुं लोकमभिसम्भवति', अनेन महिदासादिरूपेणामुं लोकं दिविष्ठं स्वरूपम्। लोक्यत इति स्वरूपवाची लोकशब्दः। 'आत्मानमेव लोकमुपासीत' (बृह. १.४.१५) इतिवत्। यच्छब्दः किंशब्दार्थे। अनेन रूपेण तद्रूपमभिसम्भवति किम्? उभयोरपि परिहारदर्शनादस्यापि प्रश्नत्वमवगम्यते। 'यतश्चोदेति सूर्यः' इत्यादिवत्। रङ्गस्तु प्रश्नविषयस्य दुरवगमत्वं प्रकाशयति। 'दुर्गमे प्रश्नविषये प्रश्नो रङ्गयुतो भवेत्' इति हि शब्दनिर्णये।

**टिप्पणी -**

प्रेत्येन्द्र इत्याद्यन्यथाप्रतीतिनिरासाय स्पष्टं व्याचष्टे– **स एव महिदास इत्यादिना** ।। इन्द्रनामा स भगवानेवेमं लोकं भूसन्निहितं श्वेतद्वीपं प्राप्यात्र भूलोके महिदासाभिधो भूत्वैषु लोकेषु राजतीत्यन्वयः। भूत्वेत्यस्य विवरणम्– **प्रादुर्भूयेति** ।। तस्यापि विवरणम्– **मनुष्येति** ।। 'प्रत्यक्षत्वं हरेर्जन्म' इति वचनादिति भावः। 'स य एतमिन्द्रं वेद सोऽस्माल्लोकात् प्रैति प्रेत्य मृत्वेन्द्रो भूत्वैषु लोकेषु राजति' इति प्रतीतार्थं व्यवच्छिद्य स्वार्थं प्रयोगपूर्वं समर्थयते– **नात्रेत्यादिना** ।। शम्भुवा शम्भुवौ सुश्रयौ। यज्ञस्य प्रेतां यज्ञं प्रत्यगच्छताम्। प्रतीतार्थे बाधकमाह– **नहीति** ।। मृतस्याऽमुष्मिकलोकेषु राजनं युक्तं न पनरेष्वेव लोकेषउ राजनं युक्तमिति भावः। उपलक्षणमेतत् इन्द्रभावोऽपि यस्य कस्यचिन्मृतस्य बाधित इत्यपि द्रष्टव्यम्। ननु मरणेऽपि दिगन्तविश्रान्त-कीर्त्यनाशात् तद्विवक्षयैषु लोकेषु राजतीति युज्यत इत्याशङ्क्य निषेधति– **नचेति** ।। ननु प्रेत्यशब्दो मरणे बहुप्रयोगसिद्धो न तथा प्राप्तावित्यतः श्रुतिस्मृतिप्रसिद्धिं दर्शयति– **यद्वेत्यादिना** ।। यद् ब्रह्मैवेति प्राप्नोति प्रैति प्रकर्षेणाप्नोतीत्यर्थः। वक्तव्यबाहुल्यादनेनेत्येतदनूद्य व्याचष्टे–**यदनेनेति** ।। ननु लोकमित्यस्य कथं स्वरूपमिति व्याख्यानमित्यत आह– **लोक्यत इति** ।। व्युत्पत्त्येति शेषः। प्रयोगं चाह–**आत्मानमिति** ।। लोकं लोक्यमवश्यं ज्ञेयं आत्मानमुपासीतेत्यत्रेवात्रापि लोकशब्दः लोक्यपरः।

स्वेनैव साकल्येनावलोक्यं स्वस्वरूपमेवेति लोकशब्दः स्वरूपं प्रकृते बोधयतीति भावः । यद्यप्यात्मानमेव लोकमित्यत्र लोकं सर्वाश्रयमिति ग्रन्थान्तरे व्याख्यातम् । तथापि व्याख्यानान्तरमिदमित्यविरोधः । यदनेन रूपेणामुं लोकमभिसम्भवतीत्येतत् प्राक् तत्र तु भूमिष्ठरूपेण तु दिवि स्थितं स्त्रीरूपं किमसौ गच्छेदिति प्रमाणेन व्याख्यातम् । किमसौ गच्छेदित्यस्य व्याख्येयादर्शनात् कथमेतदित्यत आह– **यच्छब्द इति** ।। वाक्यार्थमाह– **अनेनेति** ।। यच्छब्दस्य किंशब्दार्थत्वे ज्ञापकमाह– **उभयो-रिति** ।। किमनेन रूपेण अथ केन रूपेणेत्युभयोरप्युपपादनपूर्वमनेन रूपेणामुं लोकममुना रूपेणेमं लोकमित्युपसंहारे स्पष्टं परिहारदर्शनादित्यर्थः । यच्छब्दस्य प्रश्नार्थे प्रयोगं दर्शयति– **यतश्चेति** ।। अभिसम्भवती३ इति आभवती३ इति स्थलद्वये रङ्गस्य प्रयोजनमाह– **रङ्गस्त्विति** ।। प्रश्नविषये प्रष्टव्यार्थे दुर्गमे सतीत्यर्थः ।

**भाष्यम्-**

**(भूमिस्वर्गयोः कथं सम्बन्धः)**

**'केन रूपेणेमं लोकमाभवति', केन स्वरूपेणैव भूमिष्ठेन आत्मन एव स्त्रीरूपेण विष्णुः सम्बद्ध्यते? सोऽयं महिदासादिप्रादुर्भावरूप इदं भूमिष्ठस्त्रीरूपं लोहितगतं च स्वकीयमेव रूपममुष्मै दिविष्ठाय स्वपुरुषरूपाय प्रयच्छति देवरेतःस्थिताय च । देवीलोहितस्थितमात्मनः स्त्रीरूपं महिदासादिरूपेभ्यो मानुषरेतःस्थरूपेभ्यश्च दिविष्ठैश्च विष्ण्वादिस्वरूपैः प्रयच्छति च ।**

**(शुक्रं शोणितं च परमात्मनः प्रतिमास्थानीयम्)**

तानि भूमिष्ठत्वेन दिविष्ठत्वेन च द्विविधत्वात् तावित्युच्यन्ते । 'अग्नेस्तद् रूपम्' अग्निनाम्नो विष्णोः प्रतिमा, तत्सन्निधानात् । एवमादित्यनाम्नो विष्णोः । नह्यग्न्यादिस्वरूपमेव लोहितादि । नच लौकिकस्त्रीपुरुषसम्बन्धमात्रमत्रोच्यते । अप्रस्तुतत्वात् तस्य । भगवानेव ह्यत्र प्रस्तुतः ।

## (लौकिकस्त्रीपुरुषसम्बन्धो न प्रस्तुतः)

'असावात्मा' इत्यात्मशब्दाच्च भगवानेवेति ज्ञायते।

आत्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते।
गुणपूर्त्यभिधायी स नान्यस्य गुणपूर्णता ।।
अमुख्यात्मान एवातो ब्रह्माद्याः सर्व एव हि ।। इत्यादि च ब्रह्माण्डे ।।

'यदक्षरं पञ्चविधं समेति', 'सत्यस्य सत्यमनु यत्र युज्यते' इत्यादिनोक्तार्थविषय उदाहृतैः श्लोकैरपि भगवत एव स्वरूपाणां परस्परयोगस्योक्तत्वात्। 'गायत्र्युष्णिग् बृहती' इत्यादिना भगवत एव पञ्चविधस्य स्त्रीरूपस्य महिदासादिपञ्चपुंरूपाणां च प्रस्तुतत्वाच्च ।।

**टिप्पणी -**

केन रूपेण केन प्रकारेणेत्यन्यथाप्रतीतेस्तदनूद्य व्याचष्टे–**केन रूपेणेति** ।। केन स्वरूपेणेत्यस्यायमर्थः। विष्णुर्दिवि स्थितेन केवलस्वपुंरूपेण भूमिष्ठेनात्मन एव स्त्रीरूपेण साकं सम्बद्ध्यत इति। सोऽयमात्मेममात्मानमित्येतत् प्रमाणेन स्पष्टं व्याख्यातम्। तत्र भूमिगं स्त्रीरूपमिति भूगतस्यैकस्यैव स्त्रीरूपस्य प्रतीतेर्दिवि स्थितपुमात्मनः सूर्यगस्येति सामानाधिकरण्यप्रतीतेः पुंसो रेतसीत्यस्य यस्य कस्यचित्पुंस इत्यन्यथप्रतीतेश्च स्ववचनेन व्याचष्टे– **सोऽयमिति** ।। असावात्मामुमात्मान-मित्येतदपि न प्रमाणेन विशदम्। सूर्यगतरूपातिरिक्तस्य दिविष्ठरूपस्य तत्राप्रतीतेः पुरतःस्थस्येत्यत्र पुरुषविशेषाविवेचनादित्यतः स्ववचनेन व्याचष्टे– **देवीति** ।। स भगवान् दिविष्ठैर्विष्ण्वादिरूपैः करणैरात्मनः स्त्रीरूपं द्युलोकस्थं भूमिष्ठेभ्यो महिदासादिरूपेभ्यः प्रयच्छति। देवी लोहितस्थं चात्मनः स्त्रीरूपं मानुषरेतःस्थितरूपेभ्यः प्रयच्छतीत्यर्थः। नन्वेवं रूपाणां बहुत्वे कथं ताविति द्विवचनमित्यत आह– **तानीति** ।। स्त्रीपुंरूपाणि । लोहितरेतसोरग्न्यादित्यैक्यप्रतीतेः स्पष्टं स्ववचनेन व्याकुर्वन् प्रतीतार्थे बाधकमाह– **अग्नेरित्यादिना** ।। सोऽयमात्मा कन्यापितेममात्मानं

कन्याममुष्मै वराय सम्प्रयच्छत्यसावात्मा वरस्य पिताऽमुमात्मानं वरमिममस्यै कन्यायै पतित्वेन सम्प्रयच्छति तौ जायापती अन्योन्यमभिसम्भवत इत्यपव्याख्यां प्रत्याख्याति– **नचेति** ।। **प्रस्तुत इति** ।। एतद् ब्रह्मेत्यारण्यकादौ तद्यश इति खण्डादौ चोपक्रान्तः । न केवलमुपक्रमेणार्थनिर्णयः श्रुत्या चेत्याह– **असावात्मेति** ।। ज्ञापकान्तरमाह– **यदक्षरमित्यादिना** ।। अन्यथा अन्यत्प्रमेयमुक्त्वाऽन्यत्र प्रमाणोदाहरणे असाङ्गत्यापातादिति भावः । नन्वेवमपि यदक्षरं पञ्चविधं समेतीत्यादिकं नोदाहृतेऽर्थे प्रमाणमस्मिन् खण्डे पञ्चविधस्त्रीरूपाणामप्रकृतत्वादित्यतो नायं यदक्षरमित्यादिखण्ड एतत्खण्डोक्त एव प्रमाणप्रतिपादनपरः । किन्तु पूर्वोक्तार्थेष्वपि प्रमाणम् । तत्र च पञ्चविधस्त्रीरूपाणां प्रकृतत्वादित्याशयेनाह– **गायत्रीत्यादिना** ।। पञ्चविधस्यानिरुद्धादिरूपेण ।। ७ ।।

**खण्डार्थः -**

यद् बृहतीसहस्रस्य भगवत्प्रतिपादकत्वमुक्तं तदाक्षेपपरिहारपूर्वं द्रढयितुमयं खण्डः । बृहतीसहस्रस्य भगवत्परत्वेऽनुपपत्तिं परिहर्तुं प्रथमं प्रतिज्ञायते– **तद्वा इदमिति** ।। उक्तरीत्या सम्पादितं तदिदं बृहतीसहस्रं तस्य नारायणस्यैव यश इत्यर्थः । ननु बृहतीसहस्रे 'इन्द्रवायू बृहस्पतिं मित्राग्निं पूषणं भगम् । आदित्यान्मारुतं गणम् । प्रवोभ्रियन्त इन्दवो मत्सरा मादयिष्णवः' इत्यादाविन्द्रादिनामश्रवणात्कथं बृहतीसहस्रं तद्यश इत्यत उच्यते–**स इन्द्र इति** ।। स एवेन्द्रनामेत्यर्थः । नन्विन्द्रशब्दस्य स्वर्गाधिपतौ रूढत्वात्कथमिन्द्रो नारायण इत्यतश्चोक्तम्– **स इन्द्र इति** ।। यतः स नारायण एव यज्ञनामा प्रथममिन्द्रनामा एतस्मात् स एव स्वर्गपतिरिन्द्र इत्यर्थः । इन्द्रशब्दप्रवृत्तिनिमित्तभूताधिपत्यादिमहैश्वर्यशालित्वाच्चेन्द्रनामेत्युच्यते– **स भूतानामिति** ।। य एतमिन्द्रं भूतानामधिपतिं वेदविस्रसा विस्रस्तोऽखिलबन्धविनिर्मुक्तः । सोऽस्माल्लोकाद्धरिलोकं प्रैति । ऐतरेयो महिदास इत्याह तस्मान्नात्र संशयः कार्य इत्यभिप्रायः । एवमिन्द्रशब्दो यज्ञे रूढः परमैश्वर्यप्रवृत्तिनिमित्तेन यौगिकश्चेत्युक्तम् । तमेवैश्वर्यं तस्यैव महिदासादिरूपेण

स्वरमणतया राजनेन विवरितुमुच्यते– **महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वेत्यादिना** ॥ यद्वा, इदं महिदासाद्यवतारं प्राप्य राजत इतीन्द्रः । 'पूर्णमदः पूर्णमिदम्' इत्यत्रेदंशब्देनावताराणां परामृष्टत्वाद् इदं भूस्थानं प्राप्य राजत इति वा इष्टप्रदत्वादिन्द्रो रमायाः इष्टप्रदे स्वस्वरूपे वा राजत इतीन्द्र इत्यनेकप्रकारेण व्याख्यातुमुच्यते– **महिदास इत्यादिना** ॥ इन्द्रो यज्ञनामा । प्रेत्य श्वेतद्वीपं प्राप्य श्वेतद्वीपपतिनैकीभूय । पुनस्तेनैवांशेन महिदासो भूत्वा एषु लोकेषु विराजत इत्यर्थः । विराजनमेव विवरीतुं पूर्वपक्ष उच्यते–**तदाहुरिति** ॥ तत् तत्र । केचिदाहुः पृच्छन्ति । किमिति? यत् यदि एष भगवान् हरिरनेन महिदासरूपेणामुं लोकं भूलोकं प्राप्य अभिसम्भवति । रमत इति यावत् । अथ तदा स्त्रीसम्भोगकाले केन रूपेण कया स्त्रिया भवति रतिं कुर्यादिति । तत् तत्र चोद्ये स्वस्मिन्नेव स्त्रीरूपे स्वयं रमत इति यत् समाधानमाहुस्तत्राप्याहुः पृच्छेयुः । किमिति? अनेन रूपेण भूमिष्ठेन रूपेण अमुं दिवि स्थितम् । लोक्यत इति लोकं स्वस्त्रीरूपमभिसम्भवति यत् गच्छेत्किम् ? अथ यद्येवमङ्गीक्रियते तदाऽपि पृच्छन्ति । किमिति? इमं पृथिवीस्थम् । लोकं स्त्रीरूपम् । केन रूपेण भवति प्राप्नोतीति ह स्म । इत्येवं स्वशिष्यैः पृष्टो महिदास ऐतरेय उत्तरमाह स्म । किमिति? । तत् तत्र लोके स्त्रियां स्त्रीषु यल्लोहितं भवति तदेतदग्नेरग्निस्थस्य ज्वलज्ज्वालासमप्रभस्य स्त्रीरूपस्य हरे रूपं प्रतिमा । तस्मात् कारणात् तस्माद्भार्याशरीरागद् रक्ताद्भर्ता न बीभत्सेत न जुगुप्सेत । अथ पुरुषे यदेतद् रेतो भवति तदादित्वाज्जगदादित्वादादित्यनाम्नस्तद्गतस्य विद्युत्प्रभस्य हरे रूपं प्रतिमा । तस्मात्कारणात् तस्मात्पतिस्थिताद् रेतसो भार्या न बीभत्सेत । सोऽयमात्मा भूमिष्ठो महिदासो भगवानिममात्मानं पृथिवीलोकगतम् । भूमिष्ठस्त्रीलोहितगतं चाऽत्मन एव स्त्रीरूपं च । अमुष्यै द्युस्थाय स्त्रीपुंरूपाय तथा सूर्यगताय पुंरूपाय देवरेतोगतस्वपुंरूपाय च प्रयच्छति । असावात्मा द्युस्थः सूर्यगतो विष्णुरमुमात्मानं आत्मनो द्युस्थं स्त्रीरूपं देवीलोहितगतस्त्रीरूपं च । अस्मै

भूमिष्ठाय महिदासादिरूपाय मानुषरेतसि स्थितरूपेभ्यश्च सम्प्रयच्छतीत्येवं तौ द्युर्भूमिगतावन्योन्यमभिसम्भवतः सम्बद्धौ भवतः । यद्वा, भूमौ प्रादुर्भावस्थितं महिदासादिपुमात्मकं रूपं देवीषु स्थितस्त्रीरूपेण द्युस्थं पुंरूपं च भूलोके मानुषस्त्रीगतस्वस्त्रीरूपेणेत्येवं तावन्योन्यं रमेते इत्यर्थः । उपसंह्रियते– **अनेनेति** ।। 'सोऽयमात्मेममात्मानम्' इत्यादिनोक्तप्रकारेणानेन पृथिव्यनुबन्धिना रूपेणामुं द्व्यनुबन्धिरूपमभिसम्भवत्यमुना द्व्यनुबन्धिना रूपेणेमं पृथिव्यनुबन्धिनं रूपमभिसम्भवतीत्यर्थः ।। ७ ।।

**।। इति सप्तमः खण्डः ।।**

**उपनिषत्-**

**(भगवतः स्त्री-पुरुषरूपाणां सम्बन्धः)**

तत्रैते श्लोकाः ।। यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत् सं वहन्ति । सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ।।

**भाष्यम्-**

**(यदक्षरमिति श्लोकस्यार्थः)**

यन्नारायणादिरूपेण पञ्चविधमक्षरं परं ब्रह्म तत् स्वस्मिन्नेव स्त्रीपुंरूपेण समेति । स्त्रीपुंरूपेण युजो देवा अश्वरूपेण रथे युक्ताः सन्तो यन्नारायणाख्यं परं ब्रह्माभिसंवहन्ति । तदेतत्सत्यस्य सत्यं नारायणाख्यं ब्रह्म यत्रानुयुज्यते यस्मिन् स्वरूप एव स्त्रीपुंरूपेण युज्यते तत्र तस्मिन्नेव परे ब्रह्मणि नारायणाख्ये सर्वे देवा एकीभवन्ति मुक्ताः सन्तो मिळिता भवन्ति ।

**टिप्पणी -**

यदक्षरं पञ्चविधमित्यादेर्मितादिरूपेण पञ्चविधमक्षरं शब्दतत्त्वम् । यद् ब्रह्मलक्षणयैति प्रतिपादयति । युक्ता मननशीला युजो योगिनो यत् संवहन्ति

ध्यायन्ति । पूर्वमुपाधिविनिर्मुक्तं पारमार्थिकसत्यं चैतन्यं यत्र युज्यते तत्र सर्वे देवा अप्येकं यथा भवति तथा भवन्त्येकीभवन्तीत्यन्यथाप्रतीतेर्व्याचष्टे– **यन्नारायणादीति** ।। गायत्र्युष्णिगादिप्रतिपाद्यं नारायणादिरूपेण पञ्चविधमक्षरमित्यर्थः । स्त्रीरूपेण स्वयमेव युगपदेव समग्ररूपेण स्त्रीपुमांश्च भूत्वेत्यर्थः । अर्धनारीनरात्मना वेत्यर्थः । स्त्रीपुंरूपेणेति युज इत्युत्तरेणापि सम्बद्ध्यते । एकं भवन्तीत्यस्य 'परेऽव्यये सर्व एकीभवन्ति' (आथ. ४.१.७) इति वाक्यानुसारेण तात्पर्यकथनमेकीभवन्तीति । मिलिताः सायुज्यरूपेण परमात्मनि परस्परं वा संसृष्टाः । एकत्वमप्युत दीयमानं न गृह्णन्तीत्यादावेकत्वशब्दस्य सायुज्ये प्रयोगात् । यद्वा, संसारे भिन्नभिन्नस्थानगताः मुक्ताः सन्तः एकीभवन्ति मिलिता एकस्थानवासलक्षणमेलनयुक्ताः सामीप्यं सालोक्यं वा प्राप्ता भवन्तीत्यर्थः । अस्मिन् पक्षे स्थानगतमैक्यं स्थानिन्युपचर्यत इति लक्षणा बोध्या ।

**भाष्यम्-**

## (एकीभावो न स्वरूपैक्यम्)

**नायमेकीभावो नाम स्वरूपैक्यम् । किन्त्वेकस्थाने वासोऽत्यनुकूलचित्तता च ।**

**एकीभूय नृपाः सर्वे ववृषुः पाण्डवं शरैः ।।**
**एकीभूता तु सा सेना पाण्डवानभ्यवर्तत ।। इत्यादिवत् ।।**

**नचैकीभावशब्दः स्वरूपैकत्वविषये प्रयुज्यमानः कुत्रचिद् दृष्टः । एकः पुरुषोऽपि यदा द्विधा भूत्वा एकीभवतीत्युच्यते तदाऽपि स्थानैक्यमेव । स्वरूपैक्यस्य पूर्वमेव सिद्धत्वात् । नचाज्ञात एकत्वे पुनर्ज्ञात ऐक्यं प्राप्त इति प्रयोगो दृश्यते । किन्तु ज्ञात इत्येव प्रयुज्यते । तस्माद् भावसहित एकशब्दो न स्वरूपवाची । नहि पूर्वं भिन्नस्य पश्चात् स्वरूपैक्यं भवति किन्तु संसर्ग एव भवति । तस्मादत्रापि संसर्ग एव विवक्षितः ।**

## ('समेति,' 'युज्यते' इति पदयोर्न पुनरुक्तिः)

**'यदक्षरं पञ्चविधं समेति' इत्युक्तस्य 'सत्यस्य सत्यमनु यत्र युज्यते' इति परामर्शं कृत्वा 'तत्र देवा सर्व एकं भवन्ति' इत्युच्यते। तस्मान्न पुनरुक्तिः।**

**टिप्पणी -**

प्रतीतार्थं प्रतिक्षिपति– **नायमिति** ।। यद्यप्यैकीभावशब्दो नास्ति । तथापि सर्वोपाधिगतं चैतन्यमेकं यथा भवति तथा भवन्तीत्युक्ते एकीभावप्रतिपादक एवायं शब्दो भवतीति तथोक्तिः । प्रतीतार्थो न चेत् कोऽर्थ इति शङ्कते– **किन्त्विति** ।। पूर्वोक्तार्थानुवादपूर्वमर्थान्तरमाह– **एकस्थानेति** ।। अनुकूलचित्तत्वं एकविषयचित्तत्वम् । बुद्धिसारूप्यलक्षणो मोक्ष इति यावत् । 'जीवस्य परमत्वं तु बुद्धिसारूप्यमेव तु' इति वचनात् । अस्मिन् पक्षे देवानामैक्यस्यानुपपन्नत्वाद् देवा एकीभवन्तीत्यनेन तन्मत्यैक्ये उपस्थिते तस्याप्यनुपपन्नत्वात् तन्मति-विषयैक्यमनेनोच्यत इति लक्षितलक्षणेति ज्ञातव्यम् । लक्षणायां प्रयोजनं वाच्यमित्यतो रूढलक्षणात्वान्न प्रयोजनमन्वेषणीयमिति भावेन स्थानैक्ये च प्रयोगं दर्शयति– **एकीभूयेति** ।। ननु किं लक्षणया? मुख्य एवार्थः किन्न स्यादिति चेन्मुख्यमेवार्थमङ्गीकुर्वाणः प्रष्टव्यः । किं प्रागभिन्नस्यैव जीवस्य मुक्तौ ब्रह्मणैक्यमुच्यते, उत भिन्नस्य । आद्यं दूषयति– **नचेति** ।। च्विप्रत्ययान्त एकीभावशब्दः स्वरूपैकत्वविषये प्रागभिन्नस्यैव पश्चादैक्यविषये प्रयुज्यमानः कुत्रचिन्न दृष्टः । अभूततद्भावार्थे च्विप्रत्ययविधानादिति भावः । ननु 'एकीभूय पुनः शेते निर्दोषो हरिरादिकृद्' इत्यादौ एकस्यैव हरेः पुनरेकीभाव उच्यते तत् कथं कुत्रचिन्न दृष्ट इत्युच्यत इत्यत आह–**एक इति** ।। स्थानैक्यं संस्थानैक्यं चैतन्यसंश्लेष इति यावत् । तदुक्तम्– 'हरेरपि स्वरूपाणामेकाभीवो यदोच्यते । संश्लेष एव सिद्धत्वात् स्वरूपैक्यस्य नो भवः' इति ।। ननु प्रागभिन्नस्य पुनरेकीभावः प्रतीत्यपेक्षया युज्यतेऽतो न च्विप्रत्ययानुपपत्तिः । प्राग्भिन्नतया दृष्टोऽयं जीवो ब्रह्मणा अथेदानीं मुक्तावभिन्नतया दृश्यत इत्यतः एकीभवन्तीति प्रयोगसम्भवादित्यत आह– **न**

**चेति** ।। उपसंहरति– **तस्मादिति** ।। भावसहितः भावशब्दसहितः । न स्वरूपवाची प्रागभिन्नस्य स्वरूपैक्यवाची न भवतीत्यर्थः । द्वितीयं दूषयति– **नहि पूर्वमिति** ।। भवति कुत्रचिद्भवत्यदृष्टत्वादिति भावः । तदुक्तं– 'नहि भिन्नमभिन्नताम् । गच्छेद् दृष्टं क्वचित्' इति । ननूदकस्योदकेनैकीभावदर्शनात् कथं भिन्नस्य पश्चादेकीभावाभाव इति शङ्कते– **किन्त्विति** ।। उत्तरमाह– **संसर्ग एवेति** ।। तथा च श्रुतिः 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' (काठक. २.१.१५) इति । ततश्च किमित्यत आह– **तस्मादिति** । प्राग्भिन्नत्वेन पश्चादभेदस्य बाधितत्वात् । अत्राप्येकीभावशब्देन संसर्ग एव विवक्षितः । नतु स्वरूपैक्यमित्यर्थः । तथा च प्रह्लादवचनम्– 'परमात्मात्मनोर्योगः परमार्थ इतीष्यताम् । मिथ्यैतदन्यद्द्रव्यं हि नैति तद् द्रव्यतां क्वचिद्' इति । अत्र संसर्गो नामैकस्थानवासः परस्परं सम्बन्धो वेति ज्ञेयम् । ननु यदुक्तमेकीभावशब्दः प्रागभिन्नस्य पश्चादैक्यवाची न भवति । अभूततद्भावार्थकच्विप्रत्ययविरोधात् । नापि प्राग्भिन्नस्य पश्चादैक्यवाची प्राग्भिन्ने पश्चादैक्यस्य बाधितत्वेन योग्यताविरहात् । तथा च पक्षद्वयेऽप्येकीभावशब्दः स्वरूपैक्यपरो न भवतीति । तदयुक्तम् । तथात्वे लक्षणाश्रयणस्यायुक्तत्वात् । मुख्यार्थस्यान्यस्य सद्भावे हि प्रकृते तदनुपपत्त्या लक्षणा दृष्टा । अत एव न लक्षणाबीजसम्बन्धोऽस्ति । तथा च स्थानैक्यमत्यैक्यलक्षणा विष्णुतत्त्वनिर्णयसुधादावुक्ताऽत्रोक्ता च विरुद्धेति चेन्न वयमेकीभावशब्दे लक्षणां ब्रूमः । किन्तु, गङ्गायां घोषाधारत्वे बाधिते गङ्गापदेन तत्सम्बन्धिनः तीरस्य लक्षणेव देवानामेकीभावपदोपस्थापिते प्रागभूतैक्ये बाधिते देवपदेन तत्सम्बन्धिनः स्थानस्य तन्मतिविषयस्य वा लक्षणां ब्रूमः । तथाच देवा एकीभवन्तीत्यस्य प्रागभूतं देवतास्थानस्यैक्यं तन्मतिविषयस्यैक्यं वा मुक्तावभूदित्यर्थः सम्पद्यते । यदा त्वेकीभावं स्वभार्याभिरर्धनारीपुमात्मना । एकत्वमप्युत दीयमानं न गृह्णन्तीत्यादिप्रयोगं 'परमात्मात्मनोर्योगः परमार्थ इतीष्यताम्' इति स्मार्तं व्याख्यानं चानुसृत्यैकीभावशब्दः संयोगविशेषपरस्तदा

न लक्षणाश्रयणीयेत्यलं विस्तरेण । यदक्षरं पञ्चविधं नारायणादिलक्षणं तत् स्वस्मिन्नेव स्त्रीपुंरूपेण समेतीत्युक्तत्वात् सत्यस्य सत्यं नारायणादिलक्षणं ब्रह्म यत्र यस्मिन्नेव स्त्रीपुंरूपेण युज्यत इति पुनरुक्तमित्यत आह–**यदक्षरमिति** ।। उक्तस्य विहितस्य परामर्शं अनुवादं उच्यते विधीयते । अधिकविधानाय पूर्वोक्तस्यानुवादो न पुनर्विधिर्येन पौनरुक्त्यं स्यादिति भावः ।

**उपनिषत्-**

**(श्लोकेषु पौनरुक्त्यं तात्पर्यद्योतकम्)**

**यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत् सं वहन्ति । सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति ।।**

**भाष्यम्-**

यस्मादक्षरान्नारायणाख्यात् स स्वयमेव भगवान् प्रादुर्भावरूपी [1]स्त्रीपुंरूपो युक्त आगच्छति । तात्पर्यार्थं तस्यैवार्थस्य पुनरभ्यासः ।

**(त्रिकरणैर्भगवति युक्ताः देवाः)**

वियूय विचार्य । नामायत्तान्येव नामार्थभूतान्येव विष्णोर्माहात्म्यादीन्यन्वविन्दन् । ततश्चाधिकं समतृप्यन् । शृते परिपक्वे सति ज्ञाने । यस्मिन् [2]विष्णौ नामानि ज्ञात्वा तस्मिन् ज्ञाने परिपक्वे समतृप्यन् तस्मिन्नेव 'देवाः सर्वयुजो भवन्ति' इत्यवधारणार्थं पुनर्वचनम् । 'सर्वयुजो भवन्ति' मनोवाक्कर्मभिस्तत्रैव युक्ता भवन्ति । 'अर्थतः कठिनं क्रूरमुल्बणं श्रवणाप्रियम्' इति शब्दनिणये ।

**टिप्पणी -**

'यदक्षरादक्षरमेति युक्तम्' इत्येतद् व्याचष्टे– **यस्मादिति** ।। उभयत्राक्षरपदप्रयोगेन

---

१. स्त्रीपुंरूपेण- ह.पा.   २. विष्णोः - ह.पा.

मूलरूपमेवावताररूपमिति द्योतितं तदभिप्रायः– **स्वयमेवेति** ॥ युक्त आगच्छति विश्लेषकाल एवार्धनारीपुमात्मना युक्त आगच्छतीत्यर्थः । पञ्चविधमक्षरं तु विभागानन्तरं स्त्रीपुंरूपेण समेतीत्यपौनरुक्त्यं परिहरति– **तात्पर्येति** ॥ तद् वियूयेत्यादेः सर्वाण्यपिशब्दजातानि केवलं नाममात्राणि नतु याथातथ्येनार्थवन्तीति नाम वा ऋग्वेदः सोऽहं नामविदेवास्मि नानात्मविदित्यादिना विचार्य तद् ब्रह्मान्वविन्दन्नित्यन्यथाप्रतीतेर्व्याचष्टे– **वियूयेत्यादिना** ॥ नामायत्ता । नामबोध्यतया नामाधीनानि नामार्थभूतानीत्यर्थः । माहात्म्यादीनीत्यादिपदेन रूपादीनां ग्रहणम् । अधीत्यस्यार्थः– **अधिकमिति** ॥ समतृप्यन् कृतकृत्या मुक्ता अभवन् । परोक्षज्ञानमात्रेण न मोक्ष इत्यत उक्तस्य श्रुत इत्यस्यार्थो श्रुत इति परिपाकः परोक्षज्ञानस्यापरोक्षत्रानपर्यवसानम् । ननु शब्दजातमुपक्रमादिना विचार्य विष्णुमाहात्म्यं ज्ञात्वा समपृप्यन्निति देवानां भगवद्विषयवेदोच्चारणस्य मनसस्तदर्थाभिनिवेशस्य तेन च तज्ज्ञानस्य फलस्य चोक्तत्वात् किं पुनर्यस्मिन्नामेत्या-दिना यस्मिन्नामानि ज्ञात्वा तस्मिन् ज्ञाने श्रुते परिपक्वे मुक्ता अभूवन् तत्र हरौ देवाः सर्वयुज इति मनोभिनिवेशादिकमुच्यत इत्यतो यस्मिन्नामेत्यादि व्याकुर्वन्नेव पौनरुक्त्यं परिहरति– **यस्मिन्नित्यादिना** ॥ शब्दजातं विचार्य नामार्थभूतानि विष्णोर्माहात्म्यादीन्यन्वविन्दन्निति कुतः । वेदैरन्यविचारादिकं कृतवन्त इति किन्न स्यादित्याशङ्क्य वेदार्थत्वेन यज्ज्ञाने मोक्षो भवति तत्रैव देवाः सर्वयुजो भवन्ति नान्यत्र । नहि मोक्षादन्यत्र मोक्षार्थवेदविचाराभियोगः सम्भवतीत्याशयेन यस्मिन्नामेत्यादिना पूर्वोक्तं फलं परामृश्य तस्मिन् फलप्रद एव विष्णौ देवाः सर्वयुजो भवन्तीत्यवधारणार्थं पुनर्वचनमिति भावः । किञ्चात्र सर्वयुजो भवन्तीति मनोवाक्कर्मभिर्भगवत्यभिनिवेशो देवानामुच्यते । तद् वियूयेति मनोवागभिनिवेशमात्रमतोऽधिकांशोक्तेर्न पौनरुक्त्यमिति भावेनानूद्य व्याचष्टे– **सर्वेति** ॥ यच्चास्याः क्रूरमित्यादेः पौनरुक्त्यं परिहरति– **अर्थत इति** ॥

**उपनिषत्-**

**(विष्णोः सर्वशब्दवाच्यत्वज्ञाने मुक्तिप्राप्तिः)**

यद् वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु । तद् वियूया कवयोऽन्वविन्दन् नामायत्ता समतृप्यञ्छ्रुतेऽधि । यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ॥ तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गं लोकमप्येति विद्वान् ।

**भाष्यम्-**

**(विभक्तिव्यत्यासस्य तात्पर्यम्)**

'अस्त्रीपुमान् ब्रुवन्', 'अस्त्रीपुमांसं ब्रुवन् 'सप्तसु प्रथमा' इति सूत्रात् । 'स्वातन्त्र्ये विभक्तिव्यत्ययः' इति च । स्वतन्त्रो हि भगवान् तत्प्रेरित एव तं वदतीत्यभिप्रायः । वदन् वदति । वदन्नेव न वदति । भवत्येव हि भगवान् स्त्रीरूपः पुंरूपश्च । तस्माद् वदत्येव । अप्रसिद्धत्वान्न वदति च ।

**(विष्णुर्न नपुंसकः)**

स्त्रीरूपश्चैव पुंरूपो यस्मान्नारायणः स्थितः ।
पुमान् स्त्री चेति वाच्योऽतो वैलक्षण्यान्न चोच्यते ।
विष्णोर्नपुंसकाकारो नैवास्ति क्वचन प्रभोः ।
तथाऽप्यरागाकृष्टत्वात् तच्छब्दैरपि कथ्यते ॥ इति गारुडे ॥

**टिप्पणी -**

एनमस्त्रीपुमानिति द्वितीयाप्रथमयोः अन्वयाभावाद् विभक्तिविपरिणामेनार्थं सप्रमाणकमाह– **अस्त्रीति** ॥ विभक्तिव्यत्ययस्य प्रयोजनं सूत्रेणैवाह– **स्वातन्त्र्य** इति ॥ स्वातन्त्र्ये ज्ञापनीये विभक्तिव्यत्ययः स्यादित्यर्थः । स्वातन्त्र्ये विभक्तिव्यत्यय

इत्युक्तं विवृणोति–**स्वतन्त्र इति** ॥ अस्त्रीपुमांसं वदन्निति कर्मत्वे वक्तव्ये । अस्त्रीपुमानिति भगवतः कर्तृत्वोक्त्या स्वतन्त्रो हि भगवांस्तत्प्रेरित एवमतः स्त्रीपुमांसं वदतीति ज्ञाप्यत इति भावः । ननु वदतीत्यस्य एं केवलस्त्रियं ब्रुवन्न वदति एनमस्त्रीपुमांसं ब्रुवंश्च न वदति । केवलं पुमांसं च ब्रुवन्न वदतीति व्यवहितेन नञ्त्रयेणान्वये तत्सन्निहितं वदन्नित्येतदनन्वितं स्यादित्यतः वदतीत्यस्य सन्निहितेन वदन्नित्यनेनाप्यन्वयमाह– **वदन् वदतीति** ॥ एतेन एनं स्त्रियं पुमांसं च वदन् वदति । अस्त्रीपुमांसं वदन्नपि वदतीति योजना सूचिता भवति । नञनुवृत्त्या योजनान्तरमाह– **वदन्नेव न वदतीति** ॥ एतेन स्त्रीरूपः पुंरूपश्चेति वदन्नपि न वदत्येवेति योजना सूचिता । स्त्रियं पुमांसं च वदन् वदतीत्येतदुपपादयति– **भवतीति** ॥ हि यस्मात् स्त्रीरूपः पुंरूपश्च भवत्येव तस्मात् स्त्रियं पुमांसं च वदन् वदत्येवेत्यर्थः । अस्त्रीपुमांसं वदन्नपि वदतीत्येतदुपपादयति– **वदत्येवाप्रसिद्धत्वादिति** ॥ प्रसिद्धलौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमांसं वदन्नपि वदत्येवेत्यर्थः । स्त्रीरूपः पुंरूपश्चेति वदन्नपि न वदतीत्येतदुपपादयति– **अप्रसिद्धत्वान्न वदति चेति** ॥ अप्रसिद्धत्वेन साकल्येन व्यवहारगोचरत्वान्न वदति । 'अप्रसिद्धेरवाच्यं तद्' (ब्र.सू.भा. १.१.५) इत्यादेरिति भावः । उक्तार्थे प्रमाणमाह– **स्त्रीरूप इति** ॥ 'वाच्योऽत' इत्यन्तं पुमांसं च वदन् वदतीत्यत्र प्रमाणम् । वैलक्षण्यादप्रसिद्धत्वाद् यत्पुमांस्त्री चेति वाच्योऽपि नोच्यत इत्येतत् स्त्रियं पुमांसं च वदन्नपि वदतीत्यत्र प्रमाणमिति विवेकः । ननु नपुंसकं रूपं किमिति नोक्तम् । स्त्रीपुंल्लिङ्गशब्दानामिव ब्रह्मेत्यादिनपुंसकशब्दानामपि तत्र प्रयोगादित्याशङ्क्याह– **विष्णोरिति** ॥ यद्यपीत्यादावुपस्कार्यम् । अरागाकृष्टत्वान्नपुंसकवत् स्त्रीपुरुषरागानाक्रान्तचित्तत्वात् ।

**भाष्यम्-**

**(श्रीहरेरमरवरैः रथोत्सवः)**

**नारायणादिरूपेण पञ्चधैष हरिः स्थितः ।**
**तन्नामभिश्च स्त्रीरूपैः समेति स्वैः स केशवः ।**

**यत्स्यन्दनं वहन्त्येते देवाः भार्यासमन्विताः।**
**अधिदैवे तथाऽध्यात्मे जीवदेहात्मकं रथम्।**
**स सूर्यः सूर्यभार्या च चक्षुर्द्वयसमाश्रितौ।**
**वहतोऽश्वात्मकौ देहं नारायणरथात्मकम्।**
**सोमश्च रोहिणी चैव दक्षवामश्रुतिस्थितौ।**
**उभयोः पक्षयोः स्थित्वा वहतोऽश्वात्मकौ तयोः।**
**उद्धारणार्थमेतेषामुमा वाचि समास्थिता।**
**नागाकारैव रश्मित्वमगमद् वैष्णवे रथे।**
**मनसि स्थितः शिवश्चात्र मनोनामा महाबलः।**
**अभवत् सारथिर्विष्णोर्विष्णुर्वायुश्च तं रथम्।**
**प्रकृष्टानन्दरूपत्वात् प्राणाख्यावधितिष्ठतः।**
**तावेव चाश्विनामानौ हयास्यौ जगदीश्वरौ॥ इत्यादि गारुडे॥**

**टिप्पणी -**

यदक्षरमित्यादि व्याचष्टे– **नारायणादिति**॥ यदित्यस्यार्थः– **यत् स्यन्दनमिति**॥ युज इत्यस्यार्थः– **भार्येति**॥ अधिदेवे तथाऽध्यात्मे यत् स्यन्दनमित्यन्वयः। अधिदैवेऽध्यात्मे च रथं विवरीतुमथ देवरथ इत्यादिग्रन्थ इत्यभिप्रेत्य तद् व्याचष्टे– **अधिदैव इति**॥ अधिदैवे प्रसिद्धं रथः। स सूर्यः सूर्यभार्या चाश्वात्मकौ वहतः। अध्यात्मे जीवदेहात्मकं रथं चक्षुर्द्वयसमाश्रितौ वहत इत्यन्वयः। देहमित्याद्युत्तरेणान्वेति। उभयोरित्यादौ दैवं रथमिति योज्यम्। तस्य वागुद्धिरित्यस्य तात्पर्यम्– **उद्धारणेति**॥ एषामध्यात्मरथे चक्षुरादीनां वैष्णवे रथे त्वेतेषामश्वरूपाणां सूर्यादीनामुद्धारणार्थमुमानागाकारा सर्पाकारा रश्मित्वमगमदित्यन्वयः। मनः सङ्गृहीतेत्यस्यार्थः– **मनसीति**॥ अत्र विरोधस्तु विरोधोद्धारेऽपाकृतो ज्ञेयः। तदयमित्यस्यार्थः– **विष्णुर्वायुश्चेत्यादि**॥ ननु तदयं प्राण इत्यत्र प्राणपदेन घ्राणाभिमानिनोरश्विनोर्ग्रहणं युक्तम्। मन्त्रेऽश्विनामसद्भावादित्यत आह– **तावेवेति**॥

**भाष्यम्-**

**(सत्यस्य सत्यं भगवान्)**

'तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' इति च श्रुतिः।

सर्वसाधुगुणत्वात्तु वायुः सत्य इतीर्यते।
तस्यापि सत्यतादाता साधुपूर्णगुणो हरिः।
सत्यस्य सत्य एतस्मात् ...........।

**(स्वस्यैव स्त्रीपुंरूपैर्नारायणस्य मिथो रमणम्।)**

....................स्त्रीपुंरूपः स केशवः।
यस्मिन् स्वात्मनि युक्तः स रमते स्त्रीपुमात्मना।
मुनिगन्धर्वपित्राद्यैर्न तत् प्राप्यं कथञ्चन।
आप्नुवन्ति सुराः सर्वे तद्रूपं जाज्वलत् सदा।
अर्धनारीपुमाकारं तस्य वामस्थितानि च।
स्त्रीरूपाणि तु सर्वाणि विष्णोरत्यद्भुतानि च।
विष्णोर्यानि तु पुंरूपाण्यास्थितान्यस्य दक्षिणे।
तान्यस्यैव तु रूपाणि युज्यन्तेऽत्र परस्परम्।

**(मुक्तदेवानां शृङ्गारलीला)**

एष नारायणो देवो ह्यर्धनारीपुमात्मकः।
सर्वे देवाः सभार्याश्च तं प्राप्य पुरुषोत्तमम्।
एकीभावं स्वभार्याभिरर्धनारीपुमात्मना।
प्राप्यैवोपासते विष्णुं मुक्ताः संसारसागरात्।
मोदन्ते च रमन्ते च विभागं चेच्छयाऽऽप्नुयुः।
बहुधा च भवन्त्येते स्त्रीपुमात्मपृथक्त्वतः।

**प्रसादाद् वासुदेवस्य भार्गैः स्त्रीपुंस्वरूपिणः।**
**तेनैव नियता नित्यं तद्वशास्तत्परायणाः।**
**रमन्तेऽनन्यगम्योऽसौ देशो विष्णोः परात्मनः।**

**टिप्पणी -**

'सत्यस्य सत्यम्' इत्येतत् श्रुत्यैव व्याचष्टे– **तस्योपनिषदिति** ।। श्रुत्यर्थे प्रमाणं वदन् मन्त्रं प्रमाणेन व्याचष्टे– **सर्वेत्यादिना** ।। सत्यस्य सत्यमनु यत्रेत्यादिकं स्ववचनेन सत्यस्य सत्यत्वं नारायणाख्यं यत्र यस्मिन् स्वरूप एव स्त्रीपुंरूपेण युज्यते । तत्र नारायणे सर्वे देवा एकीभवन्ति मिलिता भवन्तीति व्याख्यातम् । अधुना तु यत्र वैकुण्ठादिस्थाने यत्र स्वात्मनि सत्यस्य सत्यमनु रमणानुकूल्येन स्त्रीपुमात्मनाऽर्धनारीरूपेण युज्यते । तत्र स्थाने रूपे च देवा भवन्ति तद्देशस्थं भगवद्रूपं प्राप्नुवन्तीत्येकमित्यंशं परित्यज्य देवपदव्यावर्त्यपूर्वं व्याचष्टे– **यस्मिन्नित्यादिना** ।। अर्धनारीपुमाकारस्थितिमाह– **तस्य वामस्थितानि चेत्यादिना** ।। तस्य विष्णोरत्यद्भुतानि सर्वाणि स्त्रीरूपाणि वामस्थितानि । अस्य विष्णोर्यानि पुंरूपाणि तानि दक्षिणे आस्थितानीत्यर्थः । पञ्चविधाक्षरस्य प्रकृतत्वाद् बहुवचनम् । देवगम्यदेशविशेषे अर्धनारीपुमात्मकान्यनन्तानि रूपाण्यपि सन्तीति वा द्रष्टव्यम् । भोगप्रकारमाह– **अस्यैव तु रूपाणि युज्यन्तेऽत्र परस्परमिति** ।। स्त्र्यर्धं पुमर्धं च परस्परं मिथुनीभवतीति यावत् । यद्वाऽर्धनारी-पुमाकारस्य नारायणस्य तादृशवासुदेवेन यो वासुदेवनारायणयोः नारायणवासुदेव्योश्च रमणमित्यादिरूपेणेति भावः । किञ्च सर्वाण्यपि रूपाणि युगपदेव युज्यन्तेऽत्यद्भुतत्वात् तद्रमणस्येत्युक्तम्– **अत्यद्भुतानीति** ।। किञ्चैकमर्धतः शुक्लवर्णमर्धतो रक्तम् । अपरमर्धतः शुक्लमर्धतः पीतम् । एकमर्धतः स्त्रीभूतव्यासात्मकमर्धतः पुरुषभूतनारायणा-त्मकम् । एकमर्धतः पुरुषमत्स्यात्मकम् । अर्धतः स्त्रीभूतकृष्णात्मकम् । अर्धतः स्त्रीभूतहयात्मकमर्धतः पुरुषहंसात्मकमित्यादिरूपेण सजातीयविजातीय-नानावर्णाकृतानीत्यत्यद्भुतानि रूपाणि परस्परं संयुज्यन्त इत्यर्थः । यद्वा तस्य

वामस्थितानीत्यादेरयमर्थः। तस्य विष्णोरर्धनारीनरात्मकस्य नारायणस्यैकस्यैव रूपस्यात्यद्भुतानि सर्वजातीयानि नानावर्णाकृतीनि नानापरिमाणानि सर्वाणि यानि विष्णोः स्त्रीरूपाणि तानि वामस्थितानि यान्येवंभूतानि विष्णोः पुंरूपाणि तानि दक्षिणे आस्थितानि अस्य तानि स्त्रीपुंरूपाणि परस्परं युज्यन्त इत्येवमादयो भाष्यरहस्यार्थविशेषाः अस्मदाचार्यवर्यैरनुदिनमनुशिक्षिता यथावबोधं मया दिङ्मात्र-प्रदर्शनाय तत्र तत्रोच्यन्त इति ज्ञेयम्। तं स्थानं देवाः प्राप्नुवन्तीत्युक्तम्। प्रप्य च किं कुर्वन्तीत्यतः एकं भवन्तीत्येतद् व्याचष्टे– **सर्वे देवा इति** ।। एकं भवन्ति एकभगवद्विषयचित्ता भवन्तीत्यर्थान्तरमाह– **उपासत इति** ।। तत्र देवा भवन्तीत्यस्यानन्दमनुभवन्तीत्यर्थः। 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचकाः' (गी.ता.उ. शब्दनिर्णयवचनम्) इति वचनाद्भवतेरनुभवार्थत्वाच्चानन्द-मनुभवन्तीति लभ्यते। यद्वा, आनन्दरमणं विभागं च भवन्ति प्राप्नुवन्ति भवतेः प्राप्त्यर्थत्वादिति भावेन योग्यकर्मान्वयेन व्याचष्टे– **मोदन्त इति** ।। भवन्तीत्यस्य भू बहौ इति धातुव्याख्यानमनुसृत्यार्थान्तरम्– **बहुधा चेति** ।। एते देवा वासुदेवस्य प्रसादात् स्त्रीपुमात्मकं रूपात्पृथग्भावेन विश्लेषेण भागैः स्त्रीपुंस्वरूपिण एव बहुधा भवन्त्यर्धनारीरूपाद्विश्लिष्टान्यर्धनारीरूपाणि अनन्तानि भवन्तीति भावः।

**भाष्यम्-**

**(सर्वशब्दवाच्यत्वोपासना देवतानामेव साध्या)**

**स्त्रीपुंरूपेण युक्तं तद् विष्ण्वाख्यं [१]परमक्षरम्।**
**अक्षरादेव परमात् पुंसो नारायणाभिधात्।**
**आगच्छति तदैते च देवा भार्यासमन्विताः।**
**वहन्त्यश्वादिरूपेण रथस्थं परमं वपुः।**
**तत् सर्वदेवैः प्राप्यं च नान्यैः कथमपि क्वचित्।**

---

१. पराक्षरम् - ह.पा.

मितादिपञ्चरूपं यद् वाक्यं लोकेऽथवा श्रुतौ।
नारायणस्य नामैतदिति जानन्ति देवताः।
मनोवाक्कर्मभिस्तस्माद् योगमाप्स्यन्ति तत्र ते।
सर्वशब्दान् हरौ नेतुं कस्य देवानृते बलम्।
वाय्वन्तास्तारतम्येन विष्णुनामार्थवेदिनः।
सम्यग् वेत्ता मारुतोऽत्र तस्मान्मुक्तेभ्य एव च।
सुरेभ्योऽधिकमानन्दं नित्यं भुङ्क्ते हरेरनु॥

'इत्याद्यर्धनारीनारायणतन्त्रे'।

**टिप्पणी -**

यदक्षरादक्षरमेतीत्येतदपि विवृणोति– **स्त्रीपुंरूपेणेति**॥ अश्वादीत्यादिपदेन सारथिग्रहणम्। यद्वा च ओमितीत्यादिमुपलक्षणमभिप्रेत्य व्याचष्टे– **मितादीति**॥ वाच इत्यस्य पौरुषेयापौरुषेयवाचां मध्ये यदोमित्यादिकं यच्च मितादिकमित्यर्थ इत्यर्थः। जानन्ति ज्ञात्वा मुच्यते चेति ग्राह्यम्। मितादिकं सर्वं नारायणस्यैव नामेति जानन्तीत्येतदवधारणार्थं तत्र देवाः सर्वयुज इत्युक्तमित्यभिप्रेत्य व्याचष्टे– **मन इति**॥ यस्माद् वेदार्थत्वेन नारायणं ज्ञात्वा मुक्ता अभूवंस्तस्मात् तत्रैव मनोवाक्कर्मभिर्वेदविचाराभियोगमाप्स्यन्तीति ज्ञायते। नहि मोक्षसाधनादन्यत्र मोक्षसाधने वेदविचाराभियोग इति भावः। देवपदव्यावर्त्यमाह– **सर्वेति**॥ अनु तारतम्यानुसारेण। विन्दन्नित्यस्यार्थः– **वाय्वन्ता इति**॥

**उपनिषत्-**

**(परमात्मा स्त्री वा ? पुमान् वा ?)**

नैनं वाचा स्त्रियं ब्रुवन् नैनमस्त्री पुमान् ब्रुवन्॥ पुमांसं न ब्रुवन्नेनं वदन् वदति कश्चन।

**भाष्यम्-**

**(अकारस्यार्थव्याप्तिः)**

**एवं सर्वे शब्दा भगवद्वाचका इत्युक्त्वा अकारो विशेषतो नारायणवाचक इत्याह– अः इति ब्रह्मेति ।।**

**'इतिशब्दोऽभिधानान्ते यत्र वैशेषिकं हि तत् ।**
**नाम स्यादिति मे साक्षान्निर्णयः समुदाहृतः ।।' इति शब्दनिर्णये ।।**

**तत्राऽगतमहमिति । यस्माद इत्ययं शब्दः प्रस्तुतस्याभावं विरोधिनमन्यं च वदति तस्मात् प्रत्यक्षत्वाज्जीवजडात्मकस्य जगत एवानुक्तावपि प्रस्तुतरूपत्वात् तदन्यस्तद्विरोधी तत्र दृश्यमानदोषवर्जितश्चाकारशब्दार्थ इति सिद्ध्यति । मनसि प्रस्तुतत्वादवचनेऽपि प्रस्तुतमेवेदं सर्वम् । दृष्टसम्बन्धित्वाददृष्टं सर्वमपि प्रस्तुतं भवति । भगवांस्त्व इति पृथग् विवक्षितवादेव न प्रस्तुतसमुदाये ।**

**टिप्पणी -**

विष्णुनामानि मितादीनि व्यवहितमह इति ब्रह्मेत्येतद् वाच ओमित्यनेन सङ्गतमित्यवतारयति– **एवमिति** ।। विशेषतो भगवद्वाचकत्वमकारस्य न प्रतीयत इत्यत इतिशब्देन प्रतीयत इति भावेन तत्र प्रमाणमाह– **इतिशब्द इति** ।। यत्र यस्याभिधानस्यान्त इति योज्यम् । तथाच अ इत्यकारेण ब्रह्म विशेषत उच्यते इत्युपनिषदर्थ इति भावः । नन्वकारेण कथं ब्रह्मोच्यत इत्यत उक्तस्य तत्राऽगतमहमितीत्यस्यानुवादपूर्वमर्थमाह – **तत्रेति** ।। इति यस्मादित्यर्थ इति भावेन तत्परामृष्टहेतुप्रदर्शनाय– **यस्मादित्यादि** ।। तत्रेत्यस्यार्थः– **तस्मादिति** ।। अहमहेय इत्यस्यार्थः– **तदन्य इति** ।। हेयजगदन्यः । हेयदोषविरोधिगुणरूपः हेयदोषवर्जितश्चेत्यर्थः । तत्राऽगतमित्यंशस्य तत्राकारवाच्यत्वे आगतमागतस्तदर्थतया प्राप्त इत्यर्थमभिप्रेत्योक्तमकारार्थतया सिद्ध्यतीति । ननु अस्त्वकारस्य प्रतियोगिसमर्पकशब्दघटितस्य तदन्यत्वादिकमर्थः केवलस्य तु कथं

प्रतियोग्युपस्थापकपदाभावादित्यत उक्तम्– **प्रत्यक्षत्वादिति** ॥ प्रस्तुतरूपत्वात् पदान्तरेण प्रस्तुतस्वरूपत्वात् । ननु शाब्दी ह्याकाङ्क्षाशब्देनैव निवर्तत इति न्यायविरोध इति चेन्न । तन्नियमाभावात् । प्रत्यक्षसिद्धं द्वारमधिकृत्य पिधेहीत्युक्ते द्वारपदाभावेऽप्याकाङ्क्षाविच्छेदस्यानुभवसिद्धत्वात् । अतीतस्य व्यवहितस्य च कथं प्रस्तुतिरित्यत आह– **मनसीति** ॥ नन्वतीन्द्रियस्य कथं प्रस्तुतिः । अनुमितिशब्दानुभवजन्यस्मृतिसम्भवेऽपि स्मारकाभावादित्यत आह– **दृष्टेति** ॥ ननु हरेरपि दृष्टसम्बन्धित्वेन प्रस्तुतत्वे तस्यापि प्रतियोगिकोट्यनुप्रवेशः स्यादित्यत आह– **भगवांस्त्विति** ॥ भगवांस्त्वकारेण पृथक् दृष्टादृष्टवैलक्षण्येन विवक्षितत्वात् प्रतिपिपादयिषितत्वान्न प्रस्तुतसमुदाये गणनीय इत्यर्थः । नन्वकारस्य पदत्वविवक्षायामन्विताभिधायित्वात् किमन्वयप्रतियोगिसमर्पणाय प्रत्यक्षाद्यनुसरणेनेति चेन्न । पदानां सामान्यतो योग्येतरान्वितस्वार्थाभिधायिकत्वेऽपि विशेषान्वयसिद्ध्यर्थं पदान्तरस्य तदभावे प्रमाणान्तरस्यानुसरणीयत्वात् ।

**भाष्यम्-**

## (न च शून्यमकारार्थः)

**नच शून्यस्याशब्दार्थता । शून्याङ्गीकारे ह्यकारस्याभावताख्य एक एवार्थ इति सिद्ध्यति । विष्णोरङ्गीकारे त्वभावताऽन्यता विरोधितेति त्रयोऽप्यर्थाः सम्यगेव सिद्ध्यन्ति । तस्मादकारस्य भगवानेव मुख्यार्थः । न शून्यम् । एकदेशार्थत्वात् । तस्मादमुख्यार्थत्वादन्ययुक्तेनैवाकारेणाभाव इत्येव तदुच्यते । नत्व इत्येव केनचित् क्वचित् । नच तथा प्रयोगोऽस्ति । तस्मात् पारतन्त्र्याल्पगुणत्वादिसर्ववस्तुस्वभावविरुद्धस्वभावं स्वतन्त्रं पूर्णगुणं सर्वजीवजडेभ्योऽन्यदज्ञानदुःखाल्पत्वपारतन्त्र्योत्पत्तिनाशादिसर्वदोषवर्जितं ब्रह्मैवाशब्दार्थः । पूर्णं हि ब्रह्मशब्दस्यार्थः । नच दोषयुक्तस्य पूर्णता । नच जीवजडाद्यपूर्णवस्त्वभिन्नस्य पूर्णत्वं भवति । तस्मादकारशब्दार्थ एव ब्रह्मशब्दार्थः । तदेतदुक्तम्– 'अ इति ब्रह्म' इति ।**

## (सन्ध्यकरणस्योद्देशः)

अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम्।

'विवृत्तावपि सर्गः स्यात् संहितायां च यत्र हि।
समानोत्तमहीनत्वमुच्यते वस्तुनोऽसा ॥' इति शब्दनिर्णये ॥

**अः इति ब्रह्म पूर्णं वस्तूच्यते। तत्राऽगतमहमिति। तत्राकारस्य पूर्णवाचित्वेऽहमेव सोऽकारवाच्य इत्याह महिदासरूपो भगवान् नारायणः। अहमेक एव हि परिपूर्णः। अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति।**

**टिप्पणी -**

ननु यदुक्तमकारस्य प्रस्तुतान्यत्वादिविशिष्टविष्णुवाचकत्वमिति, तदयुक्तम्। तस्य सर्वप्रपञ्चनिषेधात्मकशून्यपरत्वादिति केषाञ्चित्पक्षमाशङ्क्य दूषयति– **नच शून्यस्येति** ॥ प्रपञ्चप्रतिषेधात्मकस्य शून्यस्येत्यर्थः। उक्तं च सुधायाम् 'प्रपञ्चप्रतिषेधो नाम शून्यमेव तच्च पारमार्थिकमेव न कल्पितम्' इति। नन्वेवं सति 'असदिति चेन्न प्रतिषेधमात्रत्वाद्' (ब्र.सू. २.१.८) इत्यादावसत्त्वोक्तिविरोधः। अस्माभिः सर्वविशेषविनिर्मुक्तत्वादसत्त्वमापाद्य दूषणाभिधानादत एव सुधायां अनुक्तोपालम्भ-परिहारायात्र सर्वत्र शून्यस्यासत्त्वमापाद्य दूषणाभिधानमिति ज्ञातव्यमित्युक्तम्। कुतो न वाच्यमित्यत आह– **शून्येति** ॥ शून्यप्रतिपाद्यत्वाङ्गीकारे अभावाख्यः सर्वप्रतिषेधात्मकत्वाख्य एक एवार्थः सिद्ध्यति। सर्वप्रतिषेधात्मकस्य शून्यस्य परिच्छेदत्रयराहित्याङ्गीकारेण जगदन्यत्वस्य निर्विशेषत्वाङ्गीकारेण दोषविरोधिगुणत्वस्य चाभावादिति भावः ॥ **विष्णोरिति** ॥ अभावता अभावः भावभवित्रोरभेदोपचारः। यद्वा न विद्यते भावः दोषलक्षणः पदार्थो यस्मिन् सोऽभावः दोषाभावः। अन्यता जगदन्यत्वं विरोधिता दोषविरोधिगुणरूपत्वमिति त्रयोऽप्यर्थाः प्रवृत्तिनिमित्तार्थाः सम्यगनुपचारेण प्रमाणबाधं विनैव सिद्ध्यन्ति। यद्वक्ष्यति– 'विरुद्धतानिषेधान्यभावयुक्ते हि' इत्यत्रेति ज्ञेयम्। तस्मात्

प्रवृत्तिनिमित्तपौष्कल्यात्। एतेन विष्णोरभावरूपत्वाभावात् कथमभावतेत्युक्तमिति निरस्तम्। विस्तरस्तु विरोधोद्धारेऽनुसन्धेयः। नन्वकारस्य शून्यपरत्वाभावे कथं तत्प्रतिपत्तिरित्यत आह– **तस्मादिति**॥ तस्मादेकदेशार्थत्वेन अन्ययुक्तेन भावशब्दयुक्तेन। उच्यते 'नाभाव उपलब्धेः' (ब्र.सू.२.२.२८) इत्यादौ। यद्वाऽकारस्याभावा-परपर्यायप्रतिपाद्यशून्यार्थत्वं पराभ्युपगतं निराकृत्य तेनैव हेतुना प्रागभावाद्यभावपरत्वं च निराह– **तस्मादिति**॥ **नत्व इत्येवेति**॥ केवलेनाकारेण केनचिदपि वाक्येनोच्यते। कुतः प्रयोगादर्शनादिति भावः। भवत्वेवमकारस्य प्रस्तुतान्यपरत्वादौ शक्तिसद्भावाद्धेयजगदन्यत्वादिवाचित्वम्। तथाप्यकारस्य ब्रह्म-नामत्वं कथमित्यतः अकारब्रह्मशब्दयोरेकार्थत्वादिति भावेनाह– **तस्मादिति**॥ अर्थान्तरस्यानुपपन्नत्वात्। ब्रह्मैव ब्रह्मशब्दार्थ एव। ननु ब्रह्मशब्दार्थः तद्विरुद्ध-वाच्याकारार्थश्चैकोऽस्तु। अन्यत्वादिवाच्याकारस्य कथं ब्रह्मशब्देनैकार्थते-त्यतस्तदुपपादयति–**पूर्णं हीति**॥ उक्तमर्थमुपनिषदारूढं करोति–**तदेतदिति**॥ अ इति ब्रह्मेति वक्तव्ये अः इत्यसंहिततया निर्देशस्य प्रयोजनमाह– **अ इति**॥ कथमसंहिततया निर्देशस्योक्तार्थत्वमित्यतस्तत्र प्रमाणमाह– **विवृता-विति**॥ यत्र पदे संहितायामवश्यभाविन्यां विवृतिसंहिततया निर्देशः स्यात्तत्र तस्य वस्तुनः समानोत्तमहीनत्वमुच्यते। विवृत्तावपि सर्गो विसर्गश्च यत्र स्यात् तत्राञ्जसा समानोत्तमहीनतवमुच्यत इति योज्यम्। आद्यं यथा 'तमेवैकं जानथ आत्मानम्' (आथ.उ. २.१.६) इति। तदुक्तं तत्त्वप्रकाशिकायायां 'जानथ आत्मानमित्यत्र विवृतिस्तस्य सर्वतो विलक्षणत्वज्ञापनार्थेति द्वितीयस्त्विदमेवोदाहरणम्' इति। एवम इत्यकारेण ब्रह्मनारायण एव विशेषत उच्यते, कुतः? अकारस्य हेयजगदन्यत्वादिप्रतिपादकत्वात्। ब्रह्मशब्दस्यापि तत्प्रतिपादकत्वेनाकारब्रह्म-शब्दयोरेकार्थत्वाद् अकारो ब्रह्मशब्दितभगवन्नामैवेत्युक्तम्। किञ्चाकारस्य पूर्णत्वाभिधायकत्वान्नारायणावतारस्य मम पूर्णत्वादकारो नारायणस्य विशेषनामेत्यर्थत्वेन अ इति ब्रह्मेत्यादि व्याचष्टे– **अ इतीति**॥ अस्त्वकारस्य पूर्तिवाचित्वं तस्य

## (सन्ध्यकरणस्योद्देशः)

अः इति पृथक्त्वेन वचनं तत्सममधिकं वा किमपि नास्तीति दर्शयितुम्।

'विवृत्तावपि सर्गः स्यात् संहितायां च यत्र हि।

समानोत्तमहीनत्वमुच्यते वस्तुनोऽञ्जसा ॥' इति शब्दनिर्णये॥

**अः इति ब्रह्म पूर्णं वस्तूच्यते। तत्राऽगतमहमिति। तत्राकारस्य पूर्णवाचित्वेऽहमेव सोऽकारवाच्य इत्याह महिदासरूपो भगवान् नारायणः। अहमेक एव हि परिपूर्णः। अन्येषां सर्वेषां मदधीनत्वादल्पत्वादिति।**

**टिप्पणी -**

ननु यदुक्तमकारस्य प्रस्तुतान्यत्वादिविशिष्टविष्णुवाचकत्वमिति, तदयुक्तम्। तस्य सर्वप्रपञ्चनिषेधात्मकशून्यपरत्वादिति केषाञ्चित्पक्षमाशङ्क्य दूषयति– **नच शून्यस्येति**॥ प्रपञ्चप्रतिषेधात्मकस्य शून्यस्येत्यर्थः। उक्तं च सुधायाम् 'प्रपञ्चप्रतिषेधो नाम शून्यमेव तच्च पारमार्थिकमेव न कल्पितम्' इति। नन्वेवं सति 'असदिति चेन्न प्रतिषेधमात्रत्वाद्' (ब्र.सू. २.१.८) इत्यादावसत्त्वोक्तिविरोधः। अस्माभिः सर्वविशेषविनिर्मुक्तत्वादसत्त्वमापाद्य दूषणाभिधानादत एव सुधायां अनुक्तोपालम्भ-परिहारायात्र सर्वत्र शून्यस्यासत्त्वमापाद्य दूषणाभिधानमिति ज्ञातव्यमित्युक्तम्। कुतो न वाच्यमित्यत आह– **शून्येति**॥ शून्यप्रतिपाद्यत्वाङ्गीकारे अभावाख्यः सर्वप्रतिषेधात्मकत्वाख्य एक एवार्थः सिद्ध्यति। सर्वप्रतिषेधात्मकस्य शून्यस्य परिच्छेदत्रयराहित्याङ्गीकारेण जगदन्यत्वस्य निर्विशेषत्वाङ्गीकारेण दोषविरोधिगुणत्वस्य चाभावादिति भावः॥ **विष्णोरिति**॥ अभावता अभावः भावभवित्रोरभेदोपचारः। यद्वा न विद्यते भावः दोषलक्षणः पदार्थो यस्मिन् सोऽभावः दोषाभावः। अन्यता जगदन्यत्वं विरोधिता दोषविरोधिगुणरूपत्वमिति त्रयोऽप्यर्थाः प्रवृत्तिनिमित्तार्थाः सम्यगनुपचारेण प्रमाणबाधं विनैव सिद्ध्यन्ति। यद्वक्ष्यति– 'विरुद्धतानिषेधान्यभावयुक्ते हि' इत्यत्रेति ज्ञेयम्। तस्मात्

प्रवृत्तिनिमित्तपौष्कल्यात्। एतेन विष्णोरभावरूपत्वाभावात् कथमभावतेत्युक्तमिति निरस्तम्। विस्तरस्तु विरोधोद्धारेऽनुसन्धेयः। नन्वकारस्य शून्यपरत्वाभावे कथं तत्प्रतिपत्तिरित्यत आह– **तस्मादिति**॥ तस्मादेकदेशार्थत्वेन अन्ययुक्तेन भावशब्दयुक्तेन। उच्यते 'नाभाव उपलब्धेः' (ब्र.सू.२.२.२८) इत्यादौ। यद्वाऽकारस्याभावा-परपर्यायप्रतिपाद्यशून्यार्थत्वं पराभ्युपगतं निराकृत्य तेनैव हेतुना प्रागभावाद्यभावपरत्वं च निराह– **तस्मादिति**॥ **नत्व इत्येवेति**॥ केवलेनाकारेण केनचिदपि वाक्येनोच्यते। कुतः प्रयोगादर्शनादिति भावः। भवत्वेवमकारस्य प्रस्तुतान्यपरत्वादौ शक्तिसद्भावाद्धेयजगदन्यत्वादिवाचित्वम्। तथाप्यकारस्य ब्रह्म-नामत्वं कथमित्यतः अकारब्रह्मशब्दयोरेकार्थत्वादिति भावेनाह– **तस्मादिति**॥ अर्थान्तरस्यानुपपन्नत्वात्। ब्रह्मैव ब्रह्मशब्दार्थ एव। ननु ब्रह्मशब्दार्थः तद्विरुद्ध-वाच्याकारार्थश्चैकोऽस्तु। अन्यत्वादिवाच्याकारस्य कथं ब्रह्मशब्देनैकार्थते-त्यतस्तदुपपादयति–**पूर्णं हीति**॥ उक्तमर्थमुपनिषदारूढं करोति–**तदेतदिति**॥ अ इति ब्रह्मेति वक्तव्ये अः इत्यसंहिततया निर्देशस्य प्रयोजनमाह– **अ इति**॥ कथमसंहिततया निर्देशस्योक्तार्थत्वमित्यतस्तत्र प्रमाणमाह– **विवृता-विति**॥ यत्र पदे संहितायामवश्यभाविन्यां विवृतिसंहिततया निर्देशः स्यात्तत्र तस्य वस्तुनः समानोत्तमहीनत्वमुच्यते। विवृत्तावपि सर्गो विसर्गश्च यत्र स्यात् तत्राञ्जसा समानोत्तमहीनतवमुच्यत इति योज्यम्। आद्यं यथा 'तमेवैकं जानथ आत्मानम्' (आथ.उ. २.१.६) इति। तदुक्तं तत्त्वप्रकाशिकायायां 'जानथ आत्मानमित्यत्र विवृतिस्तस्य सर्वतो विलक्षणत्वज्ञापनार्थेति द्वितीयस्त्विदमेवोदाहरणम्' इति। एवम इत्यकारेण ब्रह्मनारायण एव विशेषत उच्यते, कुतः? अकारस्य हेयजगदन्यत्वादिप्रतिपादकत्वात्। ब्रह्मशब्दस्यापि तत्प्रतिपादकत्वेनाकारब्रह्म-शब्दयोरेकार्थत्वाद् अकारो ब्रह्मशब्दितभगवन्नामैवेत्युक्तम्। किञ्चाकारस्य पूर्णत्वाभिधायकत्वान्नारायणावतारस्य मम पूर्णत्वादकारो नारायणस्य विशेषनामेत्यर्थत्वेन अ इति ब्रह्मेत्यादि व्याचष्टे– **अ इतीति**॥ अस्त्वकारस्य पूर्तिवाचित्वं तस्य

नारायणनामत्वं कुत इत्यतस्तत्रागतमित्येतदनूद्य व्याचष्टे– **तत्रेति** ।। तत्राकारस्य पूर्णवाचित्वे सति अहमेव तत्राकारवाचकत्वे आगतः अकारवाच्यत इत्याह महिदासरूपो भगवान्नारायण इत्यर्थः। नन्वकारस्य पूर्णवाचित्वेऽपि महिदासस्याकार-वाच्यत्वं कुतः। अन्यस्य पूर्णत्वसम्भवादित्यतस्तत्र पूर्णत्वे विशेष्यतयाऽहमेवाऽगतो नत्वन्य इत्यर्थान्तरमाह– **अहमेक एवेति** ।।

**भाष्यम्-**

**(सन्ध्यकरणस्योद्देशः)**

मुक्तेभ्यः प्रळये लीनेभ्यश्च सर्ववस्तुभ्यश्च सदा[1] विभिन्न एव भगवानिति दर्शयितुं च इति पृथग् वचनम्। तच्चोक्तं वाक्यनिर्णये–

'मुक्ता अपि न विष्णुत्वं यान्ति तत्समतामपि।
आधिक्यं कुत एव स्यान्मुक्तानां मुक्तिदातृतः।
कुत एव प्रलीनानां प्रळये तु तदात्मता।
ब्रह्मशर्वेन्द्रपूर्वाणां मुक्तावपि न विष्णुता।
यदा तदा तु संसारे क्व तद्रूपत्वमिष्यते।
अन्योऽसौ सर्वतो विष्णुः स्वातन्त्र्याद् गुणपूर्तितः।
सर्ववस्तुस्वभावस्य विरुद्धोरुस्वभावकः[2]।
पारतन्त्र्याल्पताऽज्ञानजनिनाशादिवर्जितः।
अकारेण ततो विष्णुः संहितायां पदात्मना।
बह्वृचोपनिषत्प्रोक्तस्तेनैव परमात्मना।
महिदासावतारेण सोऽहमेवंविधस्त्विति।
मत्तोऽन्यो नहि पूर्णोऽस्ति यतोऽकारश्च पूर्णताम्।
वक्ति तस्मादकारोऽयं मामेव वदति स्फुटम्।

---

१. वस्तुभ्यः सर्वदा - ह.ता. २. स्वभावकः- ह.पा.

## (अकारो नाभाववाची)

नाभाववाच्यकारः स्यादर्थत्रययुतो यतः ।
एकार्थात्मा ह्यभावः स्यान्निषेधैकस्वरूपतः ।
अन्यता च निषेधश्च विरुद्धत्वमिति त्रयः ।
अकारार्था ह्यभावस्तु निषेधैकस्वरूपकः ।
एकदेशस्वरूपत्वान्नाकारेणैव भण्यते ।
किन्त्वभाव इति त्वेव तेनाकारोदितो हरिः ॥ इति च ॥

न च निषेधरूपे विरुद्धता चान्यता चास्तीत्येतावता पूर्णार्थता भवति । तदाऽर्थत्रयकथनस्य[1] वैयर्थ्यात् । उक्तं हि शब्दनिर्णये–

'विरुद्धतानिषेधान्यभावयुक्तो हि केवलः ।
अकारो वर्तते तेषामेकार्थात्मन्यभावके ॥
वर्ततेऽभाव इत्येव नत्व इत्येव केवलः ॥' इति ॥

तस्मान्नारायण एवाकारवाच्य इति सिद्धम् ।

**टिप्पणी -**

ननु प्रलये प्रलीनानां मुक्तानां च ब्रह्मणैक्यात् कथमन्येषां तदधीनत्वमित्याशङ्का-परिहारकत्वेनापि पृथग्वचनं व्याचष्टे– **मुक्तेभ्य इति** ॥ उक्तार्थे प्रमाणमाह– **तच्चेति** ॥ ननु माभूद् यादृशतादृशानां भगवदैक्यं ब्रह्मादीनां तु लोकेश्वराणां स्यादित्यत आह– **ब्रह्मेति** ॥ संहितायां प्रसक्तायामपि पदात्मना । स विसर्गपदा-त्मना । एवंविधः पूर्णः । अकारस्य शून्यप्रतिपादकत्वं प्रागभावादिपरत्वं वा व्यवच्छिनत्ति– **नाभावेति** ॥ नात्राभाव इति शून्यं प्रागभावश्च विवक्षितः । यतः अकार अर्थत्रयेण प्रवृत्तिनिमित्तार्थत्रयेण युक्तस्तत्प्रवृत्तिनिमित्तकः अतो नाभाववाची । नन्वकारस्य त्रिविधप्रवृत्तिनिमित्तकत्वेऽप्यभाववाचित्वाभावः कुत

---

१. कल्पनस्य- ह.पा.

इत्यत उक्तम्– **एकेति** ।। केवलमर्थात्मैव नतु विष्णुवत् तद्वान् । कुतः निषेधैकस्वरूपतः केवलं निषेधरूपत्वेन तद्वत्ताभावात् । अत एकदेशस्वरूपत्वादिति योज्यम् । नन्वकारस्याभावार्थत्वेऽपि पूर्णार्थत्वं स्यादेव भावान्यत्वभावविरुद्धत्वयोरप्यभावे प्रागभावादौ सत्त्वादित्याशङ्क्य निषेधति– **नचेति** ।। एतावता प्रकृतिनिमित्तद्वयसद्भावमात्रेण मा भूदकारस्य पूर्णार्थत्वमित्यत आह– **तदेति** ।। अर्थत्रयकल्पनस्य प्रवृत्तिनिमित्तार्थत्रयकल्पनस्य । ननु निर्मूलमेव प्रवृत्तिनिमित्तत्रयकल्पनमित्यत आह– **उक्तमिति** ।। विरुद्धत्वयुक्ते निषेधयुक्ते अन्यत्वयुक्ते वस्तुनि केवलाकारो वर्तते तेषां त्रयाणां प्रवृत्तिनिमित्तार्थानां मध्ये एकार्थात्मनि एकप्रवृत्तिनिमित्तार्थभूते भावे भावान्यत्वात् तद्विरोधित्वाच्चाभाव इत्येवशब्दो वर्तते । नतु केवलो अ इति शब्दः । प्रवृत्तिनिमित्तपौष्कल्याभावादिति भावः । उपसंहरति– **तस्मादिति** ।।

**भाष्यम्-**

### (प्रणवप्रतिपाद्यमूर्तयः)

**‘यतोऽकारः सदा विष्णोर्वाचकत्वेन संस्थितः ।**
**तस्माद् वर्णत्रयात्माऽयं प्रणवोऽपि त्रयात्मकम् ।**
**हरिमेव सदा वक्ति नैवान्यं कञ्चन क्वचित् ।**
**सृष्टिकर्ता ब्रह्मनामा योऽसृजच्चतुराननम् ।**
**अन्तर्यामी विरिञ्चस्य सोऽकारार्थो जनार्दनः ।**
**वैकुण्ठलोक आस्ते स द्वितीयवपुषा हरिः ।**
**उकारवाच्यः स विभुर्नृसिंहो रुद्रनामकः ।**
**रौद्रत्वात् स शिवस्यापि स्रष्टा संहारकारकः ।**
**अन्तर्यामी शिवस्यापि मकारार्थः प्रकीर्तितः ।**
**एवं त्रयात्मकं विष्णुं प्रणवोऽयं त्रियात्मकः ।**
**एकं पृथगिवाऽचष्टे बिन्दुर्वक्त्यनिरुद्धकम् ।**

प्रद्युम्नाद्यान् नादपूर्वाः सर्वान् नारायणात्मकान् ।
पद्मनाभादिका एव मूर्तीर्नारायणोत्तराः ।
प्रणवोऽयं वदत्यष्टौ तस्मान्नान्याभिधायकः ॥' इति तत्त्वसारे ॥

**टिप्पणी -**

यद्वा च ओमितीत्यत्र ओङ्कारस्य भगवन्नामत्वमुक्तं, तदयुक्तम् । अकारोकार-मकाराद्यात्मकस्योङ्कारस्य हिरण्यगर्भादिप्रतिपादकत्वादित्यतः प्रमाणेनैव शङ्कां परिहरति– **यत इत्यादिना** ॥ तद्व्याख्यानरूपः प्रणवोऽपीति योज्यम् । सृष्ट्या बृंहणाद् ब्रह्मनामा । उच्चलोकगतत्वादुकारवाच्यः । प्रद्युम्नाद्यान् प्रद्युम्नसङ्कर्षण-वासुदेवनारायणात्मकान् । नतु कामपुत्रानिरुद्धादिजीवानित्यर्थः । प्रणवप्रतिपाद्य-रूपान्तराण्यपि दर्शयति– **पद्मनाभेति** ॥ पद्मनाभदामोदरसङ्कर्षणवासुदेव-प्रद्युम्नानिरुद्धपुरुषोत्तमनारायणाभिधामूर्तीरित्यर्थः ।

**उपनिषत्-**

**(अकारवाच्यो भगवान्)**

अः इति ब्रह्म तत्राऽगतमहमिति ।

**भाष्यम्-**

**(भगवतः स्त्रीपुरुषरूपाणामद्भुतलीला)**

'षट्त्रिंशतिसहस्राणि बृहत्युक्थार्णगानि तु ।
स्त्रीरूपाणि हरेस्तावदह्नामप्यभिमानिषु ।
सूर्यरूपेषु रूपाणि पुमाकाराणि सर्वशः ।
एतैः पुरुषगै [१]रूपैर्बृहत्युक्थव्यवस्थितैः ।
कदाचिद् भगवान् विष्णुः पुमाकाराणि तानि च ।
कृत्वा सूर्यगतान्येव स्त्रीरूपाणि विधाय च ।

१. रूपैर्बृहदुक्थ....- ह.पा.

**तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च ।**
**स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः ।**
**पुंरूपः प्रमदारूपः स्वरूपै रमते स्वयम् ।**
**एकीकृत्य च तान्येव द्विरूपो रमते तथा ।**
**स एव रमते मायां स्थितात्मस्त्रीतनौ हरिः ।**
**प्राणस्योत्पत्तिकामः सन्ननेच्छामारनामकः ।।'** इत्याद्यर्धनारीनारायणतन्त्रे ।।

**टिप्पणी -**

तस्य वा एतस्य बृहतीसहस्रस्येत्यादि व्याचष्टे– **षट्त्रिंशतिसहस्राणीत्यादिना** ।। अत्र योजना । हरेः षट्त्रिंशतिसहस्राणि स्त्रीरूपाणि तावन्ति पुमाकाराण्यपि रूपाणि बृहत्युक्थार्णगानि स्वरव्यञ्जनभेदभिन्नबृहतीसहस्रगतानि । तुशब्देन व्यञ्जनगतानि स्त्रीरूपाणि स्वरगतानि पुंरूपाणीति विशेषं द्योतयति । तथा षट्त्रिंशतिसहस्राणि स्त्रीरूपाणि तावन्ति पुमाकाराण्यपि रूपाणि अह्नामभिमानिषु अहोरात्रात्मकदिनाभिमानिषु सर्वशः सर्वेषु सूर्यरूपेषु वर्तत इति । एतेन षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नामित्येतद् व्याख्यातं भवति । जीवाक्षरेणेत्येतद् विवृणोति– **एतैः पुरुषगैरित्यादिना** ।। जीवेत्यस्यार्थः– **पुरुषगैरिति** ।। अक्षरेणेत्यस्यार्थः– **बृहत्युक्थेति** ।। कदाचिद् भगवान् विष्णुः एतैः पुरुषगैः बृहत्युक्थव्यवस्थितैः व्यञ्जनगतैः स्त्रीरूपैः सूर्यगतानि तन्नियमिताहर्गतानि पुमाकाराण्याप्नोति । कदाचिदेतैः बृहत्युक्थस्वरगतैः पुरुषरूपैः सूर्यगतानि सूर्यतन्नियमितरात्रिगतानि स्त्रीरूपाण्याप्नोति । कदाचिदेतैर्बृहत्युक्थस्वरगतैः पुरुषरूपैः सूर्यगतानि सूर्यतन्नियमितरात्रिगतानि स्त्रीरूपाण्याप्नोति । कदाचिद् भगवान् विष्णुः एतैः सूर्याहर्गतैरेव पुंरूपैः अक्षरगतानि स्त्रीरूपाण्याप्नोति । कदाचित्तैः सूर्यनियमितरात्रिगतैरेव स्त्रीरूपैरक्षरगतानि स्वरगतानि पुमाकाराण्याप्नोति । कदाचिद् भगवान् विष्णुः सूर्यगतानि स्त्रीरूपाणि तैरेव तद्गतैरेव पुंरूपैराप्नोति । तथा तैरेवाक्षरगतैरेव पुंरूपैरक्षरगतान्येव स्त्रीरूपाण्याप्नोति ।

कदाचित् सूर्यगतानि पुमाकाराणि स्त्रीरूपाणि कृत्वा स्त्रीरूपाणि पुमाकाराणि विधाय तैस्तान्याप्नोति । कदाचित् सूर्यरात्रिगतानि स्त्रीरूपाणि पुमाकाराणि कृत्वा अक्षरगतान्यक्षरस्वरगतानि पुमाकाराणि स्त्रीरूपाणि विधाय तैस्तान्याप्नोति । एवमक्षरगतपुमाकाराणि विधाय तैः स्त्रीरूपैः सूर्यगतस्त्रीरूपाणि पुमाकाराणि कृत्वा तान्याप्नोति । अक्षरगतस्त्रीरूपाणि पुमाकाराणि कृत्वा तैः पुमाकारैः सूर्यगतानि पुंरूपाणि विधाय तान्याप्नोति । कदाचित् सूर्यगतानि पुमाकाराणि कृत्वा तान्याप्नोति । स्त्रीरूपाणि च युगपदर्धनारीनरात्मना विधायाक्षरगतानि रूपाणि पुमाकाराणि स्त्र्याकाराणि चार्धनारीरूपेण विधाय जीवाक्षरगतार्धनारीरूपैः सूर्यगतरूपाणि तैर्वा जीवगतरूपाण्याप्नोतीत्यर्थः । अत्यलौकिकं रमणप्रकारमुक्त्वोपसंहरन् घटकमाह- **आत्मेच्छयेति** ।। पुंरूपस्वरूपैः पुमाकारस्वरूपैः । प्रमदाकारस्वरूपैर्युगपदेव पुंरूपप्रमदारूपस्वरूपैरित्यर्थः । जीवाक्षरेण जीवाहरित्येकवचनाभिप्रायमाह– **एकीकृत्येति** ।। अनकाममार इत्येतद् व्याचष्टे–**स एवेति** ।। मायां रमायाम् । मायामित्यस्यार्थान्तरम्– **स्थित्वाऽऽत्मस्त्रीतनाविति** ।। एतेन केवलं भगवतः स्त्रीपुमात्मरूपमेलनेन प्राणस्योत्पत्तिर्नेति ध्वन्यते ।

**भाष्यम्-**

**वायोरुत्पत्तिकामो [१]मायां रमायां रमत इत्यनकाममारः । [२]जीवस्थितेनाक्षरगेनाक्षरनाम्ना स्वरूपेण जीवाख्यसूर्यस्थितमहराख्यं स्वरूपमप्नोति तेन चाक्षराख्यं स्वरूपमाप्नोति । 'यदक्षरादक्षरमेति युक्तम्' इत्यस्य व्याख्यानरूपत्वाच्चैतदवसीयते । पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं रूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वाच्च स्त्रीत्वं पुंस्त्वं च प्रतीयते विष्णोः ।**

**टिप्पणी -**

अनेच्छामारशब्दस्योपनिषद्यभावादौपनिषदं पदं स्ववचनेन व्याचष्टे– **वायोरिति** ।। जीवाक्षरेणेत्येतत् स्ववचनेन स्पष्टं व्याचष्टे– **जीवस्थितेनेति** ।। तेन

१. मायायां रमायाम् - ह.पा. २. जीवे स्थितेन- ह.पा.

तान्याप्नोति च पुंरूपैस्तैरेवाक्षरगानि च ।
स्त्रीरूपाणि जगन्नाथः प्राप्नोत्यात्मेच्छया प्रभुः ।
पुंरूपः प्रमदारूपः स्वरूपै रमते स्वयम् ।
एकीकृत्य च तान्येव द्विरूपो रमते तथा ।
स एव रमते मायां स्थितात्मस्त्रीतनौ हरिः ।
प्राणस्योत्पत्तिकामः सन्ननेच्छामारनामकः ॥' इत्याद्यर्धनारीनारायणतन्त्रे ॥

**टिप्पणी -**

तस्य वा एतस्य बृहतीसहस्रस्येत्यादि व्याचष्टे– **षट्त्रिंशतिसहस्राणीत्यादिना** ॥ अत्र योजना । हरेः षट्त्रिंशतिसहस्राणि स्त्रीरूपाणि तावन्ति पुमाकाराण्यपि रूपाणि बृहत्युक्थार्णगानि स्वरव्यञ्जनभेदभिन्नबृहतीसहस्रगतानि । तुशब्देन व्यञ्जनगतानि स्त्रीरूपाणि स्वरगतानि पुंरूपाणीति विशेषं द्योतयति । तथा षट्त्रिंशतिसहस्राणि स्त्रीरूपाणि तावन्ति पुमाकाराण्यपि रूपाणि अह्नामभिमानिषु अहोरात्रात्मकदिनाभिमानिषु सर्वशः सर्वेषु सूर्यरूपेषु वर्तत इति । एतेन षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति । तावन्ति शतसंवत्सरस्याह्नामित्येतद् व्याख्यातं भवति । जीवाक्षरेणेत्येतद् विवृणोति– **एतैः पुरुषगैरित्यादिना** ॥ जीवेत्यस्यार्थः– **पुरुषगैरिति** ॥ अक्षरेणेत्यस्यार्थः– **बृहत्युक्थेति** ॥ कदाचिद् भगवान् विष्णुः एतैः पुरुषगैः बृहत्युक्थव्यवस्थितैः व्यञ्जनगतैः स्त्रीरूपैः सूर्यगतानि तन्नियमिताहर्गतानि पुमाकाराण्याप्नोति । कदाचिदेतैः बृहत्युक्थस्वरगतैः पुरुषरूपैः सूर्यगतानि सूर्यतन्नियमितरात्रिगतानि स्त्रीरूपाण्याप्नोति । कदाचिदेतैर्बृहत्युक्थस्वरगतैः पुरुषरूपैः सूर्यगतानि सूर्यतन्नियमितरात्रिगतानि स्त्रीरूपाण्याप्नोति । कदाचिद् भगवान् विष्णुः एतैः सूर्याहर्गतैरेव पुंरूपैः अक्षरगतानि स्त्रीरूपाण्याप्नोति । कदाचित्तैः सूर्यनियमितरात्रिगतैरेव स्त्रीरूपैरक्षरगतानि स्वरगतानि पुमाकाराण्याप्नोति । कदाचिद् भगवान् विष्णुः सूर्यगतानि स्त्रीरूपाणि तैरेव तद्गतैरेव पुंरूपैराप्नोति । तथा तैरेवाक्षरगतैरेव पुंरूपैरक्षरगतान्येव स्त्रीरूपाण्याप्नोति ।

कदाचित् सूर्यगतानि पुमाकाराणि स्त्रीरूपाणि कृत्वा स्त्रीरूपाणि पुमाकाराणि विधाय तैस्तान्याप्नोति । कदाचित् सूर्यरात्रिगतानि स्त्रीरूपाणि पुमाकाराणि कृत्वा अक्षरगतान्यक्षरस्वरगतानि पुमाकाराणि स्त्रीरूपाणि विधाय तैस्तान्याप्नोति । एवमक्षरगतपुमाकाराणि विधाय तैः स्त्रीरूपैः सूर्यगतस्त्रीरूपाणि पुमाकाराणि कृत्वा तान्याप्नोति । अक्षरगतस्त्रीरूपाणि पुमाकाराणि कृत्वा तैः पुमाकारैः सूर्यगतानि पुंरूपाणि विधाय तान्याप्नोति । कदाचित् सूर्यगतानि पुमाकाराणि कृत्वा तान्याप्नोति । स्त्रीरूपाणि च युगपदर्धनारीनरात्मना विधायाक्षरगतानि रूपाणि पुमाकाराणि स्त्र्याकाराणि चार्धनारीरूपेण विधाय जीवाक्षरगतार्धनारीरूपैः सूर्यगतरूपाणि तैर्वा जीवगतरूपाण्याप्नोतीत्यर्थः । अत्यलौकिकं रमणप्रकारमुक्त्वोपसंहरन् घटकमाह- **आत्मेच्छयेति** ॥ पुंरूपस्वरूपैः पुमाकारस्वरूपैः । प्रमदाकारस्वरूपैर्युगपदेव पुंरूपप्रमदारूपस्वरूपैरित्यर्थः । जीवाक्षरेण जीवाहरित्येकवचनाभिप्रायमाह– **एकीकृत्येति** ॥ अनकाममार इत्येतद् व्याचष्टे–**स एवेति** ॥ मायां रमायाम् । मायामित्यस्यार्थान्तरम्– **स्थित्वाऽऽत्मस्त्रीतनाविति** ॥ एतेन केवलं भगवतः स्त्रीपुमात्मरूपमेलनेन प्राणस्योत्पत्तिर्नेति ध्वन्यते ।

**भाष्यम्-**

**वायोरुत्पत्तिकामो [1]मायां रमायां रमत इत्यनकाममारः । [2]जीवस्थितेनाक्षरगेनाक्षरनाम्ना स्वरूपेण जीवाख्यसूर्यस्थितमहराख्यं स्वरूपमाप्नोति तेन चाक्षराख्यं स्वरूपमाप्नोति । 'यदक्षरादक्षरमेति युक्तम्' इत्यस्य व्याख्यानरूपत्वाच्चैतदवसीयते । पुमांसं स्त्रियं च वदन्नेव न वदतीत्युक्तत्वादुभयात्मकं रूपं प्रतीयते । अस्त्रीपुमानिति ब्रुवन्नपि न वदतीत्युक्तत्वाच्च स्त्रीत्वं पुंस्त्वं च प्रतीयते विष्णोः ।**

**टिप्पणी -**

अनेच्छामारशब्दस्योपनिषद्यभावादौपनिषदं पदं स्ववचनेन व्याचष्टे– **वायोरिति** ॥ जीवाक्षरेणेत्येतत् स्ववचनेन स्पष्टं व्याचष्टे– **जीवस्थितेनेति** ॥ तेन

---

१. मायायां रमायाम् - ह.पा.  २. जीवे स्थितेन- ह.पा.

चाक्षराख्यमिति जीवशब्दितसूर्यस्थाहराख्यस्वरूपेण जीवाक्षराख्यं स्वरूपमाप्नोतीत्यर्थः । यद्वा तेन जीवे स्थितेनाक्षरनामकेन तदेवाक्षराख्यं स्वरूपमाप्नोति । तेन च सूर्याहर्गतेन तदेव स्वरूपमाप्नोतीत्यर्थः । एतेन जीवाक्षरेण जीवाहराप्नोति । जीवान्हा जीवाक्षरं 'जीवाक्षरेण जीवाक्षरम् । जीवान्हा जीवाहरिति योजना सूचिता भवति । उक्तार्थे प्रमाणमुक्तम् । अन्तरङ्गं च ज्ञापकमाह– **यदक्षरादिति** ।। यद्वा 'तद्वा इदं बृहतीसहस्रम्' इत्यादिकं यदक्षरादक्षरमतीति श्लोकव्याख्यानाय प्रवृत्तमिति सङ्गत्यन्तरं चोक्तं भवति । अत एव यदक्षरादिति श्लोकस्य यद् विष्ण्वाख्यं ब्रह्माक्षराद् बृहत्यक्षरगेन रूपेणैत्यहराख्यं सूर्यमेति सूर्याच्चाक्षरगतमेति तदुभयं स्त्रीपुंरूपेण युक्तं भवति । तथाक्षरादक्षरगतरूपेणाक्षरगतमेव स्त्रीरूपमेति । एवं परस्परं स्त्रीपुमात्मना संयुक्तं भगवद्रूपं स्त्रीरूपेण युजो देवा अश्वरूपेण रथे युक्ता वहन्तीति योजनानन्तरमुक्तं ज्ञेयम् । नैनं वाचेत्यत्रैनं स्त्रियं ब्रुवन्न वदति पुमांसं च ब्रुवन्न वदतीत्युभयाकारनिषेधं केचिद् व्याचक्षते । तदपाकरोति– **पुमांसमिति** ।। केवलं पुमांसं स्त्रियं च वदन्न वदतीत्युक्तत्वादुभयसंस्थानात्मकमेव रूपं प्रतीयते नतु तदुभयाभाव इत्यर्थः । ननु केवलमिति कुतः संयोज्य व्याख्येयं सर्वथा तदुभयाभाव एवार्थः किन्न स्यादित्यत आह– **अस्त्रीति** ।। अस्त्रीपुमानिति वदन्न वदतीति नपुंसक इति ब्रुवन्न वदतीत्युक्तत्वात् स्त्रीत्वपुंस्त्वयोः प्रतीयमानत्वादित्यर्थः । एतेनास्त्रीपुमांसमिति विपरिणामं विनेति शब्दाध्याहारेणापि योजनोक्ता द्रष्टव्या । नतु निराकारत्वान्नपुंसकाकारोऽप्यत्र निषिद्ध्यते न तावता स्त्राद्याकाराभ्यनुज्ञेति चेन्न । तर्हि वदन्न वदतीति स्त्रियं पुमांसं च वदन् वदतीत्युत्तरवाक्यविरोधादिति भावः ।। १ ।।

**भाष्यम्-**

## (न नपुंसकरूपम् भगवतः)

**नच नपुंसकरूपं भगवतः कुत्रचिदुक्तम् । प्रसिद्धमेव च रूपद्वयम् । अतो नपुंसके वदन्नपि न वदतीति न तद्वदनुषज्जते । नपुंसकरूपे प्रमाणाभावादेव । लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानित्यपि वदन्निति भवति ।**

[१]स्त्रीपुंरूपद्वयम् विष्णोर्न तृतीयं कथञ्चन।
साक्षान्नपुंसकस्तस्मान्मुक्तिभागी नतु क्वचित्॥ इति च ब्रह्माण्डे॥

**नच रक्ष इति नपुंसकशब्दमात्रेण रावणादयो नपुंसका भवन्ति। भवतीति पदाभावादनकाममार इति भगवन्नामैवेति ज्ञायते।**

**टिप्पणी -**

नन्वस्त्रीपुमानिति वदन्न वदतीति कुत इत्यत आह–**नचेति** ॥ २ ॥

यद्वा ननु केवलस्त्रियं ब्रुवन् यथा न वदति तथा केवलमस्त्रीपुमान्नपुंसक इति वदन्न वदतीत्यर्थः किन्न स्यादित्यत आह– **नचेति** ॥

यद्वा ननु वदन् वदति कश्चनेत्यतः स्त्रियं पुमांसं च वदन् वदत्युभयरूपत्वादिति यथा व्याख्यायते तथा स्त्रीपुमांसं वदन् वदतीति व्याख्यानं किन्न स्यादित्यत आह– **नचेति** ॥ ४ ॥

यद्वा ननु यथा लौकिकस्त्रीपुरुषवैलक्षण्याभिप्रायेण स्त्रियं पुमांसं च वदन्नपि वदतीति नञोऽनुषङ्गेण व्याख्यायते तथा स्त्रीपुमांसं वदन्नपि न वदति नपुंसकरूपस्यालौकिकत्वादिति किन्न व्याख्यायत इत्यत आह– **नचेत्यादिनाऽनुषज्यत इत्यन्तेन** ॥ ५ ॥

वदन् वदतीत्यत्र अस्त्रीपुमानिति वदन्नपि वदतीति योजनामङ्गीकृत्याप्यविरोधेन व्याचष्टे– **नपुंसके प्रमाणाभावादित्यादिना** ॥ नन्वेवं योजनायां नपुंसकत्वमपि व्यज्ञास्येत । कथमियं योजना भवतीत्यत उक्तम्– **नपुंसक इति** ॥ अप्रामाणिकत्वेनायोग्यार्थस्य प्रतीत्ययोगाल्लौकिकस्त्रीपुंविलक्षणत्वादेवास्त्रीपुमानिति वदन् वदतीति योजना भवत्येवेत्यर्थः। विष्णोर्नपुंसकं रूपं नास्तीत्यत्र सयुक्तिकं प्रमाणमाह– **स्त्रीति** ॥ तस्माद् बिम्बभूतस्य नपुंसकत्वाभावादेव स्वरूपनपुंसका-भावादेव साक्षान्नपुंसकः स्वरूपतो नपुंसकः क्वचिदपि मुक्तिभागीति नोच्यत

---

१. स्त्रीपुंरूपद्वयी- ह.पा.

इत्यर्थः । ननु तत्तदाकारत्वेन हरेः सर्वत्रावस्थानाङ्गीकारान्नपुंसके तादृश-रूपस्याङ्गीकार्यत्वात् कथं तृतीयाकारनिषेध इति चेन्न । सर्वत्र निर्दोषस्य सौन्दर्याविरोधिनो रूपस्याङ्गीकारेण दुष्टभावस्याभावादिति भावः । ननु नपुंसकरूपाभावे कथं नपुंसकशब्दवाच्यत्वमित्यत आह– **नचेति** ।। अनेच्छामारनामक इत्यत्रानकाममार इत्यस्य नामत्वमुक्तम् । तत्र ज्ञापकमाह– **भवतीति** ।। जीवाक्षरेण जीवाहराप्नोतीति वदन्नकाममारो भवतीति पदाभावान्नानकाममारत्वं विधीयते । किन्त्वनकाममार-स्तन्नामको भगवान् जीवाक्षरेण जीवाहराप्नोतीत्येव विधीयते । अन्यथाप्नोतीत्यस्य कर्त्रध्याहारो भवतीति पदस्य च सम्बन्ध इति बहुकल्पनाप्रसङ्ग इति भावः ।

**उपनिषत्-**

**(पुरुषायुः)**

**तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति ।। जीवाक्षरेणैव जीवाहराप्नोति जीवाह्ना जीवाक्षर-मित्यनकाममारः ।**

**भाष्यम्-**

**(वेदद्रष्टा हयास्यः)**

'ऋष ज्ञान इति [१]ह्यस्माद् धातोः सर्वज्ञ एकराट् ।
वेदद्रष्टा परमर्षिर्हयास्यः पुरुषोत्तमः ।
मन्त्राणां प्रथमो द्रष्टा सर्वेषां [२]यत एव तु ।
ऋषिणोक्तमिति प्राहुर्मन्त्रोक्तं ब्राह्मणान्यतः ।

---

१. ह्यद्धा- ह.पा.     २. योऽतः- ह.पा.

तत्प्रसादाद्धि तपसा पश्चान्मन्त्रान् प्रपेदिरे।
ब्रह्माद्या ब्राह्मणं पश्चात् तैर्दृष्टमृषिभिः पृथक्।
मन्त्राश्चोपनिषच्चैव नाकृत्वा सुमहत् तपः।
प्रथमं तद्धयास्येन दृष्टं केनचिदीक्ष्यते।
विना पृथक् तपो दृश्येद् ब्राह्मणं मुनिभिर्यतः।
मन्त्राश्चोपनिषच्चैव ब्राह्मणादुत्तमास्ततः।
तत्राप्युपनिषच्छ्रेष्ठा युक्तावस्थाधिगम्यतः॥' इत्यादि प्रमाणविवेके॥

**टिप्पणी -**

नन्वपौरुषेयेण मन्त्रेणोक्तत्वात् कथं ऋषिणोक्तमित्युच्यते? ऋषिश्च कः? इत्यत आह–**ऋष ज्ञान इति** ॥ ततश्च किमित्यत आह–**मन्त्राणामिति** ॥ अतो भगवतो मन्त्रद्रष्टृत्वाद् ब्राह्मणानि विनियोजकवाक्यानि मन्त्रोक्तमप्यर्थं ऋषिणोक्तमिति प्राहुरित्यन्वयः । प्रथम इत्यस्य एकराट् स्वतन्त्रो द्रष्टेत्यस्य च व्यावर्त्यमाह– **तत्प्रसादादित्यादिना** ॥ ब्राह्मणं पश्चात् तैर्ब्रह्मादिभिर्दृष्टं मन्त्रा उपनिषदश्च ऋषिभिर्मधुच्छन्दप्रभृतिभिः पृथगेकैकदेशतो दृष्टाः । प्रथमं हयास्येन दृष्टं तन्मन्त्रादिकं सुमहत्तपः अकृत केनचिन्नेक्ष्यते । मुनिभिः वेदद्रष्टृभिः सर्वैर्ब्रह्मादिभिर्मन्त्रोपनिषद्दर्शनसाधनतपोपेक्षया पृथक् तपो विना तेनैव तपसा ब्राह्मणं यतोऽदृश्यतातो मन्त्रश्चोपनिषदश्च ब्राह्मणादुत्तमाः । तत्र मन्त्रोपनिषदोर्मध्ये उपनिषच्छ्रेष्ठा कुतः । युक्तावस्थायां ध्यानावस्थायां अधिगम्यत्वादित्यर्थः ।

**भाष्यम्-**

**(दिव्यदेवरथः)**

तेन रथेनाध्यात्मं शरीराख्येनाधिदैवं[1] रथरूपेण । ऋभव इत्यत्र देवानां [2]साधारणं नाम।

---

१. अधिदैवतम्- ह.पा. २. साधारणनाम- ह.पा.

आदित्या वसवो रुद्रा विश्वे ऋभव इत्यपि ।
सर्वदेवसमाख्या च द्वादशाष्टादिकेष्वपि ।। इति शब्दनिर्णये ।।

निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।
अधिष्ठितो रथो दिव्यः सोऽध्यात्मं देहनामकः ।
सम्यग् योगो यदा तस्य मनोवाक्कर्मभिर्भवेत् ।
देहाख्यस्य रथस्यैव तदा नारायणात् प्रभोः ।
विविधं वासवत्त्वात्तु विवस्वन्नामकाच्छुभम् ।
संसारवारकं ज्ञानं दिवोदुहितृनामकम् ।
विष्णुतत्त्वापरोक्षाख्यमहनी द्वे च शोभने ।
ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे ।

**टिप्पणी -**

'अथ देवरथस्तस्य वागुद्भिः' इत्यादौ शरीररथस्य प्रकृतत्वात्तेन रथेनाऽयातमित्युक्ते शरीराख्येनेत्येव प्रतीतेर्यथावद् व्याचष्टे– **तेन रथेनेति** ।। ऋभुपदेन 'ऋभवो नाम तपसा सोमं प्राप्ता सहस्रशः' (४.५.१२) इति भागवतोक्ताः केचन देवा इत्यन्यथाप्रतीतेर्व्याचष्टे– **ऋभव इति** ।। **द्वादशाष्टादिकेष्वपीति** ।। द्वादशादित्येष्वष्टवसुषु एकादशरुद्रेषु दशविश्वेषु सहस्रऋभुष्वपि आदित्यादिसमाख्या वर्तत इत्यर्थः । समग्रं मन्त्रं प्रमाणेन व्याचष्टे–**निर्मित इति** ।। प्राणोऽधितिष्ठति । हे अश्विनौ वां रथमित्युक्त्या प्रतीतं साम्यं निराकर्तुमुक्तम्– **वायुना सह विष्णुनाधिष्ठित इति** ।। दिव्यो रथोऽध्यात्मं देहनामको रथश्च तस्य देहाख्यस्य रथस्य मनसा ध्यानं वाचा स्तवनं कर्मणा कायिकेन नमस्कारादिनेत्येवं मनोवाक्कर्मभिर्योगो यदा भवेदित्यर्थः ।। **विविधमिति** ।। शरीरे द्वासप्ततिसहस्रनाड्यादिषु अधिदैवं चानेकेषु स्थानेषु विविधरूपेण वासयुक्तत्वादित्यर्थः ।। **दिवो दुहितृनामकमिति** ।। द्युशब्दवाच्यमहालक्ष्म्यभिमतवेदद्वारा मनसोत्पन्नत्वादपरोक्षज्ञानं दिवोदुहितृनामकमित्यर्थः । सुदिने इत्यस्य तात्पर्यम्– **शोभने इति** ।।

ननु ज्ञानावस्थामुक्त्यवस्थयोः कथमहःशब्दवाच्यत्वमित्यत उक्तम्– **उभे एवेति** ॥ परे मुख्ये अहनी इति पूर्वोक्ते उभे एव ज्ञानस्याहर्दिनं प्रकाशश्चेति । प्रकाशरूपत्वान्मुक्तेश्च स्वरूपप्रकाशरूपत्वादिति भावः ।

**भाष्यम्-**

**(वायुभारत्योः प्रादुर्भावः)**

जायन्ते देवतास्त्वेषा भारती वायुरेव च ।
जीवन्मुक्तेश्च मुक्तेश्च दाता रूपद्वयी प्रभुः[1] ।
सर्वस्त्रीणामुत्तमत्वाद् द्यौर्नाम श्रीरुदाहृता ।
[2]दुहिताऽस्या भारती तु नित्याहेयस्वरूपतः ।
अहरित्युच्यते वायुर्ज्ञानात्मत्वात् तथैव च ।
[3]अधिदैवे रथेऽप्येते विष्णोर्लक्ष्म्यां प्रजज्ञिरे ।

**(ज्ञानार्थिनः प्रार्थना)**

रथेन तेन देवेशौ विष्णुवायू जगत्पती ।
आयातमिति हैवैतौ प्रार्थयेद् यज्ञकर्मणि ।
[4]अन्यथाऽप्यर्थयेदेतौ ज्ञानेच्छुः पुरुषः सदा ।
[5]जपन् मन्त्रद्वयं नित्यमा तेन निमिषस्तथा ।
रक्षणं वा समीपे स्यान्ममेत्यध्यात्ममेव च ।
हयास्यत्वादश्विनौ तावित्याह परमा श्रुतिः ।
ऐन्द्राग्नेयादिकाश्चैवं सर्वे मन्त्रा हरिं परम् ।
वदन्ति मुख्यतो नान्यं सर्वनामानमच्युतम् ।

---

१. विभुः- ह.पा. २. अहराख्या- ह.पा.
३. अधिदैवरथे- ह.पा. ४. अन्यदा- ह.पा.
५. जपेत्- ह.पा.

**अथवा [१]वायुदेवस्थं पृथक्संस्थं च केशवम्।**

**मन्त्रो द्विवचनो वक्ति तथा बहुवचस्स्वपि॥** इत्याद्यैतरेयसंहितायाम्॥

**टिप्पणी -**

न केवलमभिम्यमानस्योत्पत्तिरपि तु तदभिमानिनामपीत्याह– **जायन्त इति**॥ एषामपरोक्षज्ञानादीनामभिमानिदेवताः रूपद्वयीत्युक्त्या देवता इति बहुवचनं घटितं ज्ञेयम्। सर्वस्त्रीणां मध्ये क्रीडादिगुणैरुत्तमत्वादित्यर्थः॥ **ज्ञानात्मत्वादिति**॥ 'अहर्दिनं प्रकाशश्च' इति वचनादिति भावः। न केवलं भारत्या वायो रूपद्वयस्य चाध्यात्ममभिमन्यमाने उत्पन्ने भूतं भूताभिमानी चेत्युक्तन्यायेन तदभिमानिरूपेणोत्पत्तिः। किन्तु बाह्याभ्यन्तरयज्ञार्थमागमनकालेऽधिदैवरथस्याश्वादिभिर्योगो भारत्यादयो विष्णोर्लक्ष्म्यां जायत इत्यप्यर्थमाह– **अधिदैव इति**॥ तद्रूपेभ्यो विभक्ता एवांशाः अध्यात्ममुत्पद्यन्त अंशिनामधिदैवरथ उत्पाद इति भावः। अन्तिषद्भूतवामव इत्येतद् व्याचष्टे– **रक्षणमिति**॥ **हयास्यत्वाच्चेति**॥ चकारादाशुवानाद् गतेरश्वीति प्रमाणानुसारेणाऽशुगतित्वाच्चेति समुच्चिनोति। अत एव तत्त्वप्रकाशिकायामाशु गती इत्यर्थ उक्तः। न केवलमश्विनोऽयं मन्त्रो भगवत्परः किन्त्वन्येऽपीत्याह– **ऐन्द्रेति**॥ ऐन्द्राग्नेयादिकाः सर्वमन्त्रा मुख्यतः इन्द्रादिनामानं हरिमेव वदन्ति। मुख्यतोऽन्यं न वदन्ति। यथा। ऐन्द्रसानसिंरयिम् अग्निमीळ इत्यादिः। केचिदैन्द्रादिमन्त्रा हरिमेव वदन्ति। नान्यम्। 'न किरिन्द्रत्वदुत्तरो न ज्यायान् अस्ति वृत्रहन् वि मे कर्णा पतयतो विचक्षुः' इत्यादि। तत्र द्विवचनो मन्त्रो वायुदेहस्थं पृथक्संस्थं च केशवं वदति। यथा 'आ तेन यातम्' इत्यादि प्रकृतः। अथवा द्विवचनो मन्त्रः पृथक् रूपद्वयेन संस्थं केशवमेव वदति। यथा 'घर्मा समन्तात् त्रिवृतं व्यापतुस्तयोर्जुष्टिं मातरिश्वा जगाम' इत्यादिः। बहुवचनयुक्तेष्वपि मन्त्रेषु तथा तथैवार्थः। बहुत्वप्रतिपादको मन्त्रोऽपि देवतान्तरगाणि पृथग्रूपाणि

---

१. वायुदेहस्थम्- ह.पा.

च प्रतिपादयति । यथा विश्वेदेवाः शृणुतेत्यादिः । अथवा बहुवचनो मन्त्रः पृथग्रूपेण सन्तं केशवमेव वदति । यथा 'इन्द्रो शता दश' इत्यादिरिति भावः ।

**भाष्यम्-**

**(दिवो दुहिता- अहनी च विष्णोर्जायन्ते)**

**सुखं ददत इति सुदिने। विवस्वतो विष्णोः सकाशाद् दिवोदुहिता अहनी च जायन्ते। अहनी इति द्विवचनेन द्वित्वे सिद्धेऽप्युभे इति वचनमध्यात्माधिदैवयोः[१] उभयोरपि वचनार्थम्।**

**(विष्णुरथस्य वर्णनं, न तु सूर्यरथस्य)**

**नच सूर्यरथोऽत्र वर्ण्यते । नचाहोरात्रे अहनी इत्युच्येते। सूर्यस्याश्विनामाभावात्। सप्ताश्वत्वाच्च तद्रथस्य। चतुरश्वत्वं चात्रोच्यते। 'श्रोत्रे पक्षसी चक्षुषी युक्ते' इत्यध्यात्मसम्बन्धाच्च । नच रात्रौ सुदिनमिति प्रयोगो दृष्टः। असुदिनस्यापि तत एव जातत्वाद् व्यर्थविशेषणता च।**

**टिप्पणी -**

सुदिने इत्यस्याक्षरार्थमाह– **सुखमिति** ।। विवस्वतः सूर्यस्य तद्रथस्य च योगे दिवो द्युलोकस्य दुहिता आलोकः उभे अहनी अहोरात्रसञ्ज्ञे जायेते इत्यपव्याख्यानिरासाय स्वव्याख्यां परिष्करोति–**विवस्वत इति** ।। नन्वहनी इति द्विवचनेन द्वित्वसिद्धेरुभे इति व्यर्थमित्यत आह– **अहनी इतीति** ।। उभयोरुभयविधयोः । अपव्याख्यानं निराह– **नचेति** ।। ज्ञापकाभावादिति भावः । नन्वहनी जायते इत्यहोरात्रजनकत्वं लिङ्गमस्तीत्यत आह– **नचेति** ।। अहश्चाहश्चाहनीत्यहर्द्वयं वाऽहःशब्दस्य दिनपरत्वे दिनद्वयं वोच्यते । नत्वहोरात्रे अहनी इत्युच्येते । 'सरूपाणामेकशेषः' इति सरूपाणामेवैकशेषविधानादिति भावः ।

---

१. ...धिदैवतयोः- ह.पा.

विरूपाणामपि समर्थानामेकशेषो वक्तव्य इति वार्तिकवचनाद् विरूपाणामप्येकशेष इति चेन्न । तत्र ह्यर्थसारूप्यमङ्गीकृत्य शब्दवैरूप्येऽप्येकशेषोऽभ्यनुज्ञातः । वक्रदण्डः कुटिलदण्डश्च वक्रदण्डावित्याद्युदाहरणात् । नच शब्दतोऽर्थतश्च विरूपयोरहोरात्रशब्दयोरेकशेषोऽभिप्रेत इति यत्किञ्चिदेतत् । साधकाभावमुक्त्वा बाधकं चाह– **सूर्यस्येति** ।। तथाचाश्विश्रुतिविरोध इति भावः । नचावरनाम्नामुत्तमपरत्वमस्तीति वाच्यम् । सत्यमेतदिन्द्रान्तेषु । तदवराणां तु विशेषलिङ्गसद्भाव एव स्वावरशब्दवाच्यत्वमन्यथा नेति ऋग्भाष्ये नियमितत्वात् । 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः' (ऋ.भा., श्लो.४७) । इन्द्रवरा विशेषेण लिङ्गेनैव पृथक् पृथक्' (ऋ.भा., श्लो. ५२) इति ।। न चात्र सौरं लिङ्गमस्तीत्युक्तं लिङ्गविरोधं चाह– **सप्तेति** ।। 'सप्त युञ्जन्ति रथमेकचक्रम्' (ऋ. १.१६४.२) इति श्रुतेरिति भावः । नचोत्तरवाक्ये 'एको अश्वो वहति सप्तनामा' इति एक एवाश्वः केवलं सप्तनामेत्युक्तमिति वाच्यम् । एक एवाश्वचेतनः सप्तरूपी सप्तनामा वहतीति तदर्थस्य तत्त्वप्रदीपिकायां व्यवस्थापितत्वेन सप्ताश्वत्वाविरोधादिति । बाधकान्तरमाह– **अध्यात्मेति** ।। श्रोत्रे पक्षसी चक्षुषी युक्ते इत्यश्वानामध्यात्मरथसम्बन्धात् । अत्रोक्तस्य विवस्वतोऽप्यध्यात्मरथसम्बन्धात् सूर्याश्वानां सूर्यस्य चाध्यात्मसम्बन्धाभावान्नायं सौरो रथो नहि देहाख्ये रथे सूर्योऽधिष्ठाता 'प्राणस्तथानुगमात्' (ब्र.सू.१.१.२८) इति सूत्रकृतैव निराकृतत्वात् । उक्तं च भाष्ये– 'विष्णुमेवाऽनयन् देवा विष्णुं भूतिमुपासते । स एव सर्ववेदोक्तस्तद्रथो देह उच्यते ।।' इति । अहःशब्देनाहोरात्रविवक्षायां सुदिन इति रात्रिविशेषणं च स्यात्तच्चायुक्तमित्याह– **नचेति** ।। ननु 'मेघच्छन्नेऽह्नि दुर्दिनम्' इति वचनात्तदतिरिक्तदिनान्तर्गतरात्रि सुदिनमेक्ष्व। महात्मदर्शनादियुक्तं सुदिनमिति व्यवहारात्तदन्तर्गतत्वाद्वा रात्रिः सुदिनमित्यत आह– **असुदिनस्येति** ।।

**भाष्यम्-**

## (जीवन्मुक्तिः मुक्तिश्च सुदिने)

अस्मिन् पक्षे तु लौकिकाहर्व्यावृत्त्यर्थं सुदिने इति युज्यते । जीवन्मुक्तिर्मुक्तिश्च

**हि मुख्ये सुदिने। 'स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत् कामयते तत्तत् सृजते' इति [१]ज्ञानावस्थायां मुक्तौ भोगबाहुल्यकारणत्वात् साऽपि मुक्तिवत् सुदिनम्। नहि मुक्तावाधिक्यार्जनमस्ति। 'न हीयते यत्र गत्वा यत्र गत्वा न वर्धते' इति वचनात् । अतो ज्ञानोत्पत्तिसमनन्तरेव मुक्तौ न पुनरार्जनमस्तीति किञ्चित्कालं ज्ञानित्वेनावस्थानमपि सुदिनमेव। ज्ञानात् पूर्वं तु पतनसंशयादेव न सुदिनम्।**

**टिप्पणी -**

स्वपक्षे वैय्यर्थ्यं परिहरति– **अस्मिन्निति** ।। तदुपपादयति– **जीवन्मुक्तिरिति** ।। ननु मुक्तौ भोगबाहुल्यात् सुदिनत्वमस्तु। जीवन्मुक्तेः कथं तदित्यत आह–**स य इति** ।। उपास्ते परोक्षतो जानाति च। अस्यापरोक्षज्ञानिनः। कथम् ? समुक्तो यद्यत् कामयते तत्सर्वमस्मदात्मनः प्रसादात् कर्म सृजत इत्यर्थः। नन्वसति प्रारब्धे ज्ञानानन्तरमेव मोक्षनियमात् कथं ज्ञानावस्थायाः बोगविशेषहेतुत्वं तदानीन्तनभोगस्य मुक्तावनुष्ठितंसाधनेनैवोपपत्तेरित्यत आह– **नहि मुक्तावित्यादिना** ।। **न पुनरार्जनमस्तीति** ।। पुनरार्जनं नास्तीति हेतोः मुक्तौ भोगविशेषार्थं साधनान्यनुष्ठानायेश्वरेणावशेषितप्रारब्धकर्मभोगविशेषणाधिकार्जनार्थं 'ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः। ब्रह्मणस्त्वेव तावत्त्वं पञ्चाशद् ब्रह्मणस्तथा ।। रुद्रस्य विंशदेव स्यादिन्द्रस्यार्कादिके दश' (ब्र.सू., अनु. ४.१.१९) इत्याद्युक्तदिशाऽवरक्रमेण किञ्चित् किञ्चित्कालं ज्ञानित्वेनावस्थानमिति सुदिनमेवान्त एकगुणोपासकानां ज्ञानदेहापगमनानन्तरमेव मुच्यमानानामपि तद्देह एव ज्ञानोदयानन्तरं किञ्चित्कालावस्थानमपि सुदिनमेवेति भावः। नन्वेवं तर्हि ज्ञानात्पूर्वावस्थाया अपि मुक्तिसाधनानुष्ठानहेतुत्वात् सुदिनत्वं स्यादित्यत आह– **अज्ञानादिति** ।। जिज्ञासोरुत्तमद्रोहादिना पुनःपतनसंशयेन ज्ञाननिश्चयान्न सुदिनत्वम्। अपरोक्षज्ञानिनस्तु तदवस्थावधृतेर्ब्रह्मसंस्थोऽमृतत्वमेत्येवेत्यादि सूत्रश्रुतिबलेन

---

१. ज्ञान्यवस्थायाम् - ह.पा.

मोक्षनियमाद् यथायोग्यमानन्दोत्कर्षापादकसाधनानुष्ठाननियमाच्च ज्ञानावस्थायाः सुदिनत्वमिति ।

**उपनिषत्-**

**(अथ देहो देवरथः)**

**अथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः सङ्ग्रहीता तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा ॥ आ तेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेति ॥**

**भाष्यम्-**

**(न चाश्विरथोऽत्र वर्ण्यते)**

नचाश्विरथो वर्ण्यते । नह्यश्विरथयोगादहनी जायेते । एकरासभयुक्तो हि तद्रथः । 'तद्रासभो नासत्या सहस्रम्' इत्यादिवचनात् । नच विवस्वच्छब्दोऽश्विनोर्विद्यते । 'यो देवानां नामधा एक एव' इति विष्णोः सर्वनामानि प्रसिद्धानि च । 'युजो युक्ता अभि यत् संवहन्ति' इत्यादिना तस्यैव प्रस्तावाच्च । अतो विष्णुरेव मुख्यतः सर्वनामोक्त इति सिद्धम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके तृतीयोऽध्यायः ॥**

**टिप्पणी -**

ननूक्तानुपपत्तिबलात् सूर्ये रथाङ्गीकारो न युक्तश्चेत् मा भूतदश्विरथो वर्ण्यत इति किन्न स्यादित्यत आह– **नचेत्यादिना** ॥ **तद्रासभ इति** ॥ 'तद्रासभो नासत्या सहस्रमाजायमस्य प्रधाने जिगाय' इति प्रथमाष्टकाष्टमाध्यायवचनादित्यर्थः ॥ **नचेति** ॥ स्वोत्तमवाचिशब्दस्य तत्र सर्वथानवकाशादिति भावः ।

ननु भवत्पक्षे प्राणाश्विविवस्वच्छब्दानां त्रयाणामप्यनुपपत्तिरित्यत आह– **यो देवानामिति** ।। न केवलं यो देवानामिति निगमनबलादत्रत्यप्राणादिशब्दवाच्यत्वं किन्तूपक्रमाच्चेत्याह– **युज इति** ।। सूर्यादयो देवा यत्स्यन्दनं वहन्ति तत् सत्यस्य सत्यमिति विष्णोः तद्रथस्य चोपक्रान्तत्वाच्चेत्यर्थः । अध्यायान्ते द्विरुक्तेरभिप्राय-वर्णनमुख्येनाध्यायार्थं निगमयति– **अत इति** ।। सर्वनामा विष्णुरेव बृहतीसहस्रादावुक्त इति सिद्धमित्यर्थः ।। ८ ।।

**खण्डार्थः -**

पूर्वमुक्तार्थे मन्त्रोदाहरणार्थमयं खण्ड इति सङ्गतिरुपनिषद्येव स्पष्टा । तत्र यो ह वै यज्ञे यज्ञमिति खण्डे गायत्र्युष्णिग्बृहतीत्रिष्टुप् द्विपदेत्यनिरुद्धादिनारायण्यन्तानि स्त्रीरूपाण्युक्तानि नारायणादिनामकानि पुरुषरूपाणि च विवक्षितानि । तेषां चान्यतो रतिर्नास्तीति स्वरमणत्वं चातीतखण्डे निरूपितम् । तत्र मन्त्र उदाह्रियते– **यदक्षरमिति** ।। यन्नारायणादिरूपेण पञ्चविधमक्षरं नाशरहितं छन्दःप्रतिपाद्यत्वाच्चाक्षरं परं ब्रह्म तत् स्वस्मिन्नेव स्त्रीरूपेण नारायण्यादिनामकेन समेति मिथुनीभवति । स्त्रीपुंसभावेनार्धनारीपुमात्मना वा समेति । तस्य विभव उच्यते– **युज इति** ।। युजः स्त्रीपुंरूपेण संयुक्ताः भार्यासहिताः सूर्यादयो देवा अश्वरूपेण रथे युक्ताः सन्तः यन्नारायणाख्यं परं ब्रह्माभिसंवहन्ति । तदेतत् सत्यस्य सत्यं वायोरपि सत्यताप्रदं नारायणाख्यं परं ब्रह्म प्रागुक्तरीत्या यत्र यस्मिन् स्वरूपेण स्त्रीरूपेणानुयुज्यते । तत्र तस्मिन्नेव नारायणे ते सर्वे देवाः मुक्ताः सन्तः एकमेकत्वं स्थानैक्यं वा भवन्ति प्राप्नुवन्ति । सायुज्यादिलक्षणं मेलनं वा गावः सायं गोष्ठ एकीभवन्ति ब्राह्मणा राजकुल एकीभवन्तीतिवत् । यद्वैकत्वं संश्लेषविश्लेषलक्षणं सायुज्यं प्राप्नुवन्तीत्यर्थः । एकत्वमप्युत दीयमानं न गृह्णन्तीति प्रयोगात् । सायुज्यादिलक्षणमेलनं प्राप्नुवन्तीत्यर्थः । यद्वा यत्र वैकुण्ठादिदेशविशेषे सत्यस्य सत्यमक्षरं यत्र स्वात्मन्यर्धनारीपुमाकारेण युज्यते । तत्र देशे मुक्ताः सर्वे देवाः स्वभार्याभिरर्धनारीपुमात्मनैकीभवन्ति

संयुक्ता भवन्ति । एकीभूय चैकं भवन्ति एकमनस्कास्तमेवोपासीना भवन्तीत्यर्थः । महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु विराजतीत्यत्र श्वेतद्वीपादिस्थाद्भगवतो महिदासस्य प्राक् विश्लेषो विश्लिष्टस्य च स्वयमेव स्त्रीपुंरूपेण रमणं चोक्तम् । तत्र मन्त्रो– **यदक्षरादिति** ।। यस्मादक्षरान्नारायणाख्यात् मूलरूपादक्षरमवताररूपं युक्तम् । स्त्रीपुमात्मना मिलितमेवैत्यागच्छति । तस्य वाहनभूता देवास्तेषां चालौकिकं फलं भवतीति विभव उच्यते– **युज इति** ।। स वा एषः परमो विकार इत्यादिना यत्सर्वशब्दवाच्यत्वं भगवत उक्तम्, तत्र मन्त्र उदाह्रियते– **यद्वाच इति** ।। वाच अकारस्य यदोमिति ओङ्काराख्यो विकारः यच्च नेति नकाराख्यो विकारः । यद्वाचो वाक्समूहस्य मध्ये यदोमिति पदमङ्गीकारवाचीति यावत् । यच्च नेति पदं प्रतिषेधार्थमिति सुधोक्तं व्याख्यानं बोध्यम् । यच्चास्याः व्याख्यानभूतमर्थतः कठिनं शब्दरूपं यदु यदेव चोल्बणिष्णु श्रवणाप्रियं शब्दरूपम् । उपलक्षणमेतत् । मितममितमित्यादिकं तत्सर्वं कवयो ज्ञानिनो देवा वियूय विचार्य नामायतानि यकारादिनामार्थभूतभगवन्माहात्म्यान्यन्वविन्दन् । स्वयोग्यतानुसारेण ज्ञातवन्तः । श्रुते तस्मिन् ज्ञाने परिपक्वे सति अधि अधिकं समतृप्यन् कृतकृत्या मुक्ता अभूवन् । तथा चोक्तमनुव्याख्याने 'नामवित् कृतकृत्यता' इति । यस्मिन् विष्णौ विष्णुविषये नामानि ज्ञात्वा तस्मिन् ज्ञाने श्रुते पक्वेऽधिसमतृप्यन् तत्र विष्णौ देवाः सर्वयुजो मनोवाक्कायकर्मभिर्युक्ता भवन्ति । नान्यत्र साधनफलयोरैक्यरूप्यादिति भावः । एवंज्ञानिनः फलमुच्यते– **तेनेति** ।। एवं विद्वांस्तेन ब्रह्मणा तदनुग्रहेण पाप्मानमनिष्टपुण्यं चाप्रारब्धमपहत्य निरस्य प्रारब्धं च भोगोपमर्दाभ्यां क्षपयित्वा स्वर्गं लोकं विष्णुलोकमप्येति प्राप्नोति । यदुक्तं नारायणादिरूपस्य महिदासाद्यवताररूपस्य च स्त्रीपुमुभयात्मकमेव स्वरूपं, न तु व्यवस्थितं स्त्रीत्वं पुंस्त्वं चेति तत्र मन्त्र उदाह्रियते– **नैनमिति** ।। एनं स्त्रीपुंरूपिणं विष्णुं प्रमाणहीनया केवलवाचा स्त्रियं केवलस्त्रियं ब्रुवन्न वदति । एनमस्त्रीपुमांसं ब्रुवन्न वदति विष्णोः स्त्रीपुंरूपयोः सद्भावात् ।

यद्वैनमस्त्रीपुमानिति ब्रुवन्न वदतीतीतिशब्दाध्याहारेण योज्यम् । अस्मिन् पक्षे विभक्तिव्यत्ययः । एनं केवलपुमांसमेव ब्रुवन्नपि न वदति । यः कश्चन लोकविलक्षणो ज्ञानी पुरुष एनं स्त्रियं पुमांसं च वदन् वर्तते स एव वदति । लौकिकस्त्रीपुंविलक्षणत्वादस्त्रीपुमानिति वदन्नपि वदति । स्त्रीरूपः पुंरूपश्चेति वदन्नपि न वदति । भगवत अप्रसिद्धत्वेन साकल्येन वचनागोचरत्वादिति भावः । ननु मितममितमित्यादिना स्ववाक्येन यद्वा च ओमिति मन्त्रेणापि सर्वे शब्दा भगवद्वाचका इत्युक्तम् । कथमेवं सत्यकारस्यैव स वा एष वाचः परमो विकारः यद्वा च ओमित्यादौ वात्त्वोक्तिः उच्यते तेनार्थ इति वागिति निर्वचनस्येतरतुल्यत्वादित्यत अकारो विशेषेण भगवद्वाचक इत्युच्यते– **अ इति ब्रह्मेति** ।। अ इत्यनेन ब्रह्म पूर्णम् अपूर्णेभ्यः चित्प्रकृतिजीवजडेभ्योऽन्यत्पूर्तिविरोधिदोषहीनं सकलदोषविरुद्धगुणपूर्णं च वस्तूच्यते । किं तदित्यतोऽहमेवेत्युच्यते महिदासेन– **तत्रेति** ।। इति यस्माद् 'अ' इत्यनेन दोष्यन्यद्दोषहीनं दोषविरुद्धगुणपूर्णं वस्तूच्यते तस्मात् तत्राकारवाच्यत्वे ज्ञेयान्यत्वाद् हेयदोषवर्जितत्वाद्धेयविरोधिगुणपूर्णत्वादहंनामाहमेवाऽगतमागत इत्यर्थः । बृहतीसहस्रनिष्ठविद्यान्तरोपदेशमुखेन यदक्षरादक्षरमेति युक्तमित्युदाहृतमन्त्रव्याख्यानार्थं च पुनः परामृश्यते– **तद्वा इदमिति** । यत्तदिदं बृहतीसहस्रं सम्पन्नं तस्यैतस्यैवं सम्पन्नस्य बृहतीसहस्रस्याक्षराणां पुरुषोच्चार्यतया तदनुबन्धिनां व्यञ्जनाक्षराणां तद्गतानां स्त्रीरूपाणां च षट्त्रिंशतं सहस्राणि भवन्ति । तथा स्वराक्षराणां तद्गतानां पुंरूपाणां च षट्त्रिंशतं सहस्राणि भवन्ति । पुरुषायुषोऽह्नां अहोरात्रात्मकदिनानां अह्नां रात्रीणां च पृथक् तावन्ति षट्त्रिंशत्सङ्ख्याकानि सहस्राणि भवन्ति । तथा पुरुषायुषोऽह्नामहोरात्राभिमानिसूर्यगतानां पुंरूपाणां स्त्रीरूपाणां च प्रत्येकं षट्त्रिंशत्सहस्राणि भवन्तीत्यर्थः । ततश्च किमित्यत उच्यते– **जीवेति** ।। अनकाममारः । अनस्य प्राणस्योत्पत्तिकामः सन् मायां रमायां स्थितायां ज्ञानरूपायां स्वस्त्रीतनौ रमत इति अनकाममारनामको भगवान् विष्णुः जीवाक्षरेण जीवैः

पुरुषगतैरक्षरैः बृहत्युक्थव्यञ्जनाक्षरगतैः स्त्रीरूपैः जीवाहःसूर्याहर्गतानि पुंरूपाण्याप्नोति इति । एवंप्रकारेण जीवाक्षरेण पुरुषगतैः स्वराक्षरगतैः पुंरूपैः जीवाहःसूर्यरात्रि-तदभिमतरात्र्याख्यदिनावयवगतानि स्त्रीरूपाण्याप्नोति । कदाचिज्जीवाह्ना सूर्याहर्गतैरेव पुंरूपैर्जीवाक्षरं पुरुषव्यञ्जनाक्षरगतस्त्रीरूपाण्याप्नोति । तथा जीवाह्ना सूर्यतदभिमत-दिनावयवरात्र्यवस्थितैर्जीवाक्षरं पुरुषगतस्वराक्षरगतपुरुषरूपाण्याप्नोति । यद्वा जीवाक्षरेण जीवाक्षरमाप्नोति । जीवाह्ना जीवाहरित्यन्वयः । जीवाक्षरेण पुरुष-स्वराक्षरगतपुंरूपैर्जीवाक्षरं पुरुषव्यञ्जनाक्षरगतस्त्रीरूपाण्याप्नोति । तथा जीवाह्ना सूर्याहर्गतपुरुषरूपैर्जीवाहःसूर्यरात्रिगतस्त्रीरूपाण्याप्नोतीत्यर्थः । अर्थान्तराणि तु भाष्यव्याख्यानदशायामेव स्पष्टयिष्यामः । यन्मन्त्रे युजो युक्ता अभि यत् संवहन्तीति देवस्य रथं वहन्तीत्युक्तं तत्प्रकार उच्यते–**अथेति** ।। अथ देवस्य वायोर्विष्णोश्चाध्यात्ममधिदैवं च रथ उच्यते । तस्याध्यात्मं देहरथस्य वागिन्द्रियाभि-मानिन्युमाऽधिदैवं विष्णुरथस्य नागाकारोद्धिरुद्धरणरज्जुरूपा । श्रोत्रे दक्षवामश्रोत्र-गतं चन्द्रतद्भार्ये पक्षसी पार्श्वयोर्नियुक्ते । अन्यत्रोभावश्वरूपौ पार्श्वयोर्नियुक्तौ । चक्षुषी सूर्यतद्भार्ये युक्ते अग्रतो नियुक्ते तद्रथगतिहेतुभूतौ । अन्यत्र त्वग्रतो नियुक्ताश्वौ । मनस्तदभिमानी रुद्र उभयत्र सङ्गृहीता सारथिः । तदुभयविधस्यन्दनमयं प्रकृष्टानन्दरूपत्वात् प्राणो वायुर्विष्णुश्चाधितिष्ठति । यद्वा स चासावयं चेति तदयम् । लिङ्गव्यत्ययो वा सोऽयम् । तदुक्तमृषिणा सर्वज्ञेन हयग्रीवेण ।

[१]'आ तेन.... विवस्वतः' इति प्रथममन्त्रस्यायमर्थः । हे अश्विनावाशु वानाद्गमनाद्धयास्यत्वाच्चाश्विनामानौ विष्णुवायू । मनसो जवीयसा मनसोऽ-प्यतिवेगवताऽधिदैवं तेन प्रसिद्धेन रथेन यातम् । अध्यात्मं मनसोऽपि जवीयसा कार्यसाधने पटुना तेन शरीराख्येन रथेन यातम् । आगत्य सन्निधाने अधिष्ठानतया शरीरस्य कारणत्वात् तृतीया । शरीरे सन्निहितौ भवतम् इति यावत् ।

---

१.अयमत्र मन्त्रपाठः-आ तेन यातं मनसो जवीयसा रथं यं वामृभवश्चक्रुरश्विना ।
तस्य योगे दुहिता जायते दिव उभे अहनी सुदिने विवस्वतः ।।

एतेनास्मदादिदेहस्य कथं मनसो जवीयस्त्वं कथं च देवागमनकारणत्वमिति निरस्तम् । कार्यसाधने मनसः पटीयस्त्वस्य जवीयःशब्देन विवक्षितत्वात् । आगमनकार्यसन्निधानं प्रति शरीरस्याधिष्ठानतया कारणत्वेन रथेनायातमित्युक्तिसम्भवाच्च । तदुक्तं तत्त्वप्रकाशिकायाम् । मनसो जवीयसा पटुना । तेन शरीराख्येन रथेनाऽयातं शरीरे सन्निहितौ भवतमिति । केचित्तु शरीराभिमानिदेवताशरीरविवक्षयेयमुक्तिरित्याहुः । रथस्यातिशय उच्यते । ऋभवः सर्वे देवाः । यं द्विविधं रथम् । वां युवयोरर्थमेव चक्रुः । यस्य च रथस्याधिदैवं वैष्णवरथस्य योगेऽश्वादिभिर्योगे सति विवस्वतो विविधं वासवत्त्वाद् विवस्वन्नामकान्नारायणाद्दिवो दुहिता महालक्ष्मीपुत्री भारती जायते । सुदिने सुखप्रदे । उभे अहनी अहेयत्वाज्ज्ञानात्मकत्वाच्चाहर्नामके । वायोर्द्वे रूपे च जायेते । यस्याध्यात्मं देहाख्यरथस्य मनोवाक्कर्मभिर्योगे जाते सति विवस्वन्नामकाद्विष्णोर्दिवो दुहिता रमायाः पुत्री सरस्वती । तदभिमन्यमानं भगवदपरोक्षज्ञानं जायते । उभे उभयविधे सुदिने सुखप्रदे । वाय्वभिमते जीवन्मुक्तिमुक्त्यवस्थालक्षणे अहनी च जायेते इत्यर्थः।

'निमिष.....वामवः' इति द्वितीयमन्त्रस्यायमर्थः । अश्विनामानौ विष्णुवायू निमिषश्चिच्चक्षुर्निमेषादपि । जवीयसा रथेन द्विविधेनाऽयातम् । वां युवयोः सकाशाद् यदवनं तदस्मदन्तिके भवत्विति । देहरथस्य निमेषादपि जवीयस्त्वं नाम चक्षुर्निमेषकालादत्यल्पेऽपि काले साधनौन्मुख्यं बोध्यम् । शरीरे सन्निधिं कृत्वाऽत्यल्पमपि कालं सफलं कुरुतमिति यावत् ॥ ८ ॥

**॥ इति श्रीमद्विट्ठलाचार्यपुत्रेण श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमन्महैतरेयभाष्यार्थरत्नमालायां द्वितीयप्रघट्टके तृतीयोऽध्यायः ॥**

---

१. अयमत्र मन्त्रपाठः- निमिषश्चिज्जवीयसा
रथेनायातमश्विना अन्तिषद् भूतु वामवः ॥

## ।। अथ द्वितीयप्रघट्टके चतुर्थोऽध्यायः ।।

उपनिषत्-

(प्रळये श्रीहरिरेक एवासीत्)

आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत् ।

भाष्यम्-

एको नारायणस्त्वासीत् प्रळये रमया सह ।
नित्याततगुणत्वात् स आत्मेति श्रुतिषूदितः ।
इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा ।
अग्र्य एव समस्तेशस्तद्वशत्वाद् रमाऽपि सा ।
विद्यमानाऽपि नाग्रस्था गुणैरूना ततो यतः ।
न ब्रह्मा न शिवश्चाऽसीन्नैवान्यच्च मिषत् क्वचित् ।
सुप्तास्तत्र यतो जीवाः सर्वे ब्रह्मशिवादिकाः ।
असुप्ता श्रीश्च मुक्ताश्च स्वतन्त्रोन्मेषवर्जनात् ।
अनुन्मेषा एव तेऽपि स्वतन्त्रोन्मेष एकराट् ।
नारायणो नचान्योऽस्ति पूर्णोन्मीलद्गुणात्मकः ।
पराधीनेन वित्तेन भुञ्जन्नपि हि भिक्षुकः ।
वित्तवानिति नैवोक्तस्तथा श्रीर्मुक्तिगा अपि ।
मिषन्तोऽप्यन्यतन्त्रत्वान्न मिषन्तः कथञ्चन ।
सर्वदाऽप्येक एवायं स्वतन्त्रो नापरः क्वचित् ।
कालाग्र्यत्वं वक्तुमस्य प्रळये स्थितिरुच्यते ।

टिप्पणी -

अत्राग्रेर्विनिर्धूतोपाध्यवस्थायां प्रलये आत्मा जीव इदं ब्रह्मैवासीत्तदन्यन्मिषच्चेतनं

नासीदन्यत्किञ्चन स्वरूपत एव नासीदित्याद्यपव्याख्यानिरासाय प्रमाणेन व्याचष्टे– **एक इत्यादिना** ।। तुशब्दोऽवधारणे । एक एवेत्यन्वयः । इदमस्येति षष्ठ्यर्थे द्वितीया न प्रथमा येनैक्यं स्यादिति भावेनाग्र इत्यस्य तात्पर्यम्–**प्रलय इति** ।। यथा ब्रह्मादीनां देहनाशस्तथा न रमाया इति भावेनोक्तम्–**रमया सहेति** ।। यद्वा सर्वजगन्नियामकरूपैरेकीभूतया मूलरूपया रमया सहेत्यनेन तस्या अपि लयं सूचयति । यथोक्तं– 'हरेरत्यन्तसामीप्यं लयो लक्ष्म्याः प्रकीर्तितः । सुप्तिस्तु प्रकृतेः प्रोक्ता अतीव भगवद्रतिः ।। अनास्थाऽन्यत्र च प्रोक्ता' इति । नित्यगुणत्वादाततगुणत्वादात्मा । तनु विस्तार इति धातोराततत्वादात्मा । योग्यतयाऽततेर्गुणविशेष्यतयाऽन्वीयन्ते । गुणा नाम ततिश्च कालतः सङ्ख्यादिना चेति भावः । विभक्तिविपरिणामं विना योजयति– **इदमिति** ।। समस्तेश इत्यात्मशब्दः स्वामित्वार्थतयाऽपि व्याख्यातः । प्राचीनयोजनायां कालाग्र्यत्वं वक्तुमस्य प्रलयस्थितिरुक्ता गुणाग्र्यत्वमात्मपदेनोक्त मधुना तूभयमपीदमपेक्ष्याग्र इत्यनेन लब्धम् । रमामपेक्ष्य कालतोऽग्र्यत्वं कथमित्येतच्छङ्कापरिहारकं नान्यत्किञ्चनेत्यंशं व्याचष्टे– **रमापि सा विद्यमानापि नाग्र्यस्थेति** ।। आद्योऽपिशब्दो न केवलं ब्रह्मादिः किन्तु रमापीति समुच्चये, द्वितीयो नौचित्यद्योतकः । कुतो नाग्र्येत्यतः तत्र हेतुतयात्मपदलब्धमुक्तम्– **तद्वशत्वा-दिति** ।। तद्वशत्वोपपादकस्य न मिषदित्यस्य तात्पर्यम्– **गुणैरिति** ।। ब्रह्मादीनां कालाग्र्यत्वाभावोपपादकं नान्यत्किञ्चनेति अंशं व्याचष्टे– **न ब्रह्मासीन्न शिव आसीन्नान्यच्चासीदिति** ।। 'हिरण्यगर्भः समवर्तताग्रे' 'एको रुद्रो न द्वितीयाय तस्थै' (अथर्व. २.७) इत्यादिश्रुत्याऽऽपातप्रतीतार्थमनुसृत्य केचिद् ब्रह्मशर्वयोः प्रलयावस्थानमाहुः । तन्निरासाय पृथक् क्रियासम्बन्धोक्तिः । कथं नासीत् स्वरूपस्य नित्यत्वादित्यत आह– **मिषदिति** ।। नेत्यनुवर्तते । ब्रह्मा वायुः प्रलये वृत्तिरूपज्ञानेनैव प्रतिभातपरावरोऽपि किञ्चन कदाचन भगवदीक्षणक्षणे क्वचिद् विषयविशेषेन निमिषन्न जाग्रद्वर्तते । शिवोऽन्यच्च किञ्चन किमपि क्वचिदपि न निमिषदित्यर्थः । तदुपपाद-यति–**सुप्ता इति** ।। अत्र विरोधः स्पष्टं विरोधोद्धारेऽस्माभिरुद्धृतोऽनुसन्धेयः ।

श्रियो मुक्तानां च सुप्त्यभावात् कालाग्र्यत्वमाशङ्क्य तत्परिहारत्वेन नान्यत्किञ्चन मिषदित्येतद् व्याचष्टे– **असुप्ता इति** ।। यद् रमादिसर्वगुणाग्र्यत्वमुक्तं तत्र हेतुतयापि नान्यत्किञ्चन मिषदित्येतद् व्याचष्टे– **नचान्य इति** ।। स्पष्टीकरिष्यति चैतत् । उन्मिषतामपि रमासहितमुक्तानां पराधीनत्वेनानुन्मेषणमुक्तं तद् दृष्टान्तेनाऽऽह– **पराधीनेनेति** ।। सर्वदा मिषन्तोऽपीत्यन्वयः । नन्विदं सर्वं जगदपेक्ष्याऽऽत्मैव कालतो गुणतश्चाग्र्य इत्युक्त्यैव कालाग्र्यत्वस्य लाभाद-स्याग्र आसीदिति किमर्थं प्रलये स्थितिरुच्यत इत्यत आह– **कालेति** ।।

**उपनिषत्-**

**(नारायणकृता सृष्टिः)**

**स ईक्षतेमान् लोकान्नु सृजा इति स इमान् लोकानसृजताम्भो मरीचीर्मरमापोऽदोऽम्भः परेणदिवं द्यौः प्रतिष्ठाऽन्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात् ता आपः स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति ।। सोऽद्भ्य एव पुरुषः समुद्धृत्यामूर्च्छयत् ।**

**भाष्यम्-**

स ऐच्छद् भगवान् विष्णुः स्रष्टुं लोकाभिमानिनः ।
लोकाभिधानवद्देवान् जडलोकांश्च शाश्वतः ।
स लोकेभ्यः पूर्वतनानबाख्यान् महदादिकान् ।
ब्रह्मशर्वादिकान् सृष्ट्वा जडैः सह जनार्दनः ।
दिवमाकाशमुर्वीं च ससृजेऽथ द्विसप्तकान् ।
इति सृष्ट्वा स लोकांस्तु पुनस्तानेव लोकपान् ।
अण्डान्तः स्रष्टुमैच्छच्च तेषां पूज्यत्वसिद्धये ।
अम्नामकेभ्यस्तेभ्यः स पूर्वसृष्टेभ्य एव तु ।

**सर्वजीवाधिकत्वात्तु ब्रह्माणं पुरुषाभिधम्।**
**अंशेनोद्धृत्य रुद्राद्यैः सह चैनमयोजयत्।**
**तथैवाचेतनानां च भागानुद्धृत्य पिण्डवत्।**
**चेतनाचेतनं राशिमेकस्थं विदधे प्रभुः।**

**टिप्पणी -**

वक्तुमुपपादयितुम् स ईक्षतेत्यादि व्याचष्टे– **स ऐच्छदिति** ।। लोकनामवत्त्वे हेतुः– **लोकाभिमानिन इति** ।। स इमान् लोकानसृजतेत्यत्र प्रथममपोऽसृजत् । सृष्ट्वा चाम्भ आदीन्यसृजदित्यर्थमभिप्रेत्य व्याचष्टे– **स लोकेभ्य इत्यादिना** ।। या अधस्तादित्यस्य तात्पर्यम्– **लोकेभ्यः पूर्वतनानिति** ।। लोकत्रयकथनमुपलक्षण-मिति भावेन दिवमाकाशमुर्वीं चेत्यादि द्विसप्तकानित्युक्तम् । स ईक्षते मेऽनुलोका इत्यादि व्याचष्टे– **इति सृष्ट्वेति** ।। इति पूर्वोक्तप्रकारेण ब्रह्माण्डान्तर्लोकान् सृष्ट्वा पुनस्तेषां अधिदैवं प्रसिद्धयज्ञादिनाऽध्यात्मं प्राणाग्निहोत्रादिना पूज्यत्वसिद्धये तानेव लोकान् स्रष्टुमैच्छत् । सोऽद्भ्य एव पुरुष समुद्धृत्यामूर्च्छयदित्येतद् व्याचष्टे– **अम्नामकेभ्य इति** ।। अत्र योजना । पूर्वसृष्टेभ्योऽम्नामकेभ्यस्तेभ्यश्चेतनेभ्यो रुद्रादिचेतनानामंशानुद्धृत्य ब्रह्माणं चांशेनोद्धृत्य रुद्राद्यैरप्रधानैः सह समयोज-यत्तथैवाचेतनानां च भागानुद्धृत्य चेतनाचेतनराशिं पिण्डवदेकस्थं विमिश्रीभावेनावस्थितं विदधे । ततश्च पिण्डवत्पिण्डाकारं सर्वाधिकत्वात् पूर्णत्वात् पुरुषाभिधं ब्रह्माणमसृजदिति ।

**उपनिषत्-**

**(ब्रह्मशरीराद् देवतोत्पत्तिः)**

**तमभ्यतपत् तस्याभितप्तस्य मुखं निरभिद्यत यथाऽण्डं मुखाद् वाग् वाचोऽग्निर्नासिके निरभिद्येताम्।। नासिकाभ्यां प्राणः प्राणाद् वायुरक्षिणी निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्**

दिशस्त्वङ् निरभिद्यत त्वचो लोमानि लोमभ्य ओषधि-वनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद् रेतो रेतस आपः ॥

भाष्यम्-

पुनरैच्छज्जगन्नाथस्तस्याङ्गोत्पत्तिमच्युतः ।
अण्डवन्मुख्यमस्यासीत् प्रथमं तु शिरोऽभिधम् ।
भिन्नमास्यं पुनस्तस्य विष्णोरेवेच्छया प्रभुः ।
तत्र वाङ्नामकं रूपं वह्नेरासीत् पुरातनम् ।
तस्यैवाथ द्वितीयं च यदग्निरिति गीयते ।
तथैव नासिकातोऽभून्मुख्यवायोः सुतो मरुत् ।
प्राणो वायुरिति द्वेधा चक्षुषोऽभूत् तथा रविः ।
द्विरूप एव कर्णाभ्यां मित्रधर्माप्पवित्तपाः ।
दिग्देवता द्विरूपेण बभूवुः सर्व एव च ।
हृदयाद् गरुडानन्तशिवचन्द्राः पृथक् पृथक् ।
मनोबुद्ध्यभिमानास्ते तन्नामानश्च जज्ञिरे ।
त्वचश्च रोमनामानो वृक्षनामान एव च ।
द्विविधाः पारिजाताद्या बभूवुर्ब्रह्मदेहतः ।
हस्ताभ्यां द्विविधः शक्रः पद्भ्यां तत्सूनुरेव च ।
यज्ञस्त्वजनि पायोश्च यमो निर्ऋतिरेव च ।
रेतोऽम्नामा द्विरूपस्तु शिश्न एव च गुह्यतः ।
अपानो मृत्युरिति च मुख्यो नाभेश्च(स्तु) मारुतः ॥

**टिप्पणी -**

तमभ्यतपदित्येतद् व्याचष्टे– **पुनरिति** ।। स्यादित्यालोचनान्नान्यत्तपो विष्णोः कदाचनेति वचनादत-पदित्यस्यैच्छदिति व्याख्यानम् । मुखं निरभिद्यत यथाण्डमित्येतद् व्याचष्टे– **अण्डवदिति** ।। मुखं निरभिद्यतेत्येतत् प्रकारान्तरेण व्याचष्टे– **भिन्न-मिति** ।। मुखाद् वागित्यस्य तात्पर्यम्– **तत्र वाङ्नामकमिति** ।। वाचः सृष्ट्यनन्तरं अग्निनामकमधिदैवं रूपमुत्पन्नमिति भावेन पुरातनं वाङ्नामकं रूपं यदग्निरिति गीयते तद् द्वितीयं रूपमित्युक्तम् । नासिकाभ्यां घ्राण इत्यादि व्याचष्टे– **तथै-वेति** ।। अत्रापि नासिकापदेन गोलकमिन्द्रियं तद्गतः श्वासादिरूपः प्राणवायुश्च गृह्यते । अक्षिभ्यामित्यस्यार्थः–**चक्षुष इति** ।। चक्षुरादित्य इति द्विरूपः । आप्योऽबभिमानी वरुणः द्विरूपेण श्रोत्रदिङ्नामकद्विरूपेण । हृदयान्मनो मनसश्चन्द्रमाश्चेत्यस्यार्थः– **हृदयादिति** ।। वैदिकं गरुडोऽप्यैन्द्रो यज्ञादिविषयं मन इत्युक्तरीत्या पृथक् पृथङ्मनोबुद्ध्यभिमानिनः । तन्नामानोऽध्यात्मं मनोनामानोऽधि-दैवं गरुडादिनामानः । एतेन चन्द्रग्रहणमुपलक्षमित्युक्तं भवति । त्वचोऽध्यात्मं लोमाभिमानित्वाल्लोमनामानः अधिदैवं देववृक्षरूपत्वात् पारिजातमन्दरादिवृक्षनामानः कल्पलताद्योषधिनामानश्चेति द्विविधा इत्यर्थः । प्राक् छिन्नग्रहणं पाणिपाद-पायूपलक्षणमित्यभिप्रेत्य व्याचष्टे– **हस्ताभ्यामित्यादिना** ।। द्विविधो यज्ञ इति च सम्बद्ध्यते । यज्ञ इत्युपलक्षणं शम्भुश्चेति ग्राह्यम् । गीतातात्पर्ये यज्ञशम्भुशचीसुता इत्युभयोः पाददेवत्वोक्तेः यमो निर्ऋतिरेव च द्विरूपाविति च ग्राह्यम् । शिश्नाद् रेत आपश्चेत्यस्यार्थः– **रेतोऽम्नामेति** ।। रेतोऽम्नमा चेत्यर्थः । मुख्यो मारुतो मुख्यवायुः ।। १-२१ ।।

**खण्डार्थः -**

ॐ 'एष पन्थाः' इत्यादौ वासुदेवादिचतुर्मूर्तितया प्रकृतस्य नारायणस्य प्रागुक्तसर्वशब्दवाच्यत्वेन लब्धगुणपूर्तिप्रकारो निरूप्यतेऽस्मिन्नध्याये । यद्वा सृष्टिवाक्यानां समन्वयमुखेन जगज्जन्मादिकारणत्वादिगुणपूर्तिप्रकारो निरूप्यते । तत्र

तावत्कालकोटिविहीनत्वलक्षणकालाग्र्यत्वम् । गुणाग्र्यत्वं चोच्यते – **आत्मेति** ॥ इदमस्य जगतोऽग्रे प्रलये आत्मा आततगुणो नारायण एक एवासीदित्येको नारायण आसीदित्यादौ वा प्रसिद्धमित्यर्थः । यद्वेदं सर्वं जगदपेक्ष्याऽत्मैव कालतो गुणतश्चाग्र इति विभक्तिपरिणामेन विना योज्यम् । अथवेदं सर्वं जगदपेक्ष्यात्मैव सर्वैर्गुणैरग्र्यः कालाग्र्यत्वस्यापि गुणत्वाद् गुणाग्र्य इत्यनेनैव तल्लाभोऽत्रानुसन्धेयः । रमाया अविनष्टशरीरतयाऽवस्थानादात्मनः कालतोऽग्रत्वं कथमित्यत उच्यते– **नान्यत्किञ्चनेति** ॥ विष्णोरन्यत्किञ्चनालौकिकं श्रीतत्त्वं सर्वदैकप्रकारेण विद्यमानमपि कालतोऽग्रं नाऽसीत् कुत इत्यत उक्तम्– **आत्मा स्वामी नारायण इति** ॥ अस्यास्तु तद्वशत्वादविनष्टशरीरतया विद्यमानापि नाग्रस्था नहि पराधीनजीवनं जीवनमिति भावः । तद्वशत्वमुपपादयितुमुक्तम्– **नमिष-दिति** ॥ नोद्रिक्तगुणानुभववदित्यर्थः । अतो गुणैरूनत्वात् तद्वशत्वमिति भावः । ब्रह्मादीनां तु कालतोऽग्रत्वं न शङ्कार्हमित्युच्यते– **नान्यत् किञ्चनेति** ॥ अन्यद् ब्रह्मशङ्करादिकं किञ्चन किमपि प्रलये नासीत् । ननु काल आसीत्पुरुष आसीदिति पुरुषावस्थानमुक्तमिति चेत् स्वरूपतो विद्यमानमपि देहाद्यभावा-न्नासीदेव । किञ्चान्यत् किञ्चन मिषज्जाग्रत् नासीदित्यर्थः । ननु श्रियो मुक्तानां च सत्त्वात् । असुप्तत्वाच्च कालाग्रत्वं स्यादित्यत उक्तम् । नान्यत्किञ्चन मिषदिति । किञ्चनालौकिकं संसारिभ्योऽन्यच्छ्रीतत्त्वं मुक्तजातं च मिषज्जाग्रदपि स्वातन्त्र्येणोन्मेषाभावान्न मिषदजाग्रादेवेत्यर्थः । पूर्वमविनष्टशरीरत्वात् कालाग्र्यत्व-माशङ्क्य समाधानमधुना विलुप्तावबोधत्वमाशङ्क्येति भेदः । अथवा रमाद्यपेक्षया यद्गुणाग्र्यत्वमुक्तं तत्र हेतुः– **नान्यत्किञ्चन मिषदिति** ॥ विष्णोरन्यद्रमाब्रह्मादिकं यत्किञ्चन जगत् तत्स्वातन्त्र्येण मिषद् यथायोग्यगुणानुभवयुक्तमेव नासीत् तदा किमु मिषद्गुणसम्पूर्तेरुद्रिक्तानुभववन्नासीदिति वक्तव्यमिति योज्यम् । उक्तं गुणाग्र्यत्वं समर्थयितुं सृष्टिकर्तृत्वमुच्यते– **स ईक्षतेति** ॥ स आत्मा लोकान् तदभिमानिनश्च सृजा सृजे स्रक्ष्यामीतीक्षत ऐक्षत ऐच्छत् । स इमान् लोकान् तदभिमानिनश्चासृजत

कांस्तान् कथं चेत्यत उक्तम्– **अम्भ इति** ।। प्रथममापोऽसृजत् ताः सृष्ट्वाऽम्भोमरीचिर्मरमित्येतान् लोकान् असृजदिति योज्यम् । तत्राम्भआदिशब्दार्थ उच्यते–**अद इत्यादिना** ।। अदोऽसौ द्यौः परेण दिवं दिवः परे महरादयो लोकास्तदभिमानिनश्चाम्भ इत्युच्यन्ते । कुतः यस्मान्महरादिषु दिव्यपि विष्णुः प्रकर्षेण प्रत्यक्षरूपेण तिष्ठतीति प्रतिष्ठा महरादिस्तस्मादित्यर्थः । अं विष्णुं बिभर्तीत्यम्भइति व्युत्पत्तिरत्रानुसन्धेया । सूर्यमरीचीनां विशेषेणायनाद् गमनादन्तरिक्षं मरीचयः । पृथिव्यां क्षिप्रं म्रियन्त इति पृथिवीमरः । या अधस्ताल्लोकोत्पत्ते-रण्डाद्बहिर्जाता महराद्यभिमानिन्यो देवतास्ता आपः । येषामेव लोकाभिमानित्वेन पुनर्जननाल्लोकत्वम् । स आत्मा पुनरीक्षतैच्छत् । इमे लोकास्तदभिमानिनः तन्मूलरूपभूता महराद्याश्च नु इदानीं मया सृष्टा इतः परं लोकान् सृजा इति । पूर्वं सृष्टानेव लोकपालकरूपेण लोकस्थतत्त्वनियामकरूपेणापि स्रष्टुमैच्छदिति भावः । स आत्माऽद्भ्योऽम्नामकेभ्यः पूर्वसृष्टेभ्यश्चेतनाचेतनरूपेभ्यस्तत्त्वेभ्योऽंशानुद्धृत्य महत्तत्त्वाभिमानिनं पुरुषं ब्रह्माणं विशेषेणांशेनोद्धृत्याहङ्कारादितत्त्वाभिमानिभिः सहामूर्च्छयन् मूर्तमकरोत् सर्वतत्त्वतदभिमानिपरिवृतं ब्रह्मणो विग्रहं पिण्डा-कारेणाजनयदिति यावत् । तं ब्रह्माणं अभिप्रेत्य पदैच्छत्तस्याङ्गोत्पत्तिमैच्छदिति यावत् । तस्याभितप्तस्यैवमीप्सितस्य मुखं शिरो निरभिद्यताजायताण्डं यथाऽण्ड-वत् । तदनन्तरं तस्य मुखमास्यं वागिन्द्रियगोलकं वागिन्द्रियं च निरभिद्यता-भूत् । मुखादध्यात्मं वाङ्नामको वह्निर्वाचि उत्पत्त्यनन्तरमधिदैवमग्निरग्निनामा वह्निश्चाभूत् । नासिके घ्राणगोलकमिन्द्रियं श्वासवायुश्च अध्यात्मप्राणनामा वायुसूनुर्नासिक्यो वायुः प्राणात् प्राणोत्पत्त्यनन्तरमधिदैवं वायुर्वायुनामकः स एवाभूत् । एतेन, प्राणाद्वायुरजात श्वसनं मातरिश्वेति विरोधः । श्वसितं मातरिश्वेत्यादावधिदैवरूपस्य श्वासोत्पन्नत्वोक्तेरत्र प्राणनामकाध्यात्मरूपादुत्पत्त्युक्तेरिति निरस्तम् । नासिकाशब्दितश्वासवायोर्मातरिश्वोत्पत्तेरिहाङ्गीकारात् । प्राणाद्वायु-रित्यस्याध्यात्मं प्राणरूपोत्पत्त्यनन्तरं श्वासवायोरेवाधिदैवं वायुरित्यङ्गीकारात् ।

अक्षिणी गोलकं चक्षुरिन्द्रियं चाध्यात्मं चक्षुर्नामकश्चक्षुषोऽनन्तरमधिदैवमादित्यनामकः सूर्यः। एतेन, चक्षोः सूर्य इति विरोध इति निरस्तम्। कर्णौ गोलकमिन्द्रियं चाध्यात्मं श्रोत्रनामका मित्रादयः। श्रोत्रोत्पत्तेरनन्तरं द्वितीयेन रूपेण एव दिङ्-नामानः। एतेन दिशः श्रोत्रादिति विरोध इति निरस्तम्। कर्णपदेनेन्द्रिय-स्यापि ग्रहणात् त्वग्गोलकं स्पर्शेन्द्रियत्वग्गतलोमानि च निरभिद्यन्त। त्वचोऽध्यात्मं लोमनामानः तदनन्तरमधिदैवमोषध्यादिनामानः पारिजाताद्याः। एतेन, तनूरुहाणि महीरुहा विश्वतनोर्नरेन्द्रेति पारिजातादीनां लोमभ्य उत्पत्त्युक्तेस्त्वियं उत्पत्तिः कथमिति निरस्तम्। हृदयं गोलकं मनसो हृदयादध्यात्मं मनोनामानो गरुडादयो मनस उत्पत्त्यनन्तरमधिदैवं चन्द्रमाश्चन्द्रगरुडादयस्त एवाभूवन्। एतेन चन्द्रमा मनसो जात इति निरस्तम्। हृदयशब्देनाप्यत्र मनसो ग्रहणात्। नाभ्या अध्यात्ममपाननामाऽपानोत्पत्त्यनन्तरमधिदैवं द्वितीयरूपेण मृत्युस्तन्नामा मुख्य-वायुः। शिश्नादध्यात्मं रेतोनामा रेतस उत्पत्त्यनन्तरमधिदैवमम्नामा शिवोऽभूदि-त्यर्थः। यद्वा, मुखादास्याद्गोलकाद् वागिन्द्रियं निरभिद्यत। वायो वागिन्द्रियाद् वागग्निश्चेति द्विरूपो वह्निरुत्पन्नः। नासिकाभ्यां प्राणः प्राणवायुः घ्राणात् प्राणो वायुरिति द्विरूपो वायुपुत्र इत्यादि योजना द्रष्टव्या। अस्यां योजनायां भाष्यविरोधं तत्रैवापाकरिष्यामः ॥ १ ॥ २१ ॥

॥ **इति प्रथमः खण्डः** ॥

**उपनिषत्-**

## दुर्लभं मानुषं जन्म

ता एता देवताः सृष्टा अस्मिन् महत्यर्णवे प्रापतंस्तम-शनापिपासाभ्यामन्ववार्जत् ता एनमब्रुवन्नायतनं नः प्रजानीहि ॥ यस्मिन् प्रतिष्ठिता अन्नमदामेति ताभ्यो गामानयत् ता अब्रुवन् नवै नोऽयमलमिति ताभ्यः

पुरुषमानयत् ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम् ।

**भाष्यम्-**

एवं रूपद्वयेनापि स्तुवन्तो विष्णुमच्युतम्।
दिव्याम्बराः कुण्डलिनः प्राविशन्नुदकार्णवम्।
तदाऽशनापिपासाख्यं द्विरूपं मारुतं पुनः।
तस्मिन् देवसमूहे तु विष्णुः प्रावेशयत् प्रभुः।
तेऽब्रुवन् देहि नो वासं यत्र चान्नमदामहे।
गोरूपमेभ्यो ब्रह्माणं ददौ नारायणः प्रभुः।
तत्र प्रविश्य ते देवा नालमित्यब्रुवन् पुनः।
अश्वरूपं विरिञ्चं च पुनरेवाददात् प्रभुः।
तद्रूपेऽपि प्रविश्यैव नालमित्यब्रुवन् पुनः।
पूर्वसृष्टं पुमाकारं ब्रह्मणोऽदात् पुनर्हरिः।

**टिप्पणी -**

ता एता इत्यादि प्रमाणेन व्याचष्टे– **एवमिति** ॥ रूपद्वयेन सृष्टा इति योज्यम् । दीव्यतेः स्तुत्यर्थत्वाद् देवता इत्यस्यैवार्थस्तुवन्त इति । प्रापतन् प्रकर्षेणापतन्निपेतुरित्यन्यथाप्रतीतेरर्थमाह–**दिव्याम्बरा इत्यादिना** ॥ तत्र प्रेत्युपसर्गोक्तप्रकर्षविवरणम्– **दिव्याम्बरा इति** ॥ अपतन्नित्यस्य– **आविशन्निति** ॥ तमशनापिपासाभ्यामन्ववार्जदित्यत्र प्रसिद्धक्षुत्पिपासयोर्ग्रहणे तयोर्जडत्वेनाशनापिपासे अब्रूतामिति उपसंहारविरोध इत्यतो व्याचष्टे– **तदेति** ॥ प्रजानीहीत्यस्य बुद्ध्यस्वेत्यन्यथाप्रतीतेरक्षरार्थमुत्तरत्र वक्ष्यंस्तात्पर्यमाह– **ते ब्रुवन्निति** ॥ गोऽश्वपुरुषशब्दानां प्रसिद्धार्थं निवारयन् व्याचष्टे– **गोरूपमित्यादिना** ॥ तत्र प्रविश्येत्यादिशेषोक्तिः । ताभ्यः पुरुषमानयदित्यत्र गवाश्ववदिदानीं सृष्टं पुरुषमिति प्रतीयतेऽतो व्याचष्टे– **पूर्वेति** ॥

**उपनिषत्-**

**(इन्द्रियाभिमानिदेवताः)**

ता अब्रवीद् यथायतनं प्रविशतेत्यग्निर्वाग् भूत्वा मुखं प्राविशद् वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाऽक्षिणी प्राविशद् दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशत् ॥ मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन् ।

**भाष्यम्-**

तद् दृष्ट्वैवालमित्यूचुः विशतेति स चाब्रवीत् ।
विविशुश्च यथोत्पन्नाः सर्वे देवाश्चतुर्मुखम् ।

**टिप्पणी -**

सुकृतं बतेत्यस्य तात्पर्यम्– **तद् दृष्ट्वैवालमिति** ॥ ता अब्रवीद् यथायतनमित्यादि व्याचष्टे– **विशतेति** ॥ यथोत्पन्नाः येन येन शरीरावयवेनोत्पन्नास्तमायतनमनतिक्रम्य विशतेत्यब्रवीत् तथा विविशुश्चेति योज्यम् ।

**उपनिषत्-**

**(अशनापिपासाभिमानी मुख्यप्राणः)**

तमशनापिपासे अब्रूतामावाभ्यामभिप्रजानीहीति ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति ॥

तस्माद् यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥

**भाष्यम्-**

**अशनापिपासामानी तु द्विरूपो मारुतोऽवदत्।**
**कुर्वाज्ञामावयोश्चैव यथा त्वच्छासनानुगौ।**
**नित्यं भवावेति हरिः सर्वत्र प्रविशेत्यमुम्।**
**आह तस्माद् देवतानां सर्वासां भागभुङ् मरुत्।**
**एक एव प्राणनामा नाभिस्थोऽपि स एव हि।**
**अशनापिपासाऽपानश्च मृत्युश्चेति चतुर्विधः।**
**एक एव महान् वायुः सर्वदेवेषु संस्थितः॥**

**टिप्पणी -**

तमशनापिपासे अब्रूतामित्येतद् व्याचष्टे– **अशनेति** ॥ प्रजानीहीत्यस्यार्थः– **कुर्वाज्ञामिति** ॥ अभीत्यस्यानुकूल्येनेत्यर्थमभिप्रेत्य तात्पर्यमुक्तम्– **यथेति** ॥ अभीत्यस्यार्थान्तरम्– **नित्यमिति** ॥ भागिन्यौ करोमीत्यतः परं अध्याहार्यमाह– **सर्वत्रेति** ॥ तस्माद् यस्यै कस्यै च नेत्येतद् व्याचष्टे– **तस्मादित्यादि प्राणनामेत्यन्तेन** ॥ ग्रन्थान्तरे प्राणस्य भागभोक्तृत्वोक्तिपरिहारायोक्तम्– **प्राणनामेति** ॥ प्राणनामाशनापिपासानामा च मरुदेक एवेत्यर्थः । यद्वा वायुरेक एव भागभुक् नान्यो देव इत्यर्थः । एतास्वेव देवतासु भागिन्यावित्याद्युक्त्याशनापिपासयोर्नाभिदेशस्थापानमृत्युप्रवेशेन भोगः प्रतीयते । तथा न मन्तव्यमित्याह– **नाभिस्थोऽपि स एव त्विति** ॥ तथा च न तयोरशनापिपासाप्रवेश इति भावः । मृत्य्वपानयोर्देवताप्रायपठितत्वाद् देवतासु प्रवेशो नेति प्रतीयते । तां वारयति– **अशनेति** ॥ २ ॥ २२ ॥

**खण्डार्थः -**

एवं नारायणस्य सृष्टिकर्तृत्वमुक्त्वाऽऽयतनप्रदत्वेन स्थितिकर्तृत्वं सृष्टेष्वपि प्राणस्योत्तमत्वं सृष्टदेवानामध्यात्ममवस्थानप्रकारश्चोच्यतेऽस्मिन् खण्डे । वागादिभ्यः सृष्टास्ता अधिदैवस्था एता अध्यात्मस्था देवता अस्मिन् महत्यर्णवे प्रापतन्

प्राविशन् । तं देवसमूहम् । आत्मा विष्णुरशनापिपासाभ्यां तदभिमानिभ्यां मारुतरूपाभ्यामन्ववार्जत् । प्रापयामासायोजयत् । ता एता देवता एतमात्मानमब्रुवन् न आयतनं प्रजानीह्यनुजानीहि देहीति यावत् । यस्मिन्नायतने प्रतिष्ठिता अन्नमदामेत्यब्रुवन् इत्यन्वयः । ताभ्यो देवताभ्यो गां गोरूपं चतुर्मुखमानयत् । वासाय सृष्ट्वाऽदादिति यावत् । ता देवतास्तत्र प्रविश्येति शेषः । न अयं गौर्भोगाय नालं वा इत्यब्रुवन् । आत्मा पुनस्ताभ्योऽश्वरूपं चतुर्मुखमानदादिशत् । ता देवतास्तद्रूपेऽपि प्रविश्यैव नोयमश्वेऽपि प्रविश्यैव नोयमश्वेपि नालमित्यब्रुवन् ताभ्यः पूर्वसृष्टं पुमाकारं ब्रह्माणम् आनयत् पुनरावासायादात् । तास्तद् दृष्ट्वैवाब्रुवन् किमिति । सुकृतं भवता सुष्ठु कृतम् । अस्मद्भोगाय यथा पर्याप्तं स्यात् तथा कृतं बतेत्यवदन्नलमित्यवदन्निति यावत् । पुरुषदेहस्य पर्याप्तत्वमुपपाद्यते– **पुरुष इति** ।। पुरुषदेहः सुकृतं सुकृतसाध्यं तत्साधनं च वै । ता देवताः प्रति यथायतनं यो देवो येन स्थानेनोत्पन्नस्तमनतिक्रम्य प्रविशतेत्यब्रवीत् । अग्निर्वाग्भूत्वाधिदैवमग्निनामा वह्निरंशेन वाग्भूत्वा वाङ्नामकवह्निना संश्लेषं प्राप्य तेन रूपेण मुख्यं प्राविशदेवमुत्तरत्रापि योजना । एतेनाधिदैवरूपस्य वाग्भावेऽधिदैवरूपमपरं न स्यात् । वाङ्नामकरूपान्तरस्य विद्यमानत्वादग्नेर्वाग्भावश्च कथमिति निरस्तम् । तं विष्णुमशनापिपासे तन्नामके मुख्यवायुरूपे आवासाभ्यामानुकूल्येन यथा त्वच्छासनानुगौ नित्यं भवाव तथा प्रजानीह्यनुज्ञापयेत्यब्रूतामित्यर्थः । आत्मा ते अशनापिपासे अब्रवीत् । किमिति । वां एतास्वेव देवतास्वाभजामि प्रवेशयामि । तासु देवतासु भागिन्यावग्रभागार्हौ करोमि तस्मादेतासु प्रविशतमिति । तस्मादग्रभागभाक्त्वाद् यस्यै कस्यै देवतायै हविर्गृह्यते दीयते तस्यां देवतायामशनापिपासे भागिन्यौ भवतः । नच अशनापिपासाभ्यामन्ववार्जदिति तयोः स्थानक्लृप्तेरुक्तत्वात् पुनः प्रार्थनमभ्यनुज्ञानं च व्यर्थमिति वाच्यम् । देवानां भोगशक्तये प्रागशनापिपासाभ्यामन्ववर्जनमुक्तमिदानीं वाक्यैः सर्वज्ञाग्रभागलाभाय सर्वदा प्रवेशनमुच्यत इत्यङ्गीकारात् ।। २-२२ ।।

**।। इति द्वितीयः खण्डः ।।**

**उपनिषत्-**

**(देवानामन्नसृष्टिः)**

स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा इति ॥ सोऽपोऽभ्यपतत् ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्तिरजायतान्नं वै तत् तदेतत् पराङत्यजिघांसत् ।

**भाष्यम्-**

पुनरैच्छत् केशवोऽसावन्नमेभ्यः सृजा इति ।
अबाख्या देवताः पूर्वसृष्टा ब्रह्मादिकाः पुनः ।
ददर्श सुविशालाभ्यां नेत्राभ्यां पुष्करेक्षणः ।
तद्दर्शनात् तदिच्छातस्तासां देहोऽभवत् पृथक् ।
सर्वासामपि देहैकदेशेभ्यो मिळितं शुभम् ।
सर्वैरधिष्ठितं चैव विरिञ्चेन विशषतः ।
दिव्यावयवसम्पन्नमेकमेव सुलोचनम् ।
भोग्यभोक्त्रात्मना नास्ति तस्य दुःखं कथञ्चन ।
ते हि देवाः स्वयं भोग्याः स्वयं भोक्तार एव च ।
क्रीडन्ते मोदिनो नित्यं तथाऽप्यननात्मकस्त्वसौ ।
क्रीडयाऽपाक्रमत् किञ्चित् .............. ।

**टिप्पणी -**

स ईक्षतेति तच्छब्देन प्रकृतपुरुषनामकहिरण्यगर्भपरामर्शभ्रान्तिं वारयन् व्याचष्टे- **पुनरिति** ॥ सोऽपोऽभ्यपतदित्यादि व्याचष्टे- **अबाख्या इति** ॥ अभि सम्यक् प्रीतिपूर्वमित्यस्य तात्पर्यम्- **सुविशालेत्यादि** ॥ ताभ्योऽभितप्ताभ्य इत्यस्य तात्पर्यम्- **तद्दर्शनात् तदिच्छात इति** ॥ ताभ्य इत्यस्य षष्ठ्यन्ततया विपरिणामेनार्थः ॥ **तासामिति** ॥ पृथक् प्रातिस्विकदेहातिरिक्तः । विभक्तिविपरिणामं विना

१. ददर्शाऽशु - ह.पा.

ताभ्यस्तद्देहैकदेशेभ्यो या सा मूर्तिरजायत तद्धै तदेव । ब्रह्मणो देवानां चाधिष्ठानतया परममार्दवोपेतदिव्यावयवसुस्वादुतमत्वादिना चान्नं भोग्यमित्यर्थतया चोत्तरवाक्यं व्याचष्टे– **सर्वासामपि देहैकदेशेभ्य इत्यादिना** ।। या सा मूर्तिरजायतैतदन्नमन्नाभिमानिनो ब्रह्मणो विशेषेण रूपं वा इत्यर्थसूचनाय विरिञ्चेन विशेषत इत्युक्तम् । मूर्तिरित्येकवचनार्थः– **एकमिति** ।।

**उपनिषत्-**

**(अन्नस्याशनं मुख्यप्राणप्रेरणयैव)**

तद् वाचाऽजिघृक्षत् तन्नाशक्नोद् वाचा ग्रहीतुं स यद्धैनद् वाचाऽग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत् तत् प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुं स यद्धैनत् प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत् तच्चक्षुषाऽजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम् ।। स यद्धैनच्चक्षुषाऽग्रहैष्यद् दृष्ट्वा हैवान्नमत्रप्स्यत् तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम् ।। स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत् तत् त्वचाऽजिघृक्षत् तन्नाशक्नोत् त्वचा ग्रहीतुम् ।। स यद्धैनत् त्वचाऽग्रहैष्यत् स्पृष्ट्वा हैवान्नमत्रप्स्यत् तन्मनसाऽजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम् ।। स यद्धैनन्मनसाऽग्रहैष्यद् ध्यात्वा हैवान्नमत्रप्स्यत् तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद् विसृज्य हैवान्नमत्रप्स्यत् तदपानेनाजिघृक्षत् तदावयत् सैषोऽन्नस्य ग्रहो यद् वायुरन्नायुर्वा एष यद् वायुरन्नायुर्वा एष यद् वायुः ।।

भाष्यम्-

(समानौ ब्रह्ममारुतौ)

.................... तं तदाऽसौ चतुर्मुखः।
अत्तुं वागादिभिः सर्वैरिच्छन्नाप्यशकत् तदा।
जानन्नपि क्रीडयैव तारतम्यं प्रकाशयन्।
एवं चकार ब्रह्मा स काज्ञानं लोककर्तरि।
क्षुत्पिपासादयश्चैव देवानां भोगसाधकाः।
नतु पीडाकरास्तेषामैश्वर्यादिगुणोन्नतेः।
अन्नमूर्तिं ततो ब्रह्मा प्रधानेनैव वायुना।
अपानाख्येनात्तुमैच्छत् तदैवाशकदाशु सः।
तस्माद् भोक्तैक एवासौ सर्वस्यान्नस्य मारुतः।
तत्प्रसादात् परेऽश्नन्ति किञ्चित् किञ्चिन्न चाखिलम्।
आयूरूपोऽखिलानां च देवानां वायुरेव हि।
अन्नदेवस्य चाऽयुः स तस्माद् देवोत्तमो मरुत्।
आयुःशब्दो ज्ञानवाची गतिवाची च यत् ततः।
चेष्टामोक्षज्ञानदाता सुराणां मारुतस्ततः।
अन्योन्यगुणदातृत्वात् समानौ ब्रह्ममारुतौ।
तस्मान्मोक्षसुखे ज्ञाने विष्णुभक्त्यादिकेषु च।
सर्वेभ्यश्चाधिकौ तौ हि तयोर्विष्णुः परः सदा।

टिप्पणी -

ननु ब्रह्मण एव भोग्यभोक्तृभावे देवानां च तथात्वे दुःखं स्यादन्यथा तदेनत् सृष्टं पराङत्यजिघांसदिति भयेनापक्रमणोक्त्यसम्भव इत्यतो व्याचष्टे– **तदाऽसाविति** ॥ ननु सर्वज्ञस्य ब्रह्मणोऽपानेनैवान्नग्रहो न वागादिभिरिति ज्ञानसम्भवात् किमिति वागादिभिरन्नग्रहमैच्छदित्यत उक्तस्य स यद्धचेनद्

वाचाऽग्रहीष्यदभिव्याहृत्य हैवान्नमत्रप्स्यदित्यादेस्तात्पर्यमाह– **जानन्नपीति** ।। उक्तरीत्या जानन्नपि वागादयः सर्वभोगशक्तिप्रदानेऽसमर्थाः किन्त्वपान एवेति तारतम्यं प्रकाशयन् क्रीडयैवैवं चकार । वागादिभिरत्तुमैच्छदित्यर्थः । अशनापिपासादयो लोके दुःखहेतवः कथं ब्रह्मणो देवानां च ते स्युरित्यत आह–**क्षुदिति** ।। आदिपदेन रिरंसादीनां ग्रहणम् । ऐश्वर्यमणिमादिः । 'यादृशानन्दकामस्य तादृशानन्द-सम्भवः । विषयान् विनापि प्राकाम्यम्' इति वचनात् प्राकाम्यसिद्धिसम्पादनत्वादिति भावः । तदपानेनाजिघृक्षदित्यादि व्याचष्टे– **अन्नमूर्तिमिति** ।। आशु स्वप्रयत्नविशेषं विनाऽतिशीघ्रम् । प्राणस्य भोगशक्तिहेतुत्वोपसंहारपूर्वं भोक्तृत्वोपपादकं सैषोऽन्नस्य ग्रह इत्येतद् व्याचष्टे– **तस्मादिति** ।। गृह्णातीति ग्रह इत्यर्थमभिप्रेत्य भोक्तेति ग्राहयतीति ग्रह इत्यप्यभिप्रेत्य तत्प्रसादात्परेऽश्नन्तीति । ननु स्वावर-सर्वात्तृत्वं प्राणस्येव रुद्रादेरप्यस्ति । 'सुपर्णशेषरुद्राणां सर्वात्तृत्वं विशेषतः' इति वचनात् । स्वोत्तमभोक्तृत्वं कस्यापि नास्ति? तत्कथमेतदिति चेन्न । 'इयदामननाद्' (ब्र.सू. ३.३.३५) इति उक्तन्यायेनाधिकारिजीववर्गे भगवद्भोग्याविरुद्धसर्वसारभोक्तृत्वं प्राणस्येव न कस्याप्यस्ति । भोगाश्च ये यानि च कर्मजातानि । 'सर्वं स पूतमश्नाति स्वदितं मातरिश्वना' इत्यादेः । रुद्रादीनां न तथेति विवक्षितत्वात् । इन्द्रादीनां तु स्वावरसर्वभोग एव न सम्भवति । 'प्रायेणात्तृत्वमिन्द्रादेः' इति वचनात् । तथाच तत्प्रसादात् प्राणप्रसादात्परे रुद्रादयः किञ्चित् किञ्चिद् भगवद्भोग्यं विना स्वावरमेवाश्नन्ति अखिलं नाश्नन्ति । परे इन्द्रादयस्तु स्वावरेष्वप्यखिलं सर्वदा नाश्नन्तीत्यर्थः । अन्नायुर्वा एष यद्वायुरित्येतद् द्वेधा व्याचष्टे– **आयूरूप इति** ।। आयूरूप आयुष्यनिरूपकः । यद्वाऽऽयुष्याभिमानी-त्यर्थः । आयुःशब्दस्यार्थान्तरमाह– **आयुःशब्द इति** ।। गतिवाची चेष्टावाची मोक्षगमनवाची च । सुराणामुत्तम इत्यत्र सहेतुकमपवादमाह– **अन्योन्येति** ।। वायोरायुःप्रदत्वाद् ब्रह्मणश्चान्नरूपेण वायोः पुष्टिप्रदत्वादित्यर्थः । बृहद्भाष्ये च– 'अन्नाभिमानी ब्रह्मैव प्राणो वायुरुदाहृतः । अन्योन्यानुप्रविष्टौ तौ सर्वदेवेषु

सन्ततौ ।। वायुं विना ब्रह्मणोऽपि शरीरं पूतिमेष्यति । वायुश्च शोषमायाति विना ब्रह्माणमञ्जसा ।।' इति ब्रह्मवाय्वोराधिक्यवर्णनं मूले प्रकृतानुपयुक्तमित्यतो भगवदुत्कर्षपर्यवसन्नमित्याह– **तयोरिति** ।।

**उपनिषत्-**

**(सर्वेषां प्रेरको विष्णुः)**

**स ईक्षत कथं न्विदं मदृते स्यादिति ईक्षत कतरेण प्रपद्या इति ।। स ईक्षत यदि वाचाऽभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितम् ।। यदि शिश्नेन विसृष्टमथ कोऽहमिति ।**

**भाष्यम्-**

देवतानां प्रवेशात्तु पूर्वमेव जनार्दनः ।
इत्थमैक्षत देवेशो ब्रह्माद्या यदि मां विना ।
क्रियादिषु समर्थाः स्युर्न मे विष्ण्वभिधा भवेत् ।
सर्वचेष्टयितृत्वाच्च विशिष्टबलतस्तथा ।
विष्णुरित्यभिधा मह्यं सा न युक्ता दिवौकसाम् ।
स्वतन्त्रत्वे ततः सर्वे मद्वशा एव नान्यथा ।
तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुना ।

**टिप्पणी -**

स ईक्षत कथं न्विदमित्यारभ्याथ कोऽहमित्यन्तस्य तात्पर्यमाह– **देवतानामित्यादिना** ।। ब्रह्माद्या मां विना क्रियासु न समर्थाः स्युरित्यादौ योज्यम् । तेन कथं न्विदं मदृते स्यादित्याक्षेपलभ्यार्थ उक्तो भवति । स ईक्षत कतरेण प्रपद्या इत्यस्यार्थः– **तस्मादेषां प्रवृत्त्यर्थं प्रवेक्ष्ये सह वायुनेति** ।। कतरेण

पूर्णसुखेन वायुना सहेत्यर्थमभिप्रेत्य वायुना सहेत्युक्तम्। यदि वाचाऽभिव्याहृतमथ कोऽहमित्यस्यार्थः–**ब्रह्माद्या इति** ।। ब्रह्मा कर्ता आद्यपदेन करणानि वागादीनि चेत्येते मां विना क्रियाज्ञानादिषु समर्थाः स्युस्तर्हि न मे विष्ण्वभिधा भवेदिति । तदुपपादनम्–, **सर्वेति** ।। णकारो बलं षकारः प्राण आत्मेति श्रुतेरिति भावः ।

**उपनिषत्-**

**(जीवात्मशरीरे परमात्मा)**

**स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनं तस्य त्रय आवसथास्त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति ।।**

**भाष्यम्-**

इति मत्वा विरिञ्चस्य शरीरं प्रविवेश सः।
मूर्धन्यनाड्या प्रथमं ब्रह्मवायुसमन्वितः।
अग्न्यादयस्ततः पश्चात् प्रविष्टास्तन्नियोजिताः।
प्रपदाभ्यां तथाऽन्येन रूपेण प्रविवेश सः।
बिभर्ति देहं तेनैव मूर्धाविष्टेन[1] चेष्टयन्।
नारायणो वासुदेव इति द्वेधा व्यवस्थितः।
मूर्धाविष्टो[2] वासुदेवस्तस्य चावसथास्त्रयः।
अक्षिकण्ठहृदित्येव त एव स्वप्ननामकाः।
आप्नोत्यत्र स्वयं विष्णुरतः स्वप्नाः प्रकीर्तिताः।
अनिरुद्धादिरूपेण त्रिधा तेषु व्यवस्थितः।

१. मूर्ध्नाविष्टेन- हृ.पा.    २. मूर्ध्नाविष्टो- हृ.पा.

**दाताऽवस्थात्रयस्यास्य जीवस्य क्रमशो विभुः।**
**सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थितः।**
**तस्यामेव ब्रह्मनाड्यां स्थितो नारायणः प्रभुः।**

**टिप्पणी -**

स एतमेव सीमानमित्येतद् व्याचष्टे– **इति मत्वेत्यादिना** ।। अग्न्यादय इत्यधिदैवगता इत्यर्थः। स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यतेत्युपलक्षणमित्यभिप्रेत्य व्याचष्टे– **प्रपदाभ्यामिति** ।। प्रवेशकार्यमाह– **बिभर्तीति** ।। तेन प्रथमं प्रपदाविष्टेन पश्चात् तच्छिरोऽश्रयतेति प्रागुक्तदिशा मूर्धाविष्टेनैकरूपेण । तेन प्रथममेव मूर्धाविष्टेन च रूपेण चेष्टयन् बिभर्तीत्यर्थः । के ते रूपे इत्यत आह– **नारायण इति** ।। व्यवस्थितो देहे वासुदेवश्च मूर्धाविष्टो न केवलं नारायण इत्यर्थः । तस्य त्रय आवसथा इत्येतत् प्रकृतरूपद्वयपरामर्शकत्वेन व्याचष्टे– **मूर्धेति** ।। यः प्रपदादिक्रमेण मूर्धाविष्टो वासुदेवः यश्च प्रथमं मूर्धाविष्टो नारायणस्तस्य चावसथास्त्रय इति योज्यम् । अत एव तं प्रपदाभ्यामित्यत्र 'तमिमं प्रथमज्ञानिपुरुषं चतुराननम् । वासुदेवाभिधं ब्रह्म प्राप प्रपदयोः पुरा ।।' इत्युक्त्वा तच्छिरोऽश्रयतेति मूर्धाविष्टता वासुदेवस्योक्ता । सुषुम्नायां वासुदेवो मूर्धन्येव व्यवस्थित इति चानुपदमेव वक्ष्यति । तस्य त्रय आवसथा अयमावसथ इत्यादि व्याचष्टे– **तस्य चावसथा इति** ।। त्रयः स्वप्ना इत्येतद् व्याचष्टे– **त एवेति** ।। स्वयं स्वतन्त्रः । मूर्धाविष्टयोर्वासुदेवनारायणयोरेव तत्त्रिषु स्थानेष्ववस्थानप्रतीतेराह– **अनिरुद्धादीति** ।। क्रमशोऽनिरुद्धादिरूपेणानिरुद्धप्रद्युम्नसङ्कर्षणरूपेण । तेषु त्रिष्वक्षिकण्ठहृत्सु । अवस्थात्रयस्य जाग्रत्स्वप्नसुषुप्तिलक्षणस्य। अत्र विरोधपरिहारस्तु विरोधोद्धारेऽस्माभिः कृतोऽनुसन्धेयः। वासुदेवनारायणयोर्मूर्ध्न्यवस्थानप्रकारमाह– **सुषुम्नायामिति** ।। तस्यां तन्मध्यवर्तिन्याम् ।

उपनिषत्-

(विष्णोरवताररूपाणि पूर्णानि)

स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिषदिति स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३ँ ॥ तस्मादिन्द्रो नामेदन्द्रो हवै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥

॥ इति श्रीमन्महैतरेयोपनिषदि द्वितीयप्रघट्टके चतुर्थोऽध्यायः ॥

भाष्यम्-

स एव भगवान् विष्णुः प्रादुर्भावात्मना पुनः ।
जातो मत्स्यादिरूपेण सर्वभूतेषु चाऽविशत् ।
असुराणां निहन्तारं ज्ञानादिगुणदं तथा ।
चेष्टाप्रदं च [१]भूतेषु न मदन्यं वदत्यपि ।
इति मत्वा जगन्नाथो दैत्यनिग्रहणेच्छया ।
ज्ञानदानार्थमपितु प्रादुर्भूतो भुवि प्रभुः ।
तथा जीवेषु सर्वेषु प्रविष्टः प्रेरणेच्छया ।
को ह्यन्यस्तमृते विष्णुमेतत् कर्म करिष्यति ।
स सर्वगुणसम्पूर्णं सर्वगं नित्यमव्ययम् ।
एतदेव स्वरूपं स त्वपश्यदवतारगम् ।
तस्मात् सर्वावताराश्च सर्वजीवेषु [२]संस्थिताः ।
प्रादुर्भावाः सर्वगुणैः पूर्णा एव सदा स्थिताः ।
पश्यन्ति च तथा नित्यनिर्दोषोरुस्वसंविदा ।

१. देहेषु- ह.पा. २. च स्थिताः- ह.पा.

**टिप्पणी -**

धातूनामेकार्थत्वमभिप्रेत्य स जातो भूतान्यभिव्यैख्यदित्येतद् व्याचष्टे– **स एवेति** ॥ ब्रह्मनाड्यामनुप्रविष्टो नारायण एव चतुर्मुखस्य हृद्गुहाया प्रादुर्भावात्मना जातः । तेनैव मत्स्यादिरूपेण सर्वभूतेषु चाविशत् । किमिहान्यं वावदिषदित्येतद् व्याचष्टे– **असुराणामित्यादिना** ॥ असुराणां अध्यात्मं ज्ञानादिप्रतिबन्धकानां कामाद्यभिमानिनां कालनेम्यादीनां बहिः कंसादीनाम् । ज्ञानादिगुणदमन्तर्नियमनेन बहिरुपदेशेन ज्ञानादिगुणदम् । मत्वेत्युपनिषदि शेषोक्तिः । तु विशेषेण ज्ञानार्थ-मित्यन्वयः । प्रादुर्भूतः चतुर्मुखस्य हृदये प्रादुर्भूतः । प्रभुः भुवि वसुदेवादिषु प्रविष्टस्तद्द्वारा प्रादुर्भूतः सर्वेषु भूतेषु प्रेरणेच्छया च प्रविष्ट इति योजना । तदुक्तं काठकभाष्ये– 'उत्तमो देवताभ्यश्च सोऽत्मानं विविधात्मना । मत्स्यकूर्मादि-रूपेण गुहासंस्थमजीजनत् ॥' इति । अत्रावताररूपाणामन्तर्यामिरूपाद् विभक्त-त्वेऽन्तर्नियामकत्वे च विरोधस्तु **विरोधोद्धारे** परिहृतोऽनुसन्धेयः । अवताररूपाणामपि मूलरूपवद् द्रव्यगुणदेशकालादिपूर्तिप्रतिपादकं स एतमेव पुरुषमित्येतद् व्याचष्टे– **स सर्वेति** ॥ स मूलरूपी नारायणः । ब्रह्मशब्दस्यार्थः– **सर्वगुणेति** ॥ ततमं देशतः कालतस्ततमित्यस्यार्थः– **सर्वगमित्यादि** ॥ तस्मात् मूलरूपवत् सर्वगतत्वस्य तत्प्रत्यक्षसिद्धत्वादेव । न केवलं मूलरूपी, किन्तु सर्वावताराश्चेत्यर्थः । न केवलं सर्वगतत्वं किन्तु ब्रह्मशब्दोक्तं गुणपूर्णत्वं कालतस्ततत्वं चेत्याह– **प्रादुर्भावा इति** ॥ सदैकप्रकारेण स्थिताः । स एतमेव पुरुषमित्येतत् सोऽवताररूपीत्यर्थतया च व्याचष्टे– **पश्यन्तीति** ॥ प्रादुर्भावा इत्यनुवर्तते ।

**भाष्यम्-**

**(विष्णोरेवेन्द्रशब्दवाच्यत्वे निमित्तम्)**

गुणपूर्णस्वरूपस्य त्वापरोक्ष्येण दर्शनात् ।
**सर्वदैव ह्यसौ विष्णुरिदन्द्रो नामतो मतः ।**
ब्रह्मादीनां हि सर्वेषां तत्प्रसादेन जायते ।

**जानन्ति न स्वतस्तेन नेदन्द्रास्ते प्रकीर्तिताः ।**
**रमाऽपि तत्प्रसादेन जानाति किमुतापरे ।**
**अल्पज्ञाना अल्पगुणा अल्पानन्दाश्च तेऽखिलाः ।**
**रमाजशर्वशक्राद्यास्तेनानिन्द्राः क्रमेण ते ।**
**पापैरज्ञातत्तां देवा मानयन्ति सदाऽत्मनः ।**
**हर्षेण तेन विष्णुः स इन्द्र इत्यभिशब्द्यते ।**
**नेदन्द्रताऽसुरादीनां ज्ञायेतेति श्रुतिर्हरिम् ।**
**इन्द्र इत्येव वदति पारोक्ष्येणोरुसद्गुणम् ॥' इत्याद्यैतरेयसंहितायाम् ॥**

**टिप्पणी -**

इदमदर्शमितीत्यत्रेतिशब्दो हेतावित्यभिप्रेत्य व्याचष्टे– **गुणपूर्णेति** ॥ सर्वदा दर्शनादेवेत्यन्वयः । तेनावधारणार्थतया रङ्गो व्याख्यातो भवति । नामतो नाम्ना । इदं द्रो नाम प्रसिद्धः । तमिदं द्रं सन्तमिति तस्यैवेदं द्रशब्दमुख्यार्थत्व-मुक्तम् । तदुपपादयति–**ब्रह्मादीनामित्यादिना** ॥ जायते दर्शनमिति शेषः । तत्कैमुत्येनाह– **रमेति** ॥ न केवलमिदं द्रक्ष्यतीत्युक्तं दर्शनं परतन्त्रमिति रमादीनामिदं द्रशब्दमुख्यार्थत्वाभावः । किन्तु सर्वप्रकारेण पूर्णज्ञानाभावाच्चेति भावेनाह– **अल्पज्ञाना इति** ॥ आद्यपदेन सरस्वत्यादीनां ग्रहणम् । क्रमेण तारतम्यक्रमेणानिन्द्रा इन्द्रशब्दमुख्यवाच्यत्वरहिताः । 'परोक्षप्रिया इव हि देवाः' इत्येतद् व्याचष्टे– **पापैरिति** ॥ देवा ब्रह्माद्याः आत्मनः परमात्मनः । पापैरज्ञात-ताम् । हर्षेण हर्षपूर्वं मानयन्ति । तेन स विष्णुरिन्द्र इत्यपिशब्द्यत इत्यर्थः । देवा इत्यस्य वेदाभिमानिनो देवा इत्यर्थान्तरमभिप्रेत्याभिमन्यमानप्राधान्येन व्याचष्टे– **नेदं द्रतेति** ॥

**भाष्यम्-**

**(प्रळयस्थ आत्मा नारायण एव)**

**आततगुणत्वादात्मा नारायणः । 'ब्रह्म पन्थाः सत्यं कर्म' इति तस्यैव पञ्चरात्रप्रसिद्धैरेव नामभिरारब्धत्वाच्च ।**

'मुख्यतः कर्मनामा तु प्रादुर्भावात्मको हरिः ।
अनिरुद्धतनुश्चैव तत्र [१]ह्यमितचेष्टितः ॥
कर्माभासा जीवसङ्घाः सत्यं प्रद्युम्ननामकः ।
सङ्कर्षणो हरिः पन्था ब्रह्मोक्तो वासुदेवकः ॥' इत्यादि च नामनिर्णये ॥

'मथ्सीन्द्रमिन्दो पवमान विष्णुम्' इत्यादिश्रुतौ तस्मिन्नेव प्रसिद्धस्येन्द्रशब्दस्यात्र बहुशोऽभ्यासाच्च । अकारस्य च विष्णावेव प्रसिद्धस्यात्राभ्यासात् । 'तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी' इति सूर्यमण्डले पुण्डरीकाक्षत्वेन निर्दिष्टस्यात्रापि 'य एष तपति' इत्यादिना [२]बहुशोऽभ्यासाच्च । सूर्यो हि 'हिरण्याक्षः सविता देव आगात्' इति पिङ्गाक्षः प्रसिद्धः ।

'विरूपाक्षः शिवः सूर्यः सुराचार्यो विनायकः ।
पुण्डरीकेक्षणो विष्णुः सहस्राक्षः सुराधिपः ॥' इति च स्कान्दे ॥

**टिप्पणी -**

प्रमाणेन व्याख्यातं खण्डत्रयं स्ववचनेन स्पष्टं व्याचष्टे उत्तरग्रन्थसन्दर्भेण । आत्मा वा इदमित्यत्रात्मशब्दः आततगुणत्वयोगेन नारायणपर इत्युक्तम् । न केवलमेतावत् किन्तूपक्रमपर्यालोचनया चेत्याह– **आततेति** ॥ न केवलमाततगुणत्वादात्मा नारायणः किन्तु तस्य नारायणस्यैव वासुदेवादिरूपाणां ब्रह्म पन्थाः सत्यं कर्मेति पञ्चरात्रप्रसिद्धैरेव नामभिरारब्धत्वादुपक्रान्तत्वाच्चात्मा नारायण इत्यर्थः । कर्मादिनाम्नामनिरुद्धादिषु प्रवृत्तिप्रकारं दर्शयति– **मुख्यत इति** ॥ प्रादुर्भावात्मकोऽनिरुद्धतनुर्हरिरेवेति योजना । न तु कामपुत्रोऽनिरुद्ध इत्येवार्थः । सर्वनामत्वेऽपि विशिष्यकर्मनामत्वमिति भावेन कर्मनामा त्विति तुशब्दः । कर्मनामत्वे हेतुः– **तत्रेति** ॥ अनिरुद्धतनावमितचेष्टितं हि यस्मादनिरुद्धतनावमितचेष्टितं अनिरुद्धतनूश्चेति चशब्दान्मातृत्वं च तस्मात् कर्तृत्वान्मातृत्वाच्च

१. ह्यमितचेष्टता - ह.पा.    २. बहुशोऽनुसन्धानाच्च - ह.पा.

कर्मनामेति योज्यम् । कर्तृत्वात् कर्म मातृत इति व्याख्यातत्वात् । ननु 'कर्मण्यकर्म यः पश्येद्' (भ.गी. ४.१८) इति जीवानामपि कर्मशब्दार्थत्वमुक्तमित्यत आह– **कर्माभासा इति** ।। श्रुत्यन्तरे भगवत्येवेन्द्रशब्दाभ्यासाच्चेयमुपनिषद्भगवद्विषयेत्याह– **मत्सीति** ।। इन्द्र उपनिषसाद । तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच । स इन्द्रः स भूतानामधिपतिः । प्रेत्येन्द्रो भूत्वा इदमदर्शमिति तस्मादिन्द्रो नामेत्यादौ बहुशोऽभ्यासादित्यर्थः । अभ्यासान्तरमाह– **अकारस्येति** ।। अ इति । अम्भो मरीचिः । 'अकारो वै सर्वा वाक्' इत्यादौ अकाराभ्यासादित्यर्थः । पुण्डरीकाक्षत्वबलेन सूर्यमण्डलस्थत्वं विष्णोः प्रसिद्धम् । तस्यात्र बहुशोऽनुसन्धानाच्चेयमुपनिषद्विष्णु-परेत्याह– **तस्येति** ।। **य एष तपतीत्यादिनेति** ।। एष इमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति प्राणो ह्येष य एष तपति प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति । एष तपन्नेवास्मीति होवाचेति बहुशोऽनुसन्धानादित्यर्थः । पुण्डरीकाक्षत्वं सूर्यस्य किन्न स्यात् इत्यत आह–**सूर्यो हीति** ।। शिवः सूर्यः सुराचार्यो विनायकश्च विरूपाक्षः । तत्र वैचित्र्यम्– हिरण्याक्षः सवितेत्यादिग्रन्थेभ्योऽवगन्तव्यम् ।

**भाष्यम्-**

**'यो देवानां नामधा एक एव', 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति', 'यमिन्द्रमाहुर्वरुणं यमाहुः',**

**'[१]चन्द्रसूर्यादयः शब्दा विष्णावेव हि मुख्यतः ।**
**उपचारात् तदन्येषां विष्णुनैव कृताः पुरा ।।'**

**इत्यादिना तस्यैव सर्वनामवत्त्वाच्च । 'णकारो बलं षकारः प्राण आत्मा' इत्यादिनाऽन्ते विष्णुशब्दव्याख्यानेनोपसंहाराच्च ।**

---

१. इन्द्र..... - ह.पा.

'आत्मब्रह्मादयः शब्दास्तमृते विष्णुमव्ययम्।
न वर्तन्ते तदन्यत्र शृङ्गिबेरेऽग्निशब्दवत्॥' इति च पाद्मे॥

'एको नारायण आसीन्न ब्रह्मा नच शङ्करः', 'एको नारायण आसीन्न ब्रह्मा नेशानः', 'वासुदेवो वा इदमग्र आसीन्न ब्रह्मा नच शङ्करः' इत्यादिश्रुतिभ्यश्च।

**टिप्पणी -**

किञ्च 'एष इमं लोकमभ्यार्चेदित्यादिना ता वा एताः सर्वा ऋच इत्यन्तेन सकलर्षिदेववेदादिवाचकसर्वनामवत्त्वमुक्तम्। विश्वामित्रमित्यादिना तत्रैवाख्यायिकाप्रदर्शनमुखेन सर्वनामवत्त्वमुक्तम्। तच्च हरेरेव लिङ्गम्। अतश्चास्यामुपनिषदि स एवोक्त इत्याह– **यो देवानामित्यादिना**॥ उपसंहारबलाच्चेयमुपनिषद् विष्णुविषयेत्याह– **णकार इति**॥ उपक्रमे ब्रह्मशब्दस्य मध्ये आत्मशब्दस्यान्ते विष्णुशब्दस्यात्रैव रूढस्य प्रयोगाच्च नान्यपरत्वमित्याह– **आत्मेति**॥ तमृते न वर्तन्ते। कथं तर्हि आत्मा विरिञ्चः सुमनाः तस्मादेतद् ब्रह्मेत्यादावन्यत्र वृत्त्युक्तिरित्यत उक्तम्– **तदन्यत्रेति**॥ तदन्यत्र ब्रह्मादौ आत्मब्रह्मादयस्तत्रैव प्रसिद्धविष्णुनारायणादिशब्दातिरिक्ताः शब्दाः शृङ्गिबेरे आर्द्रके दाहकत्वगुणयोगेनाग्निशब्दवत्। अल्पप्रवृत्तिनिमित्तयोगेन वर्तन्त इति योज्यम्। श्रुत्यन्तरसमाख्यानाच्चात्मशब्दो नारायणपर इत्याह– **एक इति**॥ आदिपदेन 'ब्रह्म वा इदमग्र आसीत्' इत्यादिश्रुतिः। 'एतस्य जगतो ह्यग्र आसीन्नारायणः परः। एक एव श्रिया सार्धम्' इति ब्रह्मतर्कादिस्मृतिर्गृह्यते। 'इदं सर्वमपेक्ष्यासौ कालतो गुणतस्तथा' इति व्याख्यातम्।

**भाष्यम्-**

## (स्वतन्त्रो विष्णुरेवैकः)

अग्रशब्दो गुणाधिक्यवाची। इदं रमाब्रह्मशिवादिकं सर्वं जगदपेक्ष्य आत्मैवाग्रे विष्णुरेवाग्र्यः सर्वगुणैरित्यर्थः। तत्र हेतुस्तदन्यत् किञ्चिन्न मिषदासीत्। सर्वस्याप्युन्मेषणं

नासीदित्यर्थः । स्वत उन्मेषणं कस्यापि नास्ति । अस्तिशब्दवदासीच्छब्दोऽपि सर्वकालसाधारणः । भगवत्प्रसादादेव सर्वदा सर्वं किञ्चिदुन्मिषति । स्वातन्त्र्येण पूर्णोन्मेषो विष्णुरेव ।

'उन्मेषो गुणसम्पूर्तेरुद्रिक्तानुभवः स्मृतः ।
तदेव मिषणं नाम सद्रूपं मिनुते यतः ॥
मिषच्च नान्यद् विष्णोर्हि किमुतोन्मिषदिष्यते ।
उच्चैर्मिषन् हि भगवान् सर्वदैव जनार्दनः ॥' इति च सत्तत्त्वे ॥

'नास्ति नारायणसमं न भूतं न भविष्यति ॥' (म.भा. १.२३)

इति च भारते ॥

**टिप्पणी -**

अधुना कालाग्र्यत्वस्यापि गुणान्तर्भावविवक्षया प्रकारान्तरेण व्याचष्टे– **अग्र इति** ॥ ननु अस्याग्रे प्रलय इत्यर्थोक्तौ विरोधपरिहारकत्वेन नान्यत् किञ्चन मिषदिति सङ्गच्छते । गुणाग्र्यत्वप्रतिज्ञाने कथमुत्तरवाक्यं सङ्गच्छत इत्यतः सङ्गमयति– **तत्रेति** ॥ तत्र गुणाग्र्यत्वे उपसर्गस्य धात्वर्थव्यञ्जकत्वान्मिषदित्यस्योन्मेषणमिति तात्पर्यादुक्तः । ननु स्वयोग्यगुणानुभवस्य रमायां मुक्तेषु च सत्त्वात् कथं निषेध इत्यत आह– **स्वत इति** ॥ ननु विष्णोः सदा विद्यमानत्वात् कथमासीदिति प्रयोग इत्यत आह– **अस्तिशब्दवदिति** ॥ यथाऽस्ति ब्रह्मेत्युक्ते ब्रह्मणो न वर्तमानकालमात्रसम्बन्धित्वमर्थः । एवमासीच्छब्दोऽपि सर्वकालसाधारण इत्यर्थः । 'प्रयोग एककालीनः सर्वकालेऽनुषज्यते' इति वचनादिति भावः । किञ्च न मिषदित्यस्योन्मिषत् पूर्णोन्मेषयुक्तमित्यर्थस्तच्च भगवत्येव मुख्यमतः स एव गुणाग्र्य इत्याह– **भगवदिति** ॥ कोऽयमुन्मेषो नामेत्यत आह– **उन्मेष इति** ॥ तदेवोन्मेषणमेव । कथं सद् अत्युत्तमं निर्दुष्टं स्वरूपं यतो मिनुते विषयीकरोति अत उन्मेषणमेव मेषणं नामेत्यर्थः । मिनुते सदिति मिषत् । मकारस्य षत्वमिति भावः । मेषणोन्मेषणयोर्भेदमङ्गीकृत्य कैमुत्येन

वोन्मेषणनिषेधलाभ इत्याह– **सद्रूपामिति** ।। यतो विष्णुः सदुत्तमं निर्दिष्टं स्वस्वरूपं मिनुतेऽतः विष्णोरन्यत् स्वातन्त्र्येण मिषदेव नास्ति । किमुतोन्मिषन्नेष्यत इति वक्तव्यम् । यद्वा विष्णुरेव सत् पूर्णं स्वस्वरूपं मिनुते विष्णोरन्यत् परिपूर्णं ब्रह्म मिषदेव नास्ति । 'को हि तं वेदितुं शक्तः' इत्यादेः । उच्चैर्मिषत्तु नास्तीति किमु वाच्यम् । कुत इत्यत आह–**उच्चैरिति** ।। स्पष्टतया सर्वदैवस्वरूपं मिषन् भगवान् हीत्यर्थः । उक्तं च 'स्पष्टातिस्पष्टविशदं ब्रह्मणोऽशेषवस्तुगम्' इति । विष्णोरन्यत् किमपि गुणसम्पूर्तेरुद्रिक्तानुभववन्नासीदित्यतीत-निषेधाद् वर्तमानकाले स्यादुत्तरत्र चेत्यतः कदापि तत्समं नास्तीति प्रमाणमाह– **नास्तीति** ।।

**भाष्यम्-**

**(कमलामहिलो न केवलं कालज्येष्ठः किन्तु गुणश्रेष्ठश्च)**

**सर्वजीवानां रमायाश्च प्रळये विद्यमानत्वादेव नाग्र इति कालापेक्षया । तदधीनमिषत्त्वादन्येषामग्र्यः स एवेत्याशयः । तदधीनत्वमेव तेषां सृष्ट्यादिना दर्शयति । स्थूलशरीरस्य पूर्वाभावस्तत एवार्थतः सिद्ध्यति ।**

**'प्रळयेऽप्यखिलं देवी रमा विष्णुप्रसादतः ।**
**जानाति नित्यज्ञानेन मुक्ता ध्यानस्थिता लये ।।' इति च सत्तत्त्वे ।।**
**ब्रह्मादीनां शरीरान्तरस्यापि प्रळयेऽनुक्तेरेवाभावः सिद्ध्यति ।**
**'आत्मा ब्रह्माऽग्र इत्यादि गुणाग्र्यत्वं हरेर्वदेत् ।**
**कालज्यैष्ठ्यं न यस्मात् तत् सृष्ट्युक्तेरेव सिद्ध्यति ।।' इति वाक्यनिर्णये ।।**
**गुणाग्र्यतायामेव कालज्यैष्ठ्यस्याप्यन्तर्भावाच्च ।**

**टिप्पणी -**

न कुलाग्र्यत्वमात्रव्युत्पादनाय प्रलयेऽन्यस्वरूपनिषेध एवात्रोच्यत इति किन्न स्यादित्यत आह– **सर्वेति** ।। मुक्तसर्वजीवानां रमायाश्चासुप्तयेतरजीवानां

च स्वरूपतः प्रलये विद्यमानत्वस्य प्रमितत्वादेव नेतरस्वरूपनिषेधेन विलसत्स्वस्वरूपत्वेन कालाग्र्यत्वविवक्षयाऽग्र इत्युक्तिः । नापि गुणाग्र्यत्वं विहाय कालमात्रापेक्षया । मुक्तामुक्तसर्वजीवानां रमायाश्च प्रलये विद्यमानत्वेन कालग्र्यत्वस्येतरसाधारण्यात् । यदि संसारिणां बोधपरिलोपात् सर्वेषां स्वातन्त्र्याभावाद् विद्यमानमपि कालाग्र्यत्वमसत्कल्पमिति कालाग्र्यत्वमसाधारणमित्युच्यते । तर्हि न कालमाञ्चापेक्षयेत्यापन्नम् । गुणाग्र्यत्वं विनैतदुपपादनासम्भावादिति भावः। तत्र हेतुस्तदन्यत् किञ्चन न मिषदासीदित्यवतार्य व्याख्याय हेतुवाक्यस्याभिप्राय-माह– **तदधीनेति** ।। नान्यत् किञ्चन मिषदिति वाक्यं स्वातन्त्र्याभावाभिप्रायकमिति कुत इत्यतस्तदुपपादकोत्तरवाक्यबलादिति भावेनाऽऽह– **तदधीनत्वमेवेति** ।। ननु तस्यैव कालाग्र्यत्वोपपादनाय प्रलये स्थूलशरीरप्रागभावोपपादनाय सृष्टिकथनमिति किन्न स्यादित्यत आह– **स्थूलशरीरस्येति** ।। तत एव पराधीनविशेषावाप्तिलक्षण-सृष्ट्युक्त्यैवार्थत एव नतु मुख्यतः । एवञ्च मुख्यतो लब्धार्थं परित्यज्यार्थि-कार्थमात्रग्रहणमयुक्तमिति भावः । रमाया मुक्तानां च प्रलये तदधीनमिषणमुक्तं तत्र प्रमाणान्तरं चाह– **प्रलय इति** ।। ध्यानस्थिताः न त्वखिलसाक्षात्कार-वन्तः । तज्ज्ञानस्य शक्त्यवस्थापन्नत्वादिति भावः । ननु यदुक्तं सवजीवानां प्रलये विद्यमानत्वादेवानाग्र इति कालापेक्षयेति, तदयुक्तम् । ब्रह्मादिसर्वजीवानां स्वरूपतः सत्त्वेऽपि शरीराभावविवक्षयाग्रे नासीदिति वचनोपपत्तेरित्यत आह– **ब्रह्मादीनामिति** ।। ब्रह्मादीनां वाय्वादीनां शरीरान्तरस्य लिङ्गशरीरातिरिक्तस्थूल-शरीरस्याभावोऽनुक्तेरप्यनुक्तावपि सृष्ट्युक्त्यार्थतः सिद्ध्यत्येव । तथाच नावश्यं तदर्थमेव तद्वाक्यं प्रवृत्तम् । तस्यार्थस्यार्थतोऽपि लाभेन श्रुतेः केवलं तादर्थ्येन प्रवृत्त्ययोगात् । गुणाग्र्यत्वस्य प्राधान्येन प्रतिपादनेषु आर्थिकार्थस्यापि स्पष्टीकरणमनुजानीम इति भावः । उक्तार्थे प्रमाणमाह– **आत्मेति** ।। आत्मा वा इदमेक एवाग्र आसीद् ब्रह्म वा इदमग्र इत्यादिवाक्यं गुणाग्र्यत्वं हरेर्वदेत् । कालज्यैष्ठ्यमात्रं न वदेत् । यस्मात् तत्कालज्यैष्ठ्यं सृष्ट्युक्त्या

सृष्टिकर्तुर्हरेः सिद्ध्यति । अतोऽन्यतो लभ्यार्थे वाक्यस्य तत्रैव पर्यवसितत्वमयुक्तमिति भावः । ननु सृष्ट्युक्त्या गुणाग्र्यत्वमपि लभ्यत एव । जगज्जन्मादिहेतुत्वस्य गुणपूर्तिसम्भावकलक्षणत्वात् । स्पष्टं गुणाग्र्यत्वमात्माग्र इत्यनेनोच्यत इति चेत् । कालाग्र्यत्वमपि स्पष्टमुच्यत इति किन्न स्यादिति आशङ्क्य सत्यमुभयविधाग्र्यत्वं सृष्ट्युक्त्या लभ्यते स्पष्टमुभयविधाग्र्यत्वमात्मादिवाक्येनोच्यत इति । अत एवास्माभिः 'कालतो गुणतस्तथा । अग्र्य एव समस्तेशः' इति व्याख्यातम् । तथापि आदिवाक्ये कालाग्र्यत्वमात्रोक्तौ गुणाग्र्यत्वं न लभ्यते गुणाग्र्यत्वमात्रोक्तौ कालाग्र्यत्वमपि लभ्यते तस्यापि गुणत्वादतः कालाग्र्यत्वमात्रमत्र नोच्यत इति भावेनाह– **गुणाग्र्यतायामिति** ।। एवेति कालाग्र्यत्वे गुणाग्र्यत्वस्य नान्तर्भाव इति सूचयति ।

**भाष्यम्-**

## (लोकनाम्नां निर्वचनम्)

**अं विष्णुं बिभर्तीति विष्णुलोको दिवः परः । महरादयश्च । दिव्यपि भगवान् प्रतितिष्ठतीति प्रतिष्ठा । तेषु सर्वेषु प्रत्यक्षतश्चरति विष्णुस्तस्मादम्भ इत्युच्यते । दिवः परे द्यौश्चाम्भोनामका इत्यर्थः । सूर्यमरीचीनां तत्र विशेषेण विततत्वादन्तरिक्षं मरीचयः । मरीचीनामयनात् । पृथिव्यां क्षिप्रं मरन्तीति पृथिवीमरः ।**

**'भूतेभ्योऽनन्तरं त्वण्डं सृष्ट्वा विष्णुः पुरा प्रभुः ।**
**लोकभेदांश्च चक्रेऽत्र पश्चाद् ब्रह्मा विशेषतः ।।**
**सम्यक् चकार लोकांस्तान् लोककर्ता ततः स च ।।'** इति ब्रह्मवैवर्ते ।।

**टिप्पणी -**

अम्भसो विष्णुलोकत्वं कथमित्यतोऽम्भःशब्दं निर्वक्ति– **अमिति** ।। कोऽसौ विष्णुलोक इत्यतः परेण दिवं द्यौरित्येतद् व्याचष्टे– **दिव इति** ।। दिवः परे महरादयश्च शब्दा द्यौश्चेत्यर्थः । कथं विष्णुलोकत्वं तेषामित्याशङ्क्य परिहाराय प्रतिष्ठेत्येतद् व्याचष्टे– **दिव्यपीति** ।। अपिशब्दान्महरादिषु चेति लभ्यते । ननु

पृथिव्यादिष्वपि भगवान् प्रतितिष्ठति को विशेषो द्व्यादीनामित्यत आह– **तेष्विति** ।। पदार्थमुक्त्वाऽदोऽम्भःपरेण दिवं द्यौरिति वाक्यार्थमाह– **दिव इति** ।। अदोऽम्भः द्यौरिति योज्यम् ।अन्तरिक्षं मरीचय इत्यत्र मरीचयशब्दार्थ-माह– **सूर्येति** ।। व्युत्पाद्य दर्शयति– **मरीचीनामयनादिति** ।। अम्भोमरीचिरित्यत्र मरीचिशब्दस्तु मरीचिमान् मरीचिरिति योज्य इति भावः । मन्वन्तरायुषः स्वर्ग्या महर्लोके तु काल्पिका इत्यादेर्द्व्यादिष्वपि मरणसद्भावात् को विशेषः पृथिव्यां इत्यत उक्तम्– **पृथिव्यां क्षिप्रमिति** ।। ननु ब्रह्मणो लोकसृष्ट्युक्तेः कथं विष्णवाख्यस्यात्मनो लोकसृष्टिकथनं तस्मादयमात्मा विरिञ्च एव 'आत्मा विरिञ्चः सुमनाः सुधौतश्चेति कथ्यते' इत्यभिधानादित्याशङ्क्य नात्र केवलमात्मनो लोकस्रष्टृत्वमुच्यते, किन्तु भूतादिसृष्टिपूर्वं लोकस्रष्टृत्वं ब्रह्मणस्तु भगवन्निर्मित-लोकवैशद्यकर्तृत्वमेवातो नासावत्रोच्यत इति प्रमाणमाह– **भूतेभ्य इति** ।। महदादिभ्योऽनन्तरं भूतसृष्टेरनन्तरमिति योज्यम् । सुरान् लोकाभिमानिनः तत्पालकांश्च । ततः स ब्रह्माऽपि विशेषतो लोककर्तेत्युच्यते इत्यर्थः ।

**भाष्यम्-**

## (आपो नाम देवताः)

**या अधस्तात् पूर्वमेव सृष्टा देवतास्ता आप इत्युच्यन्ते। 'आपा इत्याप इति' इति पूर्वं भगवदङ्गसृष्टानामेवाप्छब्देनोक्तेः। 'अयं पितैते पुत्राः' इति च। 'आहं मां देवेभ्यो वेदा ओ मद् देवान् वेद' इति च।**

'ब्रह्मवायू च तद्भार्ये वीन्द्रशेषौ च तत्स्त्रियौ।
शिवस्तद्दयिता शक्रकामौ तद्दयितादयः।
सर्वे सुराः क्रमेणैव विष्णोर्जाता अबाख्यकाः।

## (चेतनतारतम्यम्)

ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वशः।
हीनाः शतगुणेनैव क्रमेणानेन ते मताः।

**तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च ।**

**विशेषतस्तु मुक्तानां सर्वसंसारबन्धनात् ।**

**क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभोगिनाम् ।**

**न विशेषो ब्रह्मवाय्वोरधिकाराविभेदतः ।**

**न शेषशिवयोश्चैव तत्पत्नीनां च सर्वशः ।**

**सुपर्णशेषयोश्चैव साम्यं सर्वगुणेष्वपि ।**

**साम्यमेवैतयोः पत्न्योः साम्यं शक्रमनोजयोः ।**

**टिप्पणी -**

नन्वत्र भूतादिसृष्ट्यनन्तरं लोकसृष्टिर्नोच्यत इत्यतो या अधस्तात् ता आप इत्येतद् व्याचष्टे– **या इति** ।। पूर्वमेव लोकसृष्टेः पूर्वमेव । देवता महदाद्यभिमानिन्यः । आपो देवा इति कथमवगतमित्यत आह– **आप इति** ।। पूर्वं सप्तमे खण्डे मनसा सृष्टा आपश्च वरुणश्चेति भगवदङ्गसृष्टतयोक्तानामेव देवानामापा इत्याप इत्यष्टमे खण्डे विवादपूर्वमप्छब्दवाच्यतया निर्णीतत्वादित्यर्थः । तत्राप्युदकस्यैवाप्छब्दवाच्यत्वं निर्धारितमिति किन्न स्यादित्यत आह– **अयं पितेति** ।। कार्यरूपास्वप्सु पुत्रत्वोपचार इति किन्न स्यादित्यत आह– **अहमिति** ।। प्रकृतास्वप्सु देवश्रुतेर्देवता एवैता आप इति भावः । देवानामेवाम्नामकत्वं तेषामेव महदाद्यभिमानित्वं तेभ्यः साभिमानिलोकोत्पत्तिः महदादिदेवानामेवाण्डान्तस्तत्त्वाभिमानिरूपेणोत्पत्तिस्तदुत्पत्तिकथनं च तारतम्यज्ञापनपूर्वं भगवदुत्कर्षपर्यवसन्नमिति भावेन प्रमाणमाह– **ब्रह्मवायू इत्यादिना** ।। ऋषयो मध्यमाधिकारिणः । मर्त्या अधमाधिकारिणः । ब्रह्मवायू इत्यादिद्वन्द्वनिर्देशनिमित्तमाह– **न विशेष इति** ।। शेषशिवयोश्च न विशेषः । कुतः अधिकाराविभेदतः ।। **तत्पत्नीनामिति** ।। सरस्वतीभारत्योः वारुणीपार्वत्योश्च न विशेषः अधिकाराविभेदतः इत्यर्थः । ननु तर्हि ब्रह्मवायू इतिवत् शेषशिववीन्द्रादि निर्देष्टव्यम् । वीन्द्रशेषौ च तत्स्त्रियौ इति निर्दिश्य शिवस्तद्दयितेति पृथङ् निर्देशः कुत इत्यत आह–

सुपर्णेति ॥ सुपर्णशेषयोस्तत्पदद्वयोश्च साम्यमेव, न तु पदैक्यम् । अतः साम्यविवक्षया वीन्द्रशेषौ च तत्स्त्रियाविति द्वन्द्वनिर्देशः कृतः । शिवस्य तद्भार्यायाश्च तदनन्तरं तत्पदप्राप्यत्वद्योतनाय शिवस्तद्दयितेति शेषादिभ्यः पृथगुक्तिः । वायोस्तु ब्रह्मपद-प्राप्तत्वेऽपि ब्रह्मव्यतिरिक्तस्य तत्पदाप्राप्तेः समस्यानिरूपणात् तस्यैव तत्समतया द्वन्द्वनिर्देशः । तदुक्तं 'न कश्चिद्वायुना समः' इति । शक्रकामयोः ईषत्तारतम्यमविवक्षित्वा साम्योक्तिः । प्राय इन्द्रवत् काम इत्युक्तत्वात् ॥

**भाष्यम्-**

**(देवाः लोकपालकाः)**

**एते तु महदादीनां सर्वेऽपि ह्यभिमानिनः ।**
**पूर्वस्य प्रतिबिम्बश्च चरमस्तत्सुतस्तथा ।**
**तद्वशाश्चाखिला विष्णोर्न विष्णुः कस्यचिद् वशे ।**
**महदादिमानिनश्चैते जातास्तैः सह सर्वशः ।**
**एते लोका इति प्रोक्ता [१]लोकानामभिमानिनः ।**
**त एव लोकपालाश्च यदा पश्चात् प्रजज्ञिरे ।**
**पश्चाज्जातैर्हि रूपैस्ते लोकस्थान् पालयन्त्यलम् ॥' इत्यादि तत्त्वसारे ॥**

**(देवानामशनापिपासे)**

**अमूर्च्छयत् मूर्तमकरोत् । 'अग्निर्वाग् भूत्वा' इत्यादिना पश्चादैक्यप्रतीतेरेकस्यैव रूपद्वयं तदिति प्रतीयते । प्रजानीहि प्रकर्षेणानुजानीहि । अन्नदेवता च सर्वदेवतायुक्तो विरिञ्च एव । ग्रसनं चैतस्मिन् प्रवेश एव । न तु पीडा तस्य । क एव हि ब्रह्मा भोक्तृभोज्यत्वेन स्थितो भोज्यरूपेणैकीभूयातितरां मुमोदेत्यर्थः । देवानामुपद्रवाभावाद् भोक्तृत्वशक्तियोजनमेवाशनापिपासाभ्यामन्ववार्जनम् । वायुरेव च भोक्तृत्वशक्ति-रूपः ।**

१. लोकानामभिमानतः - ह.पा.

## टिप्पणी -

**एते त्विति** ।। ये सर्वे सुराः क्रमेणैव विष्णोर्जाता आबरव्यका इति काल-क्रमेण सर्वे सुराः साक्षाज्जाता एत एव सर्वेऽपि महदादीनामभिमानिनः । महदादिमानिनश्चेति सर्वशः तैर्महदादिभिः सह जाताः । तत्र पूर्वस्य चरमः प्रतिबिम्बस्तथा तत्सुतस्तद्वशश्च । अखिला विष्णोर्वशेन विष्णुः कस्यचिद् वश इति योजना । इमे नु लोका इत्यादेरर्थमाह–**एत इति** ।। एते महदादय एव यदा पश्चाद् ब्रह्माण्डोत्पत्त्यनन्तरं प्रजज्ञिरे तदा लोकाभिमानित्वाल्लोका इति प्रोक्ताः त एव पश्चाज्जातै रूपैर्यस्माल्लोकस्थान् पालयन्ति तदा लोकपालाश्चेत्यर्थः। अमूर्छयन् मोहावस्थां गतानकरोदित्यन्यथाप्रतीतेर्व्याचष्टे– **अमूर्छयदिति** ।। मूर्छनं नाम सम्मेलनमिति भावः । मुखाद्वाग् वाचोऽग्निरित्यादिकं 'तत्र वाङ्नामकं रूपं वह्नेरासीत्पुरातनम् । तस्यैवाथ द्वितीयं तु यदग्निरिति गीयते' इत्यध्यात्माधि-दैवभेदेनैकैकस्यैव रूपद्वयपरतया प्रमाणेन व्याख्यातं उत्तरवाक्यबलाच्चैतदेवमेवे-त्याह– **अग्निरिति** ।। द्वितीयखण्डे आयतनं नः प्रजानीहीत्येतद् व्याचष्टे– **प्रजानीहीति** ।। तृतीयखण्डे या वै सा मूर्तिरजायतान्नं वै तदित्यत्रान्नशब्दार्थमाह– **अन्नदेवतेति** ।। नन्वेवं चेत् तदपानेनाजिघृक्षदित्यत्र ब्रह्मा तदन्नात्मकं रूपमजिघृक्षद् ग्रसितुमैच्छदित्युक्तं ग्रसनं न सम्भवति । ग्रसनेऽवयवशैथिल्येन पीडाप्राप्तेरित्यत आह– **ग्रसनं चेति** ।। तस्यान्नदेवस्य ग्रसनं चैतस्मिन्नन्तःप्रवेश एवातस्तेन न तु पीडेत्यर्थः । ननु भोक्तृभोज्यभावः प्रवेष्टृप्रवेश्यभावश्च भेदेनोपलब्धः तत्कथमेकस्य तदुपपद्यते । प्रवेशे च स्वरूपानुपमर्दाद् भोज्यत्वायोगश्चेत्यत आह– **एक एवेति** ।। विशेषबलेनैक एव भोक्तृत्वेन भोज्यत्वेन च स्थितः भोज्यरूपेणैकीभूय स्वरूपानुपमर्देनैव संश्लेषविशेषं प्राप्यातितरां मुमोदेत्यर्थ इति भावः । क्षुत्पिपासाभ्यां पीडेव ग्रसनेनापि पीडास्त्वित्यतस्तमशनापिपासाभ्यामन्ववार्जदित्यस्य तात्पर्य-माह– **देवानामिति** ।। अशनापिपासे हि लोके उपद्रवेण भोक्तृत्वशक्त्या च समनियते । देवानामुपद्रवाभावादशनापिपासाभ्यामन्ववार्जनं नाम तद्व्याप्तेन

तदभिमान्यभिमतेन भोक्तृत्वसामर्थ्येन योजनमेव विवक्षितमिति भावः । तदभिमान्यभिमतत्वमुपपादयति– **वायुरेवेति** ।। अशनापिपासाभिमानी वायुरेव भोक्तृत्वशक्त्यभिमानीत्यर्थः ।

**भाष्यम्-**

**(इन्द्रियाभिमानिनश्चास्वतन्त्राः)**

**यदि वागादीनामेवाभिव्याहरणादिशक्तिः स्यान्मां विना तर्हि न विष्णुत्वं मम स्यात्। तस्मात् कोऽहं भवानीत्याक्षेपः। विशेषेण प्राणयति सर्वान् सर्वेभ्यो [1]विशिष्टश्चेति हि विष्णुः। 'णकारो बलं षकारः प्राण आत्मा' इति व्याख्यानात्। तस्मान्मत्प्रेरिता एवैतेऽभिव्याहारादिशक्ता इत्यभिप्रायः।**

**(श्रीहरौ नैवाज्ञानदुःखादिदोषलेशः)**

**पूर्णानन्दस्वरूपत्वान्नन्दनो भगवान्। प्रादुर्भावरूपेण जातोऽपि भगवान् सर्वभूतान्यभितः सर्वकालेषु विशेषेण पश्यत्येव। इह भूतेषु मत्तोऽन्यं प्रवर्तकं वदेत् किमित्याक्षेपः। अहमेव स्वतन्त्रः परिपूर्णगुण इति कृष्णराघवादिसर्वावताररूपोऽपि सर्वदाऽनुभवत्येव।**

**'नायं दशरथाज्जातो नचापि वसुदेवतः।**
**क्वास्याज्ञानं कुतो दुःखं प्रादुर्भावेष्वपि प्रभोः ।।**
**प्रादुर्भूतश्चिदानन्दशरीरो राघवः स्वयम्।**
**स्तम्भाद् वा नरदेहाद् वा नैवास्य [2]प्राकृती तनुः ।।**
**दैत्यानां मोहनार्थाय सोऽज्ञानाद्यं प्रकाशयेत्।**
**पूर्णचित्सुखरूपोऽपि सदा सर्वावतारगः ।।' इत्यादि स्कान्दे ।।**

**टिप्पणी -**

यदि वाचाऽभिव्याहृतमित्यारभ्याथ कोऽहमित्यन्तवाक्यतात्पर्यमाह –

---

१. विशिष्टबलश्चेति- ह.पा. २. प्राकृता- ह.पा.

**यदीति** ।। किमिदं विष्णुत्वं यद् देवानां स्वसामर्थ्येन चेष्टकत्वेन स्यादित्यत आह– **विशेषेणेति** ।। तदुपपादयति– **णकार इति** ।। आक्षेपलब्धमर्थमाह– **तस्मादिति** ।। तदेतन्नान्दनमित्यत्र नन्दनशब्दार्थमाह– **पूर्णेति** ।। स जातो भूतान्यंभिव्यैख्यदित्यत्र धातूनामनेकार्थत्वमाश्रित्य प्राक् प्रवेशने वृत्तिरभिहिता। अधुना तु चक्षिङ् ख्याञिति सूत्रानुसोरण दर्शनार्थकचक्षिङादेशरूपत्वमभिप्रेत्य व्याचष्टे– **प्रादुर्भावरूपेणेति** ।। किमिहान्यं इत्येतद् व्याचष्टे– **इहेति** ।। स एतमेव पुरुषं ब्रह्म ततममपश्यदिति वाक्यं स मूलरूपी भगवानेतमेव पुरुषमवताररूपं गुणादिपूर्णं अपश्यत् सोऽवताररूपी चैतमेव स्वात्मानमेव च ब्रह्म ततममपश्यदिति प्रमाणेन द्वेधा व्याख्यातम्। तत्र द्वितीयव्याख्यां स्ववचनेन विवृणोति– **अमहेवेति** ।। ननु कृष्णरामादीनां जन्मादिदोषदर्शनात् कथं परिपूर्णत्वमित्यत आह–**नायमिति** ।। स्तम्भाद्वा स्तम्भान्नरसिंह इव। नरदेहाद्वेति वाशब्देन ऋष्यादिदेहात् प्रादुर्भूत इत्यर्थः ।

**भाष्यम्-**

## (भगवान् स्वात्मानं स्वयमेव सदा संवेत्ति)

**एतमेव पुरषं व्यासकृष्णकपिलराघवादिरूपं ततममपश्यत्। [1]ततमं परिपूर्णतमं ब्रह्मापश्यत्। इदं मे स्वरूपमदर्शमेवाहमिति। रङ्गस्त्ववधारणे– 'रङ्गोऽवधारणे चैव संवादे च प्रयुज्यते' इति पदविवेके। अपश्यदित्यत्र नातीतकालत्वं विवक्षितम्, अभिव्यैख्यदित्यभिशब्दस्यानुषङ्गात्। अपश्यत् पश्यतीति वैककालसम्बन्धं विना वक्तुमशक्यत्वात् तथा प्रयोगः।**

**'प्रयोग एककालीनः सर्वकालेऽनुषज्यते।**
**ददर्श विष्णुरित्यादौ नित्यचिद्रूपतो हरेः ।।' इत्यादि सत्तत्त्वे ।।**

---

१. ततततमम्- ह.पा.

'परोक्षप्रिया इव' इत्यसुराणां सम्यगदर्शनेन पतनं देवानां प्रियं तथाऽप्यपरोक्षदर्शिन्येव प्रीतिं कुर्वन्तीतीवशब्दः ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये द्वितीयप्रघट्टके चतुर्थोऽध्यायः ॥**

**टिप्पणी -**

एतमेवेति परामर्शविषयं दर्शयन् व्याचष्टे– **एतमेवेति** ॥ स एतमित्यत्र तच्छब्देनावताररूपपरामर्शमङ्गीकृत्यावताररूपस्यापि स्वरूपपूर्तिज्ञातृत्वं व्याख्यातम् । तत्रोपनिषज्ज्ञापकप्रदर्शनायेदमदर्शमितीं इत्येतद् व्याचष्टे– **इदं मे रूपमिति** ॥ अस्य महिदासावतारवाक्यत्वात् प्रकृतसिद्धिः । इतिशब्दस्तूपनिषदीव हेत्वर्थे । यद्वा रङ्गस्यावधारणार्थत्वमन्वयपूर्वमाह– **इदमिति** ॥ इदं मे रूपं अदर्शमेवाहमित्यन्वयसम्भवेन रङ्गस्त्ववधारण इत्यर्थः । अपश्यदित्यतीतार्थकलङ्प्रयोगात् सर्वदा दर्शनं नेति भ्रान्तिं वारयति– **अपश्यदित्यत्रेति** ॥ **अनुषङ्गादिति** ॥ अपश्यदित्यस्याभिशब्दानुषङ्गे चाभ्यपश्यदिति भवति । अभितोऽर्थदर्शनं च सार्वकालिकमेवेति भावः । नन्वनुषक्तस्याभीत्यस्य सर्वकालसम्बन्धित्वेऽर्थे विवक्षिते अपश्यदित्यतीतकालसम्बन्धितया निर्देशो व्याहन्येतेत्यत आह– **अपश्यदिति** ॥ अपश्यद् इति पश्यतीति वा कालसम्बन्धं विना निर्देष्टुमशक्यत्वादेव तथा व्यवहारः । वस्तुतस्तु अभिशब्देन दर्शनस्य सर्वकालसम्बन्धित्वेऽवगते लकारः कालमात्रसम्बन्धी पर्यवस्यतीत्यविरोधः इति भावः । मा भूदभिशब्दानुषङ्गः । विष्णुविषयो ददर्शेत्यादिप्रयोगः सार्वकालिकदर्शनमेवावगमयतीति प्रमाणेनाऽह– **प्रयोग इति** ॥ विष्णुर्ददर्शेत्यादौ एककालाविषयेऽपि लकारप्रयोगः । सार्वकालिकं दर्शनादिकमभिधत्ते । कुतः हरेर्नित्यचिद्रूपत्वादित्यर्थः । परोक्षप्रिया देवा इत्येतद् व्याचष्टे– **परोक्षेति** ॥ तर्हीवशब्दवैयर्थ्यमित्यत आह– **तथापीति** ॥ अपरोक्षदर्शिन्येव

सम्यग् दर्शिन्येव प्रीतिं कुर्वन्तीत्यर्थः । सर्वेषामपि परोक्षोपदेशे योग्यानामपि तत्र ज्ञानानुदयात् परोक्षप्रिया इवेतीवशब्दप्रयोग इति भावः ॥ ३-२३ ॥

**॥ इति श्रीमद्विट्ठलाचार्यपुत्रेण श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां ऐतरेयभाष्यार्थरत्नमालायां द्वितीयप्रघट्टके चतुर्थोऽध्यायः ॥**

**खण्डार्थः-**

प्रागीश्वरस्यायतनप्रदत्वमुक्तम् । अधुनान्नदातृत्वेनापि पालकत्वं नियामकत्वं प्राणद्वारेणापि भोगशक्तिप्रदत्वसर्वात्तृत्वं ज्ञानक्रियामोक्षप्रदत्वादिगुणानन्त्यं नियमनाय रूपानन्त्यं रूपाणामपि मूलरूपवद् द्रव्यादिपूर्तिरित्यादिकमुच्यतेऽस्मिन् खण्डे । स आत्मा लोकालोकपालाश्चेमेऽन्वेवं सृष्टा हि । येभ्योऽन्नं सृजा सृजे इतीक्षतैच्छदित्यर्थः । स आत्मा अपः पूर्वसृष्टाबाख्यान् महदादितत्त्वाभिमानिनो देवान् अभि सम्यक् प्रीतिपूर्वमतपत् अपश्यत् । एतासां देहान्तरं स्रक्ष्यामी-त्यैच्छच्च । अभितप्ताभ्यो दृष्टाभ्यस्ततः परं देहविशिष्टत्वेन सिसृक्षाविषयाभ्यश्च ताभ्यस्तद्देहैकदेशेभ्यः तासां मूर्तिरेकं शरीरमजायत । नन्वन्नसृष्टिं प्रतिज्ञाय देहसर्जनमयुक्तं इत्यत उक्तम्– **या वै सेति** ॥ या सा मूर्तिरजायत तद्वै तदेव दिव्यावयवसुगन्धसुस्वादुत्वा-दिसम्पत्त्या भोग्यत्वाद् ब्रह्मणो देवानां चान्नमिति वै प्रसिद्धम् । यद्वा, तदन्नं वै अन्नाभिमानिनो ब्रह्मणो विशेषेण रूपं वै । तस्मात् तस्य विशेषतो भोग्यमिति भावः । सृष्टं तदेनत् तदेतदन्नाख्यं चतुर्मुखरूपम् । अति स्वावस्थानदेशमतिक्रम्य पराक् पश्चादजिघांसत् अगच्छत् । हन हिंसागत्योरिति धातोः । ब्रह्मा तद्भोग्यं रूपं वाचा वागाख्येन करणेनाजिघृक्षद् ग्रहीतुं भोक्तु-मैच्छत् । तद्वाचा केवलं व्याहरणेन ग्रहीतुं भोक्तुं नाशक्नोत् । वागिन्द्रियस्य केवलं व्यवहारकारणत्वेऽपि भोगशक्तिप्रदत्वाभावादिति भावः । नन्वेवं सति ब्रह्मण इच्छा मोघा स्याद्भोगशक्तिप्रदो वायुस्तेनैव भोक्तव्यमिति ज्ञानाभावश्च प्रसक्त इत्यत उच्यते– **स यद्धैनदिति** ॥ स ब्रह्मा यद्वाचाऽग्रहीष्यद् ग्रहीतुमैच्छत् वर्णयितुमैच्छत् । एनदेतदन्नमभिव्याहृत्य सम्यक् तत्स्वरूपं वर्णयित्वैवात्रप्स्यत्

तृप्तोऽभूत् । ब्रह्मा ह्यन्नमूर्तिं वर्णयितुमेवैच्छत् वर्णयित्वा तृप्तिं चाऽप । तदुद्देश्यफलस्य लब्धत्वान्नेच्छादिवैय्यर्थ्यम् । यत्तु वागाद्येकैकेन्द्रियेण सर्वभोग्यभोगेच्छायास्तत्तल्लिङ्गेन प्रदर्शनं तत्केवलं क्रीडया देवतातारतम्यज्ञापनायाभिहितमतो नाज्ञानादिकमिति भावः । एवमुत्तराण्यपि वाक्यानि योज्यानि । अभिप्राण्याऽघ्राय । स ब्रह्मा यच्छिश्नेनाग्रहीष्यत् शिश्नव्यापारनिरोधे सर्वेन्द्रियशक्तिकुण्ठनात् स एव सर्वेषु रतिं कर्तुमैच्छदेनद् एतदन्नं विसृज्य तदालिङ्गनादिना रेतो विसृज्य तृप्तोऽभूदित्यर्थः । तदन्नमपानेन करणेनाजिघृक्षद्धोक्तुमैच्छदपानं करणीकृत्य सर्वेन्द्रियभोग्यभोगं कर्तुमैच्छदिति यावत् । तदावयदशक्नोत् । अपानव्यापारनिरोधे सर्वेन्द्रियशक्तिकुण्ठनात् स एव सर्वेषु भोगशक्तिप्रद इति भावः । वायोर्भोगशक्तिप्रदत्वोपसंहारपूर्वं भोक्तृत्वं चोच्यते– **स एष इति** ।। यद्वायुर्यो वायुः स एषोऽन्नस्य ग्राहयतीति ग्रहो भोजकः गृह्णातीति ग्रहो भोक्ता च । न केवलमेतावत् किन्त्वायुष्यादिप्रदश्चेत्युच्यते– **अन्नायुरिति** ।। यद्वायुर्यो वायुरेषः अन्नात्मकदेहवतां देवानामन्नदेवस्य ब्रह्मणश्चायुष्यप्रदः । यद्वा देवानामायुर्ज्ञानक्रियामोक्षप्रदश्च । अयतेर्गत्यर्थत्वाद् गतेश्च ज्ञानक्रियारूपत्वात् । देवानामन्योन्यापेक्षया प्रवर्तकत्वे भगवत्स्वातन्त्र्यं न स्यादित्यतः पुरावृत्त उच्यते– **स ईक्षतेति** ।। स आत्मा देवानां ब्रह्म शरीरे प्रवेशात् पूर्वमित्थमैक्षतेदं ब्रह्मादिजीवजातं मदृते मां विना मत्प्रेरणां विना कथं नु स्यात् कथं विशिष्टज्ञानादिमत् स्यान्न कथमपि । तस्मादहमेतेषां चेष्टासिद्ध्यर्थमेतेषु प्रवेक्ष्यामीत्याशयः । स पुनरित्थमैक्षत । कतरेण सुखतरेणोर्ध्वलोकं गतानां सुखसाधकेन । पूर्णानन्दभगवत्सम्बन्धित्वाद् वा कतरेण सुषुम्नाख्यद्वारेण । कतरेण पूर्णसुखेन वायुना सह प्रपद्यै प्राप्नुयामिति ।

ननु त्वत्प्राप्तिः कुतोऽधिष्ठानभूतेन ब्रह्मणा कर्त्रा तदधिष्ठितैर्वागादिभिरिन्द्रियैः करणैश्च स्वतः प्रवृत्तिसम्भवादित्यत उच्यते– **स ईक्षतेति** ।। स पुनरित्थमैक्षत । यदि ब्रह्मणा कर्त्रा वागादिभिरिन्द्रियैः करणैः स्वातन्त्र्येणाभिव्याहरणादिविसर्जनान्तं कर्म कृतं स्यादथ तर्ह्यहं कः स्यां विशिष्टचेष्टावत्त्वाद्यभावात्

कथं विष्णुशब्दवाच्यः स्यामित्यर्थः। एवमीक्षित्वा स नारायणः एतमेव मस्तकसीमानं विदार्यैतया सुषुम्नाख्यया द्वारा प्रापद्यत प्रविवेश । सैषा द्वाः विदारितत्वाद् विदृतिः । तदेतन्नाड्याख्यं स्थानं पूर्णानन्दस्य हरेः सम्बन्धित्वान्नान्दनम् । उपलक्षणमेतत्। वासुदेवः प्रपदाभ्यां च प्रविष्ट इति ग्राह्यम्। तस्यैव हरेरनिरुद्ध-प्रद्युम्नसङ्कर्षणाख्यस्य रूपत्रयस्य क्रमेण त्रय आवसथाः त्रीणि स्थानानि । अत एव त्रयः स्थानविशेषाः अक्षिकण्ठहृदयरूपाः स्वप्नाः स्वः स्वतन्त्रः सुखरूपो वा भगवान् अत्राऽप्नोतीति स्वप्ननामकाः । आवसथा निर्दिश्यन्ते– **अयमिति** ।। अयं सन्निहितोऽक्ष्याख्य एक आवसथः। अयं तदनन्तरं सन्निहितः कण्ठाख्योऽपरः। अयं तदनन्तरं सन्निहितो हृदयाख्योऽन्य इति त्रय आवसथा इत्यन्वयः । न केवलं रूपपञ्चकेन नियामकत्वं, किन्तु मत्स्यादिभिरनन्तैरपि रूपैरन्तर्नियमनेन बहिरुपदेशेन च ज्ञानप्रदत्वं प्राप्तोपद्रवनिवारणेन पालकत्वं चोच्यते– **स जात इति** ।। यश्चतुर्मुखस्य मूर्धन्यनाड्यनुप्रविष्टो नारायणः स एव भगवान् विष्णुः चतुर्मुखहृद्गुहायां मत्स्यादिरूपेण जातः प्रादुर्भूतः सन् भूतानि प्रवेष्टुं अभिसमन्तात् सर्वेषु कालेषु विशेषेणाख्यदपश्यत् प्राविशच्च । इह भूतेषु मत्तोऽन्यं प्रवर्तकं वावदिषत् किम् ? किमाक्षेपे । कोऽपि न वदेदिति मत्वा प्राविशदित्यन्वयः । ननु मूलरूपिणो हरेर्भवतु सर्वनियामकत्वं कथमवताररूपस्येत्यत उच्यते– **स एतमेवेति** ।। स भगवान् मूलरूपी प्रादुर्भावरूपी चैतमेव पुरुषमवतारपुरुषं ब्रह्म सर्वगुणसम्पूर्णं ततमं देशतः कालतश्चातिशयेन ततमभि सर्वदाऽपश्यत् । तत्रेन्द्रशब्दप्रयोग एव लिङ्गमित्युच्यते– **इदमिति** ।। इतिशब्दो हेतौ। रङ्गोऽवधारणे। इति यस्मादिदं मे रूपमदर्शमेव तस्मादहमिन्द्रो नाम इदं द्रोहवैनामेति पुनर्वचनं प्रमाणप्रसिद्धिद्योतनाय । यद्वा, य इदं द्रोहवै नाम तमिदं द्रमिदं द्रशब्दस्य मुख्यार्थं सन्तं पारोक्ष्येण मध्ये इति वर्णस्योद्धारेणाव्यवधानेनेन्द्र इत्याचक्षते । कुतः ? देवा ब्रह्माद्या वेदाद्यभिमानिनो वा परमात्मनो यत्परोक्षत्वं सम्यगज्ञातत्वं तत्र प्रीतियुक्ता इव असुराणां सम्यगदर्शनं

देवानां प्रियमपि योग्यानां तथा दर्शनमप्रियम्। प्रत्युत सम्यग्दर्शनमेव प्रियमिति इवशब्दः ॥ ३ ॥ २३ ॥

## ॥ इति द्वितीयप्रघट्टके चतुर्थोऽध्यायः ॥

## ॥ अथ द्वितीयप्रघट्टके पञ्चमोऽध्यायः ॥

**उपनिषत्-**

### (भगवत उत्पत्तिः)

(अपक्रामन्तु गर्भिण्यः) पुरुषो हवा अयमादितो गर्भो भवति यदेतद् रेतस्तदेतत् सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवाऽत्मानं बिभर्ति तद् यदा स्त्रियां सिञ्चत्यथैनञ्जनयति ॥ तदस्य प्रथमं जन्म तत् स्त्रिया आत्मभूयं गच्छति ॥ यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति साऽस्यैतमात्मानमत्र गतं भावयति सा भावयित्री सा भावयितव्या भवति ॥ तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत् कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद् भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः ॥

**भाष्यम्-**

अयं नारायणो देवः पुरुषे प्रथमं विशेत्।
अन्नस्थोऽन्नेन सहितस्तस्मिन् रेतस्त्वमागते।
तस्मिन् [१]स्थितं स्वरूपं स पुरुषस्थो बिभर्त्यजः।

१. स्थितस्वरूपम्- ह.पा.

तद्रूपं रेतसा साकं स्वयं पुंसि स्थितो हरिः।
स्त्रियां सिञ्चति तस्यैव स्थानान्तरगतेः प्रभोः।
प्रथमं जन्म [२]विष्णोस्तु स तस्या अङ्गवत् प्रभुः।
नैनां हिनस्त्यानुकूल्यात् सा पुत्रं भावयत्यथ।
पुत्रस्य भावना सैव तद्गत्वाद्धरिभावना।
सम्भावितव्या सा चैव भर्त्रा पुत्रश्च सादरम्।
सम्भावनं कुमारस्य जानतः केशवे भवेत्।
तस्येत्यर्पणमात्रेण पूजितो हि भवेद्धरिः।
पुत्रस्थस्य हरेः पूजां कुर्वतः पृथिवीस्थितिः।
स्वर्गस्थस्यापि भवति पुत्रपुण्यं यतोऽखिलम्।
अत्यल्पपुण्यभाक् स स्यान्नार्चयेत् केशवं यदि।

**टिप्पणी -**

पुरुषो ह वा इत्यादौ जीवमात्रोत्पत्तिप्रक्रियोच्यत इत्यपव्याख्यानिरासाय प्रमाणेन व्याचष्टे– **अयमिति** ॥ आत्मा वा इदमित्यत्र प्रकृतपरामर्शोऽयमिति भावेनोक्तम्– **अयं नारायण इति** ॥ गर्भो भवतीत्यस्य तात्पर्यम्– **विशे-दिति** ॥ परामर्शसिद्ध्यर्थमध्याहृत्य व्याचष्टे– **अन्नस्थ इति** ॥ यद् यदा एतदन्नं प्रसिद्धं रेतः सम्भूतं तत् तदेत्यस्यार्थः– **तस्मिन् रेतस्त्वमागत इति** ॥ यद्वा यद् यदा एतदन्नमन्नगतं भगवद्रूपं रेतः सम्भूतं रेतःप्राप्तं रेतोऽन्तर्गतत्वं प्राप्तं तदेत्यस्यार्थान्तरमाह–**तस्मिन्निति** ॥ तस्मिन्नन्नगते रेतस्त्वं रेतोऽन्तर्गतत्वम्। आत्मन्येवाऽत्मानमित्येतद् व्याचष्टे– **तस्मिन्निति** ॥ तद् यदा स्त्रियामित्यस्य कर्त्रध्याहारपूर्वमर्थमाह–**तद्रूपमिति** ॥ अथैनज्जनयतीत्यस्याथ तदा एतद्रेतोगतं स्थानान्तरे जनयति प्रादुर्भावयति । अथ तस्मादस्य स्थानान्तरगतेरित्यर्थ-मभिप्रेत्याऽथैतज्जनयति तदस्य प्रथमं जन्मेत्येतद् योजयति– **तस्यैवेति** ॥ यथा

२. विष्णोस्तत्- ह.पा.

स्वमङ्गं तथेत्यादि व्याचष्टे–**स तस्या इति** ।। अङ्गवदानुकूल्यादित्यन्वयः । सात्रगतं भावयतीत्यस्यार्थः– **सा पुत्रमिति** ।। साऽस्यै तमात्मानमत्रगतं भावयतीति विशिष्टवाक्यं व्याचष्टे– **पुत्रस्येति** ।। सा भावयतीत्यस्यार्थः– **सम्भावितव्येति** ।। कुमारं जन्मनोऽग्र इत्यस्यार्थः– **पुत्रश्चेति** ।। अधीत्यस्यार्थः– **सादरमिति** ।। स यत्कुमारमित्यस्यार्थः– **सम्भावनमिति** ।। ननु पुत्रसम्भावनं कथं भगवत्सम्भावनं स्यादित्यतो जानत इत्युक्तम् । अस्मिन् हरिः स्थित इति जानत इत्यर्थः । कथं तत्र हरिः स्थित इति ज्ञानमात्रेण पुत्रसम्भावनं केशवे भवेदित्यत आह– **तस्येति** ।। यथा प्रतिमाभिषेकालङ्कारादिपूजनं तदन्तर्गतस्य हरेरित्यर्पणमात्रेण हरिः पूजितस्तथाऽत्रेति भावः । ननु यदुक्तमेषां लोकानामित्यादि, तदयुक्तम् । तथाहि– अस्तु पुत्रगतहर्युपासकस्य स्वर्गादिप्राप्तिः, पृथिवीप्राप्तिस्तु न युज्यते । उपासनादशायां सिद्धत्वात् । स्वर्गप्राप्त्यनन्तरं तदसम्भवादित्यतस्तद् घटयति–**पुत्रस्थस्येति** ।। प्राक् पुत्रस्थस्य हरेः पूजां कुर्वतः तदवान्तरफलतया स्वर्गस्थस्यापि जन्मान्तरं विना पृथिवीस्थितिर्भवत्येव । यतः पुत्रपुण्यमखिलं स्वर्गस्थस्य भवतीति योज्यम् । ननु 'पुनःपुनः कर्मकृतिर्मानुष्यजय उच्यते । जन्मान्तरं विना नैव कर्मणा तत्तु युज्यते ।। पुत्रेण विद्यया नित्यमेकैकेनापि युज्यते । उभाभ्यां किमु वक्तव्यमष्टभागफलं सुतात् । विद्यया त्वर्धमाप्नोति सर्वं सप्तान्नविल्लभेत् ।।' इति सप्तान्नब्राह्मणोदाहृतवचने सप्तान्नविद्योपासकानां देवानां 'देवमानुष्यतामंशैः प्राप्ता ये पुत्रतः फलम् । स्यात्तेषामेव चाऽमुक्तेः' इत्युक्तरीत्या मनुष्यतयाऽवतीर्णानां स्वपुत्रकृतनिखिलपुण्यभाक्त्वस्यान्येषामष्टभागपुण्यभाक्त्वस्योक्तत्वाद् विरोध इत्यत आह– **अत्यल्पेति** ।।

**उपनिषत्-**

**(जनार्दनस्य जन्मत्रयम्)**

**तदस्य द्वितीयं जन्म ।। सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रति धीयते तथाऽस्यायमितर आत्मा कृतकृत्यो**

वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म ॥ तदुक्तमृषिणा । गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा ॥ शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति ॥ गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् (यथास्थानं गर्भिण्यः) ॥

॥ इति श्रीमन्महैतरेयोपनिषदि द्वितीयप्रघट्टके पञ्चमोध्यायः ॥

**भाष्यम्-**

पृथिव्यां जन्म पुत्रस्य द्वितीयं विष्णुजन्म हि ।
एतद्रूपं निधायैव जीवार्थे धर्मकर्तवे ।
पितृस्थेन तु रूपेण गच्छत्यन्यत्र केशवः ।
पितुरन्यत्र जननं तृतीयं जन्म तद्धरेः ।
अन्तर्यामितयैवं हि सर्वजीवेषु संस्थितम् ।
सर्वदोषोज्झितं विष्णुं कर्तारं सर्वकर्मणाम् ।
नित्यानन्दं स्वतन्त्रं च सर्वज्ञं सर्वतोऽधिकम् ।
यो वेद देहबन्धात् स विमुक्तो नित्यमुत्तमान् ।
भोगान् भुङ्क्ते यथायोग्यमिति वेदानुशासनम् । इत्यैतरेयसंहितायाम् ॥

## (जीवेन सह देवानामपि जननम्)

नात्र जीवोत्पत्तिमात्रमुच्यते । नहि जीवोत्पत्तिमात्रपरिज्ञानादमृतत्वं भवति । ज्ञातमेव सर्वैः पितापुत्रसम्बन्धमात्रं [१]पश्वादिभिरपि । 'गर्भे नु सन्नन्वेषामवेदमहं

---

१. श्वादिभिरपि- ह.पा.

देवानां जनिमानि विश्वा' इत्युक्तार्थ उदाहृते मन्त्रे देवजन्मकथनाच्च । विष्णुर्हि परमो देवः। तेनैव सह सर्वेऽपि देवा जीवदेहजनने जायन्त इव। शरीरप्राप्तिरेव हि जन्मान्येषामपि। अयमेव विशेषो देवानां दुःखाभोगः। स्वातन्त्र्यं च विष्णोः।

## (भगवतः शरीरे प्रवेशः, ततो निर्गमनं च)

'आत्मन्येवाऽत्मानं बिभर्ति', 'आत्मानमेव तद् भावयति' इत्याद्यात्म-शब्दश्च मुख्यतो विष्णावेव युज्यते । 'णकारो बलं षकारः प्राण आत्मा' इति विष्णुशब्दार्थैकदेशवाचित्वाच्चाऽत्मशब्दस्य। 'एतया द्वारा प्रापद्यत' इति तस्यैव शरीरप्रवेशस्य प्रस्तुतत्वाच्च। जीवशरीरं परित्यज्यान्यत्र गमनमात्रं विष्णोरप्यस्तीति प्रैतीत्युक्तेऽप्यविरोधः। कृष्णराघवादिस्वरूपमेव ह्यसौ न परित्यजति।

**टिप्पणी -**

यद्युक्तप्रकारेण ज्ञानपूर्वं पुत्रान्तर्गतं केशवं नार्चयेत् तर्ह्यत्यल्पपुण्यभागष्टभाग-पुण्यभाग् भवतीति तत्र विवक्षितम्। उक्तप्रकारेण तत्र हरिं भावयितुस्त्वखिलं पुत्रपुण्यं भवतीत्यत्र विवक्षितम्। बृहद्भाष्ये यदि पिता सप्तान्नविद्योपासकस्तदा पुत्रसन्तानस्थैः सर्वैर्यत्कृतं पुण्यं तदखिलं भवतीति विवक्षितम् । न पुत्रमात्रं कृतम् । 'पुत्रतः फलं स्यात्तेषामेव चाऽमुक्तेः' इत्युक्तत्वादतो न विरोध इति । तदस्य द्वितीयं जन्मेत्येतत् । तत् तस्यां पृथिव्यामस्य पुत्रस्य यज्जन्म तदस्य हरेर्द्वितीयं जन्मेत्यावृत्त्या योजयति– **पृथिव्यामिति**।। सोऽस्यामात्मेत्यादि तात्पर्यतो व्याचष्टे– **एतद्रूपमिति**।। जीवार्थे पितृजीवार्थे। कर्मकर्तवे पुण्यानि कर्माणि कर्तुम्। पुत्रजीवार्थे धर्मकरणायेति वा। अथास्यायमितर आत्मेत्येतद् व्याचष्टे– **पितृस्थेनेति** ।। स इतः प्रयन्नेवेत्यादि व्याचष्टे– **पितुरिति** ।। स एवमित्यादि फलवाक्ये एवमिति परामृष्टं दर्शयति– **अन्तर्यामितयेति**।। पुरुषो ह वायं तद् यदा स्त्रियां सिञ्चति स यत्कुमारमिति सर्वजीवेषु संस्थितं सोऽग्र एवेति । सर्वदोषोज्झितं नित्यानन्दं स्वतन्त्रं च सर्वतोऽधिकं पुण्येभ्यः

कर्मभ्य इति कर्तारं सर्वकर्मणां यो वेदशरीरभेदात् शरीराख्यात् स्वरूपविदारकाद् बन्धादमृतो मुक्तः सन् यथायोग्यं सर्वान् कामानाप्त्वा समभवद् भुङ्क्त इत्यर्थ इति भावः । अध्यायोक्तस्यास्य मोक्षोपायस्यावश्यमनुष्ठेयत्वं योगशास्त्र-विहितत्वादित्यवधारणाय द्विरुक्तिरित्यभिप्रेत्योक्तम्– **इति वेदानुशासनमिति** ।। खण्डप्रतिपाद्यप्रमेयेऽवगते तदुक्तमृषिणेति प्रतिज्ञायोदाहृतमन्त्रस्य सामञ्जस्यं भवतीति भावेन खण्डप्रतिपाद्यपरामर्शकं स एवं विद्वानिति वाक्यमेवं व्याख्यातमिति बोध्यम् । अपव्याख्यानमपाकरोति– **नात्रेति** ।। इतश्च न जीवोत्पत्तिमात्रमत्रोच्यत इत्याह– **गर्भ इति** ।। अस्तु देवजन्म कथ्यत इति विष्णुजन्म तु कथं लभ्यत इत्यत आह– **विष्णुर्हीति** ।। तर्हि देवानामिति बहुवचनं कथं कथं च विष्ण्वादीनां जनिरित्यत आह– **तेनैवेति** ।। जायन्त इवेत्युपमार्थमाह– **शरीरेति** ।। अन्येषामपि जीवानामपि । तर्हि को विशेषो देवानां येनेवशब्द इत्यत आह– **अयमेवेति** ।। देवानां विष्ण्वादीनाम् । विष्णोरसाधारणं विशेषमाह– **स्वातन्त्र्यं चेति** ।। इतोऽप्ययं खण्डः परमात्मविषय एव मुख्य इत्याह– **आत्मन्येवेति** ।। आदिपदेन साऽस्यैतमात्मानमित्यादि गृह्यते । आत्मशब्दस्य विष्णौ मुख्यत्वं कुत इति चेत् पूर्वोदाहृतप्रमाणादिति स्थिते युक्तिमप्याह– **णकार इति** ।। 'आततत्वं सर्वगुणैर्देशतः कालतस्तथा । आत्मशब्दोदितं तच्च षशब्देनाभिधीयते' इति वक्ष्यमाणत्वादिति भावः । आत्मशब्दस्य भगवत्परत्वे ज्ञापकान्तरमाह– **एतयेति** ।। आत्मा वा इदमित्युक्तात्मन एव स एतमेव सीमानमिति परामर्शं विधाय शरीरप्रवेशस्योपक्रान्तत्वादात्मन्येवात्मानमित्यत्रात्मनी-त्युक्त आत्मा पुरुषशरीरस्थो भगवानित्यर्थः । अत्रात्मशब्देन परमात्माङ्गीकारे प्रैतीत्युक्तमरणविरोध इत्यत आह–**जीवेति** ।। प्रैतीत्युक्तं प्रयाणं न मरणं येन विरोधः स्यात्, किन्तु जीवशरीरं परित्यज्यान्यत्र गमनमात्रमिति भावः । जीवशरीरं परित्यज्येति जीवशरीरग्रहणव्यावर्त्यमाह-- **कृष्णेति** ।। कृष्णराघवादि-सञ्ज्ञितं स्वरूपं देहमित्यर्थः ।

**भाष्यम्-**

## (कृष्ण अद्यापि देवलोके तैः पूज्यते)

‘कृष्णो ह्यत्यक्तदेहोऽपि,त्यक्तदेहवदेव च ।
लोकानां दर्शयामास स्वरूपसदृशाकृतिम् ।
येन रूपेण कंसादीन् जघ्ने [1]तद्रूपमेव हि ।
पूज्यतेऽद्यापि शर्वाद्यैर्निर्मिताऽन्या शवाकृतिः ।
स्वर्गारोहणकाले हि जनास्तेनैव मोहिताः ।
यत्तद् रूपं निजं विष्णोर्दृष्टं सर्वनरैर्भुवि ।
अद्यापि तद् देवलोके पूज्यते सर्वदैवतैः ॥’ इत्यादि स्कान्दे ॥

‘प्रदर्श्यातप्ततपसामवितृप्तदृशां नृणाम् ।
आदायान्तरधाद् यस्तु स्वबिम्बं लोकलोचनम् ॥’

इति च भागवते ॥

‘प्रेतां यज्ञस्य शम्भुवा’ इत्यादिवत् प्रकृष्टगतिवाच्येवायं शब्दः । प्रकृष्टगतित्वादेव च मरणेऽपि प्रयुज्यते ।

## (जीवेश्वरभेदः)

‘एषामवेदमहम्’ इत्यपि जीवभेद एवोक्तः । अन्यथा मम जनिमानीत्येवोच्येत । व्यर्थता चैषामित्यादिविशेषणानाम् । अवेदमित्यनेनैव स्वस्य सिद्धत्वादहमित्यप्यहेयत्वेनेति क्रियाविशेषणम् । जन्म जानन्नपि देवानां दुःखादिहेयरहितत्वेन व्यजानामित्यर्थः । तस्माद् ‘अहं मनुरभवम्’ (ऋ.सं. ४.२६.१) इत्यादावप्यहेयगुणं भगवन्तमेवाहंशब्दो वक्ति । सर्वान्तरत्वात् तस्मिन्नेवाभवमित्युत्तमपुरुषशब्दोऽपि सर्वो वर्तते ।

---

१. तद्रूप एव हि- ह.पा.

'अहेयत्वादहं विष्णुः स तु सर्वान्तरत्वतः ।
अस्यस्मीत्यादिभिः शब्दैरुच्यतेऽन्योऽपि जीवतः ॥' इति ब्रह्मवैवर्ते ॥

**टिप्पणी -**

कृष्णस्य स्वर्गारोहणकाले शरीरत्यागोक्तेरर्थमाह– **कृष्ण इति** ॥ लोकानां लोचनानि यस्मिंस्तल्लोकलोचनं सौन्दर्यातिशयेन सर्वैरवलोकनीयम् । स्वबिम्बं स्वमूर्तिं नृणां प्रदर्श्य सर्वदा दर्शनसाधनं तपो न तप्तं यैस्तेऽतप्ततपसस्तेषामवितृप्तदृशां सतां यः स्वबिम्बमादायैवान्तरधादन्तर्धानमगान्न तु तत्परित्यज्यागात् स भगवानित्युत्तरेणान्वयः । प्रैतीत्यस्य गतिवाचित्वे उदाहरणमाह– **प्रेतामिति** ॥ तर्हि मणे तत्प्रयोगो न स्यादित्यत आह– **प्रकृष्टेति** ॥ जीवदेहगतानां विष्ण्वादिदेवानां दुःखं विना जीवदेहं परित्यज्य प्रकर्षेण गतिरूपत्वादेव मरणेऽप्ययं शब्दः प्रयुज्यते । ब्रह्मणः शरीरं परित्यज्य गतेरेव जीवमरणत्वात् । 'ब्रह्मणा सम्परित्यक्तो मृत इत्युच्यते बुधैः' इति वचनादिति भावः । ननु स यत्कुमारमिति वाक्यं प्रतिमात्वेन पुत्रसम्भावनां जानतस्तद्गतहरिसम्भावनैवेति व्याख्यातम् । कुत एतदेवं व्याख्यायते? जीवेश्वरयोरभेदात् कुमारं भावयतीति यत् तेन परमात्मानमेव भावयतीति वा । पितृपुत्रचैतन्यैक्यात् पुत्रसम्भावनं स्वसम्भावनमेवेति वाऽर्थः किन्न स्यात् । नचोदाहृतमन्त्रविरोधः । तत्राहमेव गर्भे सन् एषां देवादीनां विश्वानि जनिमान्यनुभवामि मां शतं पुरः शरीराण्यरक्षन् श्येनपक्षीव वेगेनाधः तस्माद् गर्भाद् बहिर्निर्गतोऽस्मीति तद्वाक्यस्यापि जीवैक्याभिप्रायेणोपपत्तेरित्यत आह– **एषामवेदमिति** ॥ जीवभेदो जीवेश्वरभेदः परस्परं जीवभेदश्च । देवपदेन देवानां देवोत्तमस्य च विवक्षितत्वादिति भावः ॥ **अन्यथेति** ॥ अभेदविवक्षया स्वस्यैवानेकशरीरप्रवेशो न जन्मानुभवाभिप्रायत्वे ममेत्यश्रुतं पदं कल्प्यमिति भावः । श्रुतहानं चाह– **व्यर्थतेति** ॥ अभेदविवक्षया स्वस्यैवानेकशरीरप्रवेशेन जन्मानुभवाभिप्रायत्वे ममेत्यश्रुतं पदं कल्प्यमिति भावः । श्रुतहानं चाह– **व्यर्थतेति** ॥ एषां देवानामहमिति विशेषणानामित्यर्थः । हमित्यस्य कथं वैयर्थ्यमित्यत

आह– **अवेदमिति** ।। उत्तमपुरुषप्रयोगादेवेत्यर्थः । 'अप्राप्ते शास्त्रमर्थवद्' इति न्यायादिति भावः । ननु भवत्पक्षेऽप्यहमिति व्यर्थमित्यत आह– **अहमिति** ।। अस्मिन् पक्षे योजनामाह– **जन्मेति** ।। ननु 'अहं मनुरभवं सूर्यश्च' इत्यस्मिन् वाक्ये वामदेवस्य मन्वाद्यभेदं उच्यते, अतः प्रकरणवशाद् गर्भे नु सन्नित्यादिकमप्यभेदपरमङ्गीकार्यम् । तत्रोत्तमपुरुषप्रयोगेऽप्यहंशब्दावैयर्थ्यवत् प्रकृतेऽप्यहंशब्दस्यावैयर्थ्यमित्युपपत्तेरित्यत आह– **तस्मादिति** ।। अहं मनुरभवमिति जीवैक्यार्थत्वेऽभवमित्यनेनैवाहमित्यस्य सिद्धत्वेन वैयर्थ्यादस्मिन् प्रकरणे देवानामिति भेदोक्तेश्चेत्यर्थः । नन्वहंशब्दस्यास्मदादेशत्वाभावे अहेयत्वगुणेन विष्णुवाचकत्वे अभवमित्युत्तमपुरुषप्रयोगायोग इत्यत आह– **सर्वान्तरत्वादिति** ।। उत्तमपुरुषप्रयोगो हि प्रत्यक् चैतन्ये भवति । भगवानेव हि सर्वेषां प्रत्यग्भूतः । अतो वामदेवोऽपि स्वान्तर्यामिण्यभवमिति प्रयुक्तवानिति भावः । अहंशब्दस्याहेयगुणवत्तया विष्णुवाचित्वे उत्तमपुरुषस्यान्तर्यामिण्युपपन्नत्वे च प्रमाणमाह– **अहेयत्वादिति** ।। **सर्वान्तरत्वत इति** ।। प्रतियोगिभूतवस्त्वन्तर्गतत्वात् 'तत्त्वमसि' (छा. ६.८.७.) इति प्रत्यग्भूतस्वान्तर्गतत्वात् 'सोऽहमस्मि' (ईशावास्य. १६) 'अहं मनुरभवम्' इत्यादिभिः शब्दैरुच्यत इत्यर्थः ।

**भाष्यम्-**

**(अज्ञानिव्यवहारेण न वेदार्थनिर्णयो युज्यते)**

**नच मूढव्यवहार एव वेदनिर्णयाय भवति । किन्तु सर्वेषामनुभवो युक्तयश्च वाक्यान्तरं च निर्णयकारणम् । तस्माद् सर्वजीवादिभ्योऽन्यः सर्वोत्तमो विष्णुरेवात्रोक्तः ।**

**'न वेदेषु पदं किञ्चिद् वर्णो वा व्यर्थ इष्यते ।**

**[१]यथायोग्यं चार्थभेद ऊह्यः सर्वत्र वेदिभिः ।।'** इति शब्दनिर्णये ।।

**'शब्दा रेतोऽन्नमित्याद्या अपि तत्र गतं हरिम् ।**

**वदन्त्यविष्णुवाची च न शब्दः कचिदिष्यते ।।'** इति च ।।

---

१. यथायोगम् - ह.पा.

**भावयति सम्भावयति। सोऽग्र एव अग्र्यो विष्णुरेव। पुत्रसम्भावनमपि तत्रस्थं विष्णुं सम्भावयामीति तत् तस्यैव भवति। एवं भावयतामेव 'एष पन्था उरुगायः' इत्याद्यपि। 'तं पश्यन्ति पशवः' इत्याद्यपि दिव्यपश्वादीनामेव। अन्येषां स्वभाव-प्रवृत्तिः।**

**टिप्पणी -**

ननु लोकव्यवहारो हि शब्दशक्तिग्रहणोपायः। लोके चाहमस्म्यादिशब्दाः स्वात्मन्येव व्यवह्रियन्ते तत्त्वमस्यादिशब्दाश्च प्रतियोगिनि जीवे तेन च 'अहं मनुरभवम्' इत्यादौ स्वस्य मन्वाद्यभेदः 'तत्त्वमसि' इत्यादौ जीवस्य ब्रह्माभेद इति निर्णीयत इत्यत आह– **नचेति** ॥ किन्तु सर्वेषां व्यवहारोऽनुभव इति योज्यम् ॥ **तस्मादिति** ॥ अहमादिशब्दानां भगवत्येव मुख्यतया ज्ञानिभिर्व्यवह्रियमाणत्वान्नाहमीश्वर इत्याद्यनुभवस्य विरुद्धधर्माधिकरणत्वादियुक्तेः 'अहेयत्वादहं विष्णुः' इत्यादिनिर्णायकवाक्यान्तरस्य च सद्भावादिति भावः। ननु गर्भे नु सन् अन्वेषामित्यस्याभेदपरत्वाङ्गीकारे नाहमादिपदवैयर्थ्यं अभवमित्युत्तमपुरुषप्रयोगलब्धार्थस्य स्फुटीकरणेनाहमित्यस्य सार्थकत्वात् स्वस्यैवोपाध्यन्तरत्वाभिप्रायेणैषां देवानामिति परोक्षनिर्देशबहुवचनयोः सम्भवादि-त्यत आह– **न वेदेष्विति** ॥ गत्यन्तराभावे ह्यहमित्येतल्लब्धार्थप्रदर्शकमिति कल्प्यम्। वेदविचारनियतैश्च यथायोग्यमर्थभेद ऊह्य ऊहितश्चास्माभिः। सति चैवं गत्यन्तरे वेदिभिर्वेदेनैकं पदं नैको वा वर्णो व्यर्थयिष्यते बहूनां पदानां वैयर्थ्यमङ्गीकुर्वन् भवान् न परीक्षक इति भावः। ननु भवत्पक्षेऽपि रेतोऽन्न-कुमारादिशब्दानां तद्गते हरौ लक्षणाङ्गीकार्येति समानो दोष इत्यत आह– **शब्दा इति** ॥ साऽस्यै तमात्मानमत्र गतं भावयतीत्यत्रोत्पादयतीत्यर्थप्रतीतेर्व्याचष्टे– **भावयतीति** ॥ उत्पादनार्थकत्वे उत्तरवाक्ये तं स्त्रीगर्भं बिभर्तीति पुनर्गर्भ-धारणोक्तिविरोधादिति भावः। ननु तं स्त्रीगर्भं बिभर्ति सोऽग्र एवेत्यत्र सा उ अग्रे इति पदच्छेदस्तथा च सा स्त्री अग्रे उत्पादनात् पूर्वं तं गर्भं बिभर्तीत्यर्थस्य

विरोध इत्यतो व्याचष्टे– **सोऽग्र एवेति** ॥ ननु पुत्रेश्वरयोर्भेदे कथं पुत्रसम्भावनमात्मसम्भावनं स्यादित्यत आत्मानमेव तद्भावयतीत्यस्य तात्पर्यमाह– **पुत्रसम्भावनमिति** ॥ तत्पुत्रसम्भावनमपि । तत्रस्थं विष्णुं सम्भावयामीति ज्ञाने सति तस्य विष्णोरेव भवतीत्यर्थः । ननु ब्राह्मणे 'नापुत्रस्य लोकोऽस्तीति तत् सर्वे पशवो विदुः । तस्माच्च पुत्रो मातरं स्वसारं चाधिरोहति । एष पन्था उरुगायः सुशेवः यं पुत्रिण आक्रमन्ते विशोकास्तं पश्यन्ति पशवो वयांसि च तस्मात् ते मात्रा मिथुनीभवन्ति' इत्यत्र यस्मान्नापुत्रस्य लोकोऽस्तीति प्रमेयं पशवो विदुस्तस्मात् स्वपुत्रमुखनिरीक्षणार्थं पुत्रो मातरं भ्राता स्वसारं चाधिरोहति । एवमधिरोहणेन पुत्रजन्मोपलम्भवतां यं लोकं विशोकाः पुत्रिण आक्रामन्ति तस्य लोकस्योरुगायः सुशेवः सुखप्रद एष भगवान् पन्थाः मार्गभूतः । तं पश्यन्ति पशवो वयांसि च । तस्मात् ते मात्रा मिथुनीभवन्तीति पश्वादिभिरपीत्युक्तमित्यत आह– **एवं भावयतामेवेति** ॥ एवमुक्तप्रकारेण पुत्रस्थं हरिं भावयतामेवैष पन्था इत्युक्तममृतत्वाख्यं फलं न पुत्रमात्रज्ञानिनां तं पश्यन्ति पशव इति तमुरुगायं पश्यन्तीति वाक्यशेषादिति भावः । ननु तं पश्यन्तीत्यस्य तं पुत्रं पश्यन्तीत्यर्थः पश्वादीनां भगवद्दर्शनायोगादित्यत आह– **तं पश्यन्तीति** ॥ आदिपदेन तत्सर्वे पशवो विदुरित्युक्तं गृह्यते । अन्येषां पश्वादीनां स्वभावत एव मात्राद्यधिरोहणादौ प्रवृत्तिरित्यर्थः ।

**भाष्यम्-**

## (गर्भवासदुःखाद् विमुक्तिः)

**ता एव देवताः शतं पुर आयसीर्ज्ञानिन्यो विशेषतः । 'अय पय गतौ' इति धातोः । मानुपानपेक्ष्य पूर्णत्वात् पुरः । विष्णुर्मुख्यत एव पूर्णः । नच शरीरैर्जीवो रक्षितः । मुख्ये युज्यमाने च नामुख्यार्थः कल्प्यः । शमस्य विद्यत इति शी विष्णुः । पूर्णानन्दत्वात् । स एव ज्ञानत्वाद् यश्चेति श्यः । सोऽस्य जीवस्येन इति श्येनः । विष्णुं स्वामिनं ज्ञात्वेत्यर्थः । निरदीयम्, निष्क्रम्यातीतोऽस्मि गर्भवासम् ।**

## (मुक्तावेव सर्वाभीष्टप्राप्तिः)

स्वरानन्दो विष्णुरत्रग इति स्वर्गलोको विष्णुलोकः । अमृतः सन् सर्वान् कामानाप्त्वा तानेव सर्वान् कामान् समभवदनुभवति । अपेक्षितवस्तुस्वीकार आप्तिः । सम्भवो भोगः । 'तां समभवत् ततो मनुष्या अजायन्त' इत्यादिवत् । मुक्त्यनन्तरमेव ह्यनुपचरितसर्वकामावाप्तिः । मुख्य एव चार्थः स्वीकार्यः । अमुक्तानां विष्णुलोक-गानामपि न सर्वकामावाप्तिः । जयविजयादीनामप्रियदर्शनात् । अतोऽमृतः सन् [1]सर्वान् कामानाप्त्वेत्यर्थः ।

मुक्तः कामानवाप्नोति भुङ्क्ते चैव यथेष्टतः ।
सर्वानपि निरातङ्कः सर्वदा च हरेर्वशे ।। इति सत्तत्वे ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमन्महैतरेयोपनिपनिषद्भाष्ये**
**द्वितीयप्रघट्टके पञ्चमोऽध्यायः ।।**

**टिप्पणी -**

शतं पुर आयसीरित्येतदनूद्य विशेष्यप्रदर्शनपूर्वमर्थमाह– **ता एव देवता इति** ।। गत्यर्थादयतेर्भावेऽसुप्रत्यये अयसुशब्दात् सम्बन्धार्थेऽणप्रत्यये ङीपि अयःशब्दितज्ञानवत्य आयस्यो विभक्तिव्यत्ययेन आयसीरिति भावः । कथं विशेषतो ज्ञानित्वमित्यत उक्तस्य पुर इत्यस्यार्थः– **मानुषानिति** ।। देवशब्देन विष्णोरपि ग्रहणात् तत्र ज्ञानित्वं तदुपपादकं पूर्णत्वं च मुख्यमित्याह– **विष्णुरिति** ।। अपव्याख्यां प्रत्याख्याति– **नचेति** ।। बन्धकत्वादिति भावः । ननु बन्धकत्वेऽपि तात्कालिकसुखलवहेतुत्वाद् रक्षकत्वं अन्यथा भवतामपि देवानामिति पुल्लिङ्गेन प्रकृतानां स्त्रीलिङ्गेन परामर्शायोग इत्यत आह– **मुख्य इति** ।। देवतापरत्वमङ्गीकृत्य मुख्ये रक्षणेऽर्थतया युज्यमाने अमुख्यार्थो न युक्तः ।

---

१. सर्वकामानाप्त्वा - ह.पा.

लिङ्गव्यत्ययेन परामर्शस्तु न तावद् दोषावह इति भावः । अपव्याख्यानिरासाय श्येनपदार्थमाह–**शमिति** ।। भूमत्वविवक्षायां मतुबिति भावेनोक्तम्–**पूर्णेति** ।। 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इति वचनादिति भावः ।। **स एवेति** ।। शी एव ज्ञानरूपत्वाद् यश्चेति श्यः । शी चासौ यश्चेति विग्रहः । निरुक्तत्वादिकारलोप इति भावः । शंरूपत्वाच्छः, ज्ञानरूपत्वाद् यः, ज्ञानरूपत्वाद् यः, शश्चासौ यश्चेति श्य इति किन्न व्याक्रियत इति चेत् । अत्रापि शकारात्पराकारलोपस्य वाच्यत्वेन विनिगमनाविरहादानन्दपूर्तेर्लाभेनास्मिन् पक्षे विशेषलाभाच्च । ननु विष्णुः स्वामी सर्वेषामपि भवति कोऽस्य विशेष इत्यतो ज्ञानेन विशेष इति भावेन गर्भवास-दुःखातिक्रमेण तथा ज्ञानं कारणमिति भावेन तात्पर्यमाह– **विष्णुमिति** ।। निरदीयमित्यत्र निरोऽर्थः– **निष्क्रम्येति** ।। दुःखेभ्य इति भावः । अदीयमित्यस्यार्थः– **अतीत इति** ।। कर्माध्याहृतम्– **गर्भवासमिति** ।। गर्भवासातिक्रमो नाम तत्रस्थस्यैव तदबद्धत्वम् । **स्वर्गे** लोके सर्वान् कामानित्यस्य प्रसिद्धे स्वर्गे लोके सर्वान् कामाननुभूयामृतो भवन्निर्गुणमोक्षं प्राप्तोऽभवदित्यपव्याख्यानिरासाय व्याचष्टे– **स्वरित्यादिना** ।। अमृतस्य सर्वकामावाप्तिव्यतिरेकेण कोऽयं सम्भव इत्यतः सर्वकामावाप्तिमनुभवतीत्युक्तं विवृणोति– **अपेक्षितेति** ।। समभवदित्यस्य भोगे प्रयोगं वाजसनेये दर्शयति–**तामिति** ।। ब्रह्म तां स्त्रियं समभवत् बुभुजे । ततो मनुष्या अजायन्तेत्यर्थः । ननु यथाश्रुत एवार्थः किन्न स्यात् किममृतः सन् सर्वान् कामानाप्त्वेत्यन्वयेनेत्यत आह–**मुक्तीति** ।। ननु स्वर्गे यथायोग्यं सर्वान् कामानाप्त्वेत्यर्थः किन्न स्यादित्यत आह– **मुख्य एवेति** ।। स्वर्गपदस्य सर्वपदस्य चेति शेषः । ननु स्वर्गेऽपि सर्वकामावाप्तिः, किन्न स्यात् मुक्त्यनन्तरमेवेति किं नियम्यत इत्यतः कैमुत्येनोत्तरमाह– **अमुक्तानामिति** ।। विष्णुलोकगानां वैकुण्ठगतानामपि न सर्वकामावाप्तिः किमु स्वर्गगतानां नास्तीति वाच्यमि-त्यर्थः । तदुदाहृत्य दर्शयति– **जयेति** ।। अप्रियं शापादिनिमित्तं दुःखम् ।

स्वकृतं व्याख्यानमुपपाद्योपसंहरति– **अत इति** ।। उक्तार्थे प्रमाणमाह– **मुक्त इति** ।।

**।। इति श्रीमद्विठ्ठलाचार्यपुत्रेण तीर्थाचार्यचरणसेविना श्रीनिवासेनरचितायां श्रीमन्महैतरेयभाष्यरत्नमालायां द्वितीयप्रघट्टके पञ्चमोऽध्यायः ।।**

**खण्डार्थः-**

पूर्वाध्याये भगवतः सर्वैर्गुणैरग्र्यत्वं प्रतिज्ञाय तदुपपादनाय सृष्ट्याद्यष्टकर्तृत्वमुक्तम् । न केवलं बहिर्गतेन रूपेण महदादिसर्वस्रष्टृत्वं किन्तु पितृमात्रन्तर्गतेन रूपेण गर्भाधानादिमुखेन च स्रष्टृत्वं पुत्रान्तर्गतेन च रूपेणाभिव्यक्तत्वमित्यादि निरूप्यतेऽस्मिन्नेकखण्डात्मकेऽध्याये । अयं नारायणः आदितः प्रथमं पुरुषे गर्भः अन्तर्गतो भवति प्रविशेत् अन्नस्थोऽन्नेन सहित इति शेषः । यद् यदा एतद्भुक्तमन्नं सर्वाङ्गेषु व्याप्तं सत् सर्वाङ्गेभ्यः सम्भूतं तेजस्तेजोरूपं तद्रेतः सम्पन्नं अन्नस्थं भगवद्रूपं च रेतः सम्भूतं रेतसि सम्पन्नं तत् तदा आत्मानं रेतसिस्थं स्वरूपं आत्मनि पुरुषस्थे स्वस्मिन्नेव बिभर्ति । तद्रेतोगतं स्वरूपं रेतसा साकं पुरुषस्थो भगवान् यदा स्त्रियां सिञ्चति अथ तदा एनद् रेतोगतस्वरूपं जनयति स्थानान्तरे प्रादुर्भावयति । अथ तस्मादस्य स्थानान्तरगतेरेतदेवास्य प्रथमं जन्म । ननु रेतसा साकमीश्वरस्य स्त्रीगर्भे वृद्ध्यङ्गीकारे स्त्रियः पीडा स्यात् किमित्यत उच्यते– **तदिति** ।। तद् रेतोगतं भगवत्स्वरूपं रेतश्च स्त्रिया यथा स्वमङ्गं तथा आत्मभूयं आत्मभावं संश्लेषविशेषं गच्छति । तस्मादेनां न हिनस्ति न पीडयति सा स्त्री अत्रगतं स्वगर्भगतं पुत्रं भावयति तेन चास्य परमात्मनोऽत्रगतं पुत्रगतमेतमात्मानं पुत्रनामकं स्वरूपमेव भावयति । प्रतिमोपासनवदिति भावः । भावयित्री परमात्मस्वरूपमेवं भावयित्री सा स्त्री भावयितव्या माननीया भवति । भर्त्रेति शेषः । कुतो भावयितव्येत्यतो भगवद्भावयितृत्वादित्येकं कारणम् । कारणान्तरमुच्यते– **तमिति** ।। गर्भगतं तं हरिं बिभर्तीत्यर्थः । यदि गर्भगतस्तर्हि जीववद् दुःखी स्यादित्यत उच्यते–

**स इति** ।। यं स्त्रीगर्भं बिभर्ति स भगवान् सर्वगुणैरग्र्य एव । न केवलं भर्त्रा भार्या सम्भावनीया गर्भगतः पुत्रश्चेत्युच्यते– **कुमारमिति** ।। जन्मनोऽग्रे पूर्वं कुमारं पिताऽधिभावयत्यादरपूर्वं भावयति । स पिता जन्मनोऽग्रे कुमारमधिभावयतीति यत् तत् तेन पुत्रगतं परमात्मानमेव भावयतीत्यर्थः । पुत्रान्तर्गतहरिसम्भावनं किमर्थं कार्यमित्यत उच्यते– **एषामिति** ।। एषां पृथिव्यादीनां लोकानां सन्तत्यै विस्तृत्यै सर्वदा लाभायेत्यर्थः । तस्यैवोपपादनम्– **एवमिति** ।। एवं पुत्रस्थहरिसम्भावने हीमे पृथिव्यादयो लोकाः सन्तताः सर्वदा प्राप्ता भवन्ति । पितुः स्वर्गादिलोकप्राप्तावपि प्राक् पुत्रस्थस्य हरेरन्नपानवस्त्रभूषणादिभिरर्चनेन प्रतिमाभूतस्य पुत्रस्यापि पृथिव्यां प्रतिष्ठापनेन पुत्रकृतपुण्यभाक्त्वात् पृथिवीलोकस्थितिः फलतो लभ्यत एवेति भावः । तथाच वाजसनेये । सोऽयं मनुष्यलोकः पुत्रेण जेय इति । तत् तस्यां पृथिव्यां यज्जन्म तदस्य परमात्मनो द्वितीयं जन्म । अस्य भगवतः सम्बन्धी सोऽयमात्मा पुत्रगतं तन्नामकं रूपमस्य पितृजीवस्यार्थे पुण्येभ्यः कर्मभ्यः पुण्यकर्मसिद्ध्यर्थं पुत्रान्तर्गतेन परमात्मना भूमौ प्रतिधीयते विधीयते । अथास्य परमात्मनः इतरः पुत्रनामकादितरो वयोगतः वयोगतपित्रन्तर्गतो यमात्मा पितृनामकरूपविशेषः कृतं निष्पादितं कृत्यं विहितं जीवानां येनेति कृतकृत्यः सः पितृशरीरं परित्यज्य तेन सह प्रैति अन्यत्र गच्छति । स पितृजीव इतः शरीरात् प्रयन् अन्यत्र गच्छन् पुनर्जायते । तत् पितुरन्यत्र जननमस्य तदन्तर्गतस्य हरेस्तृतीयं जन्मेत्यर्थः । यदुक्तमीश्वरस्यापि पितृमातृपुत्राभिधसर्वजीवान्तर्गतत्वं गर्भवासेऽपि तत्कृतलेपराहित्यं ज्ञानादिगुणाग्र्यत्वं तद् ऋषिणोक्तमित्युच्यते– **तदुक्तमिति** ।। गर्भो नु सन् अनु एषामिति पदपाठः । नु इदानीं गर्भे नु गर्भ एव सन् वर्तमान एषां देवानां विष्ण्वादीनां विश्वा विश्वानि नानाविधानि देवानां जीवशरीरे अभिमानिरूपेण ईश्वरस्य नियामकत्वेन इत्येवंविधानि जनिमानि जन्मानि अहमहेय दुःखादिहेयरहितं यथा भवति तथान्ववेदम् । तत्र ज्ञापकमुच्यते–

**शतमिति** ।। अथ तस्मादेव कारणात् आयसीः आयस्यः विशेषेण ज्ञानिन्यः । शतं शतसङ्ख्याका मानुषानपेक्ष्य पूर्णत्वात् पुरः ता देवता मुख्यतः पूर्णो विष्णुश्च मामरक्षन् । अत्राधश्येन इत्यत्राधेति पदपाठः । अथ तस्माद् रक्षणादेव श्येनः श्यः सुखज्ञानरूपी विष्णुरिनः स्वामीति ज्ञानं यस्य स पूर्णानन्दः । पूर्णज्ञानस्वरूपो विष्णुर्मम स्वामीति ज्ञात्वा जवसा वेगेन गर्भवासान्निरदीयन्त तत्कृतक्लेशेभ्यो निष्क्रम्यातिक्रान्तोऽस्मीति ऋषिणोक्तमित्यर्थः । कोऽयं वक्ता ऋषिरित्यत्र उच्यते– **गर्भे इति** ।। गर्भे एव शयानो वामदेव एतत्प्रमेय-मुवाच । स उपासक एवं विद्वान् अस्माच्छरीरभेदाच्छरीरविशेषात् । यद्वा शरीराख्यात् स्वभेदकाद् बन्धात् । यद्वा शरीरगतस्थानप्रभेदादित्यर्थः । 'नाभ्यां स्थितं हृद्यवरोप्य तस्मादुदानगत्योरसि तन्नयेन्मुनिः । स्वतालुमूलं शनकैर्नयेत' इत्युक्त-प्रकारेणोर्ध्वं ब्रह्मनाड्योत्क्रम्यामुष्मिन् स्वर्गे लोके अमृतो मुक्तः सन् सर्वान् कामानाप्त्वा यथायोग्यं प्राप्य समभवत् सर्वदाऽनुभवति ।। १ ।।

## ।। इति द्वितीयप्रघट्टके पञ्चमोऽध्यायः ।।

## ।। अथ द्वितीयप्रघट्टके षष्ठोऽध्यायः ।।

**उपनिषत्-**

**(भगवतो लक्षणानि)**

**कोऽयमात्मेति वयमुपास्महे ।। कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति ।**

**भाष्यम्-**

'अयं विष्णुर्हि किंरूप उपास्योऽस्माभिरच्युतः ।
इत्यपृच्छद् रमा देवी महिदासं जनार्दनम् ।

आह तां महिदासोऽथ पूर्णानन्दतमस्त्विति ।
उपास्यस्तादृशो ह्यस्य स्वभावः परमात्मनः ।
येन जीवो दर्शनादीन् प्रेरितः कुरुते सदा ।

**टिप्पणी -**

अत्र कोऽयमात्मेति प्रष्टा क इति न प्रतीयते । कतर इत्यादीनामपि प्रश्नत्वे उत्तरं चात्र प्रतीयतेऽतो यथावद् व्याचष्टे– **अयमित्यादिना** ।। किंरूपः किंलक्षणकः । केन वा नाम्ना रूप्यते निरूप्यत इति किंरूपः किंनामकः । अनेकेषां रूपाणां मध्ये किंरूपश्चोपास्योऽस्माभिः सर्वैर्भगवद्भक्तैर्विशेषतो देवैरस्माभिरित्यर्थः । स त्वया पृष्ट आत्मा कतर इत्यस्य सुखेन पूर्णः कतरः अतिशयेन पूर्णः कतम इति तरप्तमपोरुभयोरप्यर्थमाह– **पूर्णानन्दतम इति** ।। आनन्देन पूर्णतम इत्यर्थः । स आनन्दोऽस्य आत्मा स्वभावभूत इत्यर्थान्तरमाह– **तादृश इति** ।। अस्य परमात्मनः स्वभावस्तादृश आनन्दरूपः । येन वा पश्यतीत्यादि व्याचष्टे– **येन जीव इति** ।।

**उपनिषत्-**

**(भगवतस्त्रयोविंशतिनामानि)**

**यदेतद् हृदयं मनश्चैतत् संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामोऽवश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति ।।**

**भाष्यम्-**

यो विष्णुर्हृदयमिति हृद्गतत्वात् प्रकीर्तितः ।
मन्तृत्वान्मन इत्येव यच्च ज्ञातृस्वरूपतः ।
एतत् सन्निहितत्वाच्च पूर्णत्वादेति कीर्तितः ।

इतत्वाच्च ततत्वाच्च स इतन्नाम केशवः ।
गुणानामुच्चयो यस्मात् स च इत्येव शब्दितः ।
सम्यग्ज्ञानस्वरूपत्वात् संज्ञानमिति कीर्तितः ।
आततज्ञानरूपत्वादाज्ञानं भगवान् हरिः ।
विविधज्ञानरूपत्वाद् विज्ञानमिति कीर्तितः ।
प्रकृष्टात्मगुणज्ञानरूपः प्रज्ञानमुच्यते ।
अविस्मृतित्वान्मेधा स दृष्टिर्दर्शनरूपतः ।
धृतिर्धारणरूपत्वान्मतिर्मासु ततत्वतः ।
मनुनाम्नामजादीनां मनीषेशो यतो हरिः ।
सर्वप्रेरकरूपत्वाज्जूतिरित्यभिधीयते ।
सर्वदेशेषु कालेषु स्वरूपेषु च सर्वशः ।
समं रमत इत्येव स्मृतिर्नाम जनार्दनः ।
सर्वस्य क्लृप्तिकर्तृत्वात् सङ्कल्प इति गीयते ।
क्रतुः स सर्वकर्तृत्वादसुरप्यसनाद्धरिः ।
अमेयानन्दरूपत्वात् काम इत्यभिधीयते ।
अवशः स स्वतन्त्रत्वात् त्रयोविंशतिनामकम् ।
यो वेदैवं हरिं सम्यङ् मुच्यतेऽखिलसंसृतेः ।

**टिप्पणी -**

यदेतद् हृदयमित्येतद् व्याचष्टे– **यो विष्णुरिति** ।। सर्वैरप्यधिकारिभिर्हृद्ययनाद् हृदयनामकं बिम्बरूपमुपास्यमिति दर्शयितुं तृतीयस्यापि हृदयनाम्न आदावुपादानम् । जीवो येन दर्शनादीन् कुरुते । यश्च हृदयमित्यादिनामभिः कीर्तितः स विष्णुरिति योजना । पुनरेतदित्यत्र आ इतदिति पदविभागमभिप्रेत्य व्याचष्टे– **पूर्णत्वादिति** ।। त्रिविध पूर्तियुक्तत्वादाकारेणोच्यत इत्यर्थः । इतत्वाच्छरणमितत्वात् ततत्वाद् गतत्वात् सर्वान्तर्गतत्वादित्यर्थः । ततत्वादाकाशवद् व्याप्तत्वादिति

वा । 'तदन्तरस्य सर्वस्य तदु सर्वस्य बाह्यतः' (ईशा. ५) इति हि श्रुतिः। इतन्नामेतदिति प्रसिद्धः । उच्चयः निचयः समुदायः । 'गुणोरुसमुदायोऽयं वासुदेवः' इति वचनात् । ज्ञानस्याततत्वं नाम गुणिवद् व्याप्तत्वं निरतिशयस्पष्टत्वं वा । 'व्याप्तज्ञानमहांशुमान्' 'स्पष्टातिस्पष्टविशदम्' इत्यादेः विविधज्ञानरूपत्वाद् विविधविषयकज्ञानरूपत्वात् प्रकृष्टा ये आत्मगुणास्तद्विषयज्ञानरूपः । अविस्मृतित्वाद् विस्मृतिशून्यत्वाद् । दर्शनरूपतः चाक्षुषज्ञानरूपत्वात् । सम्यक् ज्ञानं मानसमिति भेदः । धारणं धैर्यं जगद्धारणं ज्ञानस्य धारणाशक्तिर्वा । मासु प्रमाणेषु ततत्वतः नियामकत्वेन प्रतिपाद्यत्वेन वा ततत्वात् । मनूनामीष्ट इति मनीषेत्यभिप्रेत्योक्तम्– **मनुनाम्नामिति** ।। **सर्वप्रेरकरूपत्वादिति** ।। जु गताविति धातोरूतियूतिजूतिसातिहेतीति जूतिशब्दस्य निपातनादिति भावः । गतिरत्र प्रेरणारूपा विवक्षितेति ध्येयम् ।। **समं रमत इति** ।। एकप्रकारेण रमत इत्यर्थः । सकारमकाररेफपराणां लोके सम्प्रसारणे स्मृतिरिति भवतीति भावः । क्लृप्तिर्व्यवस्था ।। **क्रतुः स सर्वकर्तृत्वादिति** ।। कृञः कतुरित्युणादिसूत्रात् कृञः कत्रर्थे कतुप्रत्यय इति भावः । कं सुखमममितं यस्यासौ काम इत्यस्य तात्पर्यम्– **अमेयेति** ।। यद्वा, विशेषणोत्तरपदकर्मधारयोऽ-यमित्यभिप्रेत्योक्तम्– **अमेयानन्दरूपत्वादिति** ।। अकारस्य भगवन्नामत्वादस्य विष्णोर्वशस्तन्त्रोऽवश इत्यर्थमभिप्रेत्योक्तम्– **अवश इति** ।। स एतेन प्रज्ञेनाऽत्मनेत्येतत् यो वेदैवं हरिमित्यध्याहारपूर्वं फलकथनपरतया व्याचष्टे– **यो वेदेति** ।।

**उपनिषत्-**

**(सकलमुक्तामुक्ताधिपतिर्लक्ष्मीपतिः)**

**एष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्चमहाभूतानि पृथिवी वायुराकाश आपो ज्योतींषी-त्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिजानि चाश्वा गावः पुरुषा हस्तिनो यत् किञ्चेदं प्राणिजङ्गमं**

च पतत्रि च यच्च स्थावरं सर्वं तत् प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रोऽलोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥

**भाष्यम्-**

ब्रह्मा शिवश्च शक्रश्च देवाश्चान्ये समस्तशः ।
तथैव पञ्चभूतानि पुण्यपापविमिश्रिताः ।
क्षुद्रात्मानस्तु ये मर्त्या इतरे असुरा अपि ।
सर्वं जगदिदं विष्णोर्वशे तिष्ठति सर्वदा ।
तेनैव नीयते नित्यं तस्मिन्नेव प्रतिष्ठितम् ।
मुक्ता येऽलोकनामानो नीयन्ते तेऽपि विष्णुना ।
स्वयं चानन्यनिष्ठत्वात् प्रतिष्ठेत्यभिधीयते ।
देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।
विष्णोर्ब्रह्मेति नामैतन्मुख्यतोऽन्यत्र न क्वचित् ।

**टिप्पणी -**

एष ब्रह्मेत्यादि व्याचष्टे– **ब्रह्मेत्यादिना** ॥ इमानि क्षुद्रमिश्राणीतराणीत्यस्यार्थः– **पुण्यपापेति** ॥ इतरे असुरा इति द्वितीयेतरशब्दार्थः । सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितमिति पदद्वयतात्पर्यम्–**सर्वमिति** ॥ पदयोरक्षरार्थमाह– **तेनैवेत्यादि** ॥ प्रज्ञानेत्रोऽलोक इत्यस्यार्थः– **मुक्ता इति** ॥ प्रतिष्ठेत्यस्यार्थः– **स्वयमिति** ॥ प्रज्ञाने ब्रह्मेत्यस्यार्थः– **देशत इति** ॥

**उपनिषत्-**

**(वासुदेवोपासनायाः फलम्)**

स एतेन प्रज्ञेनाऽत्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवत् समभवत् ॥

**॥ इति श्रीमन्महैतरेयोपनिषदि द्वितीयप्रघट्टके षष्ठोऽध्यायः ॥**

**भाष्यम्-**

**सोऽलोकनामा मुक्तस्तु चितिमात्रस्वरूपतः।**
**प्रकृष्टज्ञानरूपस्य प्रसादात् परमात्मनः।**
**अस्माद् देहात् समुत्क्रम्य गत्वोर्ध्वं लोकमुत्तमम्।**
**अमृतः सन् विष्णुलोके भोगान् सम्प्राप्य पुष्कळान्।**
**भुङ्क्ते यथेष्टतो नित्यमिति वेदानुशासनम्॥' इत्याद्यैतरेयसंहितायाम्॥**

**टिप्पणी -**

स एतेन प्रज्ञेनाऽत्मनेति वाक्यं फलकथनपरतया व्याख्यातम्। मुक्तस्य भगवन्नियतत्वोपपादकतयाऽपि व्याकुर्वन् स इति पारमृष्टं दर्शयति– **स इति**॥ स इत्यनूद्यालोकनामा मुक्त इत्यर्थोक्तिः। अलोकशब्दनिर्वचनायोक्तम्– **चितिमात्रेति**॥ चितिमात्रस्वरूपत्वेन लोकविलक्षणत्वादलोकनामेत्यर्थः। प्रज्ञेनात्मनेत्यस्य तात्पर्यम्– **प्रकृष्टेति**॥ अस्माल्लोकादित्यस्यार्थः– **अस्मादिति**॥ स्थूलशरीरादित्यर्थः। अमृतः लिङ्गशरीरवर्जितः। ध्यायार्थस्य प्रामाणिकत्वेनावधारणाय द्विरुक्तिरिति भावेनोक्तम्– **वेदेति**॥

**भाष्यम्-**

**(कतरो नाम पूर्णानन्दस्वरूपः)**

**[1]'जानन्त्याऽपि देव्या लोकानुग्रहार्थं विशेषज्ञानार्थं च 'कोऽयमात्मा' इति पृष्टः [2]सः भगवानाह– कतरः स आत्मेति॥** कतरः आनन्दतमः। 'यत्रोभयोः प्रयोगो न तत्रैकार्थो तरप्तमौ' इति शब्दनिर्णये।

**(प्रसन्नः विष्णुरेव दर्शनसाधनम्)**

यत्प्रेरणादयं जीवो दर्शनादीन् करोति। रमाब्रह्मादीनामपि तत्प्रेरितत्वात्। सर्वेषां दर्शनादिकारणत्वमेकैकमपि तस्य लक्षणं भवतीति वाशब्दः सर्वत्रानुपज्यते। प्रजापतिः शिवः। लिङ्गाभिमानित्वात्।

---

१. जानत्या- ह.पा.    २. सन्- ह.पा.

## (प्रजापतिरुमापतिः)

'प्रजापतिः शिवः [१]शेषो लिङ्गमित्यभिधीयते ।

लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ॥' इति शैवपुराणे ॥

'सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः ।

वाक्यं शिवस्य तच्छ्रुत्वा शक्रो नेत्याह सत्वरः ॥' इति भारते ॥

**टिप्पणी -**

ननु कोऽयमात्मेति रमादेव्या प्रश्ने कृते तव सिद्धार्थत्वाल्लक्षणप्रश्नो न युज्यत इत्युत्तरं वाच्यम् । किं कतर इत्युत्तरप्रदानेनेत्यतस्तात्पर्यमाह– **जानन्त्येति** ॥ लोकानुग्रहार्थं सामान्येन सर्वमोक्षयोग्यानुग्रहार्थम् । देवादीनां विशेषज्ञानार्थ-मित्यर्थः । कतर इति तरपस्तमबर्थवर्णनं कथमित्यतस्तदुपपादयति– **यत्रेति** ॥ यत्र वाक्ये उभयोः प्रयोगो नास्ति तत्र वाक्ये तरप्तमपावेकार्थौ उभयोर्योऽर्थः स मिलित्वा एक एवार्थोऽनयोरित्यर्थः । येन वा पश्यतीत्यादौ स आत्मा परमात्मा येन वा करणेन दर्शनादीन् करोषीति पृष्टे सर्वमपि मनसा करोतीति यदेतद् हृदयं मन इत्युत्तरमुच्यत इति प्रतीतेर्यथावत् स्ववचनेनापि विवृणोति– **यत्प्रेरणादिति** ॥ नात्र पश्यतीत्यत्र कर्तृतया सन्निधानेन प्रकृतः परमात्मा सम्बद्ध्यते । किन्तु स एवं विद्वानिति प्रकृतो जीव एव । येन वेत्यत्रापि येन येन कारणेनेति न प्रश्नः, किन्तु यत्प्रेरणेन पश्यति स आत्मेति तस्य लक्षणोक्त्यर्थं परामर्श इति भावः । ननु प्रकृतात्मनो दर्शनादिकारणत्वं लक्षणं चेदनेनोच्यते नतु करणविशेषप्रश्नस्तदा पृथग् वाशब्दानुषङ्गः श्रूयमाणो व्यर्थ इत्यत आह– **रमेत्यादिना** ॥ अत्रेदं तावद् योज्यम् । जीवानां दर्शनादिकारणत्वं यथा मिलितं भगवल्लक्षणं भवति तथैकैकमपि तस्य हरेर्लक्षणं भवतीति सूचनाय वाशब्दः सर्वत्रानुषज्यत इति । नु दर्शनादिकारणत्वमेकैकं सूर्यादिष्वति-व्याप्तम् । मिलितं रमाब्रह्मादिष्वतिव्याप्तमित्यत उक्तम्– **रमेति** ॥ रमाब्रह्मादीनां सर्वेषामपि तत्प्रेरितत्वात् स्वातन्त्र्येण दर्शनादिकारणत्वस्यात्र विवक्षितत्वादिति

---

१. शेपो- ह.पा.

भावः । ब्रह्मपदेनापौनरुक्त्याय दक्षाद्यर्थत्वप्रतीतिनिवारणाय वा प्रजापतिशब्दं सोपपत्तिकं व्याचष्टे– **प्रजापतिरिति** ।। अभिमान्यभिमन्यमानयोरेकशब्दवाच्यत्वादिति भावः ।

**भाष्यम्-**

## (सर्वे जीवाः भिन्नस्वभावाः)

क्षुद्रमिश्राणीव बीजानि शाल्यादिबीजवद् भिन्नस्वभावा ब्रह्मादयः सर्वजीवाः ।

'ब्रह्माद्याः सर्व एवैते जीवा भिन्नस्वरूपकाः ।

यथा शाल्यादिबीजानि भिन्नवीर्याणि सर्वशः ।।' इति सत्तत्त्वे ।।

प्रथमेतराणीतिशब्दो मानुषाणाम् । द्वितीयोऽसुरादीनाम् ।

## (मुक्ताः न दृष्टिगोचराः)

'प्रज्ञानेत्रोऽलोकः' इति अलोकशब्देन मुक्तसमुदाय उच्यते । ब्रह्मादिस्थावरान्तस्य लोकस्य 'सर्वं तत् प्रज्ञानेत्रम्' इति विष्ण्वधीनत्वस्य पूर्वमेवोक्तत्वात् पुनः 'प्रज्ञानेत्रोऽलोकः' इति मुक्तविषयमेव । मुक्तो ह्यलोक्यत्वादलोकः । 'अण्डजानि च' इत्याद्युक्त्वा पुनः 'अश्वा गावः' इत्यादि देवादीनां मनआदेरेव जातानामपि स्वीकारार्थम् । अण्डजत्वाद्युत्पत्तिप्रकारोऽपि विष्ण्वधीन इति ज्ञापयितुं तत्कथनम् । 'तथाऽश्मानस्तृणकाष्ठाश्च सर्वं दिष्टक्षये स्वां प्रकृतिं भजन्ते' इति भारतवचनादश्मादीनामपि प्राणित्वात् तत्स्वीकारार्थं प्राणीति । गमनपतनस्थिरत्वादयोऽपि भावा विष्ण्वधीना इति ज्ञापयितुं जङ्गममित्यादिवचनम् ।

स एतेनेत्यलोकशब्दोक्तो मुक्तः परामृश्यते । सकलकर्मबन्धमुक्त्यनन्तरं हि शरीरादुत्क्रामति । प्रकृष्टज्ञानरूपेण विष्णुना प्रेरितः प्राज्ञेनाऽत्मनैवोत्क्रम्य तेनैव सर्वान् कामानाप्त्वा तेनैव सर्वान् कामान्[1] सम्भुङ्क्त इति सर्वत्रानुषज्यते । 'प्रज्ञानेत्रोऽलोकः' इत्युक्ते कथं प्रज्ञानेत्रो मुक्त इत्याकाङ्क्षायां तस्यैव व्याख्यानं 'स एतेन प्रज्ञेनाऽत्मना' इत्यादि ।

---

१. 'कामान्' इति ह.ती.पाठे नास्ति ।

**टिप्पणी -**

क्षुद्रमिश्राणीव बीजानीत्यनूद्यैव बीजानीत्यस्यार्थमाह– **क्षुद्रेति** ।। एतेनैव बीजानीत्येतदेष ब्रह्मेत्यादि सर्वविशेषणमित्युक्तं भवति । इतराणि चेतराणी-त्यनयोरर्थभेदमाह– **प्रथमेति** ।। लोक इति पदभ्रमं वारयन् प्रज्ञानेत्रोऽलोक इत्यस्यार्थमाह– **प्रज्ञेति** ।। प्रतीतेऽर्थे पौनरुक्त्यं बाधकं वदन्नुक्तं निर्धारयति– **ब्रह्मादीति** ।। मुक्तस्य चितिमात्रत्वेन संसारिलोकविलक्षणत्वमलोकशब्द-प्रवृत्तिनिमित्तमित्युक्तम् । संसार्यप्रत्यक्षत्वं च प्रवृत्तिनिमित्तमित्याह– **मुक्त इति** ।। नच 'दृष्टाश्च ते भगवता नारदेन' इति गीताभाष्यविरोधः । तदर्थं साधनविशेषं विनेत्यत्र विवक्षितत्वात् । नन्वश्वादीनां जरायुजत्वात् पतत्रिणा मण्डजत्वात् स्थावराणामुद्भिज्जत्वात् पुनरुक्तिरित्यत आह–**अण्डजानि चेति** ।। तर्ह्युभयविधानामप्यश्वा गाव इत्यादिनैवोक्तिसम्भवादण्डजत्वादिकथनं किमर्थमित्यत आह– **अण्डजत्वादीति** ।। जङ्गमं च पतत्रि च यच्च स्थावरमित्यनेन प्राणिनां गृहीतत्वात् पुनः प्राणीति किमर्थमित्यतः सप्रमाणकं सार्थक्यमाह– **तथेति** ।। भारते आदिपर्वणि ययात्यष्टकसंवादे 'संस्वेदजा अण्डजाश्चोद्भिदश्च सरीसृपाः। कृमयोऽथाप्सु मत्स्याः । तथाऽश्मानः' इत्यत्र स्थावरजङ्गमात्मकानां जीवानां तथाऽश्मादीनामपि स्वस्वाभिमन्यमानेषु स्थावरजङ्गमात्मकदेहेषु अश्माद्यचेतनेषु चाभिमानापादककर्मक्षयानन्तरं स्वयोग्यनिजरूपलाभवचनात् स्वेदजादिवदश्मादीनामपि प्राणित्वादित्यर्थः । 'कर्माणि तानि च पृथक् चेतनान्येव सर्वशः' इति वचनात् कर्मणां चेतनत्ववदश्मादीनां चेतनत्वं बोध्यम् । एवं तर्हि स्थावरजङ्गमाश्मादि-जडाभिमानिनां च प्राणिशब्देन ग्रहणसम्भवात् पृथग्जङ्गममित्यादिग्रहणं व्यर्थमित्यत आह– **गमनेति** ।। गमनपतनस्थिरत्वादीनि शब्दप्रवृत्तिनिमित्तान्यादिपदेन मानुषत्वपशुत्वादिजङ्गमावान्तरभेदनिष्ठधर्माणां गरुडत्वहंसत्वाद्यवान्तरधर्माणा-मश्वत्थादिस्थावरावान्तरधर्माणां ग्रहणम् । स एतेनेत्यत्र द्वितीययोजनायां स इति परामर्शविषयं दर्शयति–**स इति** ।। तस्य मुक्तत्वज्ञापकमाह–**सकलेति** ।।

यद्वा यदि मुक्तपरामर्शस्तर्ह्युत्क्रान्त्युत्त्ययोगो मुक्तस्य तदयोगादित्यत आह– **सकलेति** ।। अप्रारब्धस्य ज्ञानेन क्षयानन्तरं प्रारब्धस्य भोगोपमर्दाभ्यां क्षयानन्तरं हीत्यर्थः । प्रज्ञेनाऽत्मना ब्रह्मरूपेण सर्वान् कामानाप्स्वेत्यन्यथाप्रतीतेर्व्याचष्टे– **प्रकृष्टेति** ।। प्रेरित इति शेषोक्तिः । न केवलमध्याहृतेनान्वयः । किन्तु समभवदिति क्रियापदेन चान्वय इत्याह–**प्रज्ञेनेति** ।। प्रसन्नेन प्रज्ञेन तत्प्रसादेनेति यावत् । प्रज्ञानेत्रो लोक इत्युक्तत्वात् पुनरुक्तमेतदित्यत आह– **प्रज्ञानेत्र इति** ।।

**भाष्यम्-**

### (मुक्तः सर्वात्मना मुकुन्दाधीनः)

अनुक्तविशेषाणामपि भगवदधीनत्वज्ञापनार्थं प्रज्ञानेत्रोऽलोक इति सामान्य-वचनम् ।

**'अनारब्धफलानां च प्रारब्धानां च सर्वशः ।**
**कर्मणां दाह एवायं मुक्तिरित्यभिधीयते ।।**
**स तु मुक्तस्ततो देहादुद्गच्छति परात्मना ।**
**प्रेरितो विष्णुलोकं च प्राप्य भोगानवाप्य च ।।**
**भुङ्क्ते विष्णुप्रसादेन न विष्णोरवशः क्वचित् ।**
**विष्णुतन्त्रा इमे सर्वे मुक्ता अपि यतोऽखिलाः ।।'** इति ब्रह्माण्डे ।।

ब्रह्मेन्द्रादिशब्दा विष्णावेव मुख्यत इति तद्व्यावृत्त्या जीवानां स्वीकारार्थमेष इत्यादिशब्दः । स हि भगवान् स्वनेतृकोऽपि नानुग्राह्यः । अनुग्राह्यत्वं हि ब्रह्मादीनामत्र विवक्षितम् । 'नेयताऽनुग्राह्यताऽपि न सा विष्णोः स्वतोऽपि तु' इति शब्द-तत्त्वे ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**
**श्रीमन्महैतरेयोनिषद्भाष्ये द्वितीयप्रघट्टके षष्ठोऽध्यायः ।।**

**टिप्पणी -**

तर्हि व्याख्यानपरेणानेनैवालं प्रज्ञानेत्रो लोक इति पूर्ववाक्यं व्यर्थमित्यत आह– **अनुक्तेति** ।। 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' (ब्र.सू. ४.४.५) 'चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः' 'भावं जैमिनिर्विकल्पाम्नानात्' (ब्र.सू. १.३.३) 'सङ्कल्पादेव च तच्छ्रुतेः' (ब्र.सू. ४.४.८) इत्याद्युक्तानामत्रानुक्तविशेषाणामित्यर्थः । ननूत्क्रान्तेः पूर्वं क्षीणकर्मत्वमात्रेण कथं मुक्तत्वं देहबन्ध एव खलु बन्ध इत्यतः कर्मक्षयस्यापि मुक्तित्वे प्रमाणमाह– **अनारब्धेति** ।। प्रारब्धानां दाहो नाम भोगेन क्षय उपमर्दो वेत्यविरोधः । 'भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते', 'उपमर्दं च' (ब्र.सू.३.४.१६) इति हि भगवद्वचनम् । ननु 'प्रारब्धकर्मशेषस्तु विरजातरणावधिः' इत्यत्र प्रारब्धस्य विरजातरणावधित्वोक्तेः 'प्रारब्धानां च सर्वशः' इति कथं सर्वप्रारब्धनाशानन्तरं स्थूलशरीरादुत्क्रमणमिति चेन्न । 'प्रारब्धकर्मशेषस्तु विरजातरणावधिः । स्वोदयात् फलदं ज्ञानमादेहं कर्म वा रवेः' इति न्यायविवरणवाक्यशेषे लिङ्गदेहापादकप्रारब्धकर्मशेषातिरिक्तप्रारब्धानामधिकारिभेदेन प्राचुर्येण वा चरमशरीर एव भोगेन पर्यवसानोक्तेस्तद्विवक्षयाऽस्य ग्रन्थस्य प्रवृत्तत्वात् । विस्तरस्तु **तत्त्वप्रकाशिकावाक्यार्थमुक्तावल्यामनुसन्धेयः** । एष ब्रह्मेत्यादावेष एत इमानीति विशेषणानां कृत्याऽप्रतीतेः कृत्यमाह– **ब्रह्मेन्द्रादीति** ।। ननु ब्रह्मादिशब्दा भगवत्परा एव भवन्तु गुणसमर्पकत्वात् । नच प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितमित्युक्तप्रज्ञानेत्रत्वादिविरोधः । प्राणवश इति पदेन स्वतन्त्रत्वापरपर्यायस्य स्वनेतृकत्वस्योक्तत्वादित्यत आह– **स हीति** ।। भगवतः स्वनेतृकत्वमेवात्रोच्यते नानुग्राह्यत्वमित्यत आह– **अनुग्राह्यत्वमिति** ।। अत्र ब्रह्मादीनामनुग्राह्यत्वमेव विवक्षितम् । न विष्णोः स्वनेतृकत्वम् । 'ब्रह्मा शिवश्च शक्रश्च' इति समाख्यावचनादेष इत्यादिविशेषणाच्च प्रज्ञानेत्रमित्यत्र विवक्षितानुगाह्यतारूपानेयता न विष्णोः सम्भवतीत्यत्र प्रमाणमाह–

**नेयतेति** ।। याऽनुग्राह्यतारूपा नेयता सा विष्णोः स्वतः परतोऽपि नास्तीत्यर्थः । प्रथमापिपदेन प्रज्ञाने प्रतिष्ठितमित्युक्ताश्रिततत्वं च समुच्चीयते ।।

**।। इति श्रीमद्विट्ठलाचार्युपत्रेण श्रीमत्तीर्थाचार्याचरणसेविना श्रीनिवासेन रचितायां महैतरेयभाष्यरत्नमालायां द्वितीयप्रघट्टके षष्ठोऽध्यायः ।।**

**खण्डार्थः -**

मोक्षयोग्यानां सर्वसाधारण्येनोपास्यानानन्दादिगुणान् रूपविशेषं नाम विशेषं च वक्तुं तथा तत्तद्योग्यविशेषगुणप्रतिपादनार्थं चायमेकखण्डात्मकोऽध्यायः। कतर इत्यानन्दस्य संज्ञानमित्यादिना ज्ञानस्य समिति निर्दोषत्वस्य सर्वं तत्प्रज्ञानेत्रमिति स्वामित्वस्य हृदयमिति नाम्नो बिम्बाख्यरूपविशेषस्य च वक्ष्यमाणत्वात्। यथोक्तम् 'आनन्दादयः प्रधानस्य' (ब्र.सू. ३.३.१२) इति । बहुनामकीर्तनेन मुक्त-नियामकत्वादिबहुगुणप्रतिपादनात् तत्तदधिकारियोग्यप्रातिस्विकगुणविशेषप्रतिपादनं च न प्रतीयते। प्रकृतमात्मानमधिकृत्य रमया पृच्छ्यते– **क इति** ।। अयमात्मा कः किंगुणविशिष्टः किन्नामकः केन वा रूपविशेषेण विशिष्ट इति वयं सर्वे भगवद्भक्ता उपास्महे । तत्रापि वयं सर्वे भगवद्भक्ता उपास्महे। तत्रापि वयं देवाः कथमुपास्मह इति प्रश्नः। तत्र महिदासेनोत्तरमुच्यते–**कतर इत्यादिना** ।। स त्वया पृष्ट आत्मा कतरः कतमः आनन्दतमः परिपूर्णानन्द इत्युपास्यः । नचाऽनन्दस्य दण्डस्य पुरुषेणेव भेदो मन्तव्य इत्युच्यते–**स आत्मेति** ।। स आनन्दोऽस्याऽत्मा स्वभावः । पूर्णानन्दत्वे लोकचेष्टकत्वं हेतुरिति भावेन लक्षणान्तराण्युच्यन्ते–**येन वेति** ।। पृथक् पृथक् लक्षणत्वज्ञापनाय वाशब्दः। जीवो येन यत्प्रेरणया पश्यतीत्यादि स आत्मेत्यन्वयः। सर्वदर्शनकर्तृत्वादीनि पञ्च लक्षणानीत्युक्तं भवति। तस्य नामान्युच्यन्ते– **यदित्यादिना**। ज्ञातृत्वाद् यत्, सन्निहितत्वादेत्। हृदि बिम्बरूपेणायनाद् गतत्वाद् हृदयम्, मननकर्तृत्वान्मनः, गुणनिचयरूपत्वाच्च पूर्णत्वादा, इतत्वात् सर्वैः शरणं प्राप्तत्वात् ततत्वाच्च इतत्, निर्दुष्टज्ञानरूपत्वात् संज्ञानम्, आततज्ञानरूपत्वादाज्ञानम्, विविधज्ञानरूपत्वाद्

विज्ञानम्, प्रकृष्टात्मगुणविषयज्ञानरूपत्वात् प्रज्ञानम्, विस्मृतिरहितत्वान्मेधा, चाक्षुषदर्शनरूपत्वाद् दृष्टिः, धारणत्वाद् धारणशक्तिरूपत्वाद् धैर्यरूपत्वाद्वा धृतिः, मासु प्रमाणेषु ततत्वाद् वाच्यतया स्थितत्वान्मतिः, मनूनां बोधवैशेष्यान्मनुनामकानां ब्रह्मादीनामीश इति मनीषा, सर्वप्रेरकत्वाज्जूतिः, सर्वेषु देशकालेषु स्वरूपेषु च समं रमत इति स्मृतिः, सर्वक्लृप्तिः सर्वव्यवस्था तद्धेतुत्वात् सङ्कल्पः, सर्वकर्तृत्वात् क्रतुः, असनाद् दैत्यानां तमसि प्रक्षेपणाद् दोषाणां स्वभक्तेभ्यो निरसनाद्वा असुः, अमितानन्दरूपत्वात् कामः, अः परमात्मा स्वयं तत्तन्त्रत्वादवशः, यद्वा न कस्यापि वश इत्यवशः। एतानि सर्वाणि त्रयोविंशतिसङ्ख्याकानि प्रज्ञानस्य प्रकृष्टज्ञानरूपस्य हरेः नामधेयानि भवन्तीत्यर्थः। मनीषेत्युक्तं सर्वेश्वरत्वं प्रपञ्च्यते– **एष इत्यादिना** ।। प्रजापतिः शिवः पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि पञ्चभूतानीत्यन्वयः। एते सर्वे देवा इत्युक्तेरप्यधिभूतरूपग्रहणार्थं पुनर्वचनम्। मोक्षयोग्यजीवोपलक्षणमेतत्। क्षुद्राण्यल्पानि च तानि पुण्यपापमिश्राणि च। क्षुदमिश्राणीतराणि मोक्षयोग्येभ्य इतराणीमानि मानुषस्वभावानि नित्य-संसारिजीवजातानि इतराणि तेभ्योऽपीतराणि आसुरस्वभावजीवजातानि चेत्येवं त्रिविधानि। तानि कीदृशानि बीजानीव शाल्यादिबीजानीव। परस्परं स्वस्वजात्यां च विचित्रस्वभावानि। तथाण्डजान्यण्डं भित्त्वा जातानि। जरायुजानि जरायुर्गर्भ-संवेष्टनं तेन जातानि यूकादीनि उद्भिज्जानि भुवमुद्भिद्य जातान्यङ्कुरादीनि। तथा देवानां मनआदिभ्यो जाता अश्वा गावः पुरुषा हस्तिनः पतत्रि च यत्किञ्चेदं जङ्गमं यच्च स्थावरं कल्पवृक्षादि तथा यत्किञ्चेदं प्राणिशिलादार्वादिकं सर्वं तत्प्रज्ञानेत्रं प्रकृष्टज्ञानरूपपरमात्मनेतृकं प्रज्ञाने प्रतिष्ठितं प्रज्ञानाधारतया स्थितम्। न केवलं संसारिजीवजातमेव तदधीनम्, किन्तु संसारिभिरलोक्यत्वादलोको मुक्तवर्गोऽपि प्रज्ञानेत्रः। ननु प्रज्ञारूपो भगवान् कुत्राऽश्रित इत्यत उच्यते– **प्रज्ञाप्रतिष्ठेति** ।। प्रज्ञारूपो भगवान् प्रकर्षेण स्वातन्त्र्येणानन्याधारतया तिष्ठतीति प्रतिष्ठा। कोऽयमात्मेति पृष्टं लक्षणं नाम च 'ब्रह्मदृष्टिरुत्कर्षात्' (ब्र.सू. ४.१.५) इति सूत्रानुसारेणोपासनार्थं पिण्डीकृत्योच्यते– **प्रज्ञानमिति** ।। प्रज्ञानं

ब्रह्म देशतः कालतो गुणतश्चातिपूर्णत्वाद् ब्रह्मनामकमुपास्यमित्यर्थः । एवमुपासकस्य फलमुच्यते– **स एतेनेति** ।। यो विद्वान् सोऽधिकारीत्यर्थः । यद्वा प्रज्ञानेत्रो लोक इत्युक्तं मुक्तस्य भगवन्नियतत्वं प्रपञ्च्यते– **स इति** ।। स सकलकर्म-बन्धान्मुक्तः । प्रज्ञेन प्रकृष्टज्ञानरूपेणाऽत्मना विष्णुना प्रेरितः तत्प्रसादेनैवास्माल्लोका-च्छरीरादुत्क्रम्यते नैवामुष्मिन् स्वर्गे लोके विष्णुलोकेऽमतः सन् तेनैव सर्वान् कामानाप्त्वा तेनैव सर्वान् कामान् समभवदनुभवतीत्यर्थः ।। १ ।।

## ।। इति द्वितीयप्रघट्टके षष्ठोऽध्यायः ।।

## ।। अथ द्वितीयप्रघट्टके सप्तमोऽध्यायः ।।

**उपनिषत्-**

### (विद्यार्थिना विष्णुप्रार्थना)

**वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरा-वीर्म एधि वेदस्य म आणीस्थ श्रुतं मे मा प्रहासीरनेना-धीतेनाहोरात्रान् सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद् वक्तारमवतु । अवतु माम् अवतु वक्तारम् ।। १ ।।**

**।। इति श्रीमन्महैतरेयोपनिषदि द्वितीयप्रघट्टके सप्तमोऽध्यायः ।।**

**भाष्यम्-**

'वाङ् मे मनसि प्रतिष्ठिता', अवबोधरूपे विष्णौ प्रतिष्ठिता । स च विष्णुर्मे वाचि स्थितः । 'यदेतद् हृदयं मनश्च' इति विष्णुनामधेयेषूक्तत्वात् । 'आविरावीर्म एधि', हे विष्णो ममाऽविराविर्भव । आणीस्थित आण्यां स्थित विष्णविति सम्बोधनम्[1] ।

---

१. सम्बोधना- ह.पा.

'आधारः सर्ववेदानां वेदाणी प्राण उच्यते ।

तस्मिन् स्थितो हरिर्नित्यमाणीस्थ इति गीयते ।।' इति शब्दतत्त्वे ।।

आविरावीरिति दैर्घ्यमतिशयार्थे। 'आधिक्येऽधिकम्' इति सूत्रात्। अणशब्दस्य गतिवाचित्वाच्चलमाणमुच्यते। तस्य धारणेन तद्वानाणी। स्थापक इत्यर्थः। मे श्रुतं मा प्रहासीः मम विद्यागोचर एव सर्वदा भव। विस्मृतो मा भव। हे विष्णो, अनेन त्वद्विषयेणैवाधीतेनाहोरात्रान् सन्दधामि। सर्वाहोरात्रेष्वपि त्वद्विषयाध्ययनमेव करोमीत्यर्थः। ऋतं यथावदवगतं त्वां वदिष्यामि। सत्यं साधुगुणैस्ततं सर्वनियन्तारं च। तद् विष्ण्वाख्यं ब्रह्म मामवत्विति तस्यैव विष्णोः परोक्षत्वेनैव प्रार्थनम्।

'वाङ् म इत्यादिकं खण्डं विष्णुप्रार्थनपूर्वकम्।

अविघ्नत्वमभीप्सूनां शिष्याणां दृष्टवान् हरिः ।।' इति च ।।

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते**

**श्रीमन्महैतरेयोपपिषद्भाष्ये द्वितीयप्रघट्टके सप्तमोऽध्यायः ।।**

**टिप्पणी -**

वाङ्मे मनसि प्रतिष्ठितेत्यनूद्य वाङ्म इत्यस्यातिरोहितार्थत्वात् मनसि प्रतिष्ठिते-त्येतदन्यथाप्रतीतेर्व्याचष्टे– **वाङ्म इत्यादिना** ।। मनो म इत्यस्यार्थः– **विष्णु-रिति** ।। मनःशब्दस्यावबोधरूप इति योग उक्तः । रूढिं चाऽह– **यदेत-दिति** ।। आविराविर्व्यक्तं प्रतिष्ठितमित्यन्वयभ्रमं वारयितुमुत्तरेणान्वयमभिप्रेत्यानु-वदति–**आविरावीर्म एधीति** ।। मन इत्येतत् सम्बुद्ध्यन्तमत्रानुवर्तत इति भावेन व्याकुर्वन् वाक्यार्थमाह– **हे विष्णविति** ।। अस भुवीति धातोर्मध्यमपुरुषस्येदं रूपमित्यभिप्रेत्य एधीत्यस्य प्रतिपदमुपादत्ते– **भवेति** ।। आणीस्थेत्यस्य प्रतिपदम्– **आणीस्थितेति** ।। आणीत्वेन स्थितेत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **आण्या-मिति** ।। वेदस्थाणीस्थेतिपदद्वयार्थकथनपूर्वमाणीस्थपदस्य विष्णुपरत्वे प्रमाणमाह– **आधार इति** ।। नचाविराविरिति द्विर्वचनमादरार्थमिति सुगमं आवीरिति दैर्घ्यं

किमर्थमित्यत आह–**आविरिति** ।। शब्दाधिक्येऽर्थाधिक्यं भवतीति सूत्रार्थः । आधारत्वात् प्राणमाणीत्युक्तं तद् व्युत्पाद्य दर्शयति– **अणशब्दस्येति** ।। अण गताविति धातोरणशब्दस्य गतिवाचित्वाच्चलनक्रियावाचित्वात् 'तस्येदम्' इत्यणि कृते चलमाणमित्युच्यते । तस्य धारणेन तद्वानाणी फलितमर्थमाणीशब्दस्याऽह– **स्थापक इति** ।। वेदस्य श्रुतं श्रवणं मत्तो मा प्रहासीरित्यन्यथाप्रतीति-निरासायान्वयमुखेनानुवदति– **मे श्रुतमिति** ।। श्रुतं श्रवणजं ज्ञानमित्यभिप्रेत्य तात्पर्यमाह- **ममेति** ।। अनेन वेदेनाधीतेन पठितेनेत्यन्यथाप्रतीतिनिरासाय सोप-स्करं व्याचष्टे– **हे विष्णविति** ।। ऋतसत्यपदयोरपुनरुक्तमर्थमाह– **ऋतमित्या-दिना** ।। ऋ गतावित्यतः कर्मणि क्तप्रत्यये ऋतमवगतमिति सिद्ध्यति । अवगमनं च न भ्रमरूपमिति भावेन यथावदित्युक्तम् । सच्छब्दः साधुगुणवाची 'सद्भावे साधुभावे च' इत्यादेः । तनु विस्तारे यम नियमने । तथाच साधुगुणैस्ततं यं नियन्तारमिति सत्यमिति सिद्ध्यतीति भावः । तद्वेदश्रवणं मामवत्विति प्रतीतिनिरासाय व्याचष्टे– **तद् विष्णवाख्यमिति** ।। ननु विष्णोश्चेदेधीत्यादिवत् त्वं मामवेति वक्तव्यमित्यत आह– **तस्यैवेति** ।। खण्डस्य सङ्गतिं दर्शयन् खण्डार्थे प्रमाणमाह– **वङ्ग इत्यादिकमिति** ।। १ ।।

**।। इति श्रीमद्विठ्ठलाचार्यपुत्रेण श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां महैतरेयभाष्यरत्नमालायां द्वितीयप्रघट्टके सप्तमोऽध्यायः ।।**

**खण्डार्थः -**

अस्यैकखण्डात्मनोऽध्यायस्य सङ्गतिरुत्तरत्र भाष्य एव स्पष्टीभविष्यति । मे वाक् मनस्यवबोधरूपे विष्णौ प्रतिष्ठिता तदाधारतया स्थिता । यद्वा तद्विषयिणी-त्यर्थः । मनोनामकं ब्रह्म वाचि नियामकतया वाग्व्यवहारे विषयतयाऽव-स्थितम् । अतो मे आविरावीरेऽधि अतिप्रकटो भव । मे वेदस्य मयाऽधीयमानस्य वेदस्याऽण्यामाधारभूतायां मुख्यवाय्वाख्यायां देवतायां तिष्ठतीत्याणीस्थविष्णो मे मया श्रुतं शास्त्रश्रवणजनितविद्यां मा प्रहासीः मा मुञ्च सर्वदा विद्याविषयो

भव। विस्मृतो मा भवेरित्यर्थः । अनेनाधीतेन त्वद्विषयेणैवाधीतेनाहोरात्रान् सन्दधामि सर्वाहोरात्रेषु त्वद्विषयाध्ययनमेव करोमि। ऋतं यथावदवगतं वदिष्यामि । सत्साधुगुणैस्ततं यं नियन्तारमिति सत्यं सत्यनामानं वदिष्यामि । तद् ब्रह्म मां शिष्यं श्रोतारमवतु। तद् ब्रह्म वक्तारं स्वस्वरूपोपदेशकमस्मद्गुरुमवतु । अवतु मामिति पुनर्वचनमवधारणार्थमवत्वेवेति ।

**॥ इति द्वितीयप्रघट्टके सप्तमोऽध्यायः ॥**

## ॥ अथ तृतीयप्रघट्टके प्रथमोऽध्यायः ॥

उपनिषत्-

(विष्णुनाम्नि पूर्वोत्तरवर्णसन्धीनां महिमा)

अथातः संहिताया उपनिषत् ॥ १ ॥

(संहिताविद्या-माण्डूकेयमुनेरुपासना)

पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेयः ।

भाष्यम्-

'विष्णुनाम्नि षकारस्य णकारस्य च संहिताम् ।
विष्णोस्तु बहुरूपाणां [१]वाचिकामृषयो विदुः ।
तौ च वर्णौ हरेः सम्यक् स्वरूपप्रतिपादकौ ।
बहुधैव स्थितस्यास्य सदैवैकस्वरूपिणः ।
विष्णुनामार्थरूपत्वाद् वेदानामपि सर्वशः ।
अन्येषामपि शब्दानां संहिता विष्णुवाचिकाः[२] ।
तद्वाचकास्तथा वर्णाः सर्वे वैदिकलौकिकाः ।
पृथिवीनामकं रूपं पृथुत्वात् पृथिवीस्थितम् ।
देवतापूर्ववर्णस्य पूर्वरूपं तदुच्यते ।
देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम् ।
दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते ।
वेदकत्वाच्चायनत्वाद् रूपं यद् वायुनामकम् ।
विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम् ।
संहितानामकं तच्च रूपद्वयसहस्थितेः ।

१. वाचकाम्- ह.पा.    २. विष्णुवाचकाः- ह.पा.

## (उपासना अनेकविधा)

**वर्णद्वयं विकारं च षकारं केचिदब्रुवन् ।**
**षकारं मध्यमत्रैव णकारं केचिदुत्तरम् ।**
**पृथक् करणमेवैषां वर्णयोर्मध्यमुच्यते ।**
**उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम् ।**
**षकारं च णकारं च वर्णौ पूर्वोत्तरावपि ।**
**व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते ।**
**सर्वेऽप्येत उपादेयाः पक्षा निर्दोषका यतः ॥' इत्याद्यैतरेयसंहितायाम् ॥**

**टिप्पणी -**

अथात इत्यादौ केवलं जडसंहिताविषयविद्योच्यत इत्यन्यथाप्रतीतेः प्रमाणेन व्याचष्टे– **विष्णुनाम्नीति** ॥ बहुरूपाणां वामनप्रद्युम्नादिबहुरूपाणाम् । बहुधा स्थितस्य वराहवासुदेवाद्यात्मना बहुधा स्थितस्य । संहिताया इत्येकवचनतात्पर्यम्– **एकस्वरूपिण इति** ॥ एवं संहिताया विष्णुनामाक्षरतत्सन्धिदेवताया वराहादिबहु-रूपाया उपनिषद् बहुभिः खण्डैर्व्याख्यायत इत्यर्थमुक्त्वा विष्णुनामव्याख्यानभूतानां वेदादिशब्दानां पूर्वोत्तरवर्णतत्सन्धिदेवताया उपनिषदुच्यत इत्यर्थान्तरमाह– **विष्णुनामार्थेत्यादिना** ॥ लौकिकाः पौरुषेयवाक्यगताः । वैदिका वेदगताः सर्वे वर्णास्तद्वाचकाः णकारषकारार्थवाचकाः । पृथिवी रूपमित्यादि व्याचष्टे– **पृथि-वीति** ॥ पृथुत्वात् विस्तरत्वात् । पूर्वेण वर्णेन षकारादिना रूप्यते निरूप्यते प्रतिपाद्यत इति पूर्वरूपमित्यभिप्रेत्योक्तम्– **देवतेति** ॥ यद्वा पूर्वरूपं पूर्ववर्णमित्यु-च्यते । कुतः यतः पूर्ववर्णस्य देवतेति योज्यम् । प्रतिपाद्यप्रतिपादकयोरभेदोपचारश्च 'अयं वै लोकः प्रथमा महानाम्नी', 'तथौ प्राणात्मकौ' इत्यादौ दृष्ट इति भावः । देवतोत्तरवर्णस्येत्यादिकमप्येवं योज्यम् ॥ **वेदकत्वादिति** ॥ 'वा गतिगन्धनयोः' इति धातोरिति भावः ॥ **अयनत्वादिति** ॥ अय पय गताविति धातोरिति भावः । मध्यदेवता सन्धिदेवता ॥ **रूपद्वयेति** ॥ पूर्वोत्तरवर्णप्रतिपाद्यरूप-

## ।। अथ तृतीयप्रघट्टके प्रथमोऽध्यायः ।।

उपनिषत्-

(विष्णुनाम्नि पूर्वोत्तरवर्णसन्धीनां महिमा)

अथातः संहिताया उपनिषत् ।। १ ।।

(संहिताविद्या-माण्डूकेयमुनेरुपासना)

पृथिवी पूर्वरूपं द्यौरुत्तररूपं वायुः संहितेति माण्डूकेयः ।

भाष्यम्-

'विष्णुनाम्नि षकारस्य णकारस्य च संहिताम् ।
विष्णोस्तु बहुरूपाणां [1]वाचिकामृषयो विदुः ।
तौ च वर्णौ हरेः सम्यक् स्वरूपप्रतिपादकौ ।
बहुधैव स्थितस्यास्य सदैवैकस्वरूपिणः ।
विष्णुनामार्थरूपत्वाद् वेदानामपि सर्वशः ।
अन्येषामपि शब्दानां संहिता विष्णुवाचिकाः[2] ।
तद्वाचकास्तथा वर्णाः सर्वे वैदिकलौकिकाः ।
पृथिवीनामकं रूपं पृथुत्वात् पृथिवीस्थितम् ।
देवतापूर्ववर्णस्य पूर्वरूपं तदुच्यते ।
देवतोत्तरवर्णस्य क्रीडनाच्च द्युनामकम् ।
दिवि स्थितं हरे रूपमुत्तरं रूपमुच्यते ।
वेदकत्वाच्चायनत्वाद् रूपं यद् वायुनामकम् ।
विष्णोस्तद्वर्णयोर्मध्यदेवतेति प्रकीर्तितम् ।
संहितानामकं तच्च रूपद्वयसहस्थितेः ।

---

१. वाचकाम्- ह.पा.   २. विष्णुवाचकाः- ह.पा.

## (उपासना अनेकविधा)

वर्णद्वयं विकारं च षकारं केचिदब्रुवन् ।
षकारं मध्यमत्रैव णकारं केचिदुत्तरम् ।
पृथक् करणमेवैषां वर्णयोर्मध्यमुच्यते ।
उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम् ।
षकारं च णकारं च वर्णौ पूर्वोत्तरावपि ।
व्यक्तिरेवोष्मणस्तत्र मध्यमित्यभिधीयते ।
सर्वेऽप्येत उपादेयाः पक्षा निर्दोषका यतः ॥' इत्याद्यैतरेयसंहितायाम् ॥

**टिप्पणी -**

अथात इत्यादौ केवलं जडसंहिताविषयविद्योच्यत इत्यन्यथाप्रतीतेः प्रमाणेन व्याचष्टे– **विष्णुनाम्नीति** ॥ बहुरूपाणां वामनप्रद्युम्नादिबहुरूपाणाम् । बहुधा स्थितस्य वराहवासुदेवाद्यात्मना बहुधा स्थितस्य । संहिताया इत्येकवचनतात्पर्यम्– **एकस्वरूपिण इति** ॥ एवं संहिताया विष्णुनामाक्षरतत्सन्धिदेवताया वराहादिबहु-रूपाया उपनिषद् बहुभिः खण्डैर्व्याख्यायत इत्यर्थमुक्त्वा विष्णुनामव्याख्यानभूतानां वेदादिशब्दानां पूर्वोत्तरवर्णतत्सन्धिदेवताया उपनिषदुच्यत इत्यर्थान्तरमाह– **विष्णुनामार्थेत्यादिना** ॥ लौकिकाः पौरुषेयवाक्यगताः । वैदिका वेदगताः सर्वे वर्णास्तद्वाचकाः णकारषकारार्थवाचकाः । पृथिवी रूपमित्यादि व्याचष्टे– **पृथि-वीति** ॥ पृथुत्वात् विस्तरत्वात् । पूर्वेण वर्णेन षकारादिना रूप्यते निरूप्यते प्रतिपाद्यत इति पूर्वरूपमित्यभिप्रेत्योक्तम्– **देवतेति** ॥ यद्वा पूर्वरूपं पूर्ववर्णमित्यु-च्यते । कुतः यतः पूर्ववर्णस्य देवतेति योज्यम् । प्रतिपाद्यप्रतिपादकयोरभेदोपचारश्च 'अयं वै लोकः प्रथमा महानाम्नी', 'तथौ प्राणात्मकौ' इत्यादौ दृष्ट इति भावः । देवतोत्तरवर्णस्येत्यादिकमप्येवं योज्यम् ॥ **वेदकत्वादिति** ॥ 'वा गतिगन्धनयोः' इति धातोरिति भावः ॥ **अयनत्वादिति** ॥ अय पय गताविति धातोरिति भावः । मध्यदेवता सन्धिदेवता ॥ **रूपद्वयेति** ॥ पूर्वोत्तरवर्णप्रतिपाद्यरूप-

द्वयेत्यर्थः । विष्णुनाम्नि कौ तौ पूर्वोत्तरवर्णौ किञ्च मध्यं यद् देवतात्वं पृथिव्यादीनामित्यत ऋषिमतभेदेनाऽह– **वर्णद्वयमिति** ।। विकारं षकारं चशब्दात् णकारं च केचिद् वर्णद्वयमब्रुवन् । तथा च वीति पूर्वो वणः । ष्णु इत्युत्तरो वर्ण इति भावः। किमत्र मध्यमित्यत आह–**षकारं मध्यमिति** ।। अस्मिन् पक्षे षकारमेव मध्यमाहुरित्यर्थः । पक्षान्तरमाह– **णकारं केचिदुत्तरमिति** ।। एतेन विष् इत्येतत् पूर्वमित्युक्तं भवति । किमत्र मध्यमित्यत उक्तम्–**षकारमिति** ।। अत्रापि षकारमेव मध्यमाहुरित्यर्थः । ननु पूर्वपक्षे षकारो णकारेण सहोत्तरो वर्णः अस्मिन् पक्षे विकारेण सह पूर्वो वर्णः पक्षद्वयेऽपि षकारस्य कथं मध्यत्व-मित्यत आह– **पृथगिति** ।। एषामुभयेषां पक्षे वर्णयोर्विकारषकारयोः षणयोर्वा पृथक्करणं पृथगुच्चारणमेव मध्यमुच्यते । पृथक्करणेन व्यक्तीकृतषकार एव मध्यमि-त्यर्थः । पक्षान्तरमाह– **उपसर्गेति** ।। ऊष्मणः षकारस्य । व्यक्तिर्नाम सन्धिदशाया-मनन्यशेषत्वं णकारो हि पश्चाद्भावी षकारशेषतया सन्धिदशायां भासते । षकारस्तु शेषितया प्राधान्येन ष्णु इति भासते । तथाच शेषितया भासमानत्वं मध्यत्वमित्यर्थः । विरलोच्चारणे उभावपि प्रधानौ । संश्लिष्टोच्चारणे तु णकारः शेषभूतः । तत्र यः शेषितया णकारानुबद्धतया षकारो दृश्यते स मध्यमिति भावः ।

**उपनिषत्-**

**(संहिताविद्या-माक्षव्यमुनेरुपासना)**

**आकाशः संहितेत्यस्य माक्षव्यो वेदयाञ्चक्रे ।।**

**स हा विपरिहृतो मेने न मेऽस्य पुत्रेण समगादिति**
**समाने वै तत्परिहृतो मेन इत्यागस्त्यः ।।**

**(माण्डूकेयमाक्षव्यमुन्योर्द्वावपि पक्षौ समानौ)**

**समानं ह्येतद् भवति वायुश्चाऽकाशश्चेत्यधिदैवतम् ।**

**भाष्यम्-**

**आकाशस्थ आकाशनामा भगवान् वर्णयोर्मध्यदेवतेति माक्षव्यः । [1]उभयरूपसंहितत्वात् संहितानामकः । स माण्डूकेयस्तेन माक्षव्येणापरिहृतः स्वपक्ष इति मेने । [2]मे मदीयेन मदुपासितेनास्याऽऽकाशस्य पुत्रेण वायुना च समागादसौ माक्षव्यः । वायुस्थविष्ण्वनुपासनात् । यद्यप्याकाशस्थो भगवान् संहितानामको भवति । तथाऽपि न वायुस्थस्यासंहितात्वं भवतीत्यपरिहृतत्वम् । परिहृतो माण्डूकेयपक्ष इत्यहं मेन इत्यागस्त्यः । आकाशे विष्णूपासनस्याधिकफलत्वात् । पिता ह्याकाशो वायोः ।**

**भगवतस्तु पक्षः समत्वमेव वाय्वाकाशयोरिति । आकाशस्य पितृत्वाद् वायोर्बलाधिकत्वाच्चोभयोरुपासनास्थानत्वे साम्यम् । तस्मादुभावपि ग्राह्यौ । त्वगिन्द्रियदेवतात्वेनाऽऽकाशात् पूर्वमेव वायोः सात्त्विकाहङ्कारजत्वाद् वायोराकाशाद् गुणाधिकत्वम् । तथाऽप्यत्राऽऽकाशात् पूर्वमेव वायोः सात्त्विकाहङ्कारजत्वाद् वायो-राकाशाद् गुणाधिकत्वम् । तथाऽप्यत्राऽऽकाशस्य पितृत्वं व्याप्तिश्चाधिकेत्युपासनायां साम्यम् ।**

**टिप्पणी -**

आकाशः संहितेत्येतद् व्याचष्टे– **आकाशस्थ इति** ।। अस्य वर्णद्वयस्येत्यर्थ-मभिप्रेत्योक्तम्– **वर्णयोरिति** ।। संहिताशब्दं निर्वक्ति– **उभयेति** ।। सहाविपरिहृत इत्येतद् व्याचष्टे– **स इति** ।। इतिशब्दस्य वक्ष्यमाणस्यात्राप्यन्वयमाह– **इतीति** ।। न मेऽस्येत्येतद् व्याचष्टे– **मे मदीयेनेति** ।। मदुपासितेन अधिष्ठानतयेति शेषः । न समागादधिष्ठानतया बुद्धिसङ्गतिं नाकरोत् । कुत इत्यत उक्तम्– **वायुस्थेति** ।। एतेतिशब्दो हेतोरिति व्याख्यातो भवति । समाने वैतदित्यस्य तात्पर्यमाह– **यद्यपीति** ।। अनेन तत् तथापि ते उपासने समाने यत् तत्

१. उभयरूपसहितत्वात्- हृ.पा. २. 'मे' इति हृ.ती.पाठे नास्ति ।

तस्मादपरिहृत इति योजनेत्युक्तं भवति । परिहृतो मेन इत्यस्य माण्डूकेयपक्षः स्वेन परिहृत इति माक्षव्यो मेन इत्यन्यथाप्रतीतेर्व्याचष्टे– **परिहृत इति** ।। मेने मन्ये । आगस्त्याभिमतां युक्तिमाह– **आकाश इति** ।। यस्मादाकाशो वायोः पिता तस्मादाकाशे विष्णूपासकस्याधिकफलवत्त्वादिति योजना । समानं ह्येतद्भवतीत्येतत् कस्य पक्ष इत्यत आह– **भगवत इति** ।। सर्वोऽपि भगवतः पक्ष इत्यतः स्वपक्ष इत्युक्तम् । उपदेशात् पूर्वमन्यैरज्ञातः स्वमात्रज्ञातः पक्ष इत्यर्थः । साम्यमुपपादयन् वाक्यार्थमाह– **आकाशस्येति** ।। एतेन हिशब्दो यस्मादित्यर्थे । एतदित्यधिष्ठानद्वयमित्यर्थः । समानमित्यतः परं तस्मादिति पूरणीयम् । भवतीत्यस्य ग्राह्यं भवतीत्यर्थ इत्युक्तं भवति । प्रकारान्तरेण साम्यमुपपादयति– **त्वगिन्द्रियेति** ।। अहङ्कारस्त्रिविधो वैकारिकस्तैजसस्तामसश्चेति । तत्र वैकारिकापरपर्यायसात्विकाहङ्कारात् 'दिग् वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः' इत्युक्ता दशेन्द्रियदेवा उत्पन्नाः । 'वैकारिकान्मनो जज्ञे देवा वैकारिका दश' इति पूर्वशेषात् । तदनन्तरं तैजसादिन्द्रियाणि तामसाद् भूतानीति तत्त्वम् । तथाच त्वगिन्द्रियदेवतात्वेन आकाशात् पूर्वमेव वायोः सात्विकाहङ्कारजन्यत्वात् 'आदिसृष्टौ पूर्वजा ये तेऽधिकाः सर्वतो गुणैः' इत्युक्तरीत्या आकाशाद् वायोर्गुणाधिक्यम् । तथापि 'आत्मन आकाशः सम्भूतः' इति भूतोत्पत्तिप्रकरणे आकाशस्य पितृत्वाद् भूतान्तर्गतरूपेण वाय्वपेक्षया व्याप्त्याधिक्याच्च साम्यमिति भावः । पूर्वं वायुशब्दप्रवृत्तिनिमित्तबलादाधिक्यं वायोरुक्तमाकाशस्य भूतसृष्टौ कालज्यैष्ठ्यं साम्योपपादकं अधुना त्वादिसृष्टौ पूर्वजत्वयुक्त्या सर्वैर्गुणैराधिक्यं वायोराकाशस्य त्वाकाशशब्दप्रवृत्तिनिमित्तेन समन्तात् काशमानलक्षणेन व्याप्त्या गुणेन भूतसृष्टौ पितृत्वेन मान्यतया चाऽधिक्यमिति साम्यमुच्यत इति भेदः । नन्विन्द्रियदेवतात्वेन वायोः सात्विकाहङ्कारादाकाशापेक्षया पूर्वजत्वेन गुणाधिक्ये घ्राणाभिमानिनोरश्विनोर्दिगभिमानिकुबेरस्य पादमानिनो जयन्तस्य च विघ्नेशादुत्तमत्वं स्यादिति चेन्न । रूपविशेषेऽश्विकुबेरयोर्विघ्नेशात् कालज्यैष्ठ्येऽपि रूपविशेषे तदपेक्षया

विघ्नेशस्य व्याप्त्याधिक्येन देशज्यैष्ठ्यसद्भावेन तयोः स्वरूपसाम्यस्योपपत्तेः । जयन्तस्य तु 'पाददेवो जयन्तोऽन्यः' इत्युक्तत्वेन पादनियामकोपेन्द्रशेषत्वेन पश्चाज्जन्म सम्भवति । इन्द्रियदेवोत्पत्तिदशायां तूपेन्द्रस्यैवाभिव्यक्तिसम्भवात् । अत एव भागवते उपेन्द्रग्रहणं कृतम् ।

**उपनिषत्-**

**(पितापुत्रयोरुपासनादृष्टौ भेदः साम्यं च)**

**अथाध्यात्मम् ॥ वाक् पूर्वरूपं मन उत्तररूपं प्राणः संहितेति शूरवीरो माण्डूकेयोऽथ हास्य पुत्र आह ज्येष्ठो मनः पूर्वरूपं वागुत्तररूपं मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति तस्मान्मन एव पूर्वरूपं वागुत्तररूपं प्राणस्त्वेव संहितेति समानमेनयोरत्र पितुश्च पुत्रस्य च ॥**

**भाष्यम्-**

**अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यम् । अन्यत्र तु पुत्रपक्ष एव बलीयान् । युक्तिमत्त्वात् ।**

**टिप्पणी -**

समानमेनयोरत्र पितुश्च पुत्रस्य चेति वाक्यस्थं अत्रेतिपदमनूद्य व्याचष्टे– **अत्रेति** ॥ **पितापुत्रयोरिति** ॥ तत्पक्षयोरित्यर्थः । अत्रेति विशिष्योक्त्या व्यावर्त्यमाह– **अन्यत्रेति** ॥ ननु पूर्वोत्तरवर्णदेवताविषये पुत्रपक्षो बलीयानिति न युक्तम् । तथाहि– किमस्य वराहादिवर्णप्रतिपाद्यदेवताविषय इत्यर्थः । उत 'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः' (ब्र.सू.भा. ४.१.१) इति सूत्रभाष्योक्तरीत्या वाङ्मनसनामकयोरुमामहेश्वरयोः पूर्वोत्तरवर्णाभिमानिदेवतात्वं विषय इति । नाद्यः । ऋषिमतद्वये वराहादीनामेव ऋक्सूक्ष्वर्ळोत्तरवर्णप्रतिपाद्यदेवतात्वेन तत्र

प्राबल्यदौर्बल्याभावात्। नापि द्वितीयः। वाङ्मनसशब्दवाच्ययोरुमामहेश्वरयोरुभयोरपि मतद्वयानुसारेण पूर्वोत्तरवर्णाभिमानिदेवतात्वोपपत्तेः पुत्रपक्षस्य तद्विषये प्राबल्यायोगात्। नहि वाक्प्रभृतेर्मनोऽधीनत्वयुक्तिमनस एव पूर्ववर्णाभिमानित्वं न वाचः वाच एवोत्तरवर्णाभिमानित्वं न मनस इत्यत्र साधिका भवत्यप्रयोजकत्वात्। तत्कथमेतदिति चेन्न। अन्यत्रेति भाष्यस्य तट्टीकायाश्च पूर्वोत्तरवर्णाभिमानिदेवतयोर्गुणप्रधानभावो विषय इत्यर्थाङ्गीकारेण बाधात्। तथा हि– तत्र हि वाङ्मनसयोरुमारुद्रयोः पूर्वोत्तरवर्णाभिमानिदेवतात्वविषये गुणप्रधानभावे च मुनिमतविवाद उच्यते। तत्र वर्णदेवतात्वविषये तूक्तयोः साम्यमन्यतरपक्षविशेषयुक्त्यभावेनोत्तरयोरप्युभयवर्णाभिमानित्वोपपत्तेः। गुणप्रधानभावे तु पुत्रपक्ष एव बलीयान् युक्तिमत्त्वात्। नच वाचो मनोऽधीनत्वेऽपि देवतया कुतस्तदिति वाच्यम्। अचेतनस्यान्योन्यवशत्वस्य देवतानिमित्तत्वादिति। नन्वेवं वाङ्मनसयोः पूर्वोत्तरवर्णाभिमानिदेवतात्वविषये मतयोः साम्ये समानमेनयोरत्र पितुश्च पुत्रस्य चेत्युपनिषद्वाक्यं भाष्ये अत्र प्राणाख्यस्य प्राणे स्थितस्य विष्णोः संहितानामत्वे पितापुत्रयोः साम्यमेवेति प्राणस्थस्य संहितानामकत्वमात्रे साम्यमित्येवंपरतया व्याख्यातत्वात्। अत एव न्यायविवरणे 'वाक्पूर्वरूपं मन उत्तररूपम्' इति वाचः पूर्ववर्णदेवतात्वनिर्देशमात्रेण मनः पूर्वरूपमित्यनेन साम्यम्। 'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति' इति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रुत इति प्राधान्यं मनस एव हि ज्ञायत इत्यादिना समानमेनयोरिति वाक्यं पितापुत्रयोर्मतमत्र वाङ्मनसयोः पूर्वोत्तरवर्णाभिमानिदेवतात्वविषये समानमिति व्याख्यातम्। स्पष्टं च वाङ्मनसीत्यधिकरणे तत्त्वपकाशिकायाम्। अत्र खलु वाक् पूर्वरूपमित्यादिना वाङ्मनसयोः पूर्वोत्तरवण-देवतात्वे गुणप्रधानभावे च मुनिमतविवाद उच्यते। तत्र वर्णदेवतात्वविषये तूक्तयोः साम्यमन्यतरपक्षे विशेषादर्शनात्। नच तत्र व्यामिश्रतापि। उभयोरपि वर्णदेवतात्वोपपत्तेः। गुणप्रधानाभावे तु साम्यमेव नास्ति। 'मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति' इति युक्त्या मनःपूर्वकत्वस्यैव विशेषश्रवणादिति।

उपनिषत्-

(शरीरो भगवद्रथः)

स एषोऽश्वरथः प्रष्टिवाहनो मनोवाक्प्राणसंहतः ॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन ॥ सर्वमायुरेतीति नु माण्डूकेयानाम् ॥

॥ इति प्रथमः खण्डः ॥

भाष्यम्-

'मनोवाक्प्राणनामाऽसौ मनआदिषु संस्थितः ।
विष्णुस्तस्य रथो देह इन्द्रियाश्वः प्रकीर्तितः ॥' इति च ॥

'प्रष्टिः स पृच्छनीयत्वात् परमात्मा जनार्दनः ।
वक्तृत्वाच्चैव वाङ्नामा मनो मन्तृत्वहेतुतः ॥' इति च ॥

'प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव' इति च श्रुतिः ।

(उपासनाफलं द्विविधं लौकिकमलौकिकमिति)

मुक्तिरेव स्वर्गलोकः 'अमुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वा' इति प्रस्तुतत्वात् ।

'मुक्तः प्रकृष्टज्ञानैश्च वेदैर्विष्णूत्थतेजसा ।
नित्यायुषा च युक्तः स्यात् संहितारूपविद्वरेः ॥' इति च ॥

प्रकृष्टत्वेन जननात् प्रजेति ज्ञानम् । पान्ति शंसाधनाश्चेति पशवो वेदाः । परब्रह्मणो विष्णोर्वरणादेव सम्यक् चायितं स्वरूपं तेजः ब्रह्मवर्चसम्[1] । लौकिक-

---

१. 'ब्रह्मवर्चसम्' इति ह.ती.पाठे नास्ति ।

**प्रजादिकमपि तदिच्छूनां यथायोग्यं भवति। माण्डूकेयैर्ऋषिभिरुपाश्रिता एता विद्याः॥**

**टिप्पणी -**

ननु 'तत्पूर्वकत्वाद् वाचः' (ब्र.सू. २.४.५) इत्यधिकरणे वाङ्मनसाभिमानिनोरुमा-महेश्वरयोः कार्यकारणभावे इदं वाक्यमुदाहृतम्। तत्कथं भगवद्रूपाणां पूर्वापरवर्ण-सन्धिप्रतिपाद्यत्वमत्र व्याख्यायत इत्येतदप्येतेनैव निरस्तम्। वर्णप्रतिपाद्य-भगवद्रूपाधिष्ठानयोरुमामहेश्वरयोर्गुणप्रधानभावोपपादकतया पूर्वरूपादिपदेन कार्यकारणभावस्याप्युपनिषदभिप्रेतत्वेनाविरोधात्। त एव तत्त्वप्रकाशिकायां 'अत्र पूर्वोत्तरशब्दौ कार्यकारणपरौ' इत्युक्तमित्यलं विस्तरेण। 'स एषोऽश्वरथः' इत्यत्र मनोवाक्प्राणस्थेन तन्नामकेन विष्णुना संहितः बद्धः स एष देहाख्येन्द्रियाश्वयुक्तो रथ इत्यन्वयमभिप्रेत्य व्याचष्टे– **मन इति**॥ 'वक्तृत्वाच्चैव वाङ्नामा' इति स्मृत्युक्तार्थे श्रुतिमुदाहरति– **प्राणन्निति**॥ कर्मनामानि प्राणनवचनादिक्रिया-प्रवृत्तिनिमित्तकानि नामानि। स्वर्गलोकशब्दस्य मुक्तिपरत्वे युक्तिमुक्त्वा समाख्यास्मृतिं दर्शयन् फलवाक्यं व्याचष्टे– **मुक्त इति**॥ य एवमेतां संहितां संहितानामकं हरे रूपं वेद सः प्रजया प्रकृष्टज्ञानैः पशुभिः वेदैः ब्रह्मवर्चसेन विष्णूत्थतेजसा सन्धीयते युक्तः स्यात्। स्वर्गेण लोकेन च सन्धीयते मुक्तः स्यात् सर्वमायुरेति नित्यायुषा च युक्तः स्यादित्यर्थः। प्रज्ञादिशब्दानामुक्तार्थेषु निरुक्तिं दर्शयति– **प्रकृष्टत्वेनेत्यादिना**॥ विष्णोर्वरणादिति कर्तरि षष्ठी। मदीयोऽयमिति विष्णुना भक्तत्वेन स्वीकृतत्वादित्यर्थः। कर्मणि षष्ठी। विष्णुभजनेनेत्यर्थः। चायितं उपचायितं वर्धितम्। नान्तरीयफलतया प्रसिद्धप्रजादिकमत्रोच्यत इत्याह– **लौकिकेति**॥ इति नु माण्डूकेयानामित्येतद् व्याचष्टे– **माण्डूकेयैरिति**॥ १-२७॥

**खण्डार्थः -**

अथ कोऽहमिति त्रयोविंशखण्डे विष्णुशब्दवाच्यत्वमुपक्षिप्तम्। तदनन्तरखण्डे

च विष्णुशब्दार्थभूतमाततगुणत्वमात्मशब्दार्थतयोक्तम् । विष्णुशब्दार्थैकदेश-वाचित्वाच्चाऽत्मशब्दस्येति भाष्योक्तेः । तदनन्तरखण्डे चायं विष्णुर्हि किंरूप इत्यादिभाष्यदिशा प्रकृतविष्णोर्णकारषकारर्थभूतं यदि वाचभिव्याहृतमित्यादिनाऽक्षिप्तं दर्शनादिसर्वक्रियाप्रवर्तकत्वमुक्तम् । अन्तिमखण्डे विष्णुसंहिताध्ययने विघ्नपरिहाराय विष्णुप्रार्थनं कृतम् । भाष्ये 'अबोध्यरूपे विष्णौ स च विष्णुः । हे विष्णो विष्णविति सम्बोधनम्' इति विष्णुशब्दाभ्यासात् । तदेवं प्रकृते विष्णुनामनिष्ठां विद्यां वक्तुमिदमारण्यकम् । अथ श्रोतृणामधिकारसम्पत्त्यनन्तरम् । तानुद्दिश्यातः मोक्षाख्यप्रयोजनस्य सद्भावात् संहितायाः विष्णुनामाक्षरतत्सन्धिदेवतायास्तथा तद्व्याख्यानरूपवेदाद्यक्षरतत्सन्धिदेवतायाश्च पूर्वरूपम् । उपनिषत् रहस्यविद्या उच्यत इति शेषः। तत्राधिदैवतमुपास्तिप्रकार उच्यते– **पृथिवीत्यादिना** ।। पृथिवी पृथुत्वात् पृथिवीनामकं पृथिवीस्थं वराहरूपं पूर्ववर्णप्रतिपाद्यं पूर्ववर्ण इतिनामकं च । द्यौः दिवि स्थितं क्रीडनात् द्युनामकं वामनरूपमुत्तररूपं उत्तरवर्ण-प्रतिपाद्यमुत्तरवर्णनामकं च । वायुर्वायुस्थं वेदकत्वादयनत्वाच्च वायुनामकं नृसिंहरूपं रूपद्वयसहितत्वात् संहितानामकं संहितास्थं सन्धिप्रतिपाद्यमिति माण्डूकेयो मन्यते । आकाशः आकाशनामा नृसिंहः अस्य वर्णद्वयस्य संहिता मध्यदेवतेति माक्षव्यो वेदयाञ्चक्रे । पक्षान्तरे स्वपक्षदूषके माक्षव्येणोपात्ते कथं माण्डूकेयो मन्यत इत्यत उच्यते– **सहेति** ।। स माण्डूकेयो माक्षव्येण स्वपक्षो विपरिहृतो न निराकृत इति मेने । कथं मेन इत्यतस्तदुपपाद्यते– **न मेऽस्येति** ।। मे मदीयेन । मदुपासितेनास्याऽकाशस्य पुत्रेण वायुना माक्षव्यस्तत्स्थहर्युपासनान्न समागान्न सङ्गत इति हेतोरपरिहृत इत्यन्वयः । तस्याऽत्मपक्षोपस्थितेरेवाभावात् तेनानिराकरणं स्वपक्षस्येति भावः । तस्यैतत्पक्षानुल्लेखेन तेन निराकरणेऽपि वस्तुतः प्रबलतदवरोधेन त्वत्पक्षः परिहृत इत्यत उच्यते–**समाने वैतदिति** ।। तत् तथाऽप्याकाशस्थस्य संहितानामकत्वेऽपि यद्यस्मादेते उपासने भगवद्विषयत्वात् प्राबल्यदौर्बल्याभावाच्च समाने तत् तस्माद् वायुस्थस्य संहितात्वानपायादपरिहृत इति मेन इत्यर्थः । आकाशे विष्णूपासनपक्षस्य प्रबलत्वात् तत् तेन पक्षेण

दुर्बलो माण्डूकेयपक्षः परिहृत इत्यहं मेने मन्ये इत्यागस्त्यो मेने । एवं ऋषिमतविप्रतिपत्तिमुक्त्वा भगवता महिदासेन स्वपक्ष उच्यते– **समानमिति** ।। हि यस्माद् वायुश्चाकाशश्चेत्येतदुपासनाधिष्ठानद्वयं समानमाकाशस्य पितृत्वाद् वायोर्बलाधिकत्वात् । तस्मात् तदुभयं ग्राह्यं भवतीति योज्यम् । इत्यधिदैवतं संहिताया उपनिषदभिहिता । अथाध्यात्ममभिधीयते । वक्तृत्वाद्वाङ्नामकं मन्तृत्वान्मनोनामकं प्रकर्षेणाननाच्चेष्टकत्वात् प्राणनाम । शिष्टं स्पष्टम् । तत्राप्यधिष्ठानमात्रविषये विप्रतिपत्तिरुच्यते– **अथेति** ।। अथ तत्र मनोनामकं वराहरूपं पूर्ववर्णप्रतिपाद्यम् । वाङ्नामकं वामनरूपमुत्तरवर्णप्रतिपाद्यमिति स्वपक्षे पुत्रेण युक्तिरुच्यते– **मनसेति** ।। उपसंह्रियते– **तस्मादिति** ।। तस्मात् सयुक्तिकत्वान्मन एव पूर्वरूपं वागेवोत्तररूपं संहिता तु प्राण एवेत्याहेत्यन्वयः । नन्वेवं पुत्रपक्षस्य प्रबलत्वे पितापुत्रपक्षयोः साम्यमिति प्रसिद्धिविरोध इत्यतो महिदासेनोच्यते– **समानमिति** ।। पितुश्च पुत्रस्येत्येनयोरत्र प्राणाख्यस्य प्राणे स्थितस्य नरसिंहस्य संहिता देवतात्वविषये । मतं समानमित्यर्थः । यद्वै तयोः समानं समानत्वं साम्यमिति भावप्रधानतया योज्यम् । स एषः अध्यात्मशब्देन प्रकृतो देहाख्यः अश्वरथः इन्द्रियाख्याश्वयुक्तो रथः । प्रष्टेः प्रच्छनीयस्य पृच्छाविषयस्य । यद्वा तस्यैवोत्तरप्रदानसमर्थत्वेन प्रच्छनीयस्योपदेशकस्य हरेर्वाहनः । कथं मनोवाक्प्राणसंहतः मनोवाक्प्राणनामकेन तत्स्थेनोपदेशोपयुक्तत्वादिसामर्थ्योपेतेन परमात्मना सम्बद्ध इत्यर्थः । य उपासक एवमुक्तप्रकारेण संहितां पूर्वोत्तरवर्णसंहितां वेद स प्रजया प्रकृष्टत्वेन जननात् प्रजाज्ञानं तेन पान्ति शंसाधनाश्चेति पशवो वेदाः । तैर्यशसा कीर्त्या ब्रह्मणो वरणादेव सम्यक् चायितं स्वरूपं तेजो ब्रह्मवर्चस्तेन स्वर्गेण लोकेन विष्णुलोकेन सन्धीयते सर्वमायुर्नित्यायुश्चैति लौकिकप्रजादिभिः सन्धीयते । पूर्णायुष्यं चैतीत्यप्यर्थः । इति नु एता हि माण्डूकेयानां सम्बन्धिन्यः। तैरुपासिता विद्या इत्यर्थः ।। १ ।।

।। इति प्रथमः खण्डः ।।

**उपनिषत्-**

**(शाकल्यमुन्युपासना)**

**अथ शाकल्यस्य पृथिवी पूर्वरूपं द्यौरुत्तररूपं वृष्टिः सन्धिः पर्जन्यः सन्धाता तदुतापि यत्रैतद् बलवदनूद्धह्लन् सन्दधदहोरात्रे वर्षति ॥ द्यावापृथिव्यौ तदुतापि यत्रैतद् बलवदनुद्धह्लन् सन्दधदहोरात्रे वर्षति ॥ द्यावापृथिव्यौ समधातामित्युताप्याहुरिती न्वधिदैवतम् ।**

**भाष्यम्-**

'वराहो वामनः सिंहः इति रूपत्रयं हरेः ।
पूर्वोत्तरार्णमध्येषु स्थितमुक्तं सनातनम् ।
माण्डूकेयैर्हि शाकल्यो वासुदेवादिरूपिणम् ।
तेषु चोच्चारके चैव स्थितमाह चतुर्विधम् ।
भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितम् ।
उर्व्यादीनां चतुर्णां च देह एव स्थितिं पुनः ।
अधरार्धस्य चोर्व्याश्च साम्यमन्यस्य वै दिवा ।
वाचो वृष्ट्यैव साम्यं च पर्जन्येनैव चाऽत्मनः ।
तेषां तेषु स्थितिं चैव विष्णोश्च चतुरात्मनः ।

**टिप्पणी -**

अथ शाकल्यस्येत्यत्राथेति सूचितं पूर्वमताद्वैलक्षण्यं वक्तुं पूर्वमतमनुवदति- **वराह इति** ।। न तत्र पूर्वरूपादिशब्देन कार्यकारणभाव उक्त इति भावेनोक्तम्- **सनातनमिति** ।। अथ शाकल्यस्येत्यादि व्याचष्टे- **शाकल्य इत्यादिना** ।। शाकल्यस्तु भूमिद्युवृष्टिपर्जन्यनाम्नोर्व्यादिषु संस्थितं वासुदेवादिरूपिणं चतुर्विधं विष्णुं तेषु पूर्वोत्तरवर्णमध्येषूच्चारके च स्थितमाहेत्यन्वयः । अथाध्यात्ममित्येतद् व्याचष्टे-

**उर्व्यादीनामिति** ।। आहेति सम्बन्धः । अध्यात्मं देहे । उर्व्यादीनां चतुर्णां तद्गतरूपाणां चावस्थानमुच्यत इत्यर्थ इति भावः । इदमेव पृथिव्या रूपं सरूपं सममित्याद्यर्थमभिप्रेत्येदमेव पृथिव्या रूपमित्यादि व्याचष्टे- **अधरार्धस्येत्यादिना** ।। मूलमुपलक्षणमित्यभिप्रेत्योक्तम्- **वाच इत्यादि** ।। इदमेव पृथिव्याः पृथिवीनियामकस्य वासुदेवस्य रूपं प्रतिमेत्यर्थान्तमुक्तम् । **विष्णोरिति** ।। चतुरात्मनो विष्णोस्तु विशेषेण नियामकत्वेन येष्वधरार्धादिषु तद्गतदेवेषु च स्थितिमित्यर्थः ।

**उपनिषत्-**

**(शाकल्यमुन्युपासना अध्यात्मे)**

**अथाध्यात्मम् ।। पुरुषो हवा अयं सर्व आनन्दं द्वे विदले भवत इत्याहुस्तस्येदमेव पृथिव्या रूपमिदं दिवस्तत्रायमन्तरेणाऽकाशो यथाऽसौ द्यावापृथिव्यावन्तरेणाऽकाशस्तस्मिन् हास्मिन्नाकाशे प्राण आयत्तो यथाऽमुष्मिन्नाकाशे वायुरायत्तो यथाऽमूनि त्रीणि ज्योतींषीत्येवमिमानि पुरुषे त्रीणि ज्योतींषि यथाऽसौ दिव्यादित्य एवमिदं शिरसि चक्षुर्यथाऽसावन्तरिक्षे विद्युदेवमिदमात्मनि हृदयं यथाऽयमग्निः ।। पृथिव्यामेवमिदमुपस्थे रेत एवमु हस्म सर्वलोकमात्मानमनुविधायाऽहेदमेव पृथिव्या रूपमिदं दिवः स य एवमेतां संहितां वेद ।। सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।।**

।। इति द्वितीयः खण्डः ।।

**भाष्यम्-**

**आकाशस्यान्तराकाशे नृसिंहस्यात्र संस्थितिम्।**
**वायोः प्राणात्मतां चैव तत्र दाशरथेः स्थितिम्।**
**सूर्यविद्युद्धुताशानां दृग्धृद्रेतःसु च स्थितिम्।**
**कपिलस्य च हंसस्य जामदग्न्यस्य तेषु च।**
**स्थितिं वदति विद्येयमपि मोक्षप्रदायिनी ॥' इत्यादि च ॥**

**वर्षणाद् वृष्टिः। परं जनयतीति पर्जन्यनामा विष्णुः। सन्धिनोतीति सन्धिः। 'धिनु पुष्टौ' इति धातुः। सम्यग् धारणात् सन्धाता। वर्षणमेव द्यावापृथिव्योः सन्धानम्। पर्जन्यस्थो भगवांस्तत्कर्ता ॥**

**॥ इति द्वितीयः खण्डः ॥**

**टिप्पणी -**

देहेऽयमाकाशस्तत्रासावाकाश इत्यस्यार्थः– **आकाशस्येति** ॥ आकाशस्याभिमानिनः अन्तराकाशे संस्थितिमत्र नृसिंहस्य आकाशाख्यस्य संस्थितिमित्यर्थः। अस्मिन् प्राणे वायुरायत्त इत्यस्यार्थः– **वायोरिति** ॥ प्राणात्मतां प्राणान्तर्गतत्वम्। दाशरथेः वाय्वाख्यस्य। शिरसीदं चक्षुरात्मनि हृदयमुपस्थेरेत इत्यस्यार्थः– **सूर्येति** ॥ चक्षुर्हृदयरेतोनामकानामिति योज्यम्। तेषु दृगादिस्थेषु सूर्यादिषु चक्षुरादिनाम्नः संस्थितिं वदति शाकल्यः। स य एवमित्यादेस्तात्पर्यम्– **विद्येयमपि मोक्षप्रदायिनीति** ॥ प्रागनिरुक्तान् शब्दान्निर्वक्ति– **वर्षणादित्यादिना** ॥ परं सस्यादिकम्। 'जननात् परसस्यादेः पर्जन्यः' इति वचनात्। सन्धिनोतीत्यस्य पुष्णातीत्यर्थं तन्मूलधातुव्याख्यानपठनेन दर्शयति–**धिन्विति** ॥ वृष्टिः सन्धिरित्यत्र वृष्टिपदस्य वर्षणक्रियावाचित्वं वृष्यमाणोदकवाचित्वं च सन्धिपदस्य च सन्धानं सन्धिरिति क्रियावाचित्वं सन्धीयत इति सन्धिरिति विषयवाचित्वं चास्ति। प्रकृते विवक्षितमर्थमाह– **वर्षणमिति** ॥ वृष्टिरिति वर्षणं सन्धिरिति सन्धानक्रियेत्यर्थ इति भावः। क्रियावाचित्वे ज्ञापकमाह– **पर्जन्य इति** ॥ पर्जन्यः सन्धातेत्युत्तरवाक्ये

पर्जन्यस्थस्य हि क्रियाकर्तृत्वमुच्यते अतः पूर्वं क्रियोच्यत इत्यर्थः । यद्वा, द्यावापृथिव्यौ समधातां सन्धिते अभूतामित्युक्तम् । व्यवहितत्वेन संयोग-घटकावान्तरक्रियाभावादित्यतो वर्षणमेव सन्धानक्रियेत्याह–**वर्षणमेवेति** ।। कुतो वर्षणं सन्धानक्रियेत्यतः पर्जन्यो यदा वर्षति तदा द्यावापृथिव्यौ समधातामिति पर्जन्यस्थस्य संयोगघटकवर्षणलक्षणसन्धानक्रियाकर्तृत्वेन निर्दिष्टत्वादित्याह– **पर्जन्यस्थ इति** ।। २ ।।

**खण्डार्थः -**

अथेति पूर्वमताद् वैलक्षण्यद्योतकः । विद्योच्यत इति शेषः । पृथिवी पृथिवीनामकं तद्गतं वासुदेवाख्यं रूपम् । द्यौर्दिविस्थं द्युनामकं सङ्कर्षणाख्यम् । वर्षणाद् वृष्टिनामको वृष्टौ स्थितः प्रद्युम्नः सन्धिः संहितादेवता । परं सस्यादिकं जनयतीति पर्जन्यनामा पर्जन्यस्थोऽनिरुद्धः सन्धाता उच्चारयितृपुरुषस्थः । वृष्टेः सन्धित्वं पर्जन्यस्य सन्धातृत्वं लोकप्रसिद्धमित्युच्यते–**तदुतेति** ।। यत्र यदा । एतत् एष पर्जन्यः । बलवदनूद्गृह्णन् बलवद् यथा भवति तथा अनु वर्षकालानु-सारेण । उद्गृह्णन् उद्गर्जन्नपि । अहोरात्रे सन्दधत् सम्मेलयन्नुत सम्मेलयन्नपि वर्षति । तत् तदा द्यावापृथिव्यावपि समधातां सन्धिते अभूतामित्याहुरुत आहुः स्न तस्माद् वृष्टिः सन्धिः पर्जन्यः सन्धातेति भावः । इति नु इत्थं ह्यधिदैवमुपासनम् । अथाध्यात्मं पृथिव्यादीनां तदधिष्ठानकसंहितारूपाणामधिष्ठान-मुच्यते । अयं सर्वः पुरुषः समग्रः पुरुषदेहः । आन्दं एकावयवी । तस्य देहस्य द्वे विदले द्वौ पूर्वोत्तरभागौ भवत इत्याहुः । तस्येदं पादादिकटिपर्यन्तं पूर्वार्धमेव पृथिव्या रूपं सरूपम् । पृथिवीदेवतायाः प्रतिमाभूतं च पृथिवीनामकस्य वासुदेवस्यापि प्रतिमाभूतं च । इदं नाभ्यादिशिरःपर्यन्तम् । दिवो द्युलोकस्य रूपं सरूपं समानम् । द्युदेवतायास्तद्गतस्य तन्नामकस्य सङ्कर्षणस्य च रूपं प्रतिमाभूतं च । एतेन शरीरस्य पूर्वार्धं पुरुषेण नियामकत्वेन येष्वधरार्धादिषु तद्गतदेवेषु च स्थितिमित्यर्थः ।

**।। इति द्वितीयः खण्डः ।।**

उपनिषत्-

(संहिताद्यध्येतुर्निन्दनमनर्थकरम्)

अथातो निर्भुजप्रवादाः ॥ पृथिव्यायतनं निर्भुजं दिव्यायतनं प्रतृण्णमन्तरिक्षायतनमुभयमन्तरेणाथ यद्येनं निर्भुजं ब्रुवन्तमुपवदेदच्योष्ठा अवराभ्यां स्थानाभ्यामित्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तमुपवदेदच्योष्ठा उत्तराभ्यां स्थानाभ्यामित्येनं ब्रूयाद् यस्त्वेवोभयमन्तरेणाऽह तस्य नास्त्युपवादः ।

भाष्यम्-

'पृथिवीस्थो वराहस्तु संहितादेवतोदिता।
दिविष्ठो वामनश्चैव सम्प्रोक्तः पददेवता।
नृसिंहस्त्वन्तरिक्षस्थो भगवान् क्रमदेवता।
स्वाध्यायमेवं ध्यात्वा यः करोत्यपवदेन्न तम्।
तस्यापवदिता याति त्रैलोक्यादध एव हि।
नाशमाप्नोति निरये तस्मादपवदेन्न तम्।
गच्छस्यध इति ब्रूयादन्यं ब्राह्मणतस्तथा।
ब्रह्मप्राप्तेर्हि योग्यो यो ब्राह्मणः स नचेतरः ॥' इति च ॥

(संहितापदक्रमाणां लक्षणानि)

भञ्जनवर्जितत्वान्निर्भुजं संहिता । '[1]तृण च्छेदने' इति धातोः प्रतृण्णं पदम्। उभयमन्तरेण क्रमः। निर्भुजमूलत्वात् पदादीनां तद्विषयप्रवादा अपि निर्भुजप्रवादा इत्येवोच्यन्ते।

---

१. तृणु- ह.पा.

## (क्रमाध्येतृनिन्दनं बह्वनर्थकरम्)

पृथिवीस्थितपृथिवीनामकविष्णवायतनं पृथिव्यायतनमित्यादि । अवराभ्यां पृथिव्यन्तरिक्षाभ्यां च्युतोऽसीति । उत्तराभ्यामन्तरिक्षद्युभ्याम् ।

'क्रमस्वाध्यायकृद् यस्तं विशेषेण न निन्दयेत् ।
लोकत्रयादपि भ्रष्टो यस्मात् तन्निन्दको भवेत् ।।' इति च ।।

तस्मादतिदुष्टत्वात् तन्निन्दको नास्त्येवेत्युक्तम् 'तस्य नास्त्युपवादः' इति । 'तं कृष्णं पुण्डरीकाक्षं को नु युद्ध्येत बुद्धिमान्' इत्यादिवत् ।

**टिप्पणी -**

अत्र निर्भुजादिपदानामर्थाप्रतीतेर्निर्भुजं पृथिव्यायतनं पृथिव्या आश्रय इत्यन्यथाप्रतीतेश्च प्रमाणेन व्याचष्टे– **पृथिवीस्थ इत्यादिना** ।। एतेन पृथिवीनामको वराहः आयतनं विषयो यस्येति वा पृथिव्या आयतनं प्रतिपादकतया आश्रय इति वाऽर्थ इत्युक्तं भवति । दिव्यायतनमित्यत्र दिवीत्यधिकरणसप्तमीति भावेनोक्तम्– **दिविष्ठ इति** ।। अथ यद्येनं निर्भुजमित्यादिना निन्दकस्यानर्थोक्त्या निन्दा न कार्येति विधिर्गम्यत इति भावेनाऽऽह– **स्वाध्यायमिति** ।। प्रतिपाद्यरूपाज्ञानिनो निन्द्यत्वादुक्तम्– **एवं ध्यात्वेति** ।। अच्योष्ठा अवराभ्यामित्यादेस्तात्पर्यमाह– **तस्येति** ।। निर्भुजप्रतृण्णामध्येत्रपवदिता लोकद्वयात् प्रच्याव्यते यस्तु क्रमपाठ-निन्दकः स लोकत्रयादधो निरये नाशं दुःखमाप्नोतीति योज्यम् । न त्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयादित्यस्य तात्पर्यमाह– **गच्छसीति** ।। ब्राह्मणश्च न प्रथमवर्णोऽत्र विवक्षित इत्याह– **ब्रह्मेति** ।। संहितादौ निर्भुजादिशब्दान्निर्वक्ति– **भञ्जनेत्या-दिना** ।। संहितापदोभयगर्भत्वात् क्रम उभयमन्तरेणेति स्फुटत्वान्नोक्तम् । ननु संहिताविषयविद्याप्रतिपादनं प्रतिज्ञाय पदक्रमविषयविद्याप्रतिपादनमसङ्गतमित्यत आह– **निर्भुजमूलत्वादिति** ।। निर्भुजज्ञानाधीनज्ञानत्वादित्यर्थः । यद्वा तदाश्रितत्वादित्यर्थः ।। **पदादीनामिति** ।। पदक्रमजटानामित्यर्थः । 'संहितापाठतः

प्रोक्तं द्विगुणं पदपाठतः । त्रिगुणं क्रमपाठे स्याज्जटापाठे तु षड्गुणम् ।। महाभारतपाठस्तु वेदतुल्यः प्रकीर्तितः ।।' इति वराहपुराणे चातुर्मास्यमाहात्म्ये दशमाध्याये कथितत्वात् क्रमान्तर्भावविवक्षया पृथग् देवताद्यनुक्तिः । पृथिव्यादिशब्दस्य 'पृथिवीनामकं रूपं पृथुत्वात् पृथिवीस्थितम्' इत्याद्युक्तार्थं स्मारयति– **पृथिवी-स्थितेति** ।। लोकचतुष्टयाभावादवराभ्यामुत्तराभ्यामिति कथमित्यतस्तद् घटयन् व्याचष्टे– **अवराभ्यामिति** ।। तस्य नास्त्युपवाद इत्यस्य क्रमस्वाध्यायकर्तुर्निन्दक एव नास्तीति प्रतीतेस्तात्पर्यमाह– **क्रमेति** ।। तस्मादनर्थफलत्वेन तन्निन्दनस्याति-दुष्टत्वादित्यर्थः । अतिदुष्टत्वेकनाभावव्यपदेशे उदाहरणमाह– **तं कृष्णमिति** ।। जरासन्धादौ कृष्णेन युद्ध्यति सत्यपि तेन सह युद्धस्यानर्थफलहेतुत्वेना-तिदुष्टत्वेनाभावव्यपदेशो यथा तथेत्यर्थः ।

**उपनिषत्-**

**(विष्णुनाम्नि संहितापदक्रमाः)**

**यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपमथ यच्छुद्धे अक्षरे अभिव्याहरति तत् प्रतृण्णस्याग्र उ एवोभय-मन्तरेणोभयं व्याप्तं भवत्यन्नाद्यकामो निर्भुजं ब्रूयात् स्वर्गकामः प्रतृण्णमुभयकाम उभयमन्तरेण ।**

**अथ यद्येनं निर्भुजं ब्रुवन्तं पर उपवदेत् पृथिवीं देवतामारः पृथिवी त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनं प्रतृण्णं ब्रुवन्तं पर उपवदेद् दिवं देवतामारो द्यौस्त्वा देवता रिष्यतीत्येनं ब्रूयादथ यद्येनमुभयमन्तरेण ब्रुवन्तं पर उपवदेदन्तरिक्षं देवतामारोऽन्तरिक्षं त्वा देवता रिष्यतीत्येनं ब्रूयाद् यथा तुकथाच ब्रुवन् वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत् तथा स्यात् ।**

**भाष्यम्-**

**(मुकुन्दादिनिन्दनशीलाः तामसाः शापादिना शासनीयाः)**

उपवदेदित्युक्तो मनुष्यमात्रः। पर उपवदेदित्यसुरः। सर्वशत्रुत्वात्।

'अमुक्तियोग्यैस्तु नरैर्विदुषां निन्दने कृते।
ब्रूयाल्लोकच्युतोऽसीति निन्दितोऽसुरसर्गगैः।
नाशयिष्यति विष्णुस्त्वामन्धे तमसि पातयेत्।
इति ब्रूयान्नतु ब्रूयाद् देवसर्गात्मकं क्वचित्॥' इति च॥
'षणयोः सन्धिकरणात् संहिताध्ययनं भवेत्।
विषणुस्त्विति यो ब्रूयात् पदाध्यायी भवेत सः।
सन्ध्युक्तिश्च विभागश्च द्वयं व्याप्तं क्रमेण तु।
तस्माद् द्विधाऽपि वचनात् क्रमाध्यायी भवेत सः।
भोगवृद्धिं तु यो मोक्ष इच्छेद् विषणव इत्यसौ।
मोक्षकामो विषणवे द्वयकामो द्वयं वदेत्।
विष्णुनामात्मकत्वाच्चाथ संहितपदक्रमाः।
सर्ववेदस्थिता मोक्षस्तद्भोगद्वयसाधकाः।
तज्ज्ञानमेव नान्येषामिति वेदानुशासनम्।
संहिताद्या ब्रुवन् वाऽपि य एवंविन्नवा ब्रुवन्।
परिवादं ब्रुवन्तं वा न ब्रुवन्तमथापि वा।
यद् वदेत् तत् तथैव स्यात् क्षिप्रमेव न संशयः॥' इति च॥

अग्र एव 'अग्र्यमेव' उभयमन्तरेण।

**टिप्पणी -**

अथ यद्येनं निर्भुजं वदन्तमुपवदेदच्योष्ठा इत्यादिना पर उपवदेदित्यादीनां पौनरुक्त्यं परिहरति– उपवदेदित्युक्त इति॥ कुतस्तस्यासुरत्वमित्यतः परशब्दादि-

त्याह– **सर्वेति** ।। फलभेदश्रवणाच्च नित्यसंसारितमोयोग्यलक्षणाधिकारि-भेदेनापौनरुक्त्यमिति भावेनोभयत्र फलवाक्यं प्रमाणेन व्याचष्टे– **अमुक्तियोग्यै-रिति** ।। रिष्यतीत्यस्यार्थः– **नाशयिष्यतीति** ।। तस्य विवरणम्– **अन्धे तम-सीति** ।। 'अथ च दैत्यहतिस्तमसि स्थिरा नियतसंस्थितिरेव नचान्यथा' इति वचनात् । ननु परोऽन्यो यः कोऽपीत्यर्थः किन्न स्यादित्यतस्तथात्वे नातिद्युम्ने चन ब्राह्मणं ब्रूयादित्युपसंहारविरोध इति भावेन तत्तात्पर्यमाह– **न त्विति** ।। यद्धि सन्धिं विवर्तयति तन्निर्भुजस्य रूपमित्याद्युक्तं संहितादिस्वरूपं लक्ष्य विष्णुनामनिष्ठतया दर्शयति– **षणयोरित्यादिना** ।। णकारं केचिदुत्तरमिति प्रागुक्तेर्विष् इति पूर्वो वर्णः णुरित्युत्तरो वर्ण इति पक्षे षकारणकारयोः सन्धिकरणाद् विष्णुरिति संहिताध्ययनं भवेत् । यथा 'अग्निमीळे' इत्यत्राग्निम् इति मकारस्य ईकारस्य च संश्लिष्टतयोच्चारणे अग्निमीळ इति संहिताध्ययनम्, तथेति भावः । यो विष्णुरिति षकारणकारावसंश्लिष्टतया ब्रूयात् स पदाध्यायी भवेत् । यथाग्निम् ईल इति मकारेकारावसंश्लिष्टतया ब्रुवन् पदाध्यायी तथेति भावः । अत एव यच्छुद्धे अक्षरे अभिव्याहरतीत्युक्तम् । असंहितादशायामिति यावत् । ष्णुरित्य-शुद्धं संश्लिष्टत्वत् । पदकाले मकारेकाराविव षकारणकारौ शुद्धौ भवत इति ज्ञातव्यम् । क्रमेण तु विष्णुरिति षकारणकारयोः सन्ध्युक्तिः णुरिति विभाग इति द्वयं व्याप्तं तस्माद् द्विधावचनात् विष्णुः णुः इति वचनात् सः क्रमाध्यायी भवेत् । अथा अग्निमीळे ईळे पुरोहितमिति मकारेकारयोः सन्धिं ईकारस्य विभागं च वदन् क्रमाध्यायी, तथेति भावः । ननु संश्लिष्टयोरुत्तरमादाय तदुत्तरेण संयोजने हि क्रमः । यथा मकारेकारयोः संश्लिष्टयोर्मध्ये उत्तरईकार उत्तरपदे सम्बद्ध्यते । कथमस्य क्रमलक्षणलक्षितत्वम् । उक्तं च प्रातिशाख्ये– 'क्रमो द्वाभ्यामतिक्रम्य प्रत्यादायोत्तरं तयोः । उत्तरेणोपसन्दध्यादथार्धर्चं समापयेत् ।।' इति चेन्न । सत्यमेतद्, यत्रोत्तरमस्ति । तदभावे तत्रैव पर्यवसानसम्भवात् । यत्र तूत्तरमस्ति चतुर्थीविभक्त्यन्ते विष्णव इत्यादौ तत्रैतेनोपसन्धानमस्त्येवेति

भावेनान्नाद्यकामो निर्भुजं ब्रूयादित्यादिव्याख्यानमिषेण विष्णवे नम इति मन्त्रे संहितादिकं दर्शयति– **भोगवृद्धिरिति** ।। भोगवृद्धिं भोग्यपूर्तिम् । यद्वा, आनन्दनुभव-वृद्धिम् । अन्नाद्यं तद्व्यञ्जकमिति भावः । अलम्बुद्धिगोचरप्रचुरतरानन्दस्य लिङ्गशरीरनिवृत्त्या ब्रह्मप्राप्तिलक्षणमोक्षेण लाभादस्य तत्रत्यकादाचित्कभोग-वृद्ध्यपेक्षयाऽधिकत्वात् पदाध्ययनफलत्वं बोध्यम् ।। **द्वयकाम इति** ।। तदुभयकामः विष्णवे इति द्वयं उभयगर्भं क्रमं वदेदित्यर्थः । एवं विष्णुनामसंहितादिविषयत्वेनेमं प्रकरणं व्याख्याय वेदसंहितादिविषयत्वेनापि व्याख्याति– **विष्ण्विति** ।। विष्णुनामात्मकत्वात् तद्व्याख्यानत्वात् । मोक्षश्च तद्भोगश्च द्वयं चेति विग्रहः। तज्ज्ञानां संहितादिप्रतिपाद्यभगवत्परिज्ञानिनाम् । नन्वपरोक्षज्ञानात् पूर्वभाव्येवं ज्ञानपूर्वं संहितापदक्रमाध्ययनमपरोक्षद्वारा मोक्षकारणम् । उत्तरं त्वानन्दातिशय-साधनम् । तत्कथमयं भेद इति चेन्न । 'प्राणस्य वस्त्रबुद्ध्या तु भोजनोभयतः पिबन् । स्वर्गे मुक्तौ तदा दिव्यवस्त्रभागी भवत्यलम् ।।' इत्यत्र पूर्वोत्तरापोशनयोर्मुख्यप्राणस्य वस्त्रबुद्ध्या करणे मुक्तौ दिव्यवस्त्रलाभोक्तेस्तद्वत् प्रकृतेऽप्युपपत्तेः विस्तृतं चैतदस्माभिरन्यत्रेत्यलम् । ब्रुवन् वा ब्रुवन्तं वा ब्रूयादित्यदिवाशब्दार्थकथनपूर्वं व्याचष्टे– **संहिताद्या इत्यादिना** ।। न ब्रुवन्तं प्रकारान्तरेण कोपविषयम् । अग्र उ एवेत्यत्राग्र इत्यस्य सप्तम्यन्ततया पदविभागमुक्त्वा व्यवहितेनैव कारणेनान्वयं चाऽह– **अग्र एवेति** ।। अग्रे उ इति स्थिते अयादेशे 'लोपः शाकल्यस्य' इति यकारलोपे चाग्र इत्यत्राग्रे इति पदं भवति । उकारस्तूच्चारणार्थः अतिशयेनाग्र्यत्वमाहेति भावेन व्याचष्टे– **अग्र एवेति** ।।

**उपनिषत्-**

**(नमोऽस्तु ब्राह्मणेभ्यः)**

**नत्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽह शूरवीरो माण्डूकेयः ।।**

**भाष्यम्-**

**द्युम्नो द्युतिस्वरूपत्वाद् विष्णुरेव प्रकीर्तितः।**
**योऽतिक्रामति तस्याज्ञामतिद्युम्नः [1]प्रकीर्तितः।**
**[2]मोक्षयोग्योऽपि यस्त्वेवमतिद्युम्नो भवेत् पुमान्।**
**लोकच्युतोऽसीत्येवं तं ब्रूयान्नाज्ञास्थितं क्वचित्।**
**लोकच्युतो भवेत्येनमपि नैव वदेत् क्वचित्।**
**च्युतोऽसीति तु शिक्षार्थं ब्रूयान्नैवान्यथा क्वचित्॥' इति च॥**

**टिप्पणी -**

अतिद्युम्न एव ब्राह्मणं ब्रूयदित्येतद् व्याचष्टे– **द्युम्न इति** ॥ अतिद्युम्न एवेत्येवकारव्यवच्छेद्यमाह– **नाज्ञास्थितमिति** ॥ नातिद्युम्ने चनब्राह्मणं ब्रूयादित्यत्र ब्राह्मणे अतिद्युम्ने चनातिद्युम्नेऽपि ब्राह्मणं ब्रूयादिति व्याहतं अतिद्युम्ने ब्राह्मणं ब्रूयादित्युक्तत्वादित्यतो व्याहतिं परिहरन् व्याचष्टे– **लोकच्युतो भवेति** ॥ एनमतिद्युम्नमपि ब्राह्मणं लोकच्युतो भवेति शापरूपेण न ब्रूयात्तु तत्तर्हि कथं ब्रूयादित्यत उक्तं विशदयति– **च्युत इति** ॥ ननु नित्यसंसारिणं प्रत्यपि 'ब्रूयाल्लोकच्युतोऽसीति' इति शिक्षारूपं वचनमुक्तम्। तमोयोग्यं प्रत्यपि 'नाशयिष्यति विष्णुस्त्वाम्' इति तादृशं वचनमुक्तम्। न तु लोकच्युतो भव तमसि पतेति शापरूपमुक्तम्। कथं ताभ्यां मुक्तियोग्यस्य विशेष इति चेन्न। नित्यसंसारिणं तमोयोग्यं च प्रति लोकच्युतोऽसि विष्णुस्त्वां तमसि पातयिष्यत्येव नात्र सन्देह इति वचनमेव शापरूपम्। शापेऽपि स्वस्य स्वातन्त्र्याभावाद् भवेत्यनुक्त्वा च्युतोऽसि पातयिष्यतीति परोक्षवचनम्। वैष्णवं प्रति तु भगवदाज्ञालङ्घनेन लोकच्युतो भवितुमर्हसि न पुनरेवं त्वया कार्यमिति शिक्षारूपेण वचनमिति महान् भेद इति ॥ ३ ॥

---

१. स कीर्तितः- ह.पा.  २. मोक्षायोग्योऽपि- ह.पा.

**खण्डार्थः -**

एवं विष्णुनाम्नि तद्व्याख्यारूपवेदादिषु च पूर्वोत्तरवर्णसन्धिविषया विद्योक्ता। अधुना संहितापदक्रमविषया विद्योच्यत इत्युच्यते–**अथेति**॥ अथ पूर्वोत्तरवर्णसन्धिविषयविद्योपदेशानन्तरं शिष्याणामधिकारसम्पत्त्यनन्तरं वा। निर्भुजं संहिता। तन्मूलत्वेन पदक्रमावपि निर्भुजम्। तद्विषयाः प्रवादाः प्रकृष्टा विद्या उपदिश्यन्ते। निर्भुजं संहितारव्यम्। पृथिवीस्थितं पृथिवीनामकवराहविषयम्। प्रतृण्णं पदम्। दिवि विद्यमानस्तन्नामको यो वामनस्तद्विषयम्। उभयमन्तरेण क्रमः। अन्तरिक्षगततन्नामकनृसिंहविषयम्। यदि निर्भुजं संहितां ब्रुवन्तं विष्णुभक्तं नित्यसंसार्युपवदेदपवदेन्निन्दयेदथ तर्हि अवराभ्यां भूम्यन्तरिक्षाभ्यां स्थानाभ्यामच्योष्ठाः च्युतोऽसीत्येनं ब्रूयात्। अधीयान इति शेषः। यदि प्रतृण्णं वदन्तमुपवदेत् अथ तर्ह्युत्तराभ्यामन्तरिक्षद्युभ्यां स्थानाभ्यामच्योष्ठा इति ब्रूयात्। यस्तूभयमन्तरेण क्रमम् आह अधीये तस्योपवादो नास्त्येव। क्रमाध्येतृनिन्दनस्य त्रैलोक्यादधो निरये दुःखातिशयलक्षणानर्थफलत्वात् तन्निन्दको नास्तीत्यभिप्रायः। ब्राह्मणस्य हन्ता नास्तीत्यादिवत्। निर्भुजादिस्वरूपमुच्यते– **यद्धीत्यादिना**॥ पूर्वोत्तरवर्णयोः सन्धिं विशेषेण वर्तयत्यभिव्याहरतीति यत् तत्संहिततयोच्चार्यमाणं निर्भुजस्वरूपम्। भुजो भङ्ग इति धातोर्भञ्जनवर्जित-त्वात्। अथ शुद्धे असंश्लिष्टे अक्षरे अभिव्याहरतीति यत् तदुच्चार्यमाणं शब्दतत्त्वं प्रतृण्णस्य रूपम्। तृण च्छेदन इति धातोः। उभयमन्तरेण क्रमस्तु– अग्रे उ अतिशयेनाग्र्च एव। कुतः? उभयं संहितापदं चेत्युभयं अनेन व्याप्तं भवति। उभयमन्तरेण मध्ये निधाय तद्गर्भतया प्राप्तत्वात् क्रम उभयमन्तरेणेत्यर्थः। फलतारतम्येन संहितादीनामध्ययने तारतम्यमुच्यते– **अन्नाद्यकाम इत्यादिना**॥ मुक्तावन्नाद्यं यद्भोग्यं तत्कामो निर्भुजं ब्रूयात्। स्वर्गकामो मोक्षकामः। उभयकामः मुक्तितद्गतभोगकामः। यदि निर्भुजं ब्रुवन्तमधीयानं परः शत्रुः विष्णुवैष्णव-द्वेष्यसुरप्रकृतिस्तमोयोग्यः उपवदेदपवदेन्निन्दयेदथ तर्हि पृथिवीं देवतां संहिता-

प्रतिपाद्यां वराहाख्यां आरः निन्दया प्राप्तोऽसि । तस्मात् पृथिवीदेवता त्वारिष्यति नाशयिष्यति तमसि पातयिष्यतीत्येनं प्रति ब्रूयात् । एवमथ यद्येनं प्रतृण्णमित्यादि व्याख्येयम् । दिवं देवतां वामनम् । अन्तरिक्षं देवतां नृसिंहम् । ननु संहिताध्येत्रा विष्णुभक्तेन तमोयोग्ये निन्दके शप्ते तत् तथा भवति किमित्यतो भवत्येवेत्युच्यते– **यथा तु कथा चेति** ।। य एवंविद् ब्रुवन् संहिताधिकमधीयानः । वाशब्दादब्रुवन् वा । यथा तु कथा च लोके यथा तु कथा वाक्यप्रबन्धः । तथा प्रबन्धरूपेण ब्रुवन्तं निन्दां कुर्वन्तम् । यद्वा यथा तु कथा यथाकथञ्चिद् येन केनापि प्रकारेण । निन्दां कुर्वन्तं प्रकारान्तरेण कोपविषयं वा प्रतिच्छायरूपं वाक्यं ब्रूयात् तदुक्तमस्यभ्याशः शीघ्रमेव तथा स्यात् । शापरूपं तद्वचनं न मोघं स्यादिति भावः । शापविषयत्वं च नित्यसंसारितमोयोग्ययोरेव न मोक्षयोग्यस्येत्युच्यते– **न त्वेवेत्यादिना** ।। ब्राह्मणं ब्रह्मप्राप्तियोग्यं प्रति कुशलादन्यदकुशलं शापरूपं वचनं न ब्रूयात् । तत्रापवाद उच्यते– **अतीति** ।। द्युतिस्वरूपत्वाद् द्युम्नो भगवान् । तदाज्ञामिति वर्तत इत्यतिद्युम्नः । ब्राह्मणे भगवदाज्ञातिवर्तिनि सत्येव तं ब्राह्मणं प्रति लोकच्युतोऽसीत्येवं शिक्षारूपेण ब्रूयात् । न तु भगवदाज्ञानुवर्तिनम् । चनशब्दोऽप्यर्थः । ब्राह्मणे अतिद्युम्ने चन । अतिद्युम्ने भवत्यपि लोकच्युतो भवेति ब्राह्मणं प्रति शापरूपं वचनं न ब्रूयादित्यर्थः । प्रत्युत ब्राह्मणेभ्यो मोक्षयोग्येभ्यो नमोऽस्त्विति शूरवीरो माण्डूकेय आह स्मेत्यर्थः ।। ३ ।।

**।। इति तृतीयः खण्डः ।।**

**उपनिषत्-**

**(उपासकनिन्दनं खण्डनीयमेव)**

**अथातोऽनुव्याहाराः । प्राणो वंश इति विद्यात् स य एनं प्राणं वंशमुपवदेच्छक्नुवन्तं चेन्मन्येत प्राणं वंशं समधा३ँ ।। प्राणं मां वंशं सन्दधतं न शक्नोषीत्याह**

प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयादथ चेदशक्नुवन्तं मन्येत प्राणं वंशं समधित्सिषन्तं नाशकः सन्धातुं प्राणस्त्वा वंशो हास्यतीत्येनं ब्रूयाद् यथातुकथाच ब्रुवन् वा ब्रुवन्तं वा ब्रूयादभ्याशमेव यत् तथा स्यान्नत्वेवान्यत् कुशलाद् ब्राह्मणं ब्रूयादतिद्युम्न एव ब्राह्मणं ब्रूयान्नातिद्युम्ने चन ब्राह्मणं ब्रूयान्नमो अस्तु ब्राह्मणेभ्य इति ह स्माऽह शूरवीरो माण्डूकेयः ॥

॥ इति चतुर्थः खण्डः ॥

**भाष्यम्-**

**(पूर्वोत्तरखण्डयोः पुनरुक्तिपरिहारः)**

भगवदुपासकस्य यस्मिन् कस्मिंश्चिद् दोष उक्ते तं प्रत्युक्तिप्रकारः पूर्वं दर्शितः। अनुव्याहारशब्देन भगवदुपासनाविषय एवास्याशक्त्यादिदोषं वदतः प्रत्युक्तिरुच्यते। निर्भुजं वदन्तमित्यादि त्ववस्थामात्रदर्शनम्। आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्यत्वादनुव्याहारः।

**(निन्दकः न सुगतिभाक्)**

'सर्वाधारत्वतो वंश इत्युपासीत यो हरिम्।
वायुं च मुक्तिमाप्नोति य एवं तदुपासकम्।
निन्देत विष्णुविज्ञानविषये तं वदेत सः।
विष्णुना वंशभूतेन सहितं वायुना तथा।
न शक्नोषीति मामात्थ हास्यतस्त्वामतो हि तौ।
ज्ञानसामर्थ्यवानित्थं ब्रूयाद् देवादिरुत्तमः।
अन्यो गन्धर्वपित्रादिरल्पज्ञानबलो हि यः।

स ब्रूयाद् विष्णुवायुभ्यां सन्धिमिच्छन्तमेव [1]माम् ।
सन्धातुं नाशको यस्माद् हास्यतस्त्वामतो हि तौ ॥' इति च ॥

'स य एनं प्राणं वंशमुपवदेत्', प्राणं प्रत्येनमुपासकमुपवदेत् । प्राणस्य विष्णोः प्रियत्वं तव न प्राप्स्यतीति । 'नाशकः सन्धातुम्', मया सह सन्धानं कर्तुं नाशकः । मम प्रीतिं कर्तुं नाशकः ।

'तद्भक्तभक्तेष्वपि यो न कुर्यात् प्रीतिमञ्जसा ।
विष्णुर्जहाति तं पापमिह चामुत्र च प्रभुः ॥' इति च भारते ॥

**टिप्पणी -**

अथात इत्यत्र पूर्वखण्डादस्य खण्डस्य विषयविभेदसूचकस्याथशब्दस्य तात्पर्यमाह– **भगवदुपासकस्येति** ॥ यस्मिन् कस्मिंश्चिद्विषये उपासनातिरिक्तविषय इत्यर्थः । पृथिवीं देवतामार इत्यादिना संहितादिप्रतिपाद्यभगवन्निन्दनोक्तिस्तु विषयान्तरेऽपि स्वनिन्दनस्य तदप्रियत्वात् तन्निन्दनमेवेति वा निर्भुजादिप्रवचनकाले यत्र कुत्रचिद् विषये चेन्निन्दा प्रागुक्ता कथं तर्हि निर्भुजं वदन्तमुपवदेदित्याद्युक्तिरित्यत आह– **निर्भुजमितीति** ॥ वा प्रवृत्तेत्यविरोधः । अशक्त्यादीत्यादिपदेनोपासनं तत्प्रीतिकरं न भवतीत्यस्य ग्रहणम् । ननु यस्मिन् कस्मिंश्चिद् विषये चेन्निन्दा प्रागुक्ता कथं तर्हि निर्भुजं वदन्तमुपवदेदित्याद्युक्तिरित्यत आह– **निर्भुजमिति** ॥ अवस्थामात्रप्रदर्शनं न तु निन्दाया निर्भुजादिविषयत्वप्रदर्शनमित्यर्थः । अवस्थाया अप्रदर्शने भगवन्निन्दनापर्यवसानादिति भावः । अनुव्याहारशब्दार्थमाह– **आत्मन इति** ॥ प्राणवंशशब्दयोरन्यथार्थं वारयन् अतःशब्दसूचितमुपासकस्य फलं प्रमाणेन दर्शयन् व्याख्याति– **सर्वेत्यादिना** ॥ विष्णुना वायुना च सहितं विष्णुं वायुं चोपासीनमपि मामिति यावत् । न शक्नोषि तत्प्रीतिसम्पादनेन शक्नोषीत्यात्थेत्यर्थः । शक्नुवंश्चेन्मन्येतेत्यस्यार्थः– **ज्ञानसामर्थ्येति** ॥ देवादि-

---

१. मा- ह.पा.

रित्यादिपदेनाजानजान्तानामंशविभागयोग्यानां ग्रहणम्। अथ चेदशक्नुवन्नित्यादेरर्थः– **अन्य इति** ।। तदवरदेवगन्धर्वपित्रादि-रल्पज्ञानसामर्थ्योपेतः सोऽपि ब्रूयात् किमिति? विष्णुवायुभ्यां सन्धिमिच्छन्तं मामुपासनायां तत्प्रीतिसम्पादनेऽपि न शक्नोषीत्यात्थ । अतो मां सन्धातुं नाशको यतोऽतस्तौ त्वां हास्यत इति योज्यम् । ननु प्राणवंशमुपवदेदित्युपनिषदः 'उपासकम् । निन्देत' इति कथं प्रमाणेन व्याख्यानमित्यतस्तद् घटयति– **य एनमिति** ।। प्राणमित्युद्देश्यद्वितीया । प्राणं प्रति विद्यमानमेनमित्यस्य तात्पर्यम्– **उपासकमिति** ।। प्राणं प्रत्युपासकस्य परकृत उपवादः किंरूप इत्यत आह– **प्राणस्येति** ।। अनयोपासनया तव विष्णुप्रियत्वं न लभ्यते त्वदुपासनं तत्प्रीतिजनकं न भविष्यतीत्युपवदेदित्यन्वयः । नाशकः सन्धातुमित्यस्य त्वया सन्धिमिच्छन्तं प्राणं तं सन्धातुं नाशक इत्यन्यथाप्रतीतेर्व्याचष्टे– **नाशक इति** ।। तस्यैव विवरणम्– **ममेति** ।। उपासकस्य प्रीत्यकरणमात्रेण कथं प्राणप्रहापणमित्यतस्तत्र प्रमाणमाह– **तद्भक्तेति** ।। तद्भक्तो देवादिस्तद्भक्तो गन्धर्वादिः ।। ४ ।।

**खण्डार्थः -**

अस्य खण्डस्य पूर्वखण्डादपौनरुक्त्यं सङ्गतिश्च भाष्ये स्पष्टीभविष्यति । अथ निर्भुजाद्युपासकस्य यस्मिन् कस्मिंश्चिद्विषये निन्दायां प्राप्तायां प्रत्युत्तरप्रकारनिरूपणानन्तरं अतः प्रयोजनसद्भावाद् अनुव्याहाराः आत्मनो ज्ञानसामर्थ्यानुसारेण वक्तव्याः भगवदुपासनाविषय एव प्राणनिन्दाप्रत्युत्तररूप-वाग्व्यवहारविशेषा उच्यन्ते । प्राणो विष्णुर्मुख्यश्च । वंशः उत्तराध्याये प्राणो वंश इति । स्थविरः शाकल्य इति वक्ष्यमाणप्रकारेण सर्वेषामिन्द्रियदेवानामाधारस्तथा विष्णुनामादिसर्वविद्यास्थानामूष्माद्यक्षराणामाधारभूतप्राणास्थिमज्जादिमानिति च विद्याद् उपासीत स यो यः कश्चित् प्राणं वंशं प्रति तदुपासकमेनं त्वदुपासनं तत्प्रीतिजननाय नालमित्युपवदेन्निन्देत । स उपासकः शक्नुवन् समर्थोऽहमित्यात्मानं चेन्मन्येत ज्ञानसामर्थ्ययुक्तमात्मानं यदि मन्येत । देवादिश्चेदिति यावत् तर्ह्येवं ब्रूयादहं

प्राणं वंशं समधां सन्धितवानुपासितवानस्मि । प्राणं वंशं सन्दधतं मां न शक्नोषीत्याह आत्थ त्वं तस्माद् वंशः प्राणस्त्वाहास्यतीत्येनं ब्रूयात् । चेद् यदि । आत्मानमशक्नुवन्तमल्पज्ञानसामर्थ्ययुक्तं मन्येत गन्धर्वपित्रादिश्चेदिति यावत् । अथ तर्ह्यात्मानमुपवदन्तं त्वमुपासनायां न समर्थः तया भगवत्प्रीतिश्च न भवतीत्यत उपासनोद्योगो व्यर्थ इति निन्दन्तं एवं ब्रूयात् प्राणं वंशं समधित्सिषन्तं सर्वाधारं प्राणमुपासितुमिच्छन्तं तत्प्रीत्या च सन्धितुमिच्छन्तं मां सन्धातुं त्वं नाशकः उपासनादौ न शक्नोषीति वचनेन मदुपासनाविघटनोद्योगान्मम प्रीतिं कर्तुं नाशकः । अतो भक्तप्रियो वंशः प्राणस्त्वा हास्यतीत्येनं ब्रूयादित्यर्थः । यथा तु कथा चेत्यादि पूर्ववद् व्याख्येयम् ॥

**॥ इति चतुर्थः खण्डः ॥**

**उपनिषत्-**

**(संहिताविद्या - निर्भुजवक्त्राणामुपासना)**

**अथ खल्वाहुर्निर्भुजवक्त्राः पूर्वमक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण सा संहितेति ॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथ वयं ब्रूमो निर्भुजवक्त्रा इति ह स्माऽह ह्रस्वो माण्डूकेयः ॥ पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं योऽवकाशः पूर्वरूपोत्तररूपे अन्तरेण येन सन्धिं विवर्तयति येन स्वरास्वरं विजानाति येन मात्रामात्रं विभजते सा संहितेति ॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेत्यथ हास्य पुत्र आह मध्यमः प्रातीबोधीपुत्रोऽक्षरे खल्विमे अविकर्षन्ननेकी-**

कुर्वन् यथावर्णमाह ॥ तद् याऽसौ मात्रा पूर्वरूपोत्तररूपे अन्तरेण सन्धिविज्ञापनी साम तद् भवति सामैवाहं संहितां मन्य इति ॥

**भाष्यम्-**

'पूर्ववर्णस्थितं यत्तद् रूपं पूर्वाक्षराभिधम् ।
वराहाख्यं हरेरन्यवर्णगं वामनाभिधम् ।
उत्तराक्षरसञ्ज्ञं च वर्णयोरन्तरस्थितम् ।
अवनात् काशनाच्चैतदवकाशाभिधं हरेः ।
नृसिंहरूपमित्याहुर्निर्भुजास्यास्तथाऽवदत् ।
ह्रस्वो येनाक्षरोच्चारो मात्रासन्धिस्वरात्मकः ।
व्यासरूपो हरिः साक्षात् संहितानामकस्त्विति ।
तत्पुत्रो मध्यमः प्राह समोच्चारणकारणः ।
सामनामा वासुदेवः संहितानामवानिति ॥' इति च ॥

मापयति त्रायति चेति मात्रा भगवान् । यथोच्चारितवर्णयोर्मध्यस्थितश्च ।

**टिप्पणी -**

पूर्ववर्णप्रतिपाद्यस्य पूर्ववर्णप्रतिपाद्यत्वं सिद्धमेव किमनूद्य विधीयत इत्यतः पूर्वमक्षरमित्यादेस्तत्प्रतिपाद्यमिति नार्थः, किन्तु तदधिष्ठानकमेव तत्प्रतिपाद्यं नत्वधिष्ठानान्तरं मृग्यमिति तदर्थ इति भावेनाऽह– **पूर्ववर्णेत्यादिना** ॥ पूर्वोत्तररूपे अन्तरेणेत्यस्यार्थः– **वर्णयोरन्तरस्थितमिति** ॥ योऽवकाश इत्यस्य– **अवनादिति** ॥ निर्भुजास्याः निर्भुजवक्त्राः । अथ वयमित्यादेरर्थः– **तथाऽवददित्यादि** ॥ मात्रासन्धिस्वरात्मकः मात्रासन्धिस्वरविषयः । व्यासान्तरव्यावृत्त्यर्थं साक्षाद् व्यासरूपी हरिरित्युक्तम् । सामशब्दं व्याचष्टे– **सामोच्चारणकारणः सामनामेति** ॥ मात्राशब्दं निर्वक्ति– **मापयतीति** ॥ यथावर्णमाहेत्येतद् व्याचष्टे–

यथोच्चारितेति ।। भगवानित्यनुवर्तते। एतेन यथोच्चारितवर्णयोर्मध्यस्थितं सन्धिप्रतिपाद्यं भगवद्रूपमन्यदाहेत्यर्थ उक्तो भवति ।

**उपनिषत्-**

**तदप्येतदृषिणोक्तं बृहस्पते न परः साम्नो विदुरिति ॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥**

**॥ इति पञ्चमः खण्डः ॥**

**भाष्यम्-**

**(परमात्मविद्यायाः अपात्राः पात्राश्च)**

**'मा नः स्तेनेभ्यो अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषउ जागृधुः।**
**येषां नैतन्नापरं किञ्चनैकं ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ॥**
**अथो शमेनोपरता मनुष्या ये धर्मिणो ब्रूहि तेभ्यः सदा नः।**
**आ देवानामोहते [1]वि व्रयो हृदि बृहस्पते न परः साम्नो विदुः ॥'**

**अभिद्रुहस्पदे अभितो द्रोहस्य नित्यनिरतिशयदुःखस्यान्धतमसो योग्याः।**

**टिप्पणी -**

बृहस्पते नः परः साम्न इत्येतद् व्याख्यातुमादितः पठति– **मान इत्यादिना** ।। यद्यपि द्वितीयाष्टके षष्ठेऽध्याये 'मानस्तेनेभ्यो ये अभिद्रुहस्पदे निरामिणो रिपवोऽन्नेषु जागृधुः । आ देवानामोहते विव्रयो हृदि बृहस्पते न परः साम्नो विदुः' इत्येव पठ्यते । न तु येषां नैतदित्यादि । तथाप्युपवेदगतसूक्ते येषां नैतदित्यादेः पठितत्वादर्थानुगुण्याय तस्यात्रोदाहरणं बोध्यम्। तदुक्तमृग्भाष्ये– 'मानस्तेनेति पूर्वासु ह्यूनता दृश्यतेऽर्थतः' इति । ब्रह्मणो वेदस्य पते वायो येऽभिद्रुहस्पदे अभितो द्रोहस्य नित्यदुःखस्याऽस्पदेऽन्धे तमसि स्थातुं योग्याः

१. वि व्रयो- ह.पा.

निरामिणः पूर्णानन्दस्वरूपो भगवान् स्वामीति ज्ञानं येषामस्ति ते निरामिणः तेभ्यो निर्गता बहिर्भूता निरामिणः। ऐक्यज्ञानेन तन्नीचताविद इति यावत्। तत एव तस्य रिपवः। अन्नेषु भोग्येषु जागृधुः। गृधु आकाङ्क्षायाम्। भोगेष्वाकाङ्क्षावन्तः। येषामेतत्सर्वोत्तमं ब्रह्म नास्तीति पक्षः, कुतः ? तदीशितव्यं किञ्चन किमपि जगन्नास्ति। किं तर्हि किञ्चनैकं निर्गुणमेव वस्त्वस्ति। भासमानं चापरं जगत् किञ्चन अनिर्वाच्यं तेभ्यः स्तेनेभ्योऽस्मान् मा ब्रूहि। अथो किन्नाम ? बृहस्पते बृहतो वेदस्य पते वायो धर्मिणो निवृत्तधर्मवन्तो ये मनुष्याः शमेन विष्णुनिष्ठयोपरतास्तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः। किन्त्वेतदेव देवानां व्रयः वरत्वे सति नियामकं ब्रह्म हृद्याव्योहते सम्यग् वहन्ति ध्यायन्तीति यावत्। तेभ्यो नः सदा ब्रूहीति श्रुत्यर्थं सप्रमाणमाह– **अभिद्रुह इत्यादिना** ॥ अभिद्रुह इत्यस्यार्थः– **अभितो द्रोहस्येति** ॥ तस्य विवरणम्– **नित्येति** ॥ विष्णुवैष्णवद्रोहसाध्यत्वात् द्रोहपदेन दुःखमुच्यते। यद्वा 'पञ्चकष्टेऽतिकष्टे' इत्युक्तरीत्या पञ्चेन्द्रियपीडासाध्यत्वाद् दुःखमुच्यत इति भावः। अभितो द्रोहस्य पदे आश्रये तमसि स्थातुं योग्या इत्यस्य तात्पर्यम्– **अन्धतमसस्य योग्या इति** ॥

**भाष्यम्-**

'ऐकात्म्यं नाम यदिदं केचिद् ब्रूयुरनैपुणाः।
शास्त्रतत्त्वमविज्ञाय तथावादबला जनाः।
कामक्रोधाभिभूतत्वादहङ्कारवशं गताः।
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः।
ब्रह्मस्तेना निरानन्दा अपक्वमनसोऽशिवाः।
वैगुण्यमेव पश्यन्ति न गुणानि नियुञ्जते।
तेषां तमःशरीराणां तम एव परायणम् ॥'

इति मोक्षधर्मे भगवद्वचनादेवंविधा एव स्तेना अभिद्रुहस्पदस्थाश्च।

**टिप्पणी -**

अत्र पूर्वस्यामृच्यैकात्म्यज्ञानिनां कामोपहतचेतसां ब्रह्मणो निर्गुणत्वज्ञानिनां स्तेनत्वं तमश्च फलमुक्तं कस्य स्तेनास्त इत्यतः शास्त्रस्य ब्रह्मणश्चेति भावेन प्रमाणमाह– **ऐकात्म्यमिति** ॥ एकश्चासावात्मा चैकात्मा तस्य भाव ऐकात्म्यम् । सर्वात्मनां ब्रह्मैक्यमिति यावत् । यदैकात्म्यं नामेदमनैपुणा अविद्यमाननैपुणाः केचिद् ब्रूयुस्तेषां तथा वचने किं मूलमित्यत उक्तम्– **शास्त्रेति** ॥ केवलमहं ब्रह्मास्मीत्यादिशास्त्राणां तत्त्वमभिप्रेतमर्थमविज्ञाय ब्रूयुः । कथमविज्ञानमात्रेण तदुक्तिरित्यत उक्तम्– **तथेति** ॥ ऐक्यप्रतिपादकसदृशो न यो वाद एकविभक्तित्वादिरूपः सबलं येषां ते तथोक्ताः । अहं ब्रह्मास्मीत्यादिवाक्यानां तात्पर्यमविज्ञायापातप्रतीत एवार्थे भ्रान्ता इत्यर्थः । सर्वेषामविद्यमानं शास्त्र-तत्त्वापरिज्ञानादि तेषामेव किन्निमित्तमित्येतदुक्तम्– **कामेति** ॥ यथोक्तम्– 'इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन' (भ.गी. ७.२८) इति । ननु 'द्वा सुपर्णा सयुजा' (आथ.उ. ३.१) इत्यादिशास्त्रेषु विरोधिषु सत्सु कथमैक्यं ब्रूयुरित्यत आह– **याथातथ्यमिति** ॥ भेदपराणां याथार्थ्यमविज्ञाय शास्त्रदस्यवस्तानि शास्त्राण्यतत्त्वावेदकानीति मन्यमाना इत्यर्थः । एवमैक्यं मन्यमानानां ब्रह्मस्तेनानां कामादीनामागन्तुकत्वान्मूलकारणमाह– **निरानन्दा इत्यादि** ॥ एतेनाधमानां स्वरूप-योग्यतां लक्षयति । तथापि सर्वज्ञत्वादिविरुद्धधर्माधिकरणत्वानुमानविरुद्धमैक्यं कथं ब्रूयुरित्यत आह– **वैगुण्यमेवेति** ॥ जीवब्रह्मणोस्तत्त्वतो निर्गुणत्वमेव पश्यन्तो गुणानि गुणान् । सार्वज्ञादीन्न नियुञ्जते तत्स्वरूपेण न योजयन्ति । एवंभूतानां फलमाह– **तेषामिति** ॥ तमोगुणप्रचुरशरीराणाम् । तमो नरकविशेषः । परायणं प्राप्यमिति मोक्षधर्मे समाख्यारूपभगवद्वचनाद् एवंविधा एव शास्त्रप्रामाण्य-ब्रह्मगुणापलापका एवात्र विवक्षिताः स्तेनाः । 'तम एव परायणम्' इत्युक्ता एवाभिद्रुहस्पत्स्थाः । ऐकात्म्यं ब्रूयुरित्युक्तविधा एव निरामिणश्च ।

**भाष्यम्-**

'निरामिणः' रामस्य रमणरूपस्य पूर्णानन्दस्वरूपस्य विष्णोर्जीवस्वरूपताज्ञानेन[1] नीचताविदः। [2]त एव रिपवश्च तस्य।

'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्॥
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥' इत्यादिवचनादसुरादयः।

अन्नेषु जागृधुः भोगमात्रगृध्नवः। येषामेतत् सर्वोत्तमं वासुदेवाख्यं परं ब्रह्म नास्तीति पक्षः। ईशितव्ये विद्यमाने हीश्वरो भवतीति। नचापरं किञ्चित्। परमापेक्षया ह्यपरमिति। किं तर्हि ? किञ्चनैकम्। किमप्येकमेव वस्त्वस्ति न परमपरं वेति तेषां पक्षः।

**टिप्पणी-**

तत्कथमित्यतो व्याचष्टे– **निरामिण इति**॥ एतेन राम एषामस्तीति रामिणो मोक्षयोग्या भगवत्सर्वोत्तमत्वविदस्तेभ्यो निर्गता बहिर्भूता भगवतो जीवैक्यज्ञानेन नीचताविदो निरामिण इत्यर्थ उक्तो भवति। रामविरुद्धा निरामिण इति तत्त्वप्रकाशिकावाक्यमपि तात्पर्यकथनपरमित्यविरोधः। निरानन्दा अपक्वमनसोऽशिवा इत्युक्तास्तेऽसुरप्रकृतय एवात्र विवक्षिता रिपवः। ननु विरोधिनो हि रिपवः। कथमेते रिपव इत्यतश्चोक्तम्– **त एवेति**॥ नीचताविद एवेत्यर्थः। 'द्वेषोऽवमताबुद्धिः' इत्यन्यत्रोक्तत्वादिति ज्ञेयम्। अवमन्तॄणामसुरप्रकृतित्वे प्रमाणमाह– **अवजानन्तीति**॥ इत्यादिवचनादवज्ञानादिविशिष्टा असुरादय एव रिपव इत्यर्थः। कामक्रोधाभिभूतत्वादित्युक्ताः कामग्रस्ता एवान्नेषु जागृधुरित्युक्ता इति भावेनानूद्य व्याचष्टे– **अन्नेष्विति**॥ अन्नशब्देन भोग्यमात्रमुच्यत इति भावेनोक्तम्– **भोगमात्रेति**॥ मात्रशब्दः साकल्यार्थः। यद्वा न तु ज्ञानभक्त्यादिकमित्यवधारणार्थं

1. ...स्वरूपतादिज्ञानेन- ह.पा. 2. तत एव- ह.पा.

मात्रपदम् । 'न गुणानि नियुञ्जते' इत्युक्ता एव येषां नैतदित्यादावुक्ता इति भावेन व्याचष्टे–**येषामिति** ।। निर्गुणव्यवृत्त्यर्थं सर्वेभ्यः सर्वैर्गुणैरुत्तमं वासुदेवाख्य-मित्युक्तम् । कुतो नास्तीत्यतस्तद्धेतुतया नापरमित्येतद् व्याचष्टे– **ईशितव्य इति** ।। ईशितव्ये विद्यमाने ह्रीश्वरो भवति । नचापरमीशितव्यं किञ्चिदिति हेतोः सर्वोत्तमं नास्तीति योजना । ईशितव्यस्वरूपस्यैव मिथ्यात्वादिति भावः। उत्तमाभावं हेतुत्वेनोपादायाधमाभावं प्राहुरित्याह– **नचापरं किञ्चित् परमापेक्षया ह्यपरमितीति** ।। वैगुण्यमेव पश्यन्तीत्युक्तमेव किञ्चनैकमित्यनेनोच्यत इति भावेनावतार्य व्याचष्टे– **किं तर्हीति** ।। किमपि निर्गुणमित्यर्थः । एवकारव्यावर्त्यमाह– **न परमिति** ।। परं सर्वोत्तमं सगुणं वासुदेवाख्यं अपरमीशितव्यं च नास्ति । ईशे इशितव्यरूपप्रपञ्चस्य मिथ्यात्वादिति भावः ।

**भाष्यम्-**

**'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ।।**
**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ।**
**ईश्वरोऽहमहं भोगी.............. ।।' इत्यादिवचनात् ।।**

ब्रह्मणस्पते ब्रह्मणो वेदस्य पते वायो । 'अथ हेममासन्यं प्राणमूचुः । एष उ एव ब्रह्मणस्पतिः । वाग्वै ब्रह्म । तस्या एष पतिस्तस्मादु बृहस्पतिः । वाग्घि बृहती' इत्यादिश्रुतेः । एतादृशेभ्यो मा ब्रूहि । शमेन विष्णुनिष्ठया उप समीपे तस्मिन्नेव रताः साम्नो विष्णोः परं किमपि न विदुः । तदेव देवानां व्रयः । सर्वदेवानां परतमं विष्णवाख्यं ब्रह्म हृदा व्योहते । वासुदेवादिरूपेण वरं नियामकं चेति व्रयः । तेभ्यो ब्रूहि ।

'वायुं विद्याः समासाद्य सर्वासां पतिमूचिरे ।
स्तेनेभ्यो मैव नो ब्रूहि ब्रूह्यथो वैष्णवेषु च ।।' इति च ।।

**'सामनाम्ना श्रुतिर्यस्माद् विष्णुमाह ततः प्रियम्।**
**तन्नाम विष्णोरिह तु संहितार्थं वदेद् यतः ॥' इति च ॥**

**सामनाम्नः संहिताशब्दार्थत्वात् विष्णोः, तस्य नाम्नः श्रुतिसिद्धत्वाच्च सामनाम्नोः वासुदेवरूपसमाख्यासु पञ्चरात्रे पठितत्वाच्च तद् रूपं संहितानामकमिति युक्तमित्यभिप्रायः॥**

**टिप्पणी -**

तेषामयं पक्ष इत्यत्र प्रमाणमाह– **असत्यमिति** ॥ अप्रतिष्ठं प्रतिष्ठापकप्रमाण-रहितम्। प्रत्युत ज्ञानबाध्यम्। ईश्वराधिष्ठितायाः प्रकृतेर्महान् महतोऽहङ्कार इति परस्परसम्भवरहितम्। सत्यं न चेत् किमन्यत्? सदसद्भ्यामिति शेषः। परस्परसम्भूतं न चेत्, किम्? कामहैतुकम्। काम इति कार्येण कारणमविद्योप-लक्ष्यते। तद्धेतुकम्। नष्टात्मानो दुष्टचिताः। अल्पबुद्धयः अधिष्ठानमात्रे यथार्थबुद्धयः। येषां पक्षे एकमेव वस्त्वित्येतत् प्रमापणायेश्वरोऽहमित्येतदुदा-हरणम्। वायुर्ब्रह्मणस्पतिरित्यत्र प्रमाणमाह– **अथ हेममिति** ॥ आसन्यं आस्ये भवम्। तेभ्यो ब्रूहीत्यस्य तेभ्यः स्तेनेभ्यो मा ब्रूहीति पूर्वार्धेनान्वय इत्याह– **एतादृशेभ्य इति** ॥ रिपवो द्वेषिण इत्यस्य विरोधिभूतं शमेनोपरता इत्येतद् व्याचष्टे– **शमेनेति** ॥ येषामेतत् सर्वोत्तमं वासुदेवाख्यं ब्रह्म नास्तीत्यस्य विरोधितया साम्नो न परः। देवानां व्रय इत्येतद् व्याचष्टे–**साम्न इत्यादिना** ॥ अधिकरणस्यापि कारणत्वेन हृदीत्यस्य हृदेत्यर्थकथनम्। अत एव तत्त्वप्रकाशिकायाम्– 'हृदि वहन्ति' इति व्याख्यातम्। व्रय इत्यस्य परतममिति तात्पर्यमुक्तं अक्षरार्थमाह– **वासुदेवादिरूपेणेति** ॥ ये शमादियुतास्तेभ्यो न ब्रूहीत्यन्वयभ्रमं वारयितुमन्वयमाह– **तेभ्यो ब्रूहीति** ॥ साम्नः परं न विदुरिति नञोऽन्वयस्योक्तत्वादिति भावः। स्तेनेभ्यो मा ब्रूहि वैष्णवेभ्यो ब्रूहीत्यन्वयद्वये प्रमाणमाह– **वायु-मिति** ॥ सर्वासां विद्यानां प्रसिद्धं वासुदेवादिपदमपहाय सामैवाहं संहितां मन्य इत्युक्तेरभिप्रायं प्रमाणेनाऽह– **सामनाम्नेति** ॥ यतस्तन्नाम सामनाम। संहितार्थं

संहिताशब्दार्थं वदेत् । अत इह भगवन्नाममध्ये तन्नाम विष्णोः प्रियम् । यस्मात् प्रियं ततः सामनाम्ना श्रुतिर्विष्णुमाहेति योजना ।। **इति वचनादिति** ।। इति वचनात् सामनाम्नः संहिताशब्दार्थत्वात् संहिताशब्दार्थत्वावगमाद् विष्णोस्तस्य नाम्नः श्रुतिसिद्धत्वाच्छ्रुतिसिद्धत्वावगमाच्च । तद्रूपं संहितानामकमित्यन्वयः । तथाऽपि रूपान्तरपरित्यागेन वासुदेवरूपं सामनामकमिति निर्बन्धे को विशेषहेतुरित्यतस्तत्राभिप्रेतां युक्तिमाह– **सामनाम्न इति** ।। ५ ।।

**खण्डार्थः -**

पूर्वं वराहादीनां पृथिव्यादिपरिच्छिन्नाधिकरणवर्तित्वमुक्तम् । अधुना पूर्वोत्तरवर्णलक्षणव्याप्ताधिष्ठानत्वमुच्यते– **अथेति** ।। परिच्छिन्नाधिष्ठानकभगवद्विद्योतो वैलक्षण्यमस्या विद्यायाः सूचयति– **निर्भुजवक्त्रा इति** ।। बहुवचनमाद्यर्थे । निर्भुजवक्त्राः केचिदृषयः पक्षान्तरमाहुः खलु । पूर्वमक्षरं पूर्वाक्षरस्थितं पूर्वाक्षरनामकं वराहाख्यं रूपम् । पूर्वरूपं पूर्ववर्णप्रतिपाद्यम् । उत्तरं उत्तराक्षरस्थितं तन्नामकवामनरूपं उत्तररूपं उत्तरवर्णप्रतिपाद्यम् । पूर्वोत्तररूपे पूर्वोत्तराक्षरयोरन्तरेण मध्ये योऽवकाशः अवनात् काशनादवकाशनामा नृसिंहोऽस्ति सा संहिता संहिताप्रतिपाद्येत्याहुरिति पूर्वेणान्वयः । स य एवमेतामिति फलवाक्यमुक्तार्थम् । अथ ह्रस्वो माण्डूकेयः निर्भुजवक्त्रा इति सम्बोद्ध्य इति वयं ब्रूम इति ह स्माऽह । किं ब्रवीषीत्येतदुच्यते– **पूर्वमिति** ।। पूर्वमेवाक्षरं पूर्वरूपमुत्तरमुत्तररूपं नात्र विवादः । पूर्वोत्तररूपे अन्तरेण मध्ये योऽवकाशो नृसिंह उक्तः तत्स्थाने सा देवता संहिताप्रतिपाद्या तिष्ठति । का सा देवतेत्यतो व्यास इति लक्षणमुखेनोच्यते– **येनेति** ।। येन व्यासेन तदनुग्रहेण पूर्वोत्तरवर्णयोः सन्धिं विशेषेण वर्तयति उच्चरति, येन चात्रायमुदात्त एव स्वरोऽन्यो विस्वर इति विजानाति, येन चात्र दीर्घो मात्रा न ह्रस्व इति मात्राऽमात्रां विभजते, सा संहितेति ब्रूम इत्यन्वयः। अथ ह्रस्वमाण्डूकेयस्य प्रातिबोध्यां जातो मध्यमः पुत्र आह । किमिति? इमे पूर्वोत्तरे अक्षरे वराहवामनयोरधिष्ठानभूते वाक् पूर्वरूपम्, मन उत्तररूपम्,

मनः पूर्वरूपम्, वागुत्तररूपम् इति मतयोरिवाविकर्षन् । पूर्वोत्तरवर्णदेवतयोरेकत्वमप्यचिन्तयन् यथावर्णं यथोच्चरितयोर्वर्णयोर्मध्ये स्थितं सन्धिप्रतिपाद्यमन्यमाह । किमिति? तद् याऽसौ मात्रा यासामापयति त्रायति चेति मात्रानाम्नी पूर्वोत्तररूपे पूर्वोत्तराक्षररूपे पूर्वोत्तराक्षरयोरन्तरेण मध्ये सन्धिर्विज्ञापिनी ज्ञापयित्री यस्याः सा सन्धिविज्ञापिनी तत्साम । समत्वात् श्वेतद्वीपे सर्वैर्मुक्तैः प्राप्यत्वेन वा समत्वात् सामनामकं वासुदेवाख्यं भवति प्रमाणप्रमितं भवति । अतोऽहं सामैव सामनामकं वासुदेवमेव संहितां संहिताप्रतिपाद्यां देवतां मन्य इत्यर्थः । तदप्येतदृषिणोक्तं वासुदेवस्य सामनामकत्वं तस्य संहिताप्रतिपाद्यत्वं च ऋषिणोक्तम् । बृहस्पते बृहतो वेदस्य पते वायो साम्नो वासुदेवात् परः परं येन विदुः तेभ्यो ब्रूहीति विद्यादेवताप्रार्थनम् । स य एवमेतां संहितां वेदेत्यादि पूर्ववत् ॥ ५ ॥

**॥ इति पञ्चमः खण्डः ॥**

**उपनिषत्-**

## (तार्क्ष्यमुनेरुपासना)

**बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति तार्क्ष्यो वाग्वै रथन्तरस्य रूपं प्राणो बृहत उभाभ्यामु खलु संहिता सन्धीयते वाचा च प्राणेन चैतस्यां ह स्मोपनिषदि संवत्सरं गा रक्षयते तार्क्ष्यं एतस्यां ह स्म मात्रायां संवत्सरं गा रक्षयते तार्क्ष्यस्तदप्येतदृषिणोक्तं रथन्तरमाजभारा वसिष्ठः ॥ भरद्वाजो बृहदा चक्रे अग्नेरिति स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।**

**भाष्यम्-**

[1]देवता पूर्ववर्णस्य लक्ष्मीरेव प्रकीर्तिता ।
नारायणस्तूत्तरस्य तौ वाक्प्राणाभिधौ मतौ ।
मध्यस्थः संहितानामा सोऽर्धनारीपुमात्मकः ।
वेदात्मकत्वाद् वाङ्नाम्नी लक्ष्मीरेव प्रकीर्तिता ।
प्राणनामा प्रणेतृत्वात् साक्षान्नारायणः स्वयम् ।
रमित्यानन्द उद्दिष्टः सम्भोग्यं थमुदाहृतम् ।
विष्णुभोग्या रतितरा लक्ष्मीरेव रथन्तरम् ।
नारायणो बृहत्त्वात्तु बृहन्नामा प्रकीर्तितः ।
रथन्तरस्य बृहतो देवते चैव तावुभौ ।
वाक्प्राणसंस्थितौ चैव ताभ्यामेव हि [1]संहितम् ।
लक्ष्मीनारायणं रूपं संहितानामकं शुभम् ।
एतां विद्यामवाप्तुं हि वत्सरं गा अरक्षत ।
[2]तार्क्ष्य एतावन्मात्रं च समुद्दिश्य नचापरम् ।

**टिप्पणी -**

बृहद्रथन्तरयोरित्यस्य सामविशेषपरत्वप्रतीतिं वारयन् व्याचष्टे– **देवतेति** ।। उपनिषदि 'अल्पाच्तरं पूर्वम्' इति न्यायमनुसृत्य बृहतः प्रथममुपादानम् । वस्तुतस्तु रथन्तरशब्दोक्ता लक्ष्मीरेव पूर्ववर्णदेवतेति । रथन्तरशब्दोक्तेति शेषः । नारायणो बृहन्नामा । ननु बृहद्रथन्तरशब्दयोर्लक्ष्मीनारायणपरत्वे वाग् वै रथन्तरस्य रूपं प्राणो बृहत इत्युक्तिविरोध इत्यत आह– **ताविति** ।। संहिता सन्धीयत इत्यस्य तात्पर्यम्– **मध्यस्थ इति** ।। स बृहद्रथन्तररूपाभ्यां पूर्वोत्तरवर्णगताभ्यां सन्धितो मध्यस्थो वर्णमध्यगतोऽर्धनारीपरमात्मको रूपविशेषः संहितानामेत्यर्थः । वाक् प्राणरथन्तरबृहच्छब्दान्निर्वक्ति– **वेदात्मकत्वाद्**

---

१. सन्धितम्- ह.पा.  २. तार्क्ष्य एतन्मात्रं च- ह.पा.

**वेदाभिमानित्वादिति** ।। स्वयं स्वातन्त्र्येण । प्रणेतृत्वात् साक्षान्मुख्यतः प्राणनामेत्यर्थः । रथं च तत् तरं चेति विग्रहमभिप्रेत्य रथशब्दस्यावयवार्थं तावदाह– **रमिति** ।। उदा-हृतम् । 'अन्नं थम्' इति श्रुतौ । समुदायार्थः– **विष्णुभोग्येति** ।। रथन्तरेत्यस्यार्थः– **रतितरेति** ।। विशिष्टसुखरूपेत्यर्थः । रथन्तरस्य बृहतस्तन्नामकस्य साम्नः वाग्रथन्तरस्य रूपं प्रतिमा । प्राणो बृहतो रूपं प्रतिमेत्यर्थान्तरमाह– **वाक् प्राणसंस्थितौ चैवेति** ।। उभाभ्यामु खलु संहिता सन्धीयत इत्यस्यार्थः– **ताभ्यामेवेति** ।।

**उपनिषत्-**

**(कौण्ठरव्यमुनेरुपासना)**

**वाक् प्राणेन संहितेति कौण्ठरव्यः ।। प्राणः पवमानेन पवमानो विश्वैर्देवैर्विश्वे देवाः स्वर्गेण लोकेन स्वर्गो लोको ब्रह्मणा सैषाऽवरपरा संहिता । स यो हैतामवरपरं संहितां वेद, एवं हैव स प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सन्धीयते ।। यथैषा संहिता ।**

**भाष्यम्-**

**(विदुषां देवानामेव संहितोपासनायाः पूर्णफलम्)**

संहितादेवता बह्व्य इति कुण्ठरवात्मजः ।
द्वयं द्वयं देवतानां मिळितं हरिशर्ववत् ।
संहितानामकं तत्र वर्णमध्यस्य देवता ।
तयोरेकं देवतयोः परमन्यत् तथाऽवरम् ।
अवरस्य परस्यापि संयोगात् संहिता तु सा ।
प्रोक्ताऽवरपरेत्येव वाक्प्राणाख्यौ रमाच्युतौ ।
संहितैका तथैवान्या केशवो वायुसंयुतः ।

वायुः स पवमानाख्यो देवताश्चाखिला अपि ।

तृतीया संहिता प्रोक्ता देवतास्ताः सशङ्कराः ।

चतुर्थी संहिता प्रोक्ता शङ्करो ब्रह्मणा सह ।

पञ्चमी संहिता चैव संहिता मोक्षदा इमाः ।

प्रथमायां द्वितीयायां विष्णुरेव परो मतः ।

तृतीयायां वायुरेव चतुर्थ्यां सर्वदेवताः ।

विरिञ्च एव पञ्चम्यामवरा इतरे ततः ।

प्रथमायां संहितायामवरो वामभागगः ।

द्वितीयायां तु परमस्तृतीयायां तथाऽवरः ।

चतुर्थ्यां परमश्चैव पञ्चम्यां वामगोऽवरः ।

अवराद्याः परान्ता यदेताः सर्वाश्च संहिताः ।

ततोऽवरपराः प्रोक्ता नैवोक्तास्ताः परावराः ।

अभिमानी द्युलोकस्य शिवः सर्वस्य लोकनात् ।

द्योतनाच्च ...................... ।

**टिप्पणी -**

प्राणेनेत्यादितृतीया सहयोग इति भावेनाऽह– **द्वयमिति** ।। देवतानां द्वयं द्वयं हरिशर्ववत् यथैकस्मिन्नेव संस्थानेऽर्धतः शङ्करोऽर्धतो नारायण इति तौ मिलितौ तथा मिलितं संहितानामकं सत् तत् तत्र पूर्वोत्तरवर्णतन्मध्यानां मध्ये । वर्णमध्यस्य देवतेत्यर्थः। पूर्वोत्तरवर्णयोस्तु पूर्वोक्ता एवेति हृदयम् । सैषाऽवरपरेत्येतद् विवृणोति– **तयोरेकमित्यादिना** ।। वागादिशब्दकथनपूर्वकं वाक् प्राणेन संहितेत्यादिसंहितापञ्चकं दर्शयति– **वाक् प्राणाख्यावित्यादिना** ।। स यो हैतामिति फलवाक्यतात्पर्यमुक्तम्– **संहितामोक्षदा इति** ।। संहितास्वेतासु कः परः को वर इत्यतो विवेचयति– **प्रथमायामित्यादिना** ।। तृतीयायां वायुरेव परः । विश्वदेवशब्देन सरस्वत्यादीनां ग्रहणादिति भावः । अत एव

चतुर्थ्यां सर्वदेवताः परमाः। पञ्चम्यां विरिञ्चः परमः। इतरे स्वस्वसंहितायामवरा इत्यर्थः। अवरपरसंयोगात् संहिताऽवरपरेत्युक्तं अधुनाऽवमपङ्क्तौ प्रथमायां संहितायां वामभागगोलक्ष्म्याख्योऽवरः। द्वितीयायां वामगो विष्णुः परमः। तथा तृतीयायां वामगः सर्वदेवसमुदायोऽवरः । चतुर्थ्यां स एव सरस्वत्यादिदेवसमुदायः परमः। पञ्चम्यां वामगः शिवोऽवर इति वामगपङ्क्त्युक्तावरपरभावस्य क्रमेणानुवृत्तेरियं संहिताऽवरपरेति प्रकारान्तरेण व्याचष्टे– **प्रथमायामित्यादिना**॥ ननु प्रथमानिर्दिष्टो वामभाग इति स्थानचतुष्टये दृष्टं तन्न्यायेन तृतीयायामपि पवमानो वामग इति प्राप्तं तत्कथं तृतीयायां वामगोऽवर इति व्याख्यायते, किन्तु तृतीयां वामगः पवमानो वर उत्तम इति व्याख्येयमिति चेन्न । तथात्वे तृतीयायां तथा पर इति निर्देशप्रसङ्गात् । अवरपरशब्दपर्यावृत्तिदशायां वर इति पदच्छेद-स्यायुक्तत्वात्। प्रथमानिर्दिष्टस्यापि पवमानस्य दक्षभागस्थत्वसम्भवात्। नह्यन्यत्र दर्शनं तन्नियामकमप्रयोजकत्वादिति ज्ञेयम्। प्रकारान्तरेणावरपरत्वमुपपादयति– **अवराद्या इति**॥ यद् यस्मादेताः सर्वा देवताः संहिता अवराद्याः विष्णवपेक्षया अवरा श्रीरेवाऽद्या यासां ता अवराद्याः। रुद्रापेक्षया परो विरिञ्चोऽतो यासां ताः परान्ताः । ततश्च तस्मादपि हेतोः । अवरपराः प्रोक्ताः । शब्दशास्त्रे प्रत्याहारसंज्ञावदिति भावः। एवं संहिताशास्त्रेऽथावरपरशब्दार्थं व्याख्यायार्थान्तरं दूषयति– **नैवोक्ता इति**॥ प्रथमाऽवरा द्वितीया परा तृतीयावराः चतुर्थी परा पञ्चम्यवरेत्येवं नैवोक्तास्ताः परावरा इत्यर्थः। स्वर्गलोकशब्दं शिवे निरुच्य दर्शयति– **अभिमानीति**॥ लोकनाद् द्योतनाच्च। द्युलोक इति शेषः। शाखान्तरे द्युलोकशब्दस्य ग्रहणात् तदनुसारेणेदं व्याख्यानम् । एतदुपनिषदनुसारेण तु अभिमानी स्वर्गलोकस्य स्वर्ग इत्युच्यते। अभिमान्यभिमन्यमानयोरेकशब्दवाच्य-त्वात् । यद्वा, स्वो विष्णुस्तद्गतो वायुस्तद्गो मुक्तः सदाशिवः। अतः स्वर्ग इति छान्दोग्यभाष्यवचनात् स्वतन्त्रविष्णुरतवायुगतत्वात् स्वर्गः सर्वस्य लोकनादवलोकनाल्लोक इति व्याख्येयम् ।

**उपनिषत्-**

स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदभिव्याहर्षन्नेव विद्याद् दिवं संहिताऽगमद् विदुषां देवानामेवं भविष्यतीति शश्वत् तथा स्यात् स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ।

(पञ्चालचण्डमुनेरुपासना)

वाक् संहितेति पञ्चालचण्डो वाचा वै वेदाः सन्धीयन्ते वाचा च्छन्दांसि वाचा मित्राणि सन्दधति ॥ वाचा सर्वाणि भूतान्यथो वागेवेदं सर्वमिति ॥ तद् यत्रैतदधीते वा भाषते वा वाचि तदा प्राणो भवति वाक् तदा प्राणं रेळ्ह्यथ यत्र तूष्णीं वा भवति स्वपिति वा प्राणे तदा वाग् भवति प्राणस्तदा वाचं रेळ्हि तावन्योन्यं रीळ्हो वाग् वै माता प्राणः पुत्रस्तदप्येतदृषिणोक्तम् ॥ एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे । तं पाकेन मनसाऽपश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरमिति ॥ स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति ॥

**भाष्यम्-**

......... यदि ब्रूयान्मन्त्रमेतमथापि वा।
आत्मार्थेऽथ परार्थे वा चिन्तयेदेवमञ्जसा।

विद्वांसो देवता यस्मात् सम्यक् तेन महत् फलम् ।
तेषामेव हरिश्चैव संहितारूपकः प्रभुः ।
अगमद् देवलोकं हि कर्तुं देवेष्वनुग्रहम् ।
इति चिन्तयतस्तेषां प्रसादात् फलमञ्जसा ।
पञ्चालचण्डो वाचं तु ब्रह्माणीं हि सरस्वतीम् ।
मन्यतेऽस्याः पुत्रवच्च देवं नारायणं प्रभुम् ।
वेदैर्हि व्यज्यते विष्णुः सा च वेदाभिमानिनी ।
प्राणस्थो भगवान् विष्णुः प्राणनामा प्रणेतृतः ।
ब्रह्मणोऽपि पिता नित्यं भगवान् पुरुषोत्तमः ।
उपचर्यते पुत्र इति वेदैर्यद् व्यज्यते हरिः[१] ।
सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि ।

**टिप्पणी -**

स यदि परेण वोपसृतः स्वेन वाऽर्थेनाभिव्याहरेदित्यत्र कर्माध्याहारपूर्वं विवक्षितमर्थमाह– **यदि ब्रूयादित्यादिना** ।। अथापि वाऽन्यद्वा मन्त्रं विद्यादित्यस्य भविष्यतीतीत्यत्रत्येतिशब्देनान्वयमाह– **चिन्तयेदेवमिति** ।। विदुषां देवानामेव मुक्तं फलमित्यस्यार्थः– **विदुषामित्यादि** ।। दिवं संहिताऽगमद् विदुषां देवानामर्थ इत्यस्य विवरणम्– **हरिश्चैवेत्यादि** ।। शश्वत् तथा स्यादित्यस्य तथा तथा सत्येवं चिन्तने हि परेण वोपसृतः स्वेन वाऽर्थेनेत्यभिलषितं फलं तथा स्वकामनानुसारेण सम्यक् स्यादित्यर्थमभिप्रेत्योक्तम्– **इति चिन्तयत इति** ।। वाक् संहितेत्यत्र वाक्शब्देन प्रकृता लक्ष्मीरित्यन्यथाप्रतीतेर्व्याचष्टे– **पञ्चालचण्ड इति** ।। मन्यते संहितामिति शेषः । ननु वाग्वै माता प्राणः पुत्र इति प्राणमातृत्वेनोक्ता वाक् श्रीरेव । कथं सरस्वतीत्यतस्तद् व्याचष्टे– **मन्यत इति** ।। वेदैर्व्यङ्ग्यत्वात् । सरस्वत्याः कथं मातृत्वमित्यत उक्तम्– **सा**

१. प्रभुः- ह.पा.

चेति ॥ पुत्रशब्दो गौण इत्युक्तं मुख्यार्थे बाधकमाह– **ब्रह्मण इत्यादिना** ॥ ननु विष्णुनामादिसंहिताप्रतिपाद्यत्वं सरस्वत्याः कथमित्यत आह– **सा देवीति** ॥ संहिताभिमानित्वात् संहितानाम्नी । एतेन पूर्वोक्तदेवतानामप्यभिमानित्वमेव । न तु विष्णुनामादिपूर्वप्रसिद्धशब्दसंहिताप्रतिपाद्यत्वम् । तत्तु तत्तन्नामकस्य तत्तदन्तर्गतस्य हरेरेवेत्युक्तं भवति ।

**उपनिषत्-**

**(महेश्वरकृतसंहितोपासना)**

**अथातः प्रजापतिसंहिता जाया पूर्वरूपं पतिरुत्तररूपं पुत्रः सन्धिः प्रजननं सन्धानं सैषाऽदितिः संहिताऽदितिर्हीदं सर्वं यदिदं किञ्च ॥ पिता च माता च पुत्रश्च प्रजननं च तदप्येतदृषिणोक्तम् ॥ अदितिर्माता स पिता स पुत्र इति स य एवमेतां संहितां वेद सन्धीयते प्रजया पशुभिर्यशसा ब्रह्मवर्चसेन स्वर्गेण लोकेन सर्वमायुरेति सर्वमायुरेति ॥**

**॥ इति षष्ठः खण्डः ॥**

**॥ इति श्रीमन्महैतरेयोपनिषत्सु तृतीयप्रघट्टके प्रथमोऽध्यायः ॥**

**भाष्यम्-**

प्रजापत्याख्यशर्वेण प्रोक्ताऽन्या संहिताऽपि हि ।
विष्णुरेवादितिर्नाम सर्वस्यात्ता यतः प्रभुः ।
स एव पितृसंस्थस्तु पातृत्वात् पितृनामकः ।
देवतोत्तरवर्णस्य मातृस्थो मातृनामकः ।
माननात् पूर्ववर्णस्य देवतेति प्रकीर्तितः ।

पोषकत्वात् सन्धिनामा वर्णयोरन्तरस्थितः ।
स एव पुत्रसंस्थश्च पुत्रनामा जनार्दनः ।
त्राणात् पूतित एवासौ वर्णसन्धानकर्मणि ।
सन्धाननामा सन्धानकर्तृत्वात् पुरुषोत्तमः ।
प्रजातिकर्मसंस्थश्च स एव प्रजनाभिधः ।
जनकत्वात् परो विष्णुरेवं विष्णुर्हि संहिता ।
वासुदेवादिरूपेण चतुर्धैवं व्यवस्थितः ।

**टिप्पणी -**

अथातः प्रजापतिसंहितेत्यस्य प्रजापतिप्रतिपादिका संहितेत्यन्यथाप्रतीतेर्व्याचष्टे– **प्रजापत्याख्येति** ।। ननु तद्देवताका संहितेत्येव किन्न स्यादित्यतः 'सैषाऽदितिसंहिता' इत्युत्तरवाक्येऽदितेः संहिताप्रतिपाद्यत्वश्रवणाददितिशब्दस्य च 'अत्ता चराचरग्रहणात्' (ब्र.सू. १.२.९) 'सर्वं वा अत्तीति तददितेरदितित्वम्' (बृह. १.२.५) इति श्रुतितन्मीमांसयोर्विष्णुविषयतयोक्तत्वादिति भावेनाऽह– **विष्णुरेवेति** ।।

**भाष्यम्-**

## ('अदितिर्द्यौः' इति मन्त्रव्याख्यानम्)

स एव दिवि संस्थश्च द्युनामा क्रीडनात् प्रभुः ।
अन्तरेवेक्षणाच्चैव सोऽन्तरिक्षोऽन्तरिक्षगः ।
पृथिवी पृथिवीस्थश्च प्रथितत्वाज्जनार्दनः ।
मुख्यार्थत्वात् सर्वनाम्नां सर्वदेवाभिधो हरिः ।
विश्वे देवा इति प्रोक्तो बहुधा तेषु संस्थितः ।
ज्ञानद्युतेर्देवनामा स्थितो देवेषु केशवः ।
गां धारयंश्च गन्धर्वो गन्धर्वेषु व्यवस्थितः ।
माननान्मानुषो नाम मानुषेषु स्थितो हरिः ।

**पालनात् पितृनामासौ पितृष्वेव व्यवस्थितः ।**

**रतेः प्राणेऽसुराख्यश्च सोऽसुरेषु व्यवस्थितः ।**

**एवं पञ्चजनेषुस्थो हरिः पञ्चजनाभिधः ।**

**जातनामा जातसंस्थः प्रादुर्भूतगुणत्वतः ।**

**जनिक्रियास्थितश्चासौ जनित्वमिति गीयते ।**

**जनिं यस्मात् तवयति तवनं हि प्रकाशनम् ।। इति च ।।**

**टिप्पणी -**

जाया पूर्वरूपं पतिरुत्तररूपमित्यादि व्याचष्टे– **स एवेत्यादिना** ।। सोऽदितिनामा विष्णुरेव । 'माता पूर्वरूपं पितोत्तररूपम्' इति शाखान्तरानुसारेण पिता च माता चेत्युत्तरवाक्यानुसारेण चेदं व्याख्यानम् । प्रकृते तु जनयतीति जाया, पालकत्वात् पतिरिति व्याख्येयम् । 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतेः । पुत्रे सन्धिप्रजननसन्धानशब्दान्निर्वक्ति– **पोषकत्वादित्यादिना** ।। धिनु पुष्टाविति धातोरिति प्रागेवोक्तत्वात् पोषकत्वात् सन्धिनामेत्यर्थः । अर्थान्तरमाह– **वर्णयोरिति** ।। पूतितो नरकात् । वर्णसन्धानकर्मणि स्थित इति शेषः । सैषाऽदितिः संहितेत्युपसंहारवाक्यं व्याचष्टे–**एवमिति** ।। पिता च माता च पुत्रश्च प्रजननं चेति यत्किञ्चिदिदं सर्वमदितिर्हीत्येतद् व्याचष्टे– **वासुदेवादीति** ।। एवं मात्रादिशब्दवाच्यवासुदेवादिरूपेण विष्णुरदितिशब्दवाच्यश्चतुर्धा व्यवस्थित इत्यर्थः । उदाहृतमन्त्रशेषे पुत्रजननयोरदितित्वानुक्तेस्तल्लाभाय 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्' इति समग्रश्रुतिं व्याचष्टे– **स एवेत्यादिना** ।। अदितिनामा विष्णुरेवेत्यर्थः । अन्तरेवेति स्वान्तः सर्वस्येक्षणात् स्वस्य वा सर्वान्तरीक्षणादित्यर्थः । मातापितृपुत्रशब्दानां प्रागेव व्याख्याततत्वाद् विश्वेदेवा इत्यस्य विश्वेषां देवानां यानि प्रातिस्विकानि नामानि तद्वाच्यः विश्वेदेवा इति समुदायनामवाच्यश्चेत्यर्थः । इति भावेन व्याचष्टे– **मुख्येत्या-**

**दिना** ।। बहुधा स्थितत्वाद् विश्वे ज्ञानाद् द्युतेश्च देवनामा । दीव्यतेर्गत्यर्थत्वाद् द्युत्यर्थत्वाच्च । ज्ञानात्मकद्युतेरिति वा । पञ्चजना इत्यस्यापि देवगन्धर्वमानुषपित्रसुरलक्षणपञ्चजनानां यानि प्रातिस्विकनामानि तद्वाच्यः । पञ्चजना इति समुदायनामवाच्यश्चेत्यर्थ इति भावेन देवादिशब्दान् व्याचष्टे– **ज्ञानद्युतेरित्यादिना** ।। गां भूमिं स्वर्गं वेदवाचं वा । माननात् तस्य बहुभिर्मानकरणान्मान्यत्वादिति यावत् । सर्वेषां बहुमानकरणाद्वा मानुषः । 'मनोर्जातौ' इति स्मरणादिति भावः । प्राणे असुनामके रतेरसुर इत्यर्थः । नित्यप्रादुर्भूतगुणत्वतो जातनामेत्यन्वयः । जनित्वशब्दो हि जनिक्रियावाची । जनी प्रादुर्भाव इत्यतो भावे इत्वन्प्रत्ययस्य 'जनिदाच्युसृवृमदिमषिनमिभृञ्भ्य इत्वन्' इत्युणादिसूत्रे विधानात् । जनित्वशब्दितजनिक्रियास्थत्वात् सोऽपि जनित्वशब्देनोच्यत इत्याह– **जनिक्रियेति** ।। यद्यपि कर्तरीत्वन्प्रत्ययेन जनित्वशब्दो मातापितृपर उदाहृतः तथाऽपि व्युत्पत्तिपक्षे भावे ह्युपपद्यत इति ज्ञेयम् । जनित्वशब्दं हरौ निरुच्यापि दर्शयति–**जनिमिति** ।। यस्माज्जनिं तवयति तस्माच्च जनित्वमिति गीयते । तवेर्णिज्वेत्युणादिस्मरणाज्जनिपदे कर्मण्युपपदे तवेः सौत्रस्य धातोरिदं रूपमिति भावः । किमिदं तवनमित्यत आह– **तवनं हीति** ।। हिशब्देन 'ते वर्धन्त स्वतवसो महित्वना' इति प्रयोगं सूचयति ।

**भाष्यम्-**

### ('प्रथश्च यस्य सप्रथश्च' इति मन्त्रव्याख्यानम्)

प्रथश्च सप्रथश्चैव राजानौ मत्स्यदेशजौ ।
यापयामासतुर्विष्णोर्हविर्नाम्नो हविर्मखे ।
अनुष्टुब्देवता यस्तु नृसिंहो जगतोऽस्य च ।
स्वमुखे हवनादेव हविरित्यभिधीयते ।
तस्मिन् यज्ञे वसिष्ठस्तु चतूरूपाज्जनार्दनात् ।
आजहार श्रियं देवीं रथन्तरवराभिधाम् ।

**चतुर्मूर्तिः स्तुतस्तेन प्रेषयामास तां श्रियम् ।**
**सा चास्मै प्रददौ विद्यां प्रययौ च पुनर्हरिम् ।**
**धातेत्युक्तोऽनिरुद्धस्तु प्रद्युम्नस्तु द्युनामकः[१] ।**
**वासुदेवः प्रसविता सर्वस्य [२]प्रसवाद् विभुः ।**
**सङ्कर्षणो विष्णुनामा प्रणेतृत्वाद् बलादपि ।**

**टिप्पणी -**

रथन्तरमाजभारा वसिष्ठ इत्युदाहृतं मन्त्रमादित आरभ्य व्याचष्टे– **प्रथश्चेति** ।। 'प्रथश्च यस्य स प्रथश्च नामानुष्टुभस्य हविषो हविर्यत् । धातुर्द्युतानात् सवितुश्च विष्णो रथन्तरमाजभारा वसिष्ठः' इति समग्रो मन्त्रः । हविषः स्वमुखे सर्वस्य जगतो हवनाद् हविर्नामकस्य अनुष्टुभस्य अनुष्टुप्प्रतिपाद्यस्य नृसिंहस्य मुख इति शेषः । यस्य राज्ञः पथ इति नाम स राजा हविर्यत् अयापयत् । यस्य च राज्ञः स प्रथ इति नाम सोऽपि हविर्यत् अयापयत् । तस्मिन् यज्ञे वसिष्ठः धातुर्द्युतानात् सवितुश्च विष्णोर्धात्रादिनामकादनिरुद्धादिरूपचतुष्टयाद् रथन्तरनाम्नीं श्रियं आजभार अजहार । आहूतवानिति यावत् । अत्र पूर्वार्धस्यार्थः– **प्रथश्चेत्यादि** ।। यो नृसिंहोऽनुष्टुब्देवता 'उग्रं वीरम्' इत्यादिनृसिंहानुष्टुब्देवता स्वमुखे जगतो हवनाद्धविरिति गीयते । तस्य हविर्नाम्नोऽनुष्टुभाख्यविष्णोर्नृसिंहस्य मुखे प्रथश्चेति मत्स्यदेशराजानौ हविर्यापयामासतुरिति योजना । द्वितीयार्धस्यार्थः– **तस्मिन् यज्ञ इत्यादि** ।। धातुर्द्युतानादितयदेर्घट्टार्थश्च– **चतूरूपादिति** ।। न श्रियो वसिष्ठसामर्थ्येन चतूरूपादवतार इति भावेनाऽह– **चतुर्मूर्तिरिति** ।। प्रेषयामास स्वगतां व्यक्तीचकार । किमर्थमाजभारेत्यतः स्वस्योपदेशायेति भावेनाऽह– **सा चेति** ।। धात्रादिशब्दार्थं विवेचयति– **धातेत्यादिना** ।। तत्तत्काले प्राप्तनिरोधनिवृत्त्याधारकत्वादनिरुद्धो धातेत्युक्तः । प्रकृष्टद्युतिमत्त्वात् प्रद्युम्ननामा हरिर्द्युतिविस्तारोपेतत्वाद् द्यु-

१. द्युतानकः- ह.पा. २. प्रभवात् प्रभुः- ह.पा.

नामकः । 'वानात् सूतेर्देवनाद् वासुदेवः' इत्यादेर्वासुदेवशब्दवाच्यो हरिर्योग्यस्य सर्वस्य जगतो मोक्षाख्यपुरुषार्थप्रसवकर्तृत्वात् सवितेत्युच्यते । सम्यक्कर्षकत्वात् सङ्कर्षणनामा हरिः । प्रणेतृत्वात् प्रकर्षेण नेतृत्वाद् बलरूपत्वाच्च विष्णु-नामेत्यर्थः ।

**भाष्यम्-**

**('तेऽविन्दन् मनसा' इति मन्त्रव्याख्यानम्)**

चतूरूपं परं विष्णुं राजानौ प्रथसप्रथौ ।
भरद्वाजौ वसिष्ठश्च ध्यात्वाऽविन्दन् परात् परम् ।
यजनीयो यजुर्नामा विष्णुः सङ्कर्षणाभिधः ।
जीवानां स्कन्दनादेव स्कन्नः प्रद्युम्न उच्यते ।
प्रथमो वासुदेवस्तु देवयानोऽनिरुद्धकः ।
प्राप्यो देवैर्यतो नित्यमनिरुद्धाभिधो हरिः ।
तस्मादेवं चतुर्मूर्तेः स्तुतिसन्तोषिताद्धरेः ।
आजहार भरद्वाजो रूपं नारायणाभिधम् ।
तद् बृहन्नामकं विष्णोश्चतुरात्म्यात् समुद्गतम् ।
भरद्वाजमुपागम्य प्रादान्मोक्षवरं परम् ।
चतुर्मूर्तिः स भगवानग्निरित्यभिधीयते ।
अग्र्यत्वात् सर्वभूतानाम् ........ ।

**('अविन्दन् ते अतिहितम्' इति मन्त्रव्याख्यानम्)**

..................एवं चत्वार एव ते ।
अविन्दंस्तं चतुर्मूर्तिं साक्षान्नारायणं प्रभुम् ।
गुहायां संस्थितमपि ह्यतीव हितमस्य च ।
सर्वज्ञत्वाद् यज्ञनाम्नो विष्णोस्तेजः परं हि तत् ।

**तस्मादेव चतुर्मूर्तेः सूरिप्राप्यत्वहेतुतः।**
**सूर्यनाम्नोऽहरन् घर्मनामानं तं नृसिंहकम्।**
**घर्षणात् सर्वलोकस्य नृसिंहो घर्म उच्यते।**
**निर्गत्य स चतुर्मूर्तेर्विप्रक्षत्राभिसंस्तुतात्।**
**प्रथादीनां चतुर्णां च पुरुषार्थचतुष्टयम्।**
**दत्वा जगाम भगवान् स्वकीयां तनुमेव च।**
**वसिष्ठाच्च भरद्वाजाद् होत्रध्वर्य्वोर्नृपौ तु तौ।**
**यथेष्टसिद्धिं सम्प्राप्तौ सम्यगिष्टाज्जनार्दनात्॥'** इत्याद्यृग्वेदसंहितायाम्॥

**टिप्पणी -**

भारद्वाजो बृहदाचक्रे अग्नेरित्येतदादित आरभ्य व्याचष्टे– **चतूरूपमित्यादिना**॥ 'तेऽविन्दन् मनसादीध्यानायजुष्कन्नं प्रथमं देवयानम्। धातुर्द्युतानात् सवितुश्च विष्णोर्भरद्वाजो बृहदाचक्रे अग्नेः' इति समग्रो मन्त्रः। ते पूर्वमन्त्रे प्रकृताः प्रथसप्रथवसिष्ठाः। भरद्वाजश्च। यजुष्कन्नं प्रथमं देवयानं यजुरादिशब्दवाच्यसङ्कर्षणादिचतूरूपं विष्णुम्। दीध्यानाः दीधीङ् दीप्तिदेवनयोः। देवनं च ध्यानमत्र विवक्षितम्। ध्यायन्तो मनसाऽविन्दन् अपश्यन्। तत्र भरद्वाजो धात्रादिशब्दवाच्यादग्न्यत्वा-दग्निनामकादनिरुद्धादिरूपचतुष्टयात् पूर्णत्वाद् बृहन्नामकं नाारायणरूपमाचक्रे आकारयामासेति मन्त्रार्थसङ्क्षेपः। प्रथमार्धं व्याचष्टे– **चतूरूपमित्या-दिना**॥ यजुष्कन्नमित्यादेरर्थकथनमेतत्। त इत्यस्यार्थः– **राजानावित्यादि**॥ दीध्याना इत्यस्य तात्पर्यम्– **ध्यात्वेति**॥ यजुरादिशब्दार्थं विवेचयति– **यजनीय इत्यादिना**॥ पितृभ्यो देवेभ्यश्च स्वधादेः सम्यक् कर्षणात् सङ्कर्षणः तदन्तर्गततया यजनीयत्वाद् यजुः। सृष्ट्या प्रकर्षेण द्योतनात् प्रद्युम्नो जीवानां स्वान्तर्गतानां स्कन्दनात् सर्जनात् स्कन्नः। वासुदेवशब्दप्रवृत्तिनिमित्तैः 'वानात् सूतेर्देवनाद् वासुदेवः' इत्याद्युक्तैर्गुणैः श्रेष्ठो वासुदेवः गुणैः सर्वेभ्य उत्तमत्वात् प्रथमावतारत्वाच्च प्रथमः। स्वप्राप्तिं प्रति देवानामनिरोधकत्वादनिरुद्धो यतो

देवैः प्राप्योऽतो देवयानः। द्वितीयार्धं व्याचष्टे– **तस्मादेवेत्यादिना**॥ अत्रापि न बलादाह्वानमित्यभिप्रायेणोक्तम्–**स्तुतिसन्तोषितादिति**॥ आह्वानप्रयोजनमुक्तम्– **तद् बृहन्नामकमिति**॥ अग्नेरित्येतद् धात्रादिसर्वविशेषणमित्यभिप्रेत्य व्याचष्टे– **चतुर्मूर्तिरिति**॥ उपनिषदि चातुरात्म्यसमुद्गतयोर्बृहद्रथन्तरयो रूपेण संहिता सन्धीयत इति स्वाभिप्रेतार्थे मन्त्रद्वयोदाहरणेऽपि वाग्वै रथन्तरस्य रूपं प्राणो बृहत इत्यध्यात्मम्। प्राणे स्थितस्य प्राणनाम्नो नारायणस्योपास्यत्वे प्रमाणत्वेनाभि- प्रेतमविन्दन्तेति हितमिति मन्त्रं व्याचष्टे– **चत्वार एवेत्यादिना**॥ 'अविन्दन्तेति हितं यदासीद् यज्ञस्य धाम परमं गुहा यत्। धातुर्द्युतानात् सवितुश्च विष्णोरासूर्यादभरन् धर्ममेते' इति मन्त्रस्यायमर्थः। ते प्रथादयश्चत्वारः यज्ञस्य सर्वज्ञस्य विष्णोः परममुत्तमं धाम तेजोरूपम्। 'सयुजा सखायः' इति श्रुतेजीवानामतिहितमुपकारकम्। गुहामेतीति गुहायत् गुहान्तर्गतमासीत्। तदध्यात्ममपि चतुर्मूर्त्यात्मकनारायणरूपमविन्दन्। सूरिप्राप्यत्वात् सूर्यनाम्नो धात्रादिपदोदितादनिरुद्धादेरेते चत्वारः सर्वलोकस्य घर्षणान्नाशनाद् धर्मनामानं नृसिंहं आ भरन्नाहरंश्चेति। पूर्वार्धस्य व्याख्यानम्– **एवं चत्वार इति**॥ त एव चत्वारः अस्य जीवजातस्यातीव हितम्। गुहायत् गुहाशब्दे कर्मण्युपपदे इण् गतावित्यतः शतृप्रत्यये गुहामेतीति गुहायत् गुहायती गुहायन्तीति शब्दरूपं भवति। तथाच गुहागतं गुहायामपि संस्थितं चतुर्मूर्तिनारायणमेव यथाधिदैवमविन्दन् तथा साक्षादविन्दन् अपरोक्षतो व्यजानन्नित्यर्थः। नन्वत्रोक्तो विष्णुरिति कथमवगतमित्यतो गुहानिहितत्वलिङ्गाद् 'गुहां प्रविष्टावात्मानौ' (ब्र.सू. १.२.११) इति सूत्रादिति सिद्धेऽपि यज्ञस्य धामेति विशेषणाच्चावगतमिति भावेन तद् व्याकुर्वन्नाह– **सर्वज्ञत्वादिति**॥ यद् गुहायामप्यविन्दन् तत् यदस्ति तज्जानातीति व्युत्पत्त्या सर्वज्ञत्वाद् यज्ञनाम्नो विष्णोः परमं तेजो हीत्यन्वयः। हिशब्देन 'यज्ञो विष्णुर्देवता' 'इदं ज्योतिर्हृदय आहितं यत्' 'प्राणेषु हृद्यन्तर्ज्योतिः' 'ज्योतिश्चरणाभिधानात्' (ब्र.सू. १.१.२४) 'तेजः स्वरूपं च गृहं प्राज्ञैर्धामेति कथ्यते' इत्यादिश्रुतिसूत्राभिधानान्युक्तेऽर्थे सूचयति। द्वितीयार्धं व्याचष्टे–

**तस्मादेवेत्यादिना** ॥ घर्मन्नित्युणादिसूत्रे घृ क्षरणदीप्त्योरिति धातोर्मन् प्रत्यये गुणे च कृते घर्मशब्दस्य निष्पादितत्वात् सर्वलोकस्य घर्षणात् विनाशनात् नृसिंहो घर्म उच्यते । क्षरणं विनाशनमेवेति भावः । अत्राप्याह्वानं न बलादिति वदन् तत्प्रयोजनमाह–**निर्गत्येत्यादिना** ॥ होत्रध्वर्योरिति समाहारैकवद्भावः । वसिष्ठाद्धोतुः भरद्वाजादध्वर्योश्चेत्यर्थः ।

**भाष्यम्-**

**यस्य प्रथ इति नाम स च हविर्नाम्नो विष्णोर्हविर्यत् अयत् । अटो लोपेनान्तर्णीतणिच्त्वेन अयापयदित्यर्थः । एवं सप्रथ इति यस्य नामासौ हविर्यदिति पृथक् सम्बन्धः । आचक्रे [१]आकारयामास । 'अविन्दन् ते', 'तेऽविन्दन्' इत्यध्यात्माधिदैवयोरुभयत्रापि भगवन्तमविन्दन्नित्यर्थः । देवयानं गुहायदिति वचनात् ।**

**('चतुष्कपर्दा युवतिः' इति मन्त्रव्याख्यानम्)**

**'चतुःशिखण्डां तु रमां द्विरूपो भगवान् हरिः ।**
**परमानन्दरूपत्वात् सुपर्ण इति नामकः ।**
**रमयामास तस्यां च निषण्णः सर्वदैव सः ।**
**एक एव च विष्णुः सः प्रविष्टः क्षीरसागरम् ।**
**सर्वं पश्यत्यसौ देवः पूर्णाकुण्ठेन चेतसा ।**
**परिपक्वेन मनसाऽपश्यमित्याह तं त्वजः ।**
**मातेव व्यञ्जकत्वात् तं प्राणस्थं वाक् सरस्वती ।**
**लिहते लिह्यत इव प्राणस्थेन तु सा सदा ।**
**स्वयं तु भगवान् विष्णुर्वाक्पतेर्ब्रह्मणोऽपि हि ।**
**नित्यः पिता स्वतन्त्रश्च नास्य माता पिताऽपि वा ॥'** इत्यादि च ॥

**॥ इति श्रीमदानन्दतीर्थभगवतपादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये तृतीयप्रघट्टके प्रथमोऽध्यायः ॥**

---

१. आह्वयामास- ह.पा.

## टिप्पणी -

प्रथश्च यस्येत्येतत् स्ववचनेन स्पष्टं व्याचष्टे– **यस्येत्यादिना** ।। यदित्येतत् क्रियापदमिति भावेनानूद्य प्रतिपदमुपादत्ते– **यद् अयदिति** ।। यतेर्लङि रूपमेतत् । ननु 'आडजादीनाम्' इति स्मरणादायदिति भवितव्यमिति चेत् 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्याडागमाभावपक्षे अयदिति ।। **पृथक् सम्बन्ध इति** ।। अन्यथैकवचनानुपपत्तेरिति भावः । आचक्र इत्येतदन्तर्णीतणिच्त्वेन व्याचष्टे– **आचक्र इति** ।। अविन्दन्ते तेऽविन्दन्निति मन्त्रयोः पूर्वार्धस्य पौनरुक्त्यं परिहरति– **अविन्दन्त इति** ।। तत्र ज्ञापकमाह– **देवयानमिति** ।। यद्यप्यनिरुद्धस्यात्र देवप्राप्यत्वमुक्तं न तु गुहायदितिवद् रूपचतुष्टयविशेषणमेतत् । तथापि तद्व्यूहगतस्यैकाधिदेवगतत्वमन्येषामप्यधिदैवगतत्वं विना न सम्भवतीति प्रद्युम्नादीनामधिदैवगतत्वे ज्ञापकं भवतीति भावः । 'एकः सुपर्णः स समुद्रमाविवेश' इत्यत्र स इति परामर्शविषयं दर्शयितुं 'चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम्' इति मन्त्रं व्याचष्टे– **चतुःशिखण्डामिति** ।। चतुष्कपर्देत्यस्यार्थः– **चतुःशिखण्डामिति** ।। चतुर्वेणीकृतकेशपाशामित्यर्थः । एतेन या चतुष्कपर्दा तस्यां तामित्यर्थ उक्तो भवति । सुपर्णेत्यस्यार्थः– **द्विरूप इत्यादि** ।। निषेदतुरित्यस्य तात्पर्यम्–**रमयामासेति** ।। तस्यां निषेदतुरित्यस्यार्थान्तरम्– **तस्यामिति** ।। ततश्चायं मन्त्रार्थः। या चतुष्कपर्दा पार्श्वयोः सीमन्तदेशे पश्चादित्येवं चतुर्धा कृतजटाकलापा । युवतिर्नित्ययौवनसम्पन्ना । सुपेशा शोभनावयवा । पिश अवयव इति धातोः। घृतप्रतीका प्रकाशमानदेहा । घृ- क्षरणदीप्त्योः। 'प्रतीकं देह उद्दिष्टः' (ब्र.सू.भा. ४.३.१५) इति वचनात्। वयुनानि ज्ञानानि । वस्ते आच्छादयति । ज्ञानपूर्णेत्यर्थः । 'त्वद्दत्तया वयुनयेदमचष्ट विश्वम्' इति भागवते प्रयोगात् । तस्यां विभक्तिव्यत्ययः । तां रमां सुपर्णा सुपर्णौ सुष्ठु परमानन्दरूपौ वृषणौ वृष सेचने सर्वाभीष्टसेचकौ भगवद्रूपविशेषौ निषेदतुः निषण्णौ सङ्गतावभूताम् ।

रमयामासतुरिति यावत् । स्वरमणार्थं च तस्यां निषेदतुः निषण्णौ । स्थिताव-भूताम् । 'रमया रममाणोऽपि तत्स्थेनैव श्रियात्मना । रमते' इत्युक्त-त्वात् । यत्र यस्मिन् द्विरूपे हरौ । देवा भागधेयं स्वस्वविहितं कर्म दधिरे अर्पितवन्तः । एवं स इति परामर्शार्थं प्रकृतत्वं दर्शयित्वा एक इति मन्त्रं व्याकुर्वन्नपश्यमिति वक्ता क इत्यतोऽजो वक्तेत्याह–**एक इति** ।। सुपर्णः सुष्ठु परमानन्दरूपः । स एक एव विष्णुः । समुद्रं क्षीरसागरमाविवेश प्रविष्टः । असौ देवः विश्वं सर्वं भुवनम् । पाकेन पूर्णेनाकुण्ठेन । मनसा चेतसा । विचष्टे पश्यति । तं पाकेन परिपक्केन । मनसा अन्तितः सर्वस्यान्तिके । सर्वान्तरपश्यम् । तं प्राणस्थं । माता मातेव व्यञ्जकत्वान्मातेत्युक्ता वाग् वेदाभिमानिनी सरस्वती रेह्लि लिहत इव । तद्गुणानास्वादयति । स उ सोऽपि मातरं सरस्वतीं रेह्लि । सा प्राणस्थेन परमात्मना सदा लिह्यते तत्परमप्रियतयाऽऽस्वाद्यत इवेति मन्त्रभाष्ययोरर्थः । मातृत्वमेव सरस्वत्याः किन्न स्यादित्यत आह– **स्वयं त्विति** ।।

**।। इति श्रीमद्विठ्ठलाचार्यपुत्रेण श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमन्मैतरेयभाष्यार्थरत्नमालायां तृतीयप्रघट्टके प्रथमोऽध्यायः।।**

**खण्डार्थः -**

एवं भगवद्रूपयोरेव पूर्वोत्तरवर्णसन्धिदेवतात्वमुक्त्वा देवतान्तरसाहित्येनापि तदुच्यतेऽस्मिन् खण्डे । पूर्वोत्तरवर्णदेवतयोर्बृहद्रथन्तरयोर्लक्ष्मीनारायणयोः । रूपेण रूपाभ्याम् । संहिता संहितानामकरूपमर्धनारीनराकारं लक्ष्मीनारायणरूपम् । सन्धीयते तदेव संहिताप्रतिपाद्यमिति तार्क्ष्य ह । रथन्तरस्य रथन्तरसामप्रतिपाद्याया रथन्तरनाम्न्या लक्ष्म्याः स्वरूपम् । वाग् वै वेदात्मकत्वाद् वाङ्नामकं वाचि स्थितं वै बृहतो बृहत्सामप्रतिपाद्यस्य पूर्णत्वाद् बृहन्नामकस्य नारायणस्य स्वरूपम् । प्राणः प्रणेतृत्वात् प्राणनामकं प्राणे स्थितम् । वाचा च प्राणेन चेत्युभाभ्यां वाक्प्राणस्थाभ्यां लक्ष्मीनारायणाभ्याम् । उ एव । संहिता सन्धीयत

इति खलु प्रसिद्धं वै । बहुशुश्रूषासाध्यत्वादतीवेयं विद्यारहस्येति भावेनोच्यते– **एतस्यामिति** ॥ एतस्यामुपनिषदि रहस्यविद्यायाम् । तादर्थ्ये सप्तमी । एतद्विद्यालाभार्थं तार्क्ष्यः संवत्सरं गुरोर्गा रक्षयते ह स्म । एतावन्मात्रविद्यार्थं कथं संवत्सरकालं गोरक्षणमित्यतोऽस्या एव परमगोप्यत्वादेतल्लाभार्थमेवेत्यव-धारणेनोच्यते– **एतस्यामिति** ॥ एतस्यां मायां एतावन्मात्रविद्यालाभार्थम् । तदेतल्लक्ष्मीनारायणयो रथन्तरबृहच्छब्दवाच्यत्वं ऋषिणाऽप्युक्तम् । वसिष्ठो रथन्तरमाजभार आजहार । भरद्वाजोऽग्नेश्चतुर्मूर्तेर्बृहदाचक्रे आह्वयामासेति । स य एवमित्यादेरुक्तोऽर्थः । संहितादेवता वह्नय इति मतान्तरमुच्यते– **वाक् प्राणे-नेति** ॥ कौण्ठरव्यः कुण्ठरव्यस्यापत्यं पुमान् । वाग् रमा । प्राणेनाच्युतेन मिलितैका संहितादेवता । प्राणो हरिः पवमानेन वायुना मिलितो द्वितीय-संहिता । पवमानो विश्वैः सर्वैर्देवैर्मिलितस्तृतीया संहिता । विश्वेदेवाः स्वर्गेण लोकेन शिवेन मिलिता चतुर्थी संहिता । स्वर्गो लोकः शिवः ब्रह्मणा चतुर्मुखेन मिलितः पञ्चमी संहितेत्याहेत्यन्वयः । सैषा संहिताऽवरपरा अवरपरयोर्मेल-नात् । वामभागगपङ्क्तौ क्रमेणावरपरभावस्य विद्यमानत्वाद्वा अवरादिपरान्त-त्वाद्वाऽवरपरनाम्नी । स यो ह प्रसिद्धो य एतामवरपरां संहितां वेद सः। यथैषा पञ्चविधसंहिता सन्धिता एवं हैव एवमेव खलु । प्राजदिभिः सन्धीयत इत्यर्थः । पठतोऽप्यभीष्टं भवति किमुपासकस्येति भावेनोच्यते– **स यदीत्या-दिना** ॥ स उपासकः परेण वा प्रयोजनार्थमुपसृजः । स्वेन वाऽर्थेन स्वप्रयोजननिमित्तेन वा । मन्त्ररूपामवरपरविद्यां यद्यभिव्याहरेत् ब्रूयात् । वचनात् पूर्वमभिव्याहर्तुमिच्छंश्च । विदुषामेतद्विद्यामुख्योपासकानाम् । देवानामेवमुक्तं फलं भविष्यति । कुतः संहितादेवता विष्णुः स्वविदुषां देवानामनुग्रहार्थं दिवमगमदिति विद्यात् चिन्तयीत । तथा तथा सत्येवं चिन्तने हि । यदर्थमेद्विद्यापठनमेतत्फलं तथा स्वकामानुसारेण । शश्वन्नियमेन स्यात् । न केवलमेतद्विद्यापठितुरुद्देश्यं फलं, किन्तु य एतां संहितामेवं देवानां महाफलप्रदेत्येवं वेदैतावन्मात्रं वेद

सोऽपि सन्धीयते प्रजयेत्यादि पूर्ववत् । पूर्वं हरिशर्ववन्मिलितानां लक्ष्म्यादीनां संहितात्वमुक्तम् । अधुना सरस्वत्या एव संहिताभिमानिदेवतात्वमिति पक्षान्तरमुच्यते– **वागिति** ॥ पञ्चालचण्डनामा मुनिर्वाक् सरस्वती संहितेति मन्यते । वाचः संहितात्वमुपपाद्यते– **वाचेत्यादिना** ॥ वाचा वागनुग्रहेण । वेदाः सन्धीयन्ते संहिततयोच्चार्यन्ते । वाचा च्छन्दांसि छन्दोभङ्गं विना सन्धीयन्ते । वाचा मित्राणि सन्दधति । वाचा सर्वाणि भूतानि परस्परं सन्धीयन्ते । अथो तस्मादिदं सन्धीयमानं सर्वं वागेव वागधीनमेवेति हेतोर्वाक् संहितेत्यन्वयः ।

नन्वेवमस्तु वाचः संहिताभिमानित्वं प्रतिपाद्यस्तु क इत्यतः 'सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि' इति भावेन तयोः परस्परानुबन्ध उच्यते– **तद् यत्रैतदित्यादिना** ॥ तद्वेदादिकम् । यत्र यदा अधीते भाषतेऽध्यापयति वा तदतिरिक्तं भाषते वा तदा प्राणस्थः प्रणेतृत्वात् प्राणनामा भगवान् वाचि भवति प्रतिपादकव्यापारप्राचुर्येण तदन्तर्गतो भवति । अत एव वेदोच्चारणादिकाले प्राणवायुनिरोध इति ज्ञातव्यम् । तदा वाक् प्राणं रेह्लि आस्वादयतीव अति-संश्लेषात् । अथ यत्र यदा तूर्ष्णी वेदादिकमुच्चारयन् वा भवति । प्रतिपाद्य-प्राणान्तर्गतभगवद्व्यापारप्राचुर्येण तदन्तर्गता भवति । अत एव तूर्ष्णीभावकाले प्राणवायुप्रवृत्तिप्राचुर्यमिति ध्येयम् । तदा प्राणो वाचं रेह्ल्यास्वादयतीवातिसंश्लेषेण स्वान्तर्निवेशनेनाप्रकटनात् । तौ वाक्प्राणौ एवमन्योन्यं रीह्लः आस्वादयतः । कुतः ? वाग् वै माता व्यञ्जकत्वात् । प्राणः पुत्रो व्यङ्ग्यत्वात् । तदप्येतत् तदन्योन्यास्वादकत्वमेतन्मातृत्वं च ऋषिणोक्तम् । सुपर्णः सुष्ठु परमानन्द-रूपः । सः चतुष्कपर्देति प्रकृतलक्ष्मीनारायणः । एक एव क्षीरसमुद्रं प्रविवेश । स इदं विश्वं भुवनं विचष्टे पश्यति । तं पाकेन परिपक्वेन । मनसान्तितः समीपेऽपश्यम् । तं माता रेह्लि । स उ सोऽपि मातरं रेह्लि आस्वादयतीवातिमित्रभावेन प्रतिपाद्यप्रतिपादकतया वर्तेते इति भावः । स य एवमित्यादिपूर्ववद् व्याख्येयम् । अथोपसंहारे भगवत एव चतुर्मूर्तेः पूर्वोत्तर-

इति खलु प्रसिद्धं वै। बहुशुश्रूषासाध्यत्वादतीवेयं विद्यारहस्येति भावेनोच्यते– **एतस्यामिति** ॥ एतस्यामुपनिषदि रहस्यविद्यायाम् । तादर्थ्ये सप्तमी । एतद्विद्यालाभार्थं तार्क्ष्यः संवत्सरं गुरोर्गा रक्षयते ह स्म । एतावन्मात्रविद्यार्थं कथं संवत्सरकालं गोरक्षणमित्यतोऽस्या एव परमगोप्यत्वादेतल्लाभार्थमेवेत्यव-धारणेनोच्यते– **एतस्यामिति** ॥ एतस्यां मायां एतावन्मात्रविद्यालाभार्थम् । तदेतल्लक्ष्मीनारायणयो रथन्तरबृहच्छब्दवाच्यत्वं ऋषिणाऽप्युक्तम् । वसिष्ठो रथन्तरमाजभार आजहार। भरद्वाजोऽग्रेश्चतुर्मूर्तेर्बृहदाचक्रे आह्वयामासेति। स य एवमित्यादेरुक्तोऽर्थः। संहितादेवता वह्नय इति मतान्तरमुच्यते– **वाक् प्राणे-नेति** ॥ कौण्ठरव्यः कुण्ठरव्यस्यापत्यं पुमान् । वाग् रमा । प्राणेनाच्युतेन मिलितैका संहितादेवता। प्राणो हरिः पवमानेन वायुना मिलितो द्वितीय-संहिता । पवमानो विश्वैः सर्वैर्देवैर्मिलितस्तृतीया संहिता । विश्वेदेवाः स्वर्गेण लोकेन शिवेन मिलिता चतुर्थी संहिता। स्वर्गो लोकः शिवः ब्रह्मणा चतुर्मुखेन मिलितः पञ्चमी संहितेत्याहेत्यन्वयः । सैषा संहिताऽवरपरा अवरपरयोर्मेल-नात् । वामभागगपङ्क्तौ क्रमेणावरपरभावस्य विद्यमानत्वाद्वा अवरादिपरान्त-त्वाद्वाऽवरपरनाम्नी । स यो ह प्रसिद्धो य एतामवरपरां संहितां वेद सः। यथैषा पञ्चविधसंहिता सन्धिता एवं हैव एवमेव खलु। प्राजदिभिः सन्धीयत इत्यर्थः। पठतोऽप्यभीष्टं भवति किमुपासकस्येति भावेनोच्यते– **स यदीत्या-दिना** ॥ स उपासकः परेण वा प्रयोजनार्थमुपसृजः । स्वेन वाऽर्थेन स्वप्रयोजननिमित्तेन वा। मन्त्ररूपामवरपरविद्यां यद्यभिव्याहरेत् ब्रूयात्। वचनात् पूर्वमभिव्याहर्तुमिच्छंश्च। विदुषामेतद्विद्यामुख्योपासकानाम्। देवानामेवमुक्तं फलं भविष्यति। कुतः संहितादेवता विष्णुः स्वविदुषां देवानामनुग्रहार्थं दिवमगमदिति विद्यात् चिन्तयीत। तथा तथा सत्येवं चिन्तने हि। यदर्थमेद्विद्यापठनमेतत्फलं तथा स्वकामानुसारेण । शश्वन्नियमेन स्यात् । न केवलमेतद्विद्यापठितुरुद्देश्यं फलं, किन्तु य एतां संहितामेवं देवानां महाफलप्रदेत्येवं वेदैतावन्मात्रं वेद

सोऽपि सन्धीयते प्रजयेत्यादि पूर्ववत् । पूर्वं हरिशर्ववन्मिलितानां लक्ष्म्यादीनां संहितात्वमुक्तम् । अधुना सरस्वत्या एव संहिताभिमानिदेवतात्वमिति पक्षान्तरमुच्यते– **वागिति** ॥ पञ्चालचण्डनामा मुनिर्वाक् सरस्वती संहितेति मन्यते । वाचः संहितात्वमुपपाद्यते– **वाचेत्यादिना** ॥ वाचा वागनुग्रहेण । वेदाः सन्धीयन्ते संहिततयोच्चार्यन्ते । वाचा च्छन्दांसि छन्दोभङ्गं विना सन्धीयन्ते । वाचा मित्राणि सन्दधति । वाचा सर्वाणि भूतानि परस्परं सन्धीयन्ते । अथो तस्मादिदं सन्धीयमानं सर्वं वागेव वागधीनमेवेति हेतोर्वाक् संहितेत्यन्वयः ।

नन्वेवमस्तु वाचः संहिताभिमानित्वं प्रतिपाद्यस्तु क इत्यतः 'सा देवी संहितानाम्नी वाच्योऽस्या विष्णुरेव हि' इति भावेन तयोः परस्परानुबन्ध उच्यते– **तद् यत्रैतदित्यादिना** ॥ तद्वेदादिकम् । यत्र यदा अधीते भाषतेऽध्यापयति वा तदतिरिक्तं भाषते वा तदा प्राणस्थः प्रणेतृत्वात् प्राणनामा भगवान् वाचि भवति प्रतिपादकव्यापारप्राचुर्येण तदन्तर्गतो भवति । अत एव वेदोच्चारणादिकाले प्राणवायुनिरोध इति ज्ञातव्यम् । तदा वाक् प्राणं रेह्लि आस्वादयतीव अति-संश्लेषात् । अथ यत्र यदा तूष्णीं वेदादिकमुच्चारयन् वा भवति । प्रतिपाद्य-प्राणान्तर्गतभगवद्व्यापारप्राचुर्येण तदन्तर्गता भवति । अत एव तूष्णींभावकाले प्राणवायुप्रवृत्तिप्राचुर्यमिति ध्येयम् । तदा प्राणो वाचं रेह्ल्यास्वादयतीवातिसंश्लेषेण स्वान्तर्निवेशनेनाप्रकटनात् । तौ वाक्प्राणौ एवमन्योन्यं रीह्लः आस्वादयतः । कुतः ? वाग् वै माता व्यञ्जकत्वात् । प्राणः पुत्रो व्यङ्ग्यत्वात् । तदप्येतत् तदन्योन्यास्वादकत्वमेतन्मातृत्वं च ऋषिणोक्तम् । सुपर्णः सुष्ठु परमानन्द-रूपः । सः चतुष्कपर्देति प्रकृतलक्ष्मीनारायणः । एक एव क्षीरसमुद्रं प्रविवेश । स इदं विश्वं भुवनं विचष्टे पश्यति । तं पाकेन परिपक्वेन । मनसान्तितः समीपेऽपश्यम् । तं माता रेह्लि । स उ सोऽपि मातरं रेह्लि आस्वादयतीवातिमित्रभावेन प्रतिपाद्यप्रतिपादकतया वर्तेते इति भावः । स य एवमित्यादिपूर्ववद् व्याख्येयम् । अथोपसंहारे भगवत एव चतुर्मूर्तेः पूर्वोत्तर-

वर्णसन्धिसन्धानदेवतात्वं शर्वपक्षतयोच्यते– **अथेत्यादिना** ।। अथातः प्रजापतिना शिवेनोक्ता संहितोच्यते । जायागतो वासुदेवः पूर्ववर्णप्रतिपाद्यः । पितृगतः सङ्कर्षण उत्तरवर्णप्रतिपाद्यः । पुत्रगतः प्रद्युम्नः सन्धिः । प्रजननं प्रजननकर्मस्थोऽनिरुद्धः सन्धानं पूर्वोत्तरवर्णयोः संहिततयोच्चरणलक्षणकर्मणि स्थः । सैषा चतुर्मूर्त्यात्मिका संहितादेवताऽदितिरदितिनामनी । पिता च माता च पुत्रश्च प्रजननं चेति यदिदं किञ्च रूपचतुष्टयमिदं सर्वं चादितिर्हि अधिष्ठानभूतं च पित्रादिकमदित्यधीनं हि । इदं पित्रादिशब्दजातं तत्प्रतिपादकं हि । तदेतत् सर्वमपि ऋषिणोक्तम् । अदितिर्माता स पिता स पुत्र इतीदं प्रतीकग्रहणम् । स य एवमित्यादिफलवाक्यं पूर्ववत् ।। ६ ।।

## ।। इति तृतीयप्रघट्टके प्रथमोऽध्यायः ।।

## ।। अथ द्वितीयोऽध्यायः ।।

**उपनिषत्-**

**(ह्रस्वमाण्डूकेयमुनेरध्यात्मोपासना)**

**प्राणो वंश इति स्थविरः शाकल्यस्तद् यथा शालावंशे सर्वेऽन्ये वंशाः समाहिताः स्युरेवमस्मिन् प्राणे चक्षुः श्रोत्रं मनो वागिन्द्रियाणि शरीरं सर्व आत्मा समाहितस्तस्यैतस्याऽत्मनः प्राण ऊष्मरूपमस्थीनि स्पर्शरूपं मज्जानः स्वररूपं मांसं लोहितमित्येतदन्यच्चतुर्थमन्तस्थरूपम् । इति ह स्माऽह ह्रस्वो माण्डूकेयः ।।**

**भाष्यम्-**

गृहस्याऽच्छादनादीनां मध्यवंशो यथाऽश्रयः ।
तथेन्द्रियाभिमान्यादिदेवानां ह्यायुराश्रयः ।

तेषु सर्वेषु भगवान् बहुरूपो हरिः स्थितः।
विष्णुनामाक्षरेष्वेवमन्येष्वपि तदर्थतः।
प्राणनामा तु भगवान् प्राणस्थश्चोष्मसु स्थितः।
ऊष्मनामा समर्थत्वात् स एव भगवान् हरिः।
पूर्णत्वादात्मनामाऽसौ प्रतिमात्वादमुष्य तु।
सङ्घात आत्मशब्दोक्तो ह्यस्थिरश्चास्थिनामकः।
अस्थिस्थितो स्पर्शसंस्थितः स्पर्शनामकः।
स्पर्शहेतुत्वतः स्पर्शनामा स भगवान् हरिः।
मज्जासुस्थः स मज्जाख्यो मदं जनयतीति ह।
स एव स्वरसंस्थश्च स्वराख्यः स्वरतेः प्रभुः।
प्रमाणं सारयेद् यस्मान्मांसाख्यो मांससंस्थितः।
लोहिताख्यो रक्तवर्णो लोहितस्थो जनार्दनः।

**टिप्पणी -**

प्राणस्य वंशत्वोपपादकं तद् यथेत्यादि व्याचष्टे– **गृहस्येति** ।। आच्छादनमावरकं फलकादि। आदिपदेनोपवंशग्रहणम्। इन्द्रियाभिमान्यादीत्यादिपदेन शरीराभिमानिनः सर्व आत्मेत्युक्तसङ्घाताभिमानिनश्च ग्रहणम्। शरीरपदेन परिदृश्यमानावयविभूतं गृह्यते। आत्मपदेन प्राणेन्द्रियशरीरसप्तधातुतदभिमानिलक्षणचेतनाचेतनसमुदायो गृह्यते। अत एव सर्व आत्मा समाहित इत्यस्य सर्वेषु तेषु बहुरूप आत्मा परमात्मा समाहित इत्यर्थान्तरमाह– **तेष्विति** ।। प्रकारान्तरेण व्याचष्टे– **तेष्विति** ।। यस्त्वेषु सर्वेषु प्राणादिष्वात्माऽन्तर्यामी समाहितः स एव सर्वेषु विष्णुनामाक्षरेषु तदर्थसतद्व्याख्यानरूपत्वादेवं विष्णुनामाक्षरेष्विव वाऽन्येषु वेदाद्यक्षरेषु च समाहित इत्यर्थः। तस्यैतस्याऽत्मनः प्राण इत्यादिकं व्याचष्टे– **प्राणनामेत्यादिना** ।। ऊष्मसूष्माक्षरेषु। समर्थत्वाच्छत्रुदाहे समर्थत्वात्। उष दाह इति धातोः। यद्वोषिरेव सामर्थ्येऽपि वर्तते।

'ऊष्मावच्चानूष्मावच्च' 'अस्यैव चोपपत्तेरूष्मा' इति प्रयोगात् । तस्यैतस्याऽत्मन इत्यत्राऽत्मशब्दार्थमाह– **पूर्णत्वादिति** ।। आततत्वादात्मा ततिश्च पूर्तिरिति भावः। सङ्घातस्य कथं तर्ह्यात्मशब्दवाच्यत्वमित्यत आह–**प्रतिमात्वादिति** ।। सङ्घातस्तु प्रतिमात्वादेवाऽत्मशब्दोक्तो न तु पूर्णत्वादित्यर्थः । एतेन तस्यात्मनः सङ्घाताख्यात्मन आदानादिकर्तुरेतस्य परमात्मन इत्युपनिषदर्थ इत्युक्तं भवति । अस्थिस्पर्श-मज्जास्वरमांसलोहितशब्दान् व्याचष्टे– **अस्थिर इत्यादिना** ।। 'वायुश्च वायुसंस्थश्च कदाचिन्नहि तिष्ठतः' इत्यादेरेकत्र स्थिरो नित्यसंचारीत्यर्थः । स्पृश्यतेऽनेनेति स्पर्शः । मदं जनयतीति मज्जा । उपपदाकारलोपश्श्रुत्वं चेति भावः । यद्वा भावे मदिति किबन्तः । तथाच मत् मदं जनयतीति मज्जा । 'मत्सरा मादयिष्णवः' इत्यत्र ऋग्भाष्यटीकायां 'मत् मदम् । सरन्ति सारयन्तीति मत्सरा' इति व्याख्यातत्वात् । श्वन्नुक्षन्नित्याद्युणादिसूत्रे कनिन्प्रत्ययान्ततया निपातितत्वेन मज्जा मज्जानौ मज्जान इति नकारान्तस्योपनिषद्युपात्तत्वेऽप्याकारान्तस्य मज्जाशब्दस्य प्रायिकत्वाद् भाष्ये मज्जा सुस्थ इत्युक्तम् । प्रमाणं वेदादिकं सारयेत् प्रवर्त-येत् । मांसपुष्ट्यभावेऽस्थिचर्मावशेषस्य वेदोच्चारणशक्त्यभावादिति भावः ।

**उपनिषत्-**

**त्रयं त्वेव न एतत् प्रोक्तं तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति त्रीणीतः षष्टिशतानि त्रीणीतस्तानि सप्तविंशतिशतानि भवन्ति ।। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतमहःसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाह्वां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ।।**

**।। इति प्रथमः खण्डः ।।**

**भाष्यम्-**

**अस्थिस्थान्येव रूपाणि पर्वस्वपि हरेर्यतः।**
**तत एव विभक्तानि सङ्ख्या तेषां पृथङ् न तत्।**
**तस्मात् सप्तशतान्येव देहे विंशच्च तस्य हि।**
**रूपाणि विष्णोर्भागे तु षष्ट्युत्तरशतत्रयम्।**
**तान्येव विष्णो रूपाणि वत्सराहःसु सर्वशः।**
**अहर्नामा च भगवानहार्यत्वात् प्रकीर्तितः।**
**अहोभिः समसङ्ख्यानि यस्मादध्यात्मगानि तु।**
**तादृक्श्रवणशक्तित्वाद् तथा श्रोत्रमयः स्मृतः।**
**छन्दोमयः सत्यकामो मन्तृवक्तृबलात्मकः।**
**एवं विद्वांस्तस्य रूपाण्याप्नोति ज्ञानपुत्रवान्।**
**पीयमानं शमाप्नोति प्राप्याहर्नामकं हरिम्॥**

**टिप्पणी -**

ननु देहेऽस्थ्नां मज्ज्ञां पर्वणामधिष्ठानभूतानां पृथक् षष्ट्युत्तरशतत्रयसद्भावात् कथं तद्गतरूपाणामेकैकभागे षष्ट्युत्तरत्रिशतत्वं सम्भूय विंशत्युत्तरसप्तशतत्वं च किन्त्वेष्वेतत्खण्डानुसारेणैकैकभागे चत्वारिंशदुत्तरपञ्चशतत्वं सम्भूयाशीत्युत्तरसहस्रत्वं वक्तव्यमित्यत आह– **अस्थिस्थान्येवेति**॥ यतो हरेरस्थिस्थान्येव रूपाणि पर्वस्वपि सन्ति तत् ततः तेषां पर्वगतानां पृथक् सङ्ख्या नास्ति। तस्मात् तस्य हरेरस्मदादिदेहे तस्य विष्णो रूपाणि सप्तशतानि विंशच्च विंशतिसङ्ख्याकानि च। भागे तु एकैकस्मिन् भागे तु रूपाणां षष्ट्युत्तरशतत्रयमिति योजना। नन्वस्थिपर्वगतरूपाणामेकत्वे त्रयं त्वेव न एतत्प्रोक्तमिति कथं रूपत्रैविध्यमुक्तम्। कथं वोत्तरखण्डेनाविरोध इत्यत उक्तम्– **तत एव विभक्तानीति**॥ अस्थिगतेभ्यः पर्वगतानां विभक्तत्वात् तेषामेव स्थानद्वयसम्बन्धाभावात् त्रयं त्वेवेति त्रैविध्यकथनं अशीतिसहस्रं भवतीत्युत्तरखण्डाविरोधश्च। विभागेऽपि समाननामकत्वाल्लक्षणसाम्याच्च

मूलमूलिनोरेकव्यूहत्वविवक्षया विंशत्युत्तरसप्तशतत्वोक्तिरिति भावः । सप्त चैव शतानि विंशतिश्च संवत्सरस्याहोरात्रा इत्यत्र तान्येवेत्यस्यानुवृत्तिमभिप्रेत्य व्याचष्टे– **तान्येवेति** ।। यानि विष्णुरूपाण्यस्थ्यादिस्थानि विंशत्युत्तरसप्तशतसङ्ख्याकानि तान्येवेत्यर्थः । अत्राहःशब्दोऽहोरात्रपरः । स एषोऽहःसम्मान इत्यादि व्याचष्टे– **अहोभिरित्यादिना** ।। अध्यात्मगानीत्यन्तेन । स एष आत्मेत्यन्वयः सूचितः । चक्षुर्मय इत्यादौ मयट् प्राचुर्यार्थः । चक्षुरादिशब्दश्च चष्टेऽनया शक्त्येत्यादिव्युत्पत्त्या दर्शनादिशक्तिपर इत्यभिप्रेत्य व्याचष्टे– **पूर्णेति** ।। छन्दोमयत्वं नाम कामपूर्णत्वम् । छन्देरिच्छार्थत्वात् । कामपूर्तिर्नाम कामिताप्रतिघातः सत्यकामत्वमिति यावत् । मन्तृवक्तृशब्दौ भावप्रधानौ । बलं शक्तिः । सर्वमन्तृत्वसर्ववक्तृत्वशक्त्यात्मक इत्यर्थः । यद्वा बलात्मक इत्यात्मशब्दार्थः । स य एवमित्यादिफलवाक्यं व्याचष्टे– **एवमिति** ।। रूपाण्यहर्नामकानि ज्ञानस्यापि पुन्नाम्नो नरकात् त्राणहेतुत्वात् पुत्रशब्दवाच्यत्वं ज्ञेयम् । पशुमानित्यत्र पीयत इति पं तच्च तत् शं च पशम् । ताच्छील्यार्थे अकारस्थाने उकारः । स्वरूपभूतानुभूयमानानन्दवानित्यर्थमभिप्रेत्योक्तम्– **पीयमानमिति** ।। कौण्ठरव्यस्तु विष्णुनाम्नोऽन्यनाम्नो वाऽक्षराणां पञ्चाशदक्षराणां वा तन्नामकानां तद्गतानां रूपाणां त्रीणि षष्टिशतानि षष्ट्युत्तरत्रिशतानि । ऊष्मणां विष्णुनामादिनिष्ठोष्माक्षरगतानां तत्प्रतिपाद्यानां रूपाणां त्रीणि षष्टिशतानि । विष्णुनामादिगतसन्धिगतानां सन्धानात् सन्धिनामकानां रूपाणां त्रीणि षष्टिशतान्याहत्याशीत्युत्तरसहस्ररूपाण्युपास्यान्याहेत्यर्थः ।। १ ।।

**खण्डार्थः -**

ॐ प्राणो वंश इति विद्यादिति यत् प्रास्य विष्णुनामप्रतिपाद्यभगवद्रूपाधिष्ठानभूतास्थ्याद्यभिमानिसर्वदेवाश्रयत्वमुपक्षिप्तं तदुपपादयितुमयमध्यायः । प्राणो मुख्यवायुर्वंशः सर्वाश्रय इति स्थविरः शाकल्यः शालामध्यगते वंशे सर्वे आच्छादकपदार्था अन्ये वंशाश्च समाहिताः स्युस्तन्निदर्शनं यथा एवमस्मिन् प्राणे चक्षुःश्रोत्रं

मनोवागन्यानीन्द्रियाणि तदभिमानिदैवतानि । शरीरं तदभिमानी । सर्व आत्मा एवमुक्तोऽनुक्तश्चेतनाचेतनात्मकः सर्वोऽपि सङ्घातः समाहितः । तेषु सर्वेषु सर्वो बहुरूपयात्मा पूर्णत्वादात्मनामा भगवान् समाहितः स्थितः । य आत्मा तेषु सर्वेषु समाहितः स एव विष्णुनामाक्षरेषु तद्व्याख्यानरूपेषु सर्वेषु शब्देषु च समाहित इति योज्यम् । तदेव विविच्योच्यते– **तस्येत्यादिना** ॥ तस्यैतस्याऽत्मनः तस्य शरीराख्यस्य आत्मनः आदानादिकर्तृत्वादात्मनः एतस्य विष्णोः प्राणः प्राणगतमध्यात्मरूपम् । अधिदैवं समर्थत्वादूष्मनाम ऊष्मसु स्थितमूष्माक्षरप्रतिपाद्यम् । अस्थिरत्वादस्थिनामकान्यस्थिषु स्थितरूपाणि अधिदैवं स्वररूपम् । स्वस्मिन् रतत्वात् स्वरनामकानि स्वरगतानि स्वरसंज्ञिताज्वर्णप्रतिपाद्यानि । मांसं लोहितमित्येतन्मां प्रमाणं सारयति प्रवर्तयतीति मांसम् । रक्तवर्णत्वाल्लोहितमित्येतन्नामकं तदुभयगतं पूर्वोक्तरूपेभ्योऽन्यच्चतुर्थं रूपम् । अन्तस्थरूपं सर्वान्तस्थत्वादन्तस्थनामकमन्तस्थाक्षरगतं तत्प्रतिपाद्यं चेति ह स्माऽह स्थविरः शाकल्यः । ह्रस्वो माण्डूकेयस्तु इति वक्ष्यमाणप्रकारेणाऽह स्म । नो मते एतत्त्रयमेवोपास्यं प्रोक्तम् । नः अस्मभ्यम् । एतत्त्रयमेव अस्थिमज्जापर्वगतं त्रिविधरूपमेव । गुरुभिः प्रोक्तमिति वा । अस्थ्नां मज्ज्ञां पर्वणामिति त्रयस्य त्रयगतस्य तस्यैतस्य हरे रूपाणि । इतो दक्षभागे । त्रीणि षष्टिशतानि षष्ट्युत्तरत्रिशतानि । इतो वामभागे त्रीणि षष्टिशतानि षष्ट्युत्तरत्रिशतानि सन्ति । एकैकभागेऽस्थ्नामशीत्युत्तरशतमेवं मज्ज्ञाम् । पर्वणामस्थ्यन्तर्भावान्न पृथग्गणना । एवं चैकैकभागे षष्ट्युत्तरत्रिशतानीति भावः । तानि पार्श्वद्वयस्थानि मिलितानि तानि रूपाणि । सप्तविंशतिशतानि भवन्ति विंशत्युत्तरसप्तशतानि भवन्ति । एवमध्यात्मगतानां रूपाणां तत्समसङ्ख्याकसंवत्सराहोरात्रगतत्वमित्युच्यते– **सप्त चेति** ॥ यान्यध्यात्मं सप्तशतानि विंशतिश्च रूपाणि भवन्ति तान्येव सप्तशतानि विंशतिश्च संवत्सरस्याहोरात्रा वै । विंशत्युत्तरसप्तशतसङ्ख्याकसंवत्सराहोरात्रगतान्यहार्यत्वाद् रतिदत्वाच्चाहोरात्रनामकानीत्यर्थः । रतिं राति

ददातीति रात्रिरिति व्याख्यातं भविष्यति । एवमध्यात्मगतस्य भगवत उपास्त्यर्थं गुणा उच्यन्ते– **स एष इत्यादिना** ।। स एषोऽध्यात्मगत आत्मा । अहःसम्मानः अहोभिः समसङ्ख्याकत्वादहःसम्मानः । सर्वदर्शनसर्वश्रवणसत्यकामत्वसर्वमन्तृत्व-सर्ववक्तृत्वशक्तियुक्तत्वाच्चक्षुर्मयादिनामको बलरूपत्वादात्मा च । स य एतमात्मानमहःसम्मानत्वादिधर्मोपेतं वेद सोऽह्नामहर्नामिकानां रूपाणाम् । सायुज्यादिकमश्नुते प्राप्नोति । ज्ञानाख्यपुत्रवान् भवति पीयमानसुखवान् भवति । सर्वं पूर्णं नित्यमायुश्चैति ।।

**।। इति प्रथमः खण्डः ।।**

**उपनिषत्-**

**(कौण्ठरव्यमुनेरध्यात्मोपासना)**

**अथ कौण्ठरव्यस्त्रीणि षष्टिशतान्यक्षराणां त्रीणि षष्टि-शतान्यूष्मणां त्रीणि षष्टिशतानि सन्धीनाम् ।। यान्यक्षराण्यवोचामाहानि तानि यानूष्मणोऽवोचाम रात्रयस्ता यान् सन्धीनवोचामाहोरात्राणां ते सन्धय इत्यधिदैवतम् ।।**

**भाष्यम्-**

**(मुनिमतेषु केवलं विवक्षाभेदो नतु विरोधः)**

'एवमुक्तप्रकारेण तस्य ह्यक्षरनामकम् ।
अशीत्युत्तरसाहस्ररूपं वर्णेषु संस्थितम् ।
विष्णुनाम्नोऽथवाऽन्येषु पञ्चाशत्सङ्ख्यकेष्वपि ।
तावत्सङ्ख्यानि देहेषु पृथङ् मज्जास्थिपर्वसु ।
रूपाणि विष्णोस्तावन्ति [१]चेष्टकानि पृथक् पृथक् ।

१. चेष्टकासु- ह.पा.

अर्कस्थितबृहत्याख्यरूपाण्यह्नां च सर्वशः ।
सम्पादकानि तान्येव तान्यक्षरमितानि च ।
अस्थ्यादिस्थितरूपाणि तान्युपास्य विमुच्यते ।।' इति च ।।

## (अस्थिमज्जादिपदानि विष्णुपराणि)

**तस्यैतस्याऽत्मनः तस्य शरीराख्यस्याऽत्मनो य आत्मा आदानादिकर्ता तस्य परमात्मन एतस्य । अस्थ्नां मज्ज्ञां पर्वणां च मिळितानामपि विंशोत्तरशतत्वोक्तेरपि तत्रस्थविष्णुरूपाण्येवोच्यन्त इति सिद्धम् । अस्थ्यादीन्येव चेदशीत्युत्तरसहस्राणि सन्ति हि ।**

**टिप्पणी -**

अक्षराणामक्षरगतरूपाणां अब्रह्मविद्यात्वप्रतीतेः कौण्ठरव्य इत्यारभ्य सर्वमायुरित्यन्तस्य खण्डस्य तात्पर्यमाह– **एवमित्यादिना** ।। यथा ह्रस्व-माण्डूकेयोक्तप्रकारेण विंशत्युत्तरसप्तशतरूपाणि ज्ञात्वा विमुच्यते एवं कौण्ठ-रव्योक्तप्रकारेण तान्यशीत्युत्तरसहस्ररूपाण्युपास्यंमुच्यत इति योजना । कौण्ठरव्योक्तं प्रकारमेवाह– **तस्येति** ।। अक्षरपदेनाक्षरोष्मसन्धीनां त्रयाणां ग्रहणम् । वर्णेषु अक्षरोष्मसन्धिषु । अन्येषु अन्यनामाक्षरोष्मसन्धिषु । अशीत्युत्तरसहस्ररूपं स्थितम् । पञ्चाशत्सङ्ख्याकेष्वपि वर्णेषु तावत्सङ्ख्यानि रूपाणि वर्तन्त इत्यर्थः । एतेन त्रीणि षष्टिशतानीत्यारभ्य सन्धीनामित्यन्तस्य तात्पर्यमुक्तं भवति । यान्यक्षराण्यधिदैवतमवोचामास्थीनि तानीत्यादेस्तात्पर्यम्– **देहेषु पृथङ् मज्जास्थिपर्वसु** ।। **रूपाणि विष्णोस्तावन्तीति** ।। मज्जास्थिपर्वसु पृथक् पृथक् षष्ट्युत्तरशतसङ्ख्यया विद्यमानानि रूपाणि मिलित्वा तावन्ति अशीत्युत्तरसहस्राणी-त्यर्थः । अत्राध्यात्ममित्यस्य तात्पर्यम्– **देहेष्विति** ।। अधिदैवादिस्वस्थानान्तरमिति सूचनाय **पृथगिति** ।। यद्वा, पूर्वखण्डेऽस्थिस्थानामेव पर्वगतत्वादन्तर्भावविवक्षया विंशत्युत्तरसप्तशतत्वमुक्तम् । अधुना तु मज्जास्थिपर्वसु विष्णोस्तावन्ति रूपाणि पृथक् पृथक् विवक्षयोच्यन्त इत्यर्थः । मज्जासु विशेषसन्निधानद्योतनायानन्तरोक्ताया

मज्जायाः प्रथमं ग्रहणम् । तेन एष ह वै सम्प्रति प्राण इत्यादेस्तात्पर्यं सूचितम् । यद्वा, तावत्सङ्ख्यानीत्येतद् देहेष्वित्युत्तरेण सम्बद्ध्यते । देहेषु तावत्सङ्ख्याकानि रूपाणि वर्तन्त इत्यर्थः । तेन अशीतिसहस्रं वा अर्कलिनो बृहतीरहरभिसम्पादयन्तीत्यत्राशीतिसहस्ररूपाणां शरीरे स्थित्वा बृहतीसहस्रसम्पादकत्वं यदुक्तं तस्य तात्पर्यमुक्तं भवति । मज्जास्थिपर्वस्वित्यादेरुक्त एवार्थः । मज्जास्थिपर्वगताशीत्युत्तरसहस्ररूपाण्येव देहगततयोच्यन्त इति न मन्तव्यमिति भावेन देहगतरूपाण्यन्यानि मज्जादिगतान्यन्यानीति सूचयितुं देहगतेभ्यः पृथङ्मज्जास्थिपर्वसु तावन्ति रूपाणीत्युक्तम् । कुत एवमुक्तवक्ष्यमाणबहुस्थानेष्वशीत्युत्तरसहस्ररूपाणामङ्गीकार्यत्वमित्यत उक्तम्– **चेष्टकानीति** ।। अक्षरनियामकत्वान्मज्जादिषु स्थित्वा रेतआद्यात्मना परिणामनियामकत्वात् पुरुषे स्थित्वा वाक्प्रेरकत्वाद् यज्ञप्रवर्तकत्वात् सूर्यादौ स्थित्वाऽहरादिप्रवर्तकत्वादिति भावः । अशीतिसहस्रं वाऽर्कलिन इत्यादेस्तात्पर्यम्– **अर्केति** ।। अर्कस्थितेत्यनेनार्के लीनतया स्थितत्वादर्कलिनामानीत्युक्तं भवति । बृहतीरित्यस्यार्थः– **बृहत्याख्येति** ।। अहरभिसम्पादयन्तीत्यस्यार्थः– **तान्येवाह्नां सम्पादकानीति** ।। स एषोऽक्षरसम्मान इत्यस्यार्थः– **तान्यक्षरमितानीति** ।। तान्यस्थ्यादिस्थितरूपाणि अक्षरमितानीत्यर्थः । स य एवमेतदक्षरसम्मानमित्यादेरर्थः– **तान्युपास्येति** ।। एवं खण्डद्वयं प्रमाणेन व्याख्याय पूर्वखण्डे तस्यैतस्याऽत्मनः प्राण ऊष्मरूपमित्यत्र तच्छब्देन प्रकृतसङ्घातपरामर्शे तस्योष्माक्षरप्रतिपाद्यत्वमयुक्तं भगवन्मात्रपरामर्शे प्रकृतत्याग इत्यतो व्याचष्टे–**तस्यैतस्येति** ।। तस्यैतस्याऽत्मन इत्यनूद्य तस्याऽत्मन इत्यस्यार्थः– **तस्य शरीराख्यस्याऽत्मन इति** ।। आत्मन इत्येतदावर्तत इति भावेनानुवादपूर्वमर्थमाह– **आत्मनो य आत्मा आदानादिकर्ता तस्येति** ।। विशेष्यप्रदर्शकमेतस्येत्येतदर्थकथनपूर्वमनुवदति– **परमात्मन एतस्येति** ।। अस्थ्नां मज्ज्ञां पर्वणामिति त्रीणि इत्यादिवाक्यमस्थ्यादिनामकभगवद्रूपपरतया व्याख्यातम् । आस्थ्यादिपरमेव किन्न स्यादित्यत आह– **अस्थ्नामिति** ।। विंशत्युत्तरसप्तशतसङ्ख्याकतयोक्तान्यप्यस्थ्यादीनि किन्न स्युरित्यत आह– **अस्थ्यादीन्येव चेदिति** ।।

**भाष्यम्-**

## (विष्णुनाम्नि भगवद्रूपाणि)

'ष्' 'ण्' 'ष्णुः' इत्येतानि विष्णुनामगतान्यूष्माक्षरसन्धिनामकानि तद्गतभगवद्रूपाणि मुख्यतस्तन्नामकानि।

## (कौण्ठरव्यमुनेरुपासना स्मृतिग्रन्थेषु)

**अहार्यत्वादहर्नामा रात्रिनामा रतिप्रदः।**
**सन्धानात् सन्धिनामाऽसौ स्वयं नारायणः प्रभुः।**
**सन्ध्यूष्माक्षरगाण्यस्य विष्णो रूपाणि सर्वशः।**
**सन्ध्यारात्रिदिवास्थानि साशीतिकसहस्रकम्।**

**टिप्पणी -**

त्रीणि षष्टिशतान्यक्षराणामित्यादिनोष्माक्षरसन्धिनामकान्युक्तानि कानि तानि विष्णुनाम्नीत्यत आह– **ष् ण् ष्ण् इत्येतानीति** ॥ ष् इत्यूष्म, ण् इति तदतिरिक्तमक्षरम्, ष्णु इति सन्धिरित्यर्थः। तर्ह्यूष्मणामक्षराणां सन्धीनामिति बहुवचनानुपपत्तिरित्यत आह– **तद्गतेति** ॥ तद्गतभगवद्विवक्षया बहुवचनम्। तथाचोष्मणामूष्माक्षरगतानां रूपाणामिति भावः। उपसर्गमात्रं वीत्याहुः। केचिन्नाम 'ष्णुमात्रकं षकारं च वर्णौ पूर्वोत्तरावपि' इति पक्षानुसारेण ष् ण् ष्ण् इत्येतानीत्युक्तं क्वचिद् विष् णु ष्णुः इत्येतानि भाष्यटीकयोः पाठः। तदोपसर्गस्याप्यनुवादमात्रमिति ज्ञेयम्। अहानि तानि रात्रयस्तास्ते सन्धय इत्युक्ताहरादिशब्दान्निर्वक्ति– **अहार्यत्वादिति** ॥ अहार्यत्वात् तिरस्कार्यत्वात् सन्धानाद् दिवारात्र्योः सन्धिकरणाद् यान् सन्धीन् अवोचाम ते सन्धयः। यानूष्मणोऽवोचाम रात्रयस्ताः। तान्यक्षराणि तान्यहानीत्येतद् व्याचष्टे– **सन्ध्यूष्मेति** ॥ साशीतिकसहस्रकमशीत्युत्तर-सहस्रसङ्ख्याकानि विष्णो रूपाणीत्यर्थः।

उपनिषत्-

(कौण्ठरव्यमुनेरुपासना - अध्यात्मे)

अथाध्यात्मम् ॥ यान्यक्षराण्यधिदैवतमवोचामास्थीनि तान्यध्यात्मम् ॥ यानूष्मणोऽधिदैवतमवोचाम मज्जानस्तेऽध्यात्ममेष हवै सम्प्रति प्राणो यन्मज्जैतद्रेतो न हवा ऋते प्राणाद् रेतः सिच्यते यद् वा ऋते प्राणाद् रेतः सिच्यते यद् वा ऋते प्राणाद् रेतः सिच्येत ॥ पूयेन्न सम्भवेद् यान् सन्धीनधिदैवतमवोचाम पर्वाणि तान्यध्यात्मम् ॥ तस्यैतस्य त्रयस्यास्थ्नां मज्ज्ञां पर्वणामिति ॥ पञ्चेतश्चत्वारिंशच्छतानि पञ्चेतस्तदशीति-सहस्रं भवत्यशीतिसहस्रं वा अर्कलिनो बृहतीरहरभि-सम्पादयन्ति ॥

स एषोऽक्षरसम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतमक्षरसम्मानं चक्षुर्मयं श्रोत्रमयं छन्दोमयं मनोमयं वाङ्मयमात्मानं वेदाक्षराणां सायुज्यं सरूपतां सलोकतामश्नुते पुत्री पशुमान् भवति सर्वमायुरेति ॥

॥ इति द्वितीयः खण्डः ॥

भाष्यम्-

तान्येवास्थिषु मज्ज्ञासु पर्वस्वपि च सर्वशः।
परज्ञानात्तु पर्वाणि विष्णो रूपाणि तानि हि।
अस्थानान्मदनाच्चैव ह्यस्थिमज्जाभिधानि च।

व्यक्तिर्मज्जासु तस्यैव प्राणो मज्जासु हि स्थितः।
मज्जैव रेतो भवति रेतसिस्थो विशेषतः।
प्राणस्तेन हि तद्रेतो युक्तं प्राणेन सर्वदा।
यदि प्राणो न तद्रेतो न गर्भत्वं व्रजेत् क्वचित्।
विशेषप्राणसम्बन्धवर्जितान्यत एव हि।
न मांसादीनि गर्भत्वं यान्त्यतः स हि रेतसि।
विशेषेण स्थितः प्राणः प्राणे चैव विशेषतः।
स्थितो नारायणो देवस्तस्मान्मज्जासु च स्थितः॥' इति च॥

मज्जास्वधिकसन्निधानज्ञापनार्थमिदं वचनम्। अशीत्युत्तरसहस्रवर्णानामभावाच्च तत्स्थविष्णुरूपाण्येव तत्सङ्ख्यानीति सिद्धम्। अर्के निलीनत्वेनादृश्यत्वेन स्थिता भगवत्प्रादुर्भावा अर्कलिनः। त एव शरीरे स्थित्वा सहस्रं बृहतीः सम्पादयन्ति। वाक्प्रेरकत्वाद् विष्णुनामार्थवत्त्वादेव च बृहतीसहस्रस्य तद्देवताश्चैतान्येवाशी-त्युत्तरसहस्ररूपाणि। एतान्येवाहःप्रवर्तकानि च। अहःशब्देन यज्ञो दिवसश्चोभावप्यभिप्रेतौ।

'यज्ञानां दिवसानां च साशीतिकसहस्रकैः।
विष्णुः प्रवर्तको रूपैर्बृहत्युक्थस्य चाञ्जसा॥
बृहत्युक्थेन वाच्यानि रूपाण्येतान्यधीशितुः॥' इति च॥

**टिप्पणी -**

यान्यक्षराण्यस्थीनि तानीत्यध्यात्मप्रकरणं व्याचष्टे– **तान्येवेति**॥ पर्वशब्द-व्याख्यानपूर्वमस्थिमज्जाशब्दौ च निर्वक्ति– **परज्ञानादिति**॥ वा गतिगन्धनयोरिति धातोर्वातिर्गत्यर्थत्वादज्ञानादित्युक्तम्। तुशब्देन परज्ञानादेव न तु पूर्वाभेदादि-त्यर्थः। अस्थानादस्थिरत्वान्मदनान्मदजनकत्वात्। एवकारेण न तु मस्जधातुप्रकृतिक-मज्जाशब्दवाच्यप्रसिद्धमज्जभेदेनेति सूचयति। एष वै मज्जेत्यस्य तात्पर्यमाह–

**व्यक्तिरिति** ।। तस्य विष्णोर्व्यक्तिर्विशेषसन्निधानम् । एष वै सम्प्रति प्राणो मज्जेत्यस्यार्थः– **प्राण इति** ।। मज्जासु स्थितः प्राण इत्यर्थः । न ह वा ऋते प्राणाद्रेतः सिच्यत इत्यत्र प्राणात् प्राणेन युक्तं रेतः सिच्यते गर्भत्वं प्राप्नोतीत्यर्थं तावदाह– **तेन हीति** ।। येन कारणेन रेतसि विशेषसन्निधानं ज्ञायत इति भावः । ननु प्रायोऽधुना रेतसो गर्भत्वाप्राप्तेः कथं सामर्थ्यमित्याशङ्का-वारकत्वेन न ह वेति समग्रं वाक्यं व्याचष्टे– **यदीति** ।। प्राणादृते प्राणसन्निधानमृत इत्यर्थः ।। **प्राणो रेतसि यदि नेति** ।। रेतो न ह वा सिच्यत इत्यस्यार्थः– **तद्रेत इति** ।। क्वचित् कलियुगे मानुषादिषु सर्वदा तद्रेतो न गर्भत्वं व्रजेदि-त्यर्थः । उत्सर्गतो हि कारणानां कार्यकरत्वं क्वचित् सहकारिविरहवशात् कार्याभावः नैतावता शक्त्यभावनिश्चय इति भावः । एतेनैव यद्वा ऋते प्राणाद्रेतः सिच्येत पूयेदित्यपि व्याख्यातप्रायम् । प्रकारान्तरेण व्याचष्टे–**विशेषेति** ।। प्राणादृत इत्यस्यार्थः विशेषप्राणसम्बन्धवर्जितानीति । रेतो ऋते रेतोव्यतिरिक्तमित्यस्यार्थः– **मांसादी-नीति** ।। न सम्भवेदित्यस्यार्थः– **न गर्भत्वमिति** ।। अत एव विशेषसम्बन्ध-वर्जनादेव । उपसंहरति– **अत इति** ।। भवतु प्राणस्य रेतसि सन्निधानमत एव मज्जासु तावता भगवतो मज्जास्थत्वं कुत इत्यतः प्रवृत्तस्य एष वै सम्प्रति प्राण इत्यस्यैष परमात्मा प्राणः प्राणे स्थित इत्यर्थमाह–**प्राणे चेति** ।। ततश्च किमित्यत आह– **तस्मादिति** ।। विशेषत इत्यनुवर्तते । एष वै सम्प्रति प्राण इत्यादः स्सङ्गतिमाह– **मज्जास्विति** ।। त्रीणि षष्टिशतान्यक्षराणामित्यादौ भगवद्रूपाण्येवोच्यन्त इति प्रमाणेनोक्तं युक्तिमप्याह– **अशीतीति** ।। वर्णानामक्षराणामूष्मणां सन्धिना मिलितानामप्यशीत्युत्तरसहस्राभावादित्यर्थः । तत्स्थरूपाणि अक्षरोष्मसन्धि-निष्ठरूपाणि । तत्सङ्ख्याकान्यशीत्युत्तरसहस्रसङ्ख्याकानि । अर्कलिन इत्येतदप्रती-तेर्व्याचष्टे– **अर्क इति** ।। अर्कगतरूपाणां बृहतीसम्पादकत्वं कथमित्यत आह– **त एवेति** ।। तदुपपादयति– **वागिति** ।। न केवलं सूर्ये स्थितानां विष्णुनामाक्षर-गतानां तत्प्रतिपाद्यरूपाणां पुरुषे स्थित्वा बृहतीसम्पादकत्वं किन्तु बृहतीस्थत्वं

तद्वाच्यत्वं चेति भावेनाशीतिसहस्रं वाऽर्कलिनो बृहतीरित्युक्तम्। तद्विभक्तिव्यत्ययेन व्याचष्टे– **विष्णुनामेति** ।। यानि सूर्यगतानि पुरुषे स्थित्वा बृहतीं सम्पादयन्ति तान्येव विष्णुनामाक्षरगतानि तत्प्रतिपाद्यानि अशीत्युत्तरसहस्ररूपाणि बृहत्यः तद्देवताः बृहतीसहस्रगताः तत्प्रतिपाद्यदेवताश्चेत्यर्थः। तत्र युक्तिर्विष्णुनामार्थत्वादेव बृहतीसहस्रस्येति। अहरभिसम्पादयन्तीत्येतद् व्याचष्टे– **एतान्येवेति** ।। सूर्यगतानि च। अहःशब्दस्यात्र विवक्षितमर्थमाह– **अहःशब्देनेति** ।। उक्तार्थे प्रमाणमाह– **यज्ञानामिति** ।। २ ।।

**खण्डार्थः -**

अक्षरादिगतानामधिष्ठानान्तरमुच्यते– **यानीति** ।। यानि विष्णुनाद्यक्षरगतानि तन्नामकानि रूपाण्यवोचाम तान्येवाहान्यहार्यत्वादहर्नामकानि संवत्सराहर्नियामकानि। यान्यूष्मणः ऊष्मनामकानि रूपण्यवोचाम तास्तानि। रात्रयः रतिदत्वाद् रात्रिनामकानि संवत्सररात्रिगतानि। यान् सन्धीन् सन्धिगतानवोचाम ते रूपविशेषा अहोरात्राणां सन्धयः सन्धिगताः सन्धिनामका इत्यधिदैवतं भगवद्रूपाणि। अथाध्यात्मं भगवद्रूपाण्युच्यन्ते। यान्यक्षराण्यक्षरस्थान्यक्षरनामकानि रूपाण्यधिदैवतमवोचाम तानि रूपाण्यध्यात्ममस्थीनि अस्थिगतान्यस्थिरत्वादस्थिनामकानि। अधिदैवं यान् रूपविशेषानूष्मणः ऊष्मनामकानवोचाम ते प्रादुर्भावा अध्यात्मं मज्जानो मज्जागतमदजनकत्वान्मज्जानामकाः। मज्जास्वधिकं भगवतः सन्निधान-मित्युच्यते– **एष इति** ।। एष आत्मा सम्प्रति सम्यग् विशेषतो मज्जा वै मज्जागतो वै। कुतः? एष प्राणो वायुर्विशेषतो मज्जास्थो वै। प्राणस्य मज्जासु विशेषतः सन्निहितत्वेऽपि विष्णोस्तु तत् कुतः ? एष आत्मा सम्यक् प्राणः प्राणस्थो वै। प्राणस्य विशेषतो मज्जागतत्वं कथमित्यतस्तत्कार्ये रेतसि विशेषतः सन्निहितत्वादिति वक्तुं कार्यकारणभाव उच्यते–**यन्मज्जेति** ।। यन्मज्जा यो मज्जा एतदेष एव रेतो भवतीत्यर्थः। ततश्च किमित्यत उक्तम्– **यन्मज्जेति** ।। यन्मज्जा यो मज्जागतः प्राणः एष वै तद्रेतः अस्मिन् रेतसि

विशेषतः सन्निहितः। कारणे विशेषसन्निधानाभावे कार्ये तदयोगादिति भावः। रेतसि प्राणस्य विशेषसन्निधानमेव कुत इत्यत उक्तम्– **न ह्वेति** ॥ इदं तावदेवं योज्यम्। प्राणात् प्राणेन। विशेषतोऽधिष्ठितं रेत एव सिच्यते। गर्भाधानसंज्ञितनिषेककर्मयोग्यं भवति गर्भत्वं व्रजेत्। तथाच रेतसि सामर्थ्यविशेष-सद्भावात् तत्र प्राणस्य विशेषसन्निधानं ज्ञायत इति भावः। ननु कुत्रचिद् रेतसो गर्भत्वाप्राप्तेः कथं रेतसः सामर्थ्यविशेष इत्यतो न ह्वेति विशिष्टं वाक्यं योज्यम्। प्राणादृते प्राणसन्निधानमृते। प्राणो रेतसि विशेषतः सन्निहितो न चेत्। तदा तद्रेतो न सिच्यते न गर्भत्वं व्रजेद्वै। उत्सर्गतो रेतसो गर्भी-भावसामर्थ्यं देवानाममोघवीर्यत्वदर्शनात् कलियुगादौ मानुषादिरेतसो गर्भत्वाप्राप्तिस्तु सहकारिविरहनिबन्धना। प्राणविशेषसन्निधाने तद्दर्शननियमादिति भावः। प्राणसन्निधानविशेषरहितं रेतः सिक्तं चेत् किं स्यादित्यत उच्यते–**यद्वेति** ॥ वाशब्दोऽवधारणे। यदि प्राणादृते प्राणसन्निधानं विना। रेतः सिच्येत तर्हि पूयेदवयवशैथिल्येन दुर्गन्धयुक्तमेव स्यान्न सम्भवेऽन्नबीजं भवेदित्यर्थः। ननु प्राणसन्निधानविशेषादेव रेतसो गर्भत्वप्राप्तियोग्यत्वमिति कुतः? स्वत एव किन्न स्यात्? क्वचिद् गर्भत्वाप्राप्तिस्तु प्रतिबन्धकवशाद् भविष्यतीत्यतश्चोक्तम्– **यद्वेति** ॥ प्राणादृते प्राणसन्निधानमृते विशेषप्राणसम्बन्धवर्जितं रेतो ऋते तद्रेतोव्यतिरिक्तं यन्मांसादिकं धात्वन्तरम्, तन्न सम्भवेत्। गर्भत्वं न याती-त्यर्थः। यदि रेतः स्वसामर्थ्येनैव गर्भत्वं प्राप्नुयात् तदा मांसादिकमपि प्राप्नुयाद्। धातुत्वाविशेषात्। अचेतने कार्यविशेषस्यायस्कान्तादाविव देवतासन्नि-धानविशेषनिबन्धनत्वस्य 'रेतो धातुर्वटकणिका' (ब्र.सू.भा. १.१.४) इत्यादौ व्यवस्थापितत्वात्। अन्यथा स्वभाववादानुसरणप्रसङ्गादिति भावः। यान् सन्धीन् सन्धिनामकप्रादुर्भावानधिदैवतमवोचाम तान्यध्यात्मं पर्वाणि परज्ञानात् पर्वनामकानि पर्वगतानि। अस्थ्नां मज्ज्ञां पर्वणामित्येतस्य त्रयस्य त्रयगतस्य हरे रूपाणि इतो दक्षभागे। पञ्चशतानि चत्वारिंशच्च भवन्ति। पृथगशीत्युत्तरसङ्ख्याकत्वात्।

इतो वामभागे पञ्चशतानि चत्वारिंशच्च भवति । तद्भागद्वयस्थं रूपं मिलितमशीति-सहस्रमशीत्युत्तरसहस्रं भवति । विष्णुनामाक्षरगतरूपाणामधिष्ठानान्तरमुच्यते– **अशीतीति** ।। अर्के लीनत्वेनादृश्यत्वेन स्थिता भगवत्प्रादुर्भावाः अशीत्युत्तरसहस्रं वा इत्यर्थः । सूर्याधिष्ठितानां विष्णुनामाक्षरादिरूपाणां पुरुषेऽवस्थानं तदुच्चार्य-बृहतीसहस्रप्रतिपाद्यत्वं तदधीनत्वं तदनुष्ठेययज्ञाधिष्ठितत्वं सूर्यप्रवर्त्यदिवसाधिष्ठितत्वं चोच्यते– **अशीतीति** ।। अशीत्युत्तरसहस्रसङ्ख्याका अर्कगता विष्णुनामाक्षररूपविशेषाः पुरुषे स्थित्वा बृहतीः सहस्रबृहतीः सम्पादयन्ति । बृहतीर्बृहत्यः बृहतीस्था तन्नामकाः तद्वाच्याश्च । अहर्यज्ञं च सम्पादयन्ति । तदर्थं पुरुषाधिष्ठानं विना साक्षादहरहानि दिनानि सम्पादयन्ति । स एषोऽस्थ्यादिगतोऽक्षरसम्मानः विष्णुनामाक्षरगतरूप-समसङ्ख्याकः चक्षुर्मय इत्यादेरुक्त एवार्थः ।।

**।। इति द्वितीयः खण्डः ।।**

**उपनिषत्-**

**(वायुदेवस्य पुरुषोपासना)**

**चत्वारः पुरुषा इति बाध्वः शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति शरीरपुरुष इति ।। यमवोचाम स एवायं दैहिक आत्मा तस्य योऽयमशरीरः प्रज्ञात्मा स रसश्छन्दःपुरुष इति यमवोचामाक्षरसमाम्नाय एव तस्यैतस्याकारो रसो वेदपुरुष इति यमवोचाम येन वेदान् वेद ।। ऋग्वेदं यजुर्वेदं सामवेदं तस्यैतस्य ब्रह्मा रसस्तस्माद् ब्रह्माणं ब्रह्मिष्ठं कुर्वीत ।। यो यज्ञस्योल्बणं पश्येन्महापुरुष इति यमवोचाम संवत्सर एव प्रध्वंसयन्नन्यानि भूतान्यैक्याभावयन्नन्यानि तस्यै-तस्यासावादित्यो रसः ।।**

**भाष्यम्-**

संसारबाधितैः प्राप्यो बाध्वो वायुरुदाहृतः ।
स हि मोक्षप्रदो विष्णोराज्ञया स उवाच ह ।
सर्वदेहाभिमानी तु शरीरपुरुषः शिवः ।
सर्ववर्णाभिमानी च शेषोऽसौ च्छान्दसः पुमान् ।
सर्ववेदाभिमान्येव गरुडो वेदपूरुषः ।
संवत्सराभिमानी तु ब्रह्मैव हि महापुमान् ।
सारः शिवस्यानिरुद्धनामा देहस्थितो हरिः ।
अ इत्याक्रियते यस्माद् वासुदेवो ह्यकारकः ।
शेषस्य सारः स विभुर्ब्रह्माख्यो ज्ञानबृंहणात् ।
सङ्कर्षणाख्यस्तु हरिः सारः स गरुडस्य च ।
ब्रह्मर्त्विक्संस्थितश्चासौ तस्माद् ब्रह्मिष्ठमेव हि ।
कुर्याद् ब्रह्मर्त्विजं तस्मिन् विशेषेण स्थितो हरिः ।
ब्रह्मणः सारभूतस्तु प्रद्युम्नो भगवान् हरिः ।
स एवाऽदित्यसंस्थश्च स ह्यादिर्जगतो विभुः ।
ततश्च सर्वभूतेषु जीवानां विनियामकः ।

**टिप्पणी -**

'चत्वारः पुरुषा इति बाध्वः' इत्यत्र बाध्वः कश्चन ऋषिरित्यन्यथाप्रतीतेर्व्याचष्टे– **संसारेति** ।। एतेन बाध्यन्त इति बाधाः तैर्वायते प्राप्यत इति बाध्वः इति मूलार्थ इत्युक्तं भवति । एतदुपपादयति– **स हीति** ।। शरीरपुरुष इति यमवोचाम स दैहिक आत्मेत्यादिवाक्यचतुष्टयं व्याचष्टे– **सर्वदेहेत्यादिना** ।। तस्य 'योऽयमशरीरः प्रज्ञात्मा स रसः । तस्यैतस्याकारो रसः तस्यैतस्य ब्रह्मा रसः तस्यैतस्यासावादित्यो रसः' इति वाक्यचतुष्टयं क्रमेण व्याचष्टे– **सारः शिवस्येत्यादिना** ।। अयमित्यस्यार्थः– **देहस्थित इति** ।। ज्ञानबृंहणाज्ज्ञानपूर्णत्वात् । यद्वा वेदनियामकत्वेन तदध्येतृणां

ज्ञानेन पूरणात् । ब्रह्मशब्दस्यार्थान्तरम्– **ब्रह्मर्त्विगिति** ॥ तस्माद् ब्रह्माणं ब्रह्मिष्ठमित्यस्यार्थः– **तस्मादिति** ॥ हि यस्माद् ब्रह्मर्त्विजि विशेषेण हरिः स्थितस्तस्मात् तस्योत्तमाधिष्ठानलाभाय ब्रह्मिष्ठं ब्रह्माणं कुर्यादित्यर्थः । य आदित्यसंस्थितः प्रद्युम्नो भगवान् हरिः स एवब्रह्मणश्चतुर्मुखस्य सारभूत इति योजना । एवशब्देन प्रसिद्धमादित्यं व्यावर्तयति । आदित्यशब्दं निर्वक्ति– **स ह्यादिरिति** ॥ आदित्वादादिः ततत्वात् नियामकत्वाद् य इत्यर्थः ।

**उपनिषत्-**

**(प्रतिपुरुषमादित्याभिमुख्यं कुतः ?)**

**स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदिति विद्यात् तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवति ॥ तदप्येतदृषिणोक्तं चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च' इतिं ।**

**भाष्यम्-**

स एवाऽदित्यगो विष्णुर्यः प्रद्युम्नाभिधो हरिः ।
स एव सर्वदेहेषु चानिरुद्धतनुः स्थितः ।
सङ्कर्षणो वासुदेव इत्येकः स चतुर्विधः ।
प्रतिपूरुषमेतस्मात् स्थितो विष्णुर्नियामकः ।
आदित्यादिषु च स्थित्वा द्योतकोऽसौ प्रतिप्रति ।

**टिप्पणी -**

'स यश्चायमशरीरः प्रज्ञात्मा । यश्चासावादित्ये एकमेव तत्' इति वाक्यं व्याचष्टे– **स एवेति** ॥ य आदित्यगः प्रद्युम्नाभिधो हरिः यश्चानिरुद्धतनुः सर्वदेहेषु स्थितः स स एक एवेत्यन्वयः । द्वितीय एवशब्दस्तु आदित्यगो विष्णुरेव

नतु प्रसिद्धो मण्डलान्तर्गतः सूर्य इत्यवधारकः । स यश्चायं यश्चासाविति चशब्दसमुच्चेययोः सङ्कर्षणवासुदेवयोरप्यैक्यमनेनोच्यत इत्याह– **सङ्कर्षण इति** ।। तद्रूपचतुष्टयमेकमेव विद्यादित्यप्यर्थमाह– **एकः स चतुर्विध इति** ।। चतूरूपस्य पूर्ववर्णप्रतिपाद्येन नारायणेनाप्यैक्यमनेनोच्यत इत्याह– **एकः स चतुर्विध इति** ।। चतुर्विधोऽप्येको नारायण इत्यर्थः । उपलक्षणमेतत् । उत्तरवर्णप्रतिपाद्यः प्रादुर्भावसमुदायोऽपि पूर्ववर्णप्रतिपाद्येन संहिताप्रतिपाद्यैरनिरुद्धादिभिः परस्परमेक इति द्रष्टव्यम् । अत एवान्येषामपि रूपाणामिति विद्यादित्यभेदमतिदेक्ष्यति तस्मात् पुरुषं पुरुषं प्रत्यादित्यो भवतीत्येतदनिरुद्धप्रद्युम्नयोर्देहादित्यगतयोरैक्योपपादकत्वेन व्याचष्टे– **प्रतीति** ।। यस्मात् प्रतिपुरुषं यो विष्णुर्नियामकः स्थितोऽसावेवाऽदित्ये स्थित्वा द्योतक एतस्मादुभयगतयोरैक्यादेव प्रतिपुरुषं मां प्रति मां प्रतीति द्योतक इत्यन्वयः । यद्वा एतस्मात् पुरुषादित्यगतयोरैक्यादेवाऽदित्यगतो विष्णुः प्रतिपुरुषं चक्षुषि नियामकः स्थित इत्यर्थः । यद् वक्ष्यति 'सूर्यमण्डलगो विष्णुर्देहे चक्षुषि च स्थितः' इत्यादि । एतेन प्रकारान्तरेण व्याख्यातं भवति । चतुर्णामैक्यपरत्वेनापि व्याचष्टे– **आदित्यादिष्विति** ।। आदिपदेन वर्णवेद-ग्रहणम् । एतेनाऽदित्यग्रहणमुपलक्षणमिति सूचयति । द्योतकः प्रकाशको ज्ञान-हेतुश्च प्रति प्रति । एतस्मात् पुरुषगतेनैक्यादेवाऽदित्यगतः प्रद्युम्नः वर्णगतो वासुदेवो वेदगतः सङ्कर्षणश्च प्रति प्रति प्रतिपुरुषं भवति । प्रकाशको ज्ञापकश्च भवतीत्यर्थ इति भावः । अनिरुद्धादीनां नारायणस्य प्रादुर्भावानां चैक्यपरत्वेन व्याचष्टे– **प्रतिपुरुषमिति** ।। एतस्माच्छरीरेणानिरुद्धेनैक्यादेव विष्णुर्नारायणः वासुदेवः सङ्कर्षणः प्रद्युम्नः प्रादुर्भावरूपी च प्रतिपुरुषं नियामको भवतीत्यर्थः । अत्राप्यादित्य-ग्रहणमुपलक्षणमिति ज्ञेयम् ।

**भाष्यम्-**

**स चेतनतमत्वाद्धि चित्रमित्यभिधीयते ।**

**मुख्यत्वात् सर्वदेवानामनादीशितृत्वतः ।**

**कर्तृत्वादप्यनीकं स उदैत् सूर्यस्थितो हरिः ।**

**ज्ञानदत्वाच्च देवानां चक्षुरेनेन दर्शनात् ।**

**आपूरयन् सर्वलोकान् प्रकाशेन जनार्दनः ।**

**आदानात् सर्वजीवानामत्तृत्वात् प्रळयेऽपि च ।**

**आत्मेत्युक्तः स भगवान् जगतः स्थावरस्य च ।**

**टिप्पणी -**

मन्त्रे चित्रं विचित्रं देवानामनीकं सेनेत्यर्थप्रतीतेर्यथावद् व्याचष्टे– **स चेतनतमत्वादिति** ।। अतिशयेन चित् चित्तरं तदेवाकारलोपेन चित्रमिति भावः । कथं चेतनश्रेष्ठत्वमित्यतो देवोत्तमत्वादिति भावेन देवानामनीकमिति प्रवृत्तमिति भावेनोत्तरवाक्यतात्पर्यमाह– **मुख्यत्वात् सर्वदेवानामिति** ।। यद्वा चित्रपदं प्रकारान्तरेण व्याचष्टे– **मुख्यत्वादिति** ।। सर्वदेवानां मध्ये मुख्यत्वाच्च चित्रमित्यर्थः । चित्र आश्चर्य इति धातोः चित्रमद्भुतं श्रेष्ठमिति पर्याया एते शब्दा इति भावः । 'सद्यश्चित्रश्रवस्तमः' इत्यत्र 'चित्रमद्भुतं श्रवः कीर्तिर्यस्यासौ चित्रश्रवाः । अग्र्यकीर्तीनां पुरुषाणां मध्ये' इति ऋग्भाष्यटीकायां व्याख्यातत्वात् । देवानामनीकमित्यस्यार्थः– **देवानामननादिति** ।। अननात् प्रेरणात् । ईशितृत्वादीशन कर्तृत्वात् कमित्यर्थः । उदगादित्यस्यार्थः– **उदैदिति** ।। मित्रस्य वरुणस्याग्नेश्चक्षुरित्यस्यार्थः– **ज्ञानदत्वादिति** ।। चक्षयतीति चक्षुर्ज्ञानप्रद इत्यर्थ इति भावः । चष्ट इति चक्षुरित्यप्यर्थमाह– **देवानामिति** ।। कर्मणि षष्ठी एतेन कृता । यद्वा देवानां मित्रादीनामयं चक्षुश्चक्षुरधिष्ठाता कुतः एतेन चक्षुरधिष्ठितेन दर्शनादित्यर्थः । द्यावापृथिवी अन्तरिक्षमाप्रा इत्यस्यार्थः– **आपूरयदिति** ।। जगतस्तस्थुषश्चात्मेत्यस्यार्थः– **आदानादिति** ।। उपादानात् सर्जनात् । प्रलयेऽप्यन्यदाऽप्यत्तृत्वाच्च जगतः स्थावरस्य चेति सर्वजीवानाम् ।

उपनिषत्-

(अयोग्योपदेशोऽनर्थकरः)

एतामनुविधां संहितां सन्धीयमानां मन्य इति बाध्व एतां ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते च्छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते ॥ स एष संवत्सर-सम्मानश्चक्षुर्मयः श्रोत्रमयश्छन्दोमयो मनोमयो वाङ्मय आत्मा स य एवमेतं संवत्सरसम्मानं चक्षुर्मयं श्रोत्रमयं च्छन्दोमयं मनोमयं वाङ्मयमात्मानं परस्मै शंसति ॥

भाष्यम्-

एवं चतुर्विधो विष्णुः संहितादेवता यदा ।
ज्ञायते पूर्ववर्णस्य रूपं नारायणाभिधम् ।
प्रादुर्भावाः समस्ताश्च चरमार्णस्य देवताः ।
तदा तु संहितां सम्यङ् मन्येऽहं सन्धितामिति ।
आह वायुरिमं विष्णुं [1]बृहत्युक्थस्य देवताम् ।
महाव्रताख्यस्तोत्रस्य चेष्टकानां च देवताम् ।
एतमेवाखिलजगद्व्याप्तं पूर्णगुणात्मकम् ।
संवसद्रतिदातृत्वाद् ब्रह्मा संवत्सराभिधः ।
नियामकः स जीवानां सर्वेषां प्रभुरीश्वरः ।

---

१. बृहदुक्थस्य- ह.पा.

**अनन्तमूर्तिर्ब्रह्माऽसावनन्तजगदास्थितः।**

**नियामकस्तस्य विष्णुस्तावद्रूपेषु संस्थितः।**

**तत् संवत्सरसम्मानः स विष्णुः परमेश्वरः।**

**टिप्पणी -**

एतामनुविधमित्यस्य संहिताप्रतिपाद्यैरनिरुद्धादिभिः पूर्ववर्णप्रतिपाद्य-नारायणेनोत्तरावर्णप्रतिपाद्यप्रादुर्भावैश्च सन्धीयमानानामित्यभिप्रेत्य व्याचष्टे– **एव-मिति** ।। एवमुक्तप्रकारेण यदा चतुर्विधो विष्णुः संहिता ज्ञायते पूर्ववर्णस्य नारायणाभिधं रूपं ज्ञायते । समस्ताः प्रादुर्भावाश्च उत्तरवर्णस्य देवता ज्ञायन्ते तदैव संहितामनुविधं सम्यक् सन्धितां मन्य इति वायुराहेत्यर्थः । इति ह स्माह बाध्व एतं ह्येवेत्युत्तरेणान्वयं मत्वा व्याचष्टे– **आह वायुरिमं विष्णुमित्या-दिना** ।। एतेन बाध्वो वायुरेतं विष्णुं महदुक्थादिषु मीमांसन्त इत्यप्याहेत्यर्थ उक्तो भवति । इममिति पूर्वप्रस्तुतनारायणमनिरुद्धादिचतूरूपिणं प्रादुर्भावरूपं चेत्यर्थः ।। **इष्टकानामिति** ।। महाव्रते, चेतव्येष्टकाधिष्ठितदेवतामित्यर्थः । एतमस्यामित्यादेरर्थः– **एतमेवेति** ।। ब्रह्मेत्यस्यार्थः– **पूर्णेति** ।। संवसतो मरयतीति संवसद्रः स एव वर्णविपर्ययेण संवत्सर इत्यर्थमभिप्रेत्य संवत्सरशब्दार्थमाह– **संवस-दिति** ।। विहितवृत्त्या वसतां सुखप्रदत्वादित्यर्थः । नन्वस्मत्समसङ्ख्याकोऽपि भवति भगवान् किंविशिष्योच्यते संवत्सरसम्मान इतीत्यत आह– **नियामक इति** ।। ३ ।।

**।। इति तृतीयः खण्डः ।।**

**उपनिषत्-**

दुग्धदोहा अस्य वेदा भवन्ति । न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थानमिति । दुग्धदोहा अस्य वेदा भवन्ति न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमिति ।

**भाष्यम्-**

य एनं वक्त्ययोग्येभ्यो योऽथवैनं महाव्रते।
कर्मण्याचार्यतोऽन्यस्य शंसेत पितृतोऽथवा।
महाव्रतेन स्तोत्रेण स्तुवीतैनमथापि वा।
महाव्रते चितिं वाऽपि कुर्यान्नास्य फलं श्रुतेः।
सुकृतस्य फलं चैव नासौ सम्यगवाप्स्यति।
प्रत्यक्षज्ञानिनोऽप्येतदानन्दह्रासकृद् भवेत्।
प्रत्यक्षज्ञानिनो मोक्षो न कथञ्चिद्धि हीयते।
आचार्यमेव तं विद्याद् गुणैर्यः स्वात्मनोऽधिकः।
गुणाधिकस्य तेनैव शंसनादि न दुष्यति।
अयोग्यस्योपदेशे तु कृते हौत्रादिकेऽपि वा।
प्रायश्चित्तार्थमेतत्तु शंसीत शतवारकम्।
अन्यथा मानुषेष्वेव जायते न दिवं व्रजेत्।
योग्या अस्यास्तु विद्याया देवा ऋषय एव च।
एकदेशज्ञानयोग्या मानुषा उत्तमा यदि।

**टिप्पणी -**

दुग्धदोहा अस्य वेदा भवन्तीत्यस्य य आत्मानं परस्मै शंसतीति पूर्वेणान्वयं मत्वा व्याचष्टे– **य एनमिति** ।। तस्मादेवं विद्वान्न परस्मा अग्निं चिनुयादि-त्याद्युत्तरग्रन्थानुसारेणाऽत्मानमुद्दिश्य परस्मै यज्ञे परार्थशंसनादि करोतीत्यर्थान्तर-माह– **योऽथेति** ।। एनमुद्दिश्याऽशंसेत बृहतीसहस्रं होता स्तुवीतोद्गाता चितिं कुर्यादध्वर्युः कामं पित्रे वाचार्यय वेत्यपवादलब्धार्थकथनमाचार्यतो अथवा पितृतो न्यस्येति । दुग्धदोहा वेदा न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थामित्यस्यार्थो नास्य फलमित्यादिश्रुतेः। श्रवणजन्यज्ञानस्य फलमपरोक्षद्वारा मोक्षो न भवति प्रतिबद्ध्यत इति यावत्। सुकृतस्य फलं स्वर्यम्। नन्वपरोक्षज्ञानिना

कदाचिदयोग्योपदेशादौ कृते तस्यापि श्रुतिफलमोक्षप्रतिबन्धः स्यात् किमित्यत आह– **प्रत्यक्षेति** ।। विज्ञायते प्रतिबद्ध्यते । अज्ञैर्न कर्तव्यमपरोक्षिणोऽप्यनर्थसद्भावादिति कैमुत्यकथनं चैतत् । आचार्यो विद्योपदेष्टैवेति प्रतीयतेऽत आह– **आचार्यमिति** ।। तमेवेत्यन्वयः । तेनाऽचार्यशब्दस्य गुणाधिकपरत्वेन गुणाधिकस्यैवेत्यन्वयः । ननु कदाचित् प्रमादादिना योग्योपदेशादिप्रसक्तिमात्रेण ज्ञानकर्मफलमोक्षादिप्रतिबन्धः । सर्वदा स्यात् किमित्यतः प्रायश्चित्तेन तत्समीकरणं सम्भवति । तदभावे प्रबलसाधनानुष्ठानपर्यन्तं मोक्षस्वर्गप्रतिबन्ध एव।। सर्वथा न मोक्षाद्यभाव इत्यत आह– **अयोग्यस्येति** ।। तदेतां बाध्व-विद्याम् । एतेन विद्यायाः फलान्तरोत्त्यर्थमयं खण्ड इति ज्ञापितं भवति । न दिवं व्रजेत् किमु मोक्षं न व्रजेदिति योज्यम् । बाध्वविद्याऽयोग्याय नोपदेष्टव्येत्युक्तं योग्यानाह– **योग्या इति** ।। उत्तमाश्चतुर्गुणोपासकाः ।

**खण्डार्थः -**

एवं विष्णुनाम्नि ऊष्मतदतिरिक्ताक्षरसन्धिगतरूपसमुदायमुक्त्वा सिंहावलोकितन्यायेन पुनः पूर्वोत्तरवर्णसंहितादेवतास्वरूपं वक्तुं तस्याधिष्ठानमुच्यते– **चत्वार इति** ।। बाध्वः संसारबाधवद्भिः प्राप्यो वायुः । शरीरपुरुषः छन्दःपुरुषो वेदपुरुषो महापुरुष इति चत्वारः पुरुषा इत्याह । यं शरीरपुरुष इत्यवोचाम सोऽयं सन्निहितो दैहिकः सर्वदेहाभिमान्यात्मा शिव एव। 'तस्य शिवस्य योऽशरीरः प्राकृतदेहरहितः प्रज्ञात्मा प्रज्ञास्वरूपोऽनिरुद्धः सोऽयं रसः सार उपजीव्यः नियामकः । यं छन्दःपुरुष इत्यवोचाम सोऽक्षरसमाम्नायः सर्ववर्णाभिमानित्वादक्षराख्यः स एष एव तस्य छन्दःसहितस्यैतस्याक्षरसमाम्नायस्य । अ इत्याक्रियमाणत्वादकारो वासुदेवो रसः । वेदपुरुष इति यमवोचाम स पुरुषः येन तत्प्रेरणया वेदान् तत्प्रभेदं ऋग्वेदं यजुर्वेदं सामवेदं च पुमान् वेद स सर्ववेदाभिमानी गरुड एवेति यावत् । तस्य वेदपुरुषसञ्ज्ञितस्यैतस्य वेदाभिमानिनो गरुडस्य ज्ञोऽनेन परिपूर्णत्वाज्ज्ञानेन पूर्णत्वाद् ब्रह्मर्त्विक्स्थितत्वाच्च ब्रह्म सङ्कर्षणो रसः । तस्माद्

ब्रह्मर्त्विजो वेदाभिमानिगरुडनियामकसङ्कर्षणाधिष्ठानत्वात् उत्तमप्रतिमालाभाय ब्रह्मिष्ठं वेदार्थभूतब्रह्मज्ञानिनं यज्ञे ब्रह्माख्यमृत्विजं कुर्वीत यो यज्ञस्योल्बणं शेषं पश्येत् । दृष्ट्वा च तत्समीकुर्यादिति यावत् । उक्तं च ब्रह्मणो यज्ञविनष्टिसन्धायकत्वं छान्दोग्ये चतुर्थाध्याये चरमखण्डे तस्मादेवंविदमेव ब्रह्माणं कुर्वीत । नानेवंविदमित्यन्तेन । महापुरुष इति यमवोचाम स संवत्सर एव संवसतां स्वहितवृत्त्या वसतां रतिदातृत्वात् संवत्सरनामा ब्रह्मैव संवस इति प्रदत्वमेवोपपाद्यते– **प्रध्वंसयन्निति** ।। अन्यानि वेदविहितवृत्त्या न वसन्ति यानि भगवद्विरोधीनि भूतानि प्राणिजातानि तानि प्रध्वंसयंस्तमसि पातयन् अन्यानि भूतानि वेदविहितवृत्त्या सम्यग् वसन्ति भगवद्भक्तिज्ञानादियुक्तानि प्राणिजातान्यैक्यानि भावयन् मोक्षे स्थानैक्यमत्यैक्ययुक्तानि कुर्वन् संवत्सर एवेत्यन्वयः । तस्य महापुरुषसञ्ज्ञितस्यैतस्य संवत्सराख्यस्य ब्रह्मणः आदित्वात् ततत्वात् नियमनाय सर्वत्र विद्यमानत्वान्नियामकत्वादादित्यनामा प्रद्युम्नो रसः । अधिष्ठानभेदेऽपि न भगवद्रूपाणां भेदो मन्तव्य इति भावेनोच्यते– **स यश्चायमिति** ।। स योऽयं देहे सन्निहितो शरीरः प्रज्ञात्माऽनिरुद्धः यश्चासावादित्ये स्थितः प्रद्युम्नः एतत्स्थानद्वयगतं भगवद्रूपमेकमिति विद्यात् । तथैतद्रूपचतुष्टयं पूर्ववर्णप्रतिपाद्यमेकं नारायणाख्यं रूपमेवेति विद्यात् । तथोत्तरवर्णप्रतिपाद्यं भगवत्प्रादुर्भावजातमपि परस्परं पूर्ववर्णप्रतिपाद्यनारायणेन संहिताप्रतिपाद्यानिरुद्धादिरूपचतुष्टयेन चैकमिति विद्यात् । अनिरुद्धप्रद्युम्नयोरैक्यमुपपाद्यते– **तस्मादिति** ।। आदित्यगतस्य पुरुषगतेन प्रद्युम्नेनैक्यादेव पुरुषं पुरुषं प्रतिप्रति पुरुषमादित्योऽभिमुखो भवतीत्यर्थः । यद्वा, प्रतिपुरुषमादित्यश्चक्षुषो नियामको भवतीत्यर्थः । यद्वा चतुर्णामैक्यमनेनो-च्यते । तदस्मात् पुरुषगतेनैक्यादेवाऽदित्य इत्युपलक्षणमादित्यगतः प्रद्युम्नो वेदगतः सङ्कर्षणः अक्षरगतो वासुदेवश्च प्रतिपुरुषमुपकारको भवति । आदित्यगतः प्रकाशकोऽन्यो ज्ञापक इत्यर्थः । यद्वा पूर्वोत्तरवर्णसंहिताप्रतिपाद्यानां सर्वेषामप्यैक्यमनेनोच्यते । तस्मात् पुरुषहृदयमध्यगतेनानिरुद्धेनैक्यादेवाऽदित्यादिः सर्वोऽपि प्रतिपुरुषं नियामको

भवतीत्यर्थः । सूर्यान्तस्थस्य कारणत्वापरपर्यायमादित्वं ततत्त्वं नियामकत्वं द्योतकत्वं चोक्तम् । तत्र सम्मतिरुच्यते– **तदपीति** ।। अतिशयेन चित् चित्तरं तदेवाकारलोपेन चित्रम् । चेतनेभ्यो विशिष्टं देवानामननाच्चेष्टनादीशितृत्वात् कर्तृत्वादनीकं मित्रस्य वरुणस्याग्नेश्चक्षुश्च क्षयतीति चक्षुर्ज्ञानप्रदम् । चष्ट इति वा चक्षुः । अपरोक्षतो ज्ञातृसूर्यगतं ब्रह्मोदगादुदैत् । जगतो जङ्गमस्य तस्थुषः स्थावरस्य च स्थावरजङ्गमात्मकानां सर्वजीवानामादानात् प्रलयेऽन्यदाप्यत्तृत्वाच्चाऽत्मा सूरिप्राप्यत्वात् सूर्यनामा सूर्यगो भगवान् द्यावापृथिवी अन्तरिक्षं च प्रकाशेन । आ अप्राः आसमं तादप्राः पूरयामासेति ऋषिणोक्तमित्यर्थः । उपसंह्रियते– **एतामिति** ।। पूर्ववर्णगतेन नारायणेनोत्तरवर्णगतेन प्रादुर्भावसमुदायेन । सन्धिगतै-रनिरुद्धादिभिश्चतुर्भिरेतामेव सन्धीयमानां संहितामनुविधं अनुविधां समीचीनां मन्यत इति स्माऽह बाध्व इत्यर्थः । संहितादेवता या न केवलमुक्ताधिष्ठानमात्रं किन्त्वनन्तान्यधिष्ठानानि तदनुबद्धानीति भावेनोच्यते– **एतं ह्येवेति** ।। एतं महापुरुषगतमादित्यनामानं सौरमन्त्रोक्तमेव बह्वृचा ऋग्वेदिनो महत्युक्थे बृहतीसहस्रे मीमांसन्ते जानन्ति तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य यानि व्यञ्जनानि तच्छरीरमिति खण्डे तद् योऽहं सोऽसाविति बृहतीसहस्रप्रतिपाद्यस्य सूर्यगतत्वमुक्त्वा तदुक्तमृषिणा सूर्य आत्मा जगतस्तस्थुषश्चेत्यस्यैव मन्त्रस्योदाहरणात् । चक्षुर्मित्रस्य वरुणस्याग्नेरिति अग्निनियामकत्वेनोक्तमेतमेवाध्वर्यवो यजुर्वेदिनोऽग्नौ मीमांसन्तेऽ-ग्नेरध्वर्युसम्पाद्यत्वात् । छन्दोगा एतं महाव्रते महाव्रताख्यकर्माङ्गभूतस्तोत्रे तत्सम्बन्धीष्टकाचितौ च मीमांसन्ते । महाव्रते आदित्यगतस्यैव एष तपन्नेवास्मीत्युक्त-त्वात् । सामान्यादित्यादिति छान्दोग्ये साम्नामादित्यानुबन्धोक्तेश्च । आप्रा द्यावापृथिवी अन्तरिक्षमित्युक्तमेतमेवास्यां पृथिव्यां एतमेव दिवि एतमेवान्तरिक्षस्थे वायावेतमेवाऽकाशे वरुणस्य चक्षुरित्युक्तमेवाप्सु तस्थुष आत्मेत्युक्तमेतमेवौषधीष्वेतं वनस्पतिषु । अत एव तदभिमानित्वादेतं चन्द्रमस्येतं नक्षत्रेषु जगत आत्मेत्युक्तमेतं सर्वेषु भूतेषु अनीकमित्युक्तमेतमेव नियामकत्वादिगुणबृंहितत्वाद् ब्रह्मेत्याचक्षते

इत्यर्थः । यद्वा छन्दः पुरुषगतं वेदपुरुषगतमेतमेव बह्वृचा महत्युक्थे वेदसारभूते बृहतीसहस्रेऽस्यां पृथिव्यां तदनुबन्धिष्वोषधिवनस्पतिषु अग्नावप्सु च मीमांसन्ते एतमध्वर्यवोऽग्नावन्तरिक्षस्थे वायावाकाशे च मीमांसन्ते । छन्दोगा एतं महाव्रते दिवि तदनुबन्धिषु चन्द्रनक्षत्रेषु एवं सर्वेषु भूतेषु मीमांसन्त इत्यर्थः । तथाहि छन्दोगश्रुतिः 'प्रजापतिर्हि लोकानभ्यतपत् । तेषां तप्तानां रसान् प्रावृहन् अग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः । एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानां रसान् प्रावृहयत् । अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्' इति । यद्वा, एतं शरीरपुरुषशब्दितशिवान्तर्गतमेवाटमूर्तित्वात् क्षित्यादिषु पञ्चसु तदनुबन्धिष्वोषधिवनस्पतिषु चन्द्रे तदनुबन्धिषु नक्षत्रेषु सूर्यान्तर्गतत्वादेव सौरमन्त्रोक्तप्रकारेण प्रथमयोजनारीत्या महदुक्थादिषु सर्वेषु स्थानेष्वाचक्षत इति योज्यम् । पूर्ववर्णप्रतिपाद्यो नारायण उत्तरवर्णप्रतिपाद्यः सर्वोऽपि प्रादुर्भावश्चैतं ह्येवेत्येतच्छब्देन परामृश्य सर्वान्तर्गतत्वेनोच्यत इत्यवगन्तव्यम् । स एष भगवान् संवत्सरसम्मानः संवत्सरसंज्ञितचतुर्मुखरूपसमसङ्ख्याकः । चतुर्मुखस्यानन्तमूर्तित्वात् तावद्रूपैस्तन्नियामकः । अत एव पूर्णदर्शनशक्त्यादिगुणकः स य एवमेतं संवत्सर-सम्मानं चक्षुर्मयत्वादिगुणविशिष्टमात्मानं परस्मा अयोग्याय शंसति तस्य वेदा दुग्धदोहा भवन्तीत्युत्तरखण्डेनान्वयः ।

बाध्वोक्तविद्याया न केवलं पूर्वोक्तन्यायेन फलं सुमहत्, किन्तु शतवार-मावर्तते नायोग्योपदेशादिदोषनिवृत्तिश्च फलमित्युक्तिपूर्वं पुरुषादित्यगतयोरैक्ये युक्त्यन्तरं चोच्यतेऽस्मिन् खण्डे । तत्र तावदयोग्योपदेशादि न कार्यमिति वक्तुमुपदेशे प्रत्यवाय उच्यते– **दुग्धेति** ।। य एतमात्मानं परस्मै मोक्षायोग्याय शंसत्युपदिशति तदर्थे वा महाव्रते उक्तप्रकारेण स्तवनशंसनेष्टकाचयनाद्यार्त्विज्यं करोति । तदाऽस्य शंसकस्य वेदा दुग्धदोहा गा इव पूर्वं दुग्धः नेतः परं दोग्धव्यं दुह्यत इति दोहः क्षीरं यासां ता गाव इति विफला भवन्ति । वैफल्यं प्रकारद्वयेनोच्यते– **न तस्येति** ।। तस्य शंसकस्यानूक्ते वेदवचने गुरूक्त्यनुसारेण प्रवचनीय-

त्वात् । वेदानुवचनं तथेत्यभिधानाच्च भागस्तत्प्राप्यं ज्ञानफलं नास्ति सुकृतस्य पन्थां पन्थानं सुकृतसाध्यमामुष्मिकमार्गं च न वेद न प्राप्नोतीति प्रकारद्वयेन दुग्धदोहा भवन्तीत्यन्वयः ।

**उपनिषत्-**

**(अयोग्योपदेशः परमात्मत्यागरूपः)**

तदप्येतदृषिणोक्तम् ॥ यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति नहि प्र वेद सुकृतस्य पन्थामिति ॥ न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थामित्येतत् तदुक्तं भवति ॥ तस्मादेव विद्वान् न परस्मा अग्निं चिनुयान्न परस्मै महाव्रतेन स्तुवीत न परस्मा एतदहः शंसेत् कामं पित्रे वाऽऽचार्याय वा शंसेदात्मन एवास्य तत् कृतं भवति ॥

**भाष्यम्-**

कर्मसञ्चयवेत्तारं त्यजेन्नारायणं हि यः ।
प्रीत्यैकदेशसंस्थत्वात् सखायमिति चोदितम् ।
न विद्यायाः फलं तस्य श्रुतं च नरकावहम् ।
नैव प्राप्नोति सुकृतं सन्त्यागात् परमात्मनः ।

**(हरिसन्त्यागः नैकविधः)**

मुख्यत्यागो हरेरेष यन्नास्तीति वदेदमुम् ।
तत्समं वाऽधिकं वाऽपि ब्रूयादैक्यमथापि वा ।
ऐश्वर्यादिगुणानां वा ह्रासं नास्तित्वमेव वा ।

तत्प्रसादं विना मोक्षं ब्रूयाद् वा कस्यचित् क्वचित्।
ऐक्यं वा ब्रह्मशर्वादेर्मुक्तावैक्यमथापि वा।
व्यत्यासं वाऽवताराणां जीवाभेदममुष्य वा।
भेदज्ञानं तद्गुणानां तेन वाऽथ मिथोऽपि वा।
तथैव तत्क्रियाणां च तद्रूपाणामथापि वा।
असाम्यदर्शनं वाऽपि [१]तद्गुणानां परस्परम्।
देहदेहिविभेदं च तस्मिन्नवयवेषु वा।
परस्परं भेददृष्टिं तेन वा कुत्रचित् क्वचित्।
दोषसंसर्गमस्यापि स्वतः परत एव वा।
अज्ञानतो ज्ञानतो वा निर्देहत्वममुष्य च।
तद्देहस्य प्राकृतत्वमचिदानन्ददेहताम्।
प्रादुर्भावेष्वपि विभोर्देहत्यागोद्भवादिकम्।
अज्ञानदुःखासामर्थ्यपारवश्यादिकं तथा।
अतद्वशत्वं कस्यापि कदाचित् क्वचिदप्युत।
परिमाणं बलादेर्वा तस्य विष्णोर्महात्मनः।
भेदाभेददृशिर्वाऽस्य जीवैर्वा स्वगुणादिभिः।

**टिप्पणी -**

मन्त्रं व्याचष्टे– **कर्मेति** ।। सञ्चयः समुदायः । चिञ् चयन इति धातोः कर्मेति योग्यतया लभ्यते । यद्वा, स च समवाय इति धातुरत्र कर्मपरस्तत्समुदाय-परश्च । 'क्रतुं सचन्त मारुतस्य' इत्यत्र सचेः कर्मपरतया व्याख्यातत्वात् । प्रीत्या प्रीतिपूर्वकं देशस्थत्वादेकदेहस्थत्वात् । 'द्वा सुपर्णा' इति श्रुतेरिति भावः । न तस्य वाच्यपि भागोऽस्तीत्यस्यार्थः– **न विद्याया इति** ।। यदीं

१. तद्रूपाणाम्- ह.पा.

यदेव शृणोति तच्छ्रुतम् । अलकमित्यस्यार्थः– **श्रुतं चेति** ।। नरकं नित्यमनित्यं च । नहि प्रवेद सुकृतस्य पन्थामित्यस्यार्थः– **नैवेति** ।। कथमयोग्योपदेशमात्रेण तम इत्यतस्त्यागं चतुर्धा विभज्योक्तं फलं यथायोग्यं योजयति– **मुख्येत्यादिना** ।। ब्रूयादैक्यमिति स्वस्वाभिमतेनेश्वरेणेति शेषः । ब्रह्मशब्दादेरित्यादिपदेन विष्णुर्गृह्यते । त्रिमूर्त्यैक्यं ब्रूयादित्यर्थः । मुक्ताविति ब्रह्मशर्वयोर्मुक्तौ विष्ण्वैक्यमित्यर्थः । अवताराणां व्यासादीनामनवतारत्वमनवताराणां बलपृथ्वादीनामवतारत्वं व्यत्यासः । जीवाभेदं सर्वजीवाभेदम् । एतदन्तानां द्वितीयाविभक्तीनां ब्रूयादित्यनेनान्वयः । तथैव तत्क्रियाणां तेन मिथश्च भेदज्ञानम् । तद्रूपाणां तेन मूलरूपिणा मिथश्च भेदज्ञानं कृष्णो नारायणो न भवति कृष्णरामौ भिन्नाविति तद्रूपाणामसाम्यदर्शनं तद्गुणानां चासाम्यदर्शनमिति योज्यम् । रामः सम्पूर्णावतारो न कृष्ण इति । भगवति ज्ञानं बहुलं बलमल्पमिति । तद्रूपाणां तद्गुणानां च परस्परमसाम्यदर्शनमिति वा । अवयवेषु परस्परमवयवानां तेनावयविना वा भेददृष्टिरिति योज्यम् । कुत्रचित् कालविशेषे क्वचिद्विषये । अस्य हरेर्मूलरूपिणः । स्वत एव परतः शापादेर्वा शक्त्यादिदोषसंसर्गं ब्रूयादिति योज्यम् । यद्वा, अज्ञानतः अज्ञानाख्यात् परतः । ज्ञानतो ज्ञानाख्यात् स्वतो वा दोषसंसर्ग इति योज्यम् । अचिदानन्ददेहतामित्युत्तरेणान्वेति । प्रादुर्भावेऽपि विभोरचिदानन्ददेहतामत एव देहत्यागोद्भवादिकम् आदिपदेन जरादिपारवश्यादिकमित्यत्राऽदिपदेन क्षुत्पिपासादिपरिमाणं परिच्छिन्नत्वं गुणादिभिः गुणक्रियासंयोगादिभिः ।

**भाष्यम्-**

**तर्कैस्तस्यापलापो वा तत्र रक्तेन चेतसा ।**
**त्यागानामेवमुक्तानां तर्काद्यैः साधनं तथा ।**
**अचिन्त्यविभवेऽप्यस्मिन्नसम्भवनिरूपणम् ।**
**स एष मुख्यतस्त्यागो वासुदेवस्य कीर्तितः ।-**

### (हरिसन्त्यागस्य द्वितीयप्रकारः)

रमाब्रह्मादिकानां च तारतम्यानभिज्ञता।
संशयश्चोक्ततत्त्वेषु जगन्मिथ्यात्वदर्शनम्।
अस्मृतिर्वासुदेवस्य तद्भक्तानां विनिन्दनम्।
द्वितीय एष त्यागस्तु विष्णोरेव प्रकीर्तितः।

### (हरिसन्त्यागस्य तृतीयचतुर्थप्रकारौ)

निषिद्धकर्मकरणं विहितस्य च वर्जनम्।
त्यागस्तृतीयो हि हरेश्चतुर्थोऽयोग्यपूरुषे।
उपदेशाः केशवस्य यथाशास्त्रोदितक्रमात्।
आचार्यपित्रोरन्यत्र तथैव च महाव्रते।
हौत्रोद्गात्राध्वर्यवाणि त्याग एवं चतुर्विधः।

**टिप्पणी -**

न केवलमीश्वरादेरभाववचनं त्यागः। किन्तु तस्य तर्कैरीश्वरादेरपलापोऽपि त्याग इत्याह– **तर्कैरिति** ।। तत्रेश्वराभावादौ रक्तेनाऽग्रहाभिनिविष्टेन शुष्कतर्क-प्रामाण्ये वा रक्तेनेत्यर्थः। न केवलं तत्समाधिकादेर्भाववचनं त्यागः। किन्तु तत्समं वाऽधिकं वाऽपि ब्रूयादित्यादौ उक्तानां तत्समो वाऽधिको वास्तीत्यादि-वचनज्ञानरूपाणां त्यागानां तर्काद्यैः सम्यक् साधनं च त्याग इत्याह– **तर्काद्यै-रिति** ।। असम्भवनिरूपणं युगपदणुत्वमहत्त्वादिलोकविरुद्धधर्माणां द्वितीयं त्याग-माह– **रमेति** ।। तारतम्यापरिज्ञाने तारतम्यान्तगत्वेनोत्कर्षज्ञानानुपपत्तेः। जगन्मिथ्यात्वे जगत्कारणत्वादेरसत्यत्वापातात्। भगवद्भक्तनिन्दायास्तन्निन्दा-पर्यवसानत्वात्। विष्णोरेवैषः द्वितीयस्त्याग इति भावः। तृतीयत्यागमाह– **निषिद्धेति** ।। निषिद्धवर्जनस्य विहितकरणस्य च भगवत्प्रियत्वात् तत्त्यागे भगवदाज्ञालङ्घनाच्च तृतीयोऽपि विष्णोरेव त्याग इति भावः। ननु विप्रचित्त्यंशं

मागधं प्रति वैष्णवाग्रेसरेण भीमसेनेन विष्णूत्कर्षादिकं कथं तर्हि प्रतिपादितमित्यत आह– **यथाशास्त्रेति** ।। शास्त्रोक्तप्रमेयनाडीमनतिक्रम्येत्यर्थः । परपक्षदूषणाय खण्डशः प्रमेयोपन्यासो न दोषावह इति भावः । यथायोग्योपदेशस्तथैवाऽऽचार्यपित्रोरन्यत्र महाव्रते होत्राद्यार्त्विज्यानि चतुर्थस्त्यागः । एवं त्यागश्चतुर्विध इति योज्यम् ।

**भाष्यम्-**

**(हरिसन्त्यागिभ्योऽनिष्टफलम्)**

**त्यागद्वयात्तु प्रथमात् प्राप्यतेऽन्धं तमः क्रमात् ।**
**तृतीयान्निरयप्राप्तिश्चतुर्थान्न दिवं व्रजेत् ।**
**उपदिष्टेऽपि यस्तत्त्वे संशयं कुरुते पुमान् ।**
**सोऽन्धं तमो व्रजेदन्यो निरयायैव गच्छति ।**
**स एव भगवान् विष्णुरेतैर्दोषैर्विना यदि ।**
**ज्ञायते मुक्तिदः साक्षान्नात्र कार्या विचारणा ।**
**यदि ज्ञानं नातिपक्वं सरागं च मनो भवेत् ।**
**तदा स्वर्गादिलोकाप्तिः संशयश्चेत् क्वचित् क्वचित् ।**
**आवृत्तिरेव संसारे यावन्निःसंशयो भवेत् ।**

**टिप्पणी -**

त्यागानां फलं विवेचयति– **त्यागेति** ।। **क्रमादिति** ।। प्रथमत्यागेऽन्धतामिस्रं द्वितीयत्यागे तामिस्रमिति क्रमादित्यर्थः । 'तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ' (ब्र.सू.भा. ३.१.१६) इति तद्द्वैविध्यं स्पष्टम् । निरयं रौर-वादि । एतेन श्रुतं च नरकावहमित्येतद् विवृतं भवति । न दिवमित्युपलक्षणं श्रवणफलं च नेति ज्ञेयम् । संशयश्चोक्ततत्त्वेष्वित्यर्थ इति भावेनाऽऽह– **उपदिष्ट इति** ।। अन्यो गुर्वनुपदिष्टतत्त्वः स्वयमेव संशयी । एतैर्दोषैस्तत्समं वाऽधिकं वापीत्याद्युक्तदोषैर्विना तद्रहितत्वेन यदि साक्षादपरोक्षतो ज्ञायते तर्हि साक्षान्मुक्तिदः

लिङ्गभङ्गद इत्यर्थः । यद्वा एतैर्दोषैर्मुख्यत्यागादिदोषैर्विना विद्यमानेन पुरुषेण यदि ज्ञायत इत्यर्थः । ननु यदुक्तमन्यो निरयायैवेति तदयुक्तम् । भगवत्सर्वोत्तमत्व-निश्चयवतां बहुवाक्यविरोधदर्शनेन तत्र तत्र संशयसद्भावे निरयाङ्गीकारे 'यैर्निश्चितं परत्वं तु विष्णोः प्रायो न यातनाम् । ब्रह्महत्यादिभिरपि यान्त्याधिक्ये चिरं न तु ॥' इति वचनविरोधादित्यत आह– **यदीति** ॥ सरागं स्वर्गादौ । आवृत्तिरेव न तु निरयप्राप्तिः ।

**भाष्यम्-**

### (अधिकारिभेदेन फलभेदः)

पुनरावृत्तिहीनं तु तमोऽन्धं मुक्तिरेव च ।
पूर्वं तु निःसुखं तत्र निर्दुःखं चापरं मतम् ।
निश्शेषगुणहीनं च पूर्वं निर्दोषकं परम् ।
विमिश्रा गतयस्त्वन्याः पुनरावृत्तिसंयुताः ।
असुरा देवता मर्त्या योग्या एतेषु च क्रमात् ।
नच तेषां सङ्करोऽस्ति यथायोग्या हि तद्गतिः ।
मानुषेषूत्तमा मुक्तिमधमा निरयं तथा ।
आप्नुवन्ति मनुष्येषु मध्यमाः सृतिभागिनः ।

### (सृष्टिलयादीनां न पर्यवसानम्)

नियमोऽयं नान्यथा स्यादच्छिद्रत्वं यथा भवेत् ।
दोषेऽथवा गुणे वाऽपि तदा दैत्याः सुरा अपि ।
स्वां स्वां गतिं समायान्ति तावत् संसारभागिनः ।
अच्छिद्रत्वं नैव सर्वैः कदाचित् प्राप्यते यतः ।
सृष्टिस्थितिलयादीनां नोच्छेदस्तेन कुत्रचित् ।
तस्माद् दोषान् प्रहायैव विष्णुं सर्वोत्तमोत्तमम् ।
जानीयात् तेन मुक्तिः स्यादपरोक्षदृशेरनु ।

**टिप्पणी -**

संसारस्य संशयनिवृत्त्यवधिकत्ववत् तमसो मोक्षस्य च सावधिकत्वं न मन्तव्यमित्याह– **पुनरावृत्तीति** ॥ तदुभयस्वरूपमाह– **पूर्वं त्विति** ॥ निःशेषगुणहीनम् सुखापादकनिःशेषगुणहीनम् । निर्दोषकं दुःखापादकदोषविधुरम् । विमिश्रगतयः सुखदुःखमिश्रगतयः । अन्याः स्वर्गमानुष्यनिरयलक्षणाः नियतवासाभावात् पुनरावृत्तिसंयुताः । त्यागद्वयेन तमः । अन्याभ्यां निरयः । स्वर्गाभावश्च । त्यागचतुष्टयहीनो मुक्तिं गच्छतीत्युक्तम् । गतित्रये अधिकारिषु विशेषोऽस्तीत्युच्यते– **असुरा इति** ॥ सङ्करः फलसङ्करः । मर्त्यान् विभज्य फलभेदमाह– **मानुषेषूत्तमा इति** ॥ निरयं नित्यनिरयम् । सृतिभागिनः । सर्वदा संसारयोग्याः । यद्यसुरा देवा मानुषोत्तमाश्च तमोमोक्षभागिनस्तर्हि इदानीं तेषां कथं संसारोपलम्भ इत्यत आह– **अच्छिद्रत्वमित्यादिना** ॥ अच्छिद्रत्वं पूर्णत्वम् । ननु तेषां युगपत् पूर्तौ सृष्टिप्रलयोच्छेदप्रसङ्गः । नच नित्यसंसारिण आदाय तदुपपत्तिः । तथापि मोक्षार्थं साधनानुष्ठानप्रवाहस्योच्छेदप्रसङ्गात् । तथाच सृष्टिप्रलयवाक्यानां 'तद् विजिज्ञासस्व' इत्यादिविधिवाक्यानामप्रामाण्यप्रसङ्गापत्तेरित्यत आह– **अच्छिद्रत्व-मिति** ॥ तस्माद् अनर्थफलत्वात् । दोषान् मुख्यत्यागादीन् ।

**उपनिषत्-**

**(मरणसूचकानि दुर्निमित्तानि - तत्परिहारोपायाः)**

**स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्य एकमेतदित्य-वोचाम ॥ तौ यत्र विहीयेते चन्द्रमा इवाऽऽदित्यो दृश्यते न रश्मयः प्रादुर्भवन्ति लोहिनी द्यौर्भवति यथा मञ्जिष्ठा व्यस्तः पायुः काककुलायगन्धिकमस्य शिरो वायति ॥ सम्परेतोऽस्याऽऽत्मा न चिरमिव जीविष्यतीति विद्यात् स यत् करणीयं मन्येत तत्**

कुर्वीत ॥ यदन्ति यच्च दूरक इति सप्त जपेदादित् प्रत्नस्य रेतस इत्येका ॥ यत्र ब्रह्मा पवमानेति षळुद्वयं तमसस्परीत्येका ।

**भाष्यम्-**

सूर्यमण्डलगो विष्णुर्देहे चक्षुषि संस्थितः।
अनिरुद्धश्च हृदये न च भेदोऽनयोः क्वचित्।
अन्येषामपि रूपाणामिति विद्याद् विचक्षणः।
द्विरूपः स यदा विष्णुरपगच्छति देहतः।
तदैव दुर्निमित्तानि जायन्ते नान्यदा क्वचित्।
तस्मात् तेषां दर्शने तु कर्तव्यं पारलौकिकम्।
सर्वमेव जपेच्चैव यदन्तीत्यादिका ऋचः।

**टिप्पणी -**

'स यश्चायमशरीरः प्रज्ञात्मा' 'यश्चासावादित्ये एकमेव तदित्यवोचाम' इत्येतद् व्याचष्टे– **सूर्यमण्डलेति** ॥ योऽसावादित्ये स्थितः सूर्यमण्डलगो विष्णुः प्रद्युम्नः स एव पुरुषे देहे चक्षुषि स्थितः योऽयं पुरुषे चक्षुषि स्थितः यश्चायमशरीरः प्रज्ञात्मा पुरुषे देहे हृदयेऽनिरुद्धः यश्चासावादित्ये स्थितः सूर्यमण्डलगो विष्णुस्तद्रूपद्वयमेकमेव। नच भेदोऽनयोः क्वचिदित्युपनिषद्भाष्ययोरर्थः। चशब्देन रूपान्तराणि गृहीत्वा तेषामत्रैक्यमुच्यते इत्याह– **अन्येषामपीति** ॥ इत्यनेन वाक्येनैवाभेदं विद्यादित्यर्थः। यौ यत्र विहीयेते इत्यादि व्याचष्टे– **द्विरूप इति** ॥ अपगच्छति अपजिगमिषति। स यत्करणीयं मन्येत तत्कुर्वीतेत्येतद् व्याचष्टे– **कर्तव्यमिति** ॥ सर्वं परलोकसाधनं मृतिकाले कर्तुमुचितं कार्यमित्यर्थः। यदि कालमृत्युः यदि वाऽकपमृत्युः पक्षद्वयेऽपि यदन्तीत्यादिका ऋच एव जपेच्चेत्यर्थः। एतेन यदन्तीति सप्त जपेत् इत्यादिजपविधिवाक्यानि व्याख्यातानि भवन्ति ।

**भाष्यम्-**

**(अरिष्टपरिहारकमन्त्राः, तद्देवताश्च)**

**ऋग्भिः षड्भिर्वायुरेव पवमानादिनामकः।**
**स्तूयते सोऽङ्गनेतृत्वादग्निरित्यभिधीयते।**
**परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः।**
**वायुः पुनाति यल्लोकान् सविता तेन कथ्यते।**
**पवित्रं नाम साक्षात् तत् परं ब्रह्म जनार्दनः।**
**प्रसादयित्वा तं विष्णुं तेन लोकान् पुनात्यसुः।**
**ज्ञानाख्यप्रसवेनापि स्वयं वायुः पुनात्ययम्।**

**टिप्पणी -**

यदन्तीत्यादिसप्तके आद्यद्वयं पावमान्यं, द्वितीयद्विकमाग्नेयं, पञ्चमं सावित्रं, षष्ठं सावित्रमाग्नेयं सौम्यं चेति प्रतीयते। अतः षट्कस्य देवतामाह– **ऋग्भिरिति** ॥ पवमानादिनामकः। पवमानाग्निसवितृसोमनामकः। षड्भिरित्युक्त्या सप्तमस्य देवजनादिभिः परिवृतो जातवेदानामको वायुर्न केवल इति परिशेषयति। अग्न्यादिशब्दान् वायौ निर्वक्ति– **स इति** ॥ अङ्गानां सर्वशरीराणां प्रवर्तकत्वाद् अङ्गशब्दोपपदान्नयतेर्डिप्रत्यय उपपदानुस्वारलोपश्चेति भावः। वायुः परस्य ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिः सविता कथ्यते। यदस्मात् परस्य नेतृत्वाद् ब्रह्मणो विष्णोर्ज्ञापनाख्यप्रसूतिभिर्लोकान् पुनाति तस्मात् पवमानः कथ्यत इति शेषः। वक्ष्यति हि पवमानश्च पावनादिति। पवमानशब्दनिर्वचनायैव ब्रह्मसवैः पुनीहि न इत्युपनिषद्वाक्यमत्र व्याख्यातम्। सवितृशब्दप्रवृत्तिनिमित्तप्रसवाभिधानाय चेति द्रष्टव्यम्। पवित्रेण विचर्षणिरित्यादौ पवित्रशब्दं व्याचष्टे– **पवित्रं नामेति** ॥ पावयित्वा त्रातीति पवित्रं नाम प्रसिद्धः। ननु तप्तं चक्रं द्विभुजे धारयन्ति तेन पवित्रेण पाप्मानमवधून्वन्तीत्यादौ पवित्रं चक्रं प्रसिद्धमित्यत उक्तम्– **साक्षान्मुख्यत इति** ॥ किञ्चात्र यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा

ब्रह्मेति ब्रह्मशब्दस्य पवित्रे प्रयोगात् पवित्रं परब्रह्मैवेत्युक्तम्– **परं ब्रह्मेति** ॥ ननूभाभ्यां देव सवितः पवित्रेण सवेन चेति पवित्रस्य करणत्वं प्रतीयते । कर्तृप्रयोज्यं च करणम् । नच वायुप्रयोज्यत्वं विष्णोरुपपद्यते तत्कथं पवित्रं ब्रह्मेत्यत आह–**प्रसादयित्वेति**॥ असुः प्राणः। सवेन चेत्यस्यार्थः-**ज्ञानाख्येति** ॥

**भाष्यम्-**

**प्राणाग्नेरर्चिषो देहे वितितास्तेषु केशवः ।**
**अर्चिष्मान् विततो नित्यं वायुस्तेन [1]पुनात्ययम् ।**
**यत्र ब्रह्मेति षड्भिश्च प्रार्थनीयः स मारुतः ।**
**मोचयित्वैव संसाराद् विष्णोर्लोके कृधीति ह ।**
**आदित् प्रत्नस्येति विष्णुः स्तुत्यो वैकुण्ठलोकगः ।**
**आदित्यमण्डलस्थश्च साक्षान्नारायणः प्रभुः ।**
**उद्वयं त्विति मन्त्रेण स्तुत्यो वायोरपीश्वरः ।**
**अपमृत्युभयं तस्य यदन्तीत्यृग्जपाद् व्रजेत् ।**
**कालमृत्युर्यदि भवेत् तथा जन्मादिकं भयम् ।**
**अन्याभिः कर्मतः पूतो यत्र ब्रह्मेति वैष्णवम् ।**
**लोकं व्रजेत् तथाऽन्याभ्यां विष्णुर्मोक्षसुखप्रदः ।**

**टिप्पणी -**

यत्ते पवित्रमचिष्यग्ने इत्येतद् व्याचष्टे– **प्राणाग्नेरिति** ॥ एतेन प्राणाग्नय एवैतस्मिन् पुरे जाग्रतीति श्रुतौ प्राणे अग्निशब्दप्रयोगं द्योतयति । अर्चिष्मानित्यनेनार्चिव इत्येतद् व्याख्यातं भवति । यत्र ब्रह्मेत्यादौ पवमानेन्दुशब्दयोः श्रवणादुभयदैवत्यं षट्कमिति प्रतीयतेऽतस्तद्देवताऽध्याहारपूर्वं तात्पर्यमाह– **यत्र ब्रह्मेति** ॥ यद्यप्युपनिषत्पाठक्रमादादित्प्रत्नस्येत्येतत् प्रथमं व्याख्येयम् । तथापि पवमानदेवताकस्य यदन्तीत्यादेर्व्याख्यानप्रसङ्गेनैकदेवताकत्वाद् यत्र ब्रह्मेत्यादिकं व्याकृतम् ।

१. पुनात्यलम्- ह.पा.

आदित्प्रत्नस्येत्यस्य देवतामाह– **आदिति** ।। परो यदिध्यते दिवेत्यस्य तात्पर्यम्– **वैकुण्ठेति** ।। उद्वयमित्यस्य सूर्यो देवतेति प्रतीतेराह– **आदित्येति** ।। साक्षादधिष्ठानव्यवस्थानमन्तरेण । नारायण एव नतु सूर्योऽपीत्यर्थः । तत्र हेतुः– **वायोरिति** ।। देवत्रा देवमिति वाय्वादिदेवेश्वरत्वश्रवणादिति भावः । यदन्तीत्यादीनां फलभेदमाह– **अपेति** ।। यदन्तीति प्रथमऋग्जपादित्यर्थः । अन्याभिः पवमानः सो अद्य न इत्याद्याभिः षड्भिः यत्र ब्रह्मेति षट्केन वैष्णवं लोकं व्रजेत् । अन्याभ्यां आदित्प्रत्नस्योद्वयमित्येताभ्याम् । आदित्प्रत्नस्येत्यत्र वासरपदेन विष्णुर्मोक्षसुखप्रद इत्युक्तेः उद्वयमित्यत्र च ज्योतिरगन्मेति सायुज्योक्तेरिति ज्ञेयम् । एतेनोपनिषत्पाठातिक्रमेण व्याख्याने फलक्रमोऽपि नियामक इत्युक्तं भवति ।

**भाष्यम्-**

**इष्टप्रदानशीलत्वादिन्दुर्वायुः स एव च ।**
**सोमः सौम्यस्वरूपत्वात् पवमानश्च पावनात् ।**
**विष्णुः पुरातनत्वात्तु प्रत्नो रेतो महारतिः ।**
**देवत्रा देव एवासौ सर्वदेवेश्वरो यतः ।**
**सूर्यश्च सूरिभिः प्राप्यो नित्यानन्दो रमापतिः ।**
**देशतः कालतश्चैव गुणतश्चातिपूर्तितः ।**
**अत इत्युच्यते विष्णुः सन्ततो ह्यत उच्यते ।**
**तृतीयवर्णोऽतिशये यतस्तेनातिरेव वा ।**
**अत इत्युच्यते विष्णुः सम्यक् श्रुत्याद्यशक्यतः ।**
**पूर्णत्वाद् भगवान् विष्णुरश्रुतत्वादिनोदितः ।**

**टिप्पणी -**

इन्द्रायेन्दो इत्यत्रेन्दुशब्दं निर्वक्ति– **इष्टेति** ।। इष्टशब्दस्यान्त्यलोप इकारस्यानुस्वारः, तथाच इं इष्टं दातुं शीलमस्येति इन्दुरित्यर्थः । वर्षिष्ठैस्सोम धामभिरित्यत्र

सोमशब्दार्थमाह– **सोम इति** ।। पावनादिति पव शुद्धावित्यतः कर्तरि शानच् मुमागमश्चेति भावः ।। **पुरातनत्वादिति** ।। नश्च पुराणे प्रादिति सूत्रे पुराणेऽर्थे विवक्षिते प्रादुपसर्गान्नपि कृते प्रत्नशब्दस्य निष्पन्नत्वादिति भावः। रेतःशब्दार्थः– **महारतिरिति** ।। देवं देवत्रा सूर्यमित्येतद् व्याचष्टे– **देवत्रेति** ।। सूरिभिर्याप्यते प्राप्यत इति सूर्य इत्यर्थः । सूरिप्राप्यत्वोपपादनम्– **नित्यानन्द इति** ।। उत्तरमित्यादेर्निरुपचरितसर्वोत्तमत्वमिति भावेनोक्तम्– **रमापतिरिति** ।। स योऽतोऽश्रुत इत्यादि व्याचष्टे– **देशत इति** ।।कथमनेन त्रिविधव्याप्तिलाभ इत्यत आह– **सन्तत इति** ।। सम्यक् तत इति विस्तृतो ह्यत इत्यनेनोच्यते। अत सातत्यगमन इति धातोर्गमनमत्र स्थितिरिति भावः। यद्वा नायमतःशब्दः किन्त्वतीत्यतिशयित इत्यर्थकान्निष्पन्नोऽतःशब्द इति भावेनाऽह– **तृतीयेति** ।। यतः 'तृतीयोऽतिशये' इति सूत्राद् यो वर्णो यत्र भाव्यस्तस्य पूर्वोऽपरो वा तृतीयो वर्णः अर्थातिशये विवक्षिते भवति । तेन कारणेनातिशब्दबोध्यत्रिविधिव्याप्तेर्निरुपचरितत्व-लक्षणाधिक्यविवक्षया अतिशब्दान्त्य इकारस्य तृतीयवर्णह्रस्वाकारप्राप्तौ अतिरेवात इत्युच्यत इति वाऽर्थ इति भावः । अश्रुत इत्यादेः सर्वथा न श्रुत इत्याद्यर्थप्रतीतेर्व्याचष्टे– **सम्यगिति** ।। पूर्णत्वात् सम्यक् साकल्येन श्रुत्याद्यशक्यत्वात् स्वयोग्यतानुसारेणाल्पस्यापि पूर्णत्वात् तत्प्रसादमृते स्वातन्त्र्येण श्रुत्यादिश्रवणादितदशक्यत्वादित्यर्थः।

**भाष्यम्-**

**अन्तस्थः सर्वजीवानां पूर्णत्वात् पुरुषाभिधः।**
**समः स सर्वरूपेषु सर्वजीवनियामकः।**
**इति विद्यात् परं विष्णुं मुच्यते तेन संसृतेः ।।' इत्यादि च ।।**

**शरीरपुरुषादीनां प्राप्यत्वात् तदुपास्यत्वात् तेषां नियामकत्वेन तेभ्योऽप्यत्युत्तमत्वेन तेषु स्थितत्वाच्च तेषां सार इत्युच्यते भगवान्। यदीं एव। अलकं अरकम्। यत्**

**किञ्चिच्छृणोति तत् सर्वमतिरूपान्धन्तमःप्राप्तिकारणमेव तस्य भवति। तत्र हि सर्वरत्यभावो रतिविरुद्धदुःखं च पूर्णम्।**

**टिप्पणी -**

अन्तरपुरुषसमात्मशब्दान् व्याचष्टे- **अन्तःस्थ इत्यादिना**।। विधेः फलपर्यवसन्नत्वाद् विधिलभ्यं फलमाह- **मुच्यत इति**।। पूर्वखण्डेऽयमशरीरः प्रज्ञात्मा स रस इत्यादौ रसशब्दः सारः शिवस्यापीति सारार्थतया प्रमाणेन व्याख्यातः। रससारशब्दौ श्रेष्ठपरौ। 'रसः सारो वरश्चेति शब्दाः पर्यायवाचकाः' इत्युक्तत्वात्। तथाच सर्वरूपेषु भगवान् सर्वेभ्योऽपि श्रेष्ठ एव, किं विशिष्य शरीरपुरुषादीनां अनिरुद्धादयः सारा इत्युच्यन्त इत्यतः श्रेष्ठत्वे समानेऽपि शिवादीनामनिरुद्धादीनां च विशेषानुबन्धोक्तिर्विशिष्योक्तिरुपपद्यत इत्यत आह- **शरीरेति**।। प्राप्यत्वात् सायुज्यमुक्तौ प्राप्यत्वात्। यदीं शृणोतीत्यत्र यदीमित्यनूद्य ईमित्यस्यार्थमाह- **ईं एवेति**।। अलकमित्यनूद्य प्रतिपदं अलकं अरकमिति रलयोः सारूप्यादिति भावः। यदेव शृणोति तदलकमेव शृणोतीत्यस्यार्थमाह- **यत्किञ्चिदिति**।। एतेनारम् अरतिं करोतीत्यरकमिति व्याख्यातं भवति। कोऽयमरतिर्नाम कथं चैतत् प्राप्तमित्यत आह-**तत्र हीति**।। नञः तदभावः। तद्विरुद्धवाचकत्वात् प्राप्ततमस्कस्यारतिः सर्वरत्यभावः तद्विरुद्धं दुःखं च पूर्णमित्यर्थः। हीति प्रमाणप्रसिद्धिं सूचयति। यद्वा तस्य हीत्यस्य द्विविधत्यागिन इत्यर्थः।

**भाष्यम्-**

**परस्मै शंसनमात्रादरतिरेवेत्यतः प्रस्तुते चतुर्थत्यागे न तस्य वाच्यपि भागोऽस्ति, नहि प्र वेद सुकृतस्य पन्थामिति दोषद्वयमेवेत्यवधारयति 'न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थानमित्येतत् तदुक्तं भवति' इति। अलकं शृणोतीति त्यागद्वयस्य मुख्यतः। तृतीयस्यापि नरकं शृणोतीति किञ्चिद् भवति। तौ यदाऽस्माच्छरीराद् विहीयेत तदैव तानि निमित्तानि पश्यन्तीति नियमः। न तु तदा पश्यत्येवेति।**

**टिप्पणी -**

नन्वयोग्योपदेशे दोषद्वयमुक्त्वा तदप्येतदृषिणोक्तमिति तत्र मन्त्रं प्रतिज्ञाय मन्त्रः पठितः । तत्किं न तस्यानूक्ते भागोऽस्ति । न वेद सुकृतस्य पन्थामिति एतदुक्तं भवतीति पुनरुच्यत इति अत अवतारयति– **परस्मै शंसनमात्रादित्यादीति** ॥ अरतिरेवेति काकुः । अरतिस्तमो भवति किन्न भवत्येवेति । ततश्चायमर्थः । उदाहृतमन्त्रे परमात्मानं त्यजत रतिरपि दोषत्वेनोच्यते । तदयुक्तम् । परस्मै शंसनमात्रादरत्ययोगादित्याशङ्कायां त्यागान्तरे अरतिर्दोषत्वेनोच्यते । प्रस्तुते चतुर्थत्यागे तु न तस्य वाच्यपि भागोऽस्तीति श्रुतम् । नहि प्रवेद सुकृतस्य पन्थामिति दोषद्वयमेवेत्यवधारयति । न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थामित्येतत् तदुक्तं भवतीति वाक्येनेत्यर्थः । ननु यदीं शृणोतीत्येतद् यदि प्रथमद्वितीयत्यागवतोस्तमःप्रतिपादकं तर्हि तृतीयत्यागिनः फलं केनोक्तमित्यत आह– **अलकमिति** ॥ अलकं शृणोतीत्युक्तं फलं त्यागं द्वयस्य मुख्यतः तृतीयस्यापि त्यागस्य किञ्चिद् भवत्यमुख्यं भवेदिति । कुतः नरकं नरकसाधनं शृणोतीत्यर्थाङ्गीकारादित्यर्थः । ननु शरीरत्यागकाले कदाचिद् दुर्निमित्तादर्शनात् कथमयं नियम इत्यत आह– **तौ यदैवेति** ॥

**भाष्यम्-**

**('यदन्ति' इत्यादीनामृचां तात्पर्यम्)**

**वासेन रमयतीति वासरं विष्णुर्ज्योतिः ।**

**'यत्र ब्रह्मा वेदवाक्यं व्याचक्षाणो मखैर्यजन् ।**
**सोमेन च सुतेनेशमास्ते लोके हरिर्हि सः ॥' इति स्कान्दे ॥**

**ग्राव्णा सोमविषये सोमेनेष्ट्वा महीयते तेनैव विष्णुप्रीत्या स्वस्याऽनन्दं जनयन् ।**

**टिप्पणी -**

आदित् प्रत्नस्येत्यत्र वासरं दिनमिति प्रतीतिवारणाय निर्वक्ति– **वासे-**

**नेति** ।। हृदि वासेनेत्यर्थः । तत्प्रसादेन पश्यन्ति हृदि वासा इति हृदमिति छान्दोग्यभाष्योक्तेर्ज्योतिरादित्यमण्डलमित्यन्यथाप्रतीतेर्व्याचष्टे– **विष्णुरिति** ।। नचाऽऽदित्यमण्डलम् । दिवः पर इति छान्दोग्यभाष्ये उपपादनं द्रष्टव्यम् । यत्र ब्रह्मेत्यत्र ग्राव्णा सुतेन सोमेन युज्यत इत्यन्यथाप्रतीतिं वारयन् व्याचष्टे– **ग्राव्णेति** ।। ग्राव्णा सुतेन सोमेनेत्यन्वयः । सोमविषये सौम्यत्वात् सोमनामकभगवद्विषये इष्ट्वेत्यध्याहारप्रदर्शनम् । महीयतेऽन्यमुक्तैः यदि सोमेनेष्ट्वेत्यनेनान्वयः । तर्हि आनन्दं जनयन्नित्युक्तानन्दव्यञ्जकमित्याशङ्कां परिहरन् आनन्दजनने तस्य स्वातन्त्र्यप्रतीतिं चापाकरोति– **तेनैवेति** ।। विष्ण्वर्थं सुते पातः मुक्तावनुष्ठितसाधनानां फलरूपत्वोक्तिविरोधः । मुक्तौ प्राप्यानन्दातिशयस्यापरोक्षोत्तरभाविसाधन-साध्यत्वोक्तिविरोधश्चेति चेन्न । यथापरोक्षोत्तरभाविसाधनजन्यप्रसादेन मुक्तौ भगवान् स्त्र्यादिविषयसम्पत्तिं तद्दर्शनं तदनुभवं तद्भोगस्याप्रियत्वात् तेन स्वप्रसादं विचित्रानन्दानुभवं च ददाति । तथा सोमयागस्यापि विषयतुल्यत्वादपरोक्षोत्तर-भाविसाधनजन्यप्रसादेनैव भगवान् मुक्तौ सोमयागसम्पत्तिं मुक्तस्य दत्वा तेन च स्वयं प्रसन्नः परमानन्दं भोजयतीति किमनुपपन्नम् । सङ्ग्रहश्चात्रास्माभिः कृतो **विरोधोद्धारे**– 'हरेरुपासना चात्र सदैव सुखरूपिणी । सोमेनानन्दमित्युक्तो न विरोधो भवेद् यतः ।। स्त्र्यादिभिर्विषयैस्तुल्यः सोमयागे इहेष्यते । भोगवत् प्रीतिहेतुश्च पूजारूपत्वतस्तयोः ।।' इति ।

**भाष्यम्-**

**स्वरानन्दरूपो विष्णुः । दिवो देव्या अवरोधनं तस्याः परिवारभूताः सर्वदेव्यः । द्यौर्नाम वायुपत्नी । 'अजनयो मरुतो वक्षणाभ्यो दिव आवक्षणाभ्यः' इत्यादेः । यह्वतीः स्यन्दमानाः ।**

**'सर्वेष्टद जगत्प्राण मामादाय परिस्रव ।**
**यत्रासौ भगवान् विष्णुस्त्वं हि मोक्षप्रदः सदा ।।' इति च ।।**

'इन्दुरिष्टप्रदत्वाद् यो वायुरादाय गच्छति ।
इन्द्रनाम्नः केशवस्य समीपं मुक्तमञ्जसा ।।' इति च ।।

**(आनन्दे मोदे प्रमोदे मुदि चार्थभेदः)**

**'अनन्यहेतुकं साक्षाद् भगवद्भक्तिरूपकम् ।
सुखमानन्द इत्युक्तो मोदो भोगनिमित्तकः ।
प्रमोदस्तद्विशेषोत्थो मुन्नामात्यल्पभोगतः ।।' इत्यृग्वेदसंहितायाम् ।।**

**टिप्पणी -**

यस्मिंल्लोके स्वर्हितमित्यत्र स्वः सुखं निहितमिति प्रतीयते तथा सति यत्रानन्दाश्चेति पुनरुक्तं स्यादित्यतो व्याचष्टे– **स्वरानन्दरूप इति** ।। दिवमावृत्य परिवारतया स्थिता देव्यः अवरोधनशब्देनोच्यन्त इत्यर्थः ।। **वायुपत्नीति** ।। भूतपूर्वगत्या सरस्वती वायुपत्नीत्युच्यते । द्युशब्दस्य तत्र प्रयोगं दर्शयति– **अजनय इति** ।। त्वं मरुतो वक्षणाभ्यो वचनेभ्यः आसम्यग् वक्षणाभ्यः प्रवचनेभ्यः वेदशास्त्रपठनार्थं विशिष्टव्याख्यानार्थं च दिवः सरस्वत्याः सकाशादजनय इत्यर्थः । प्रवक्षणा अभिनत् पर्वतानामित्यत्र ऋग्भाष्यटीकायां वक्षणाशब्दस्य च परिभाषणे सनूप्रत्यय इति वचनपरत्वेन व्याख्यातत्वात् । 'चोः कुः' इति कुत्वं 'इण् कोः' इति षत्वं कषयोगे क्ष इति वक्षणेति क्रियाशेषो बोध्यः । इत्यादेरित्यादिपदेन द्यौर्वाव विद्युत्पतिर्वायुमुपगम्येत्यादेर्ग्रहणम् । यह्वतीः स्यन्दमाना इति । यहि गताविति धातुरिति भावः । इन्द्रायेन्दो परिस्रवेत्येतद् व्याचष्टे– **सर्वेष्टदेति** ।। नन्विन्द्रायेति श्रूयते कथं विष्णुरिति व्याख्यायत इत्यत आह–**इन्दुरिति** ।। यत्राऽनन्दश्च मोदाश्चेत्येतदपुनरुक्ततया व्याचष्टे–**अनन्येति** ।। भगवद्भक्त्या रूप्यते व्यज्यत इति भगवद्भक्तिरूपकम् । 'यद्वा सैवाऽनन्दस्वरूपेण नित्या मुक्तेषु तिष्ठति' इत्यादेः साक्षाद्भगवद्भक्तिस्वरूपमित्यर्थः ।

**भाष्यम्-**

**(मन्त्रे न पुनरुक्तिः)**

**तमसः सकाशात् उद्गता वयमुत्तरं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तस्तमेव देवत्रा देवं देवविषयेऽपि देवमगन्म । तदेव ज्योतिष्ट्वेनोत्तरत्वेन च पश्यन्त इति दर्शनेत्थम्भावविधानार्थं पूर्वम् । तथैवासौ भगवानुत्तमं ज्योतिः । न राजादिष्विवाविद्यमानभक्तिमात्रमिदमिति ज्ञापयितुं 'अगन्म ज्योतिरुत्तमम्' इति पुनर्वचनम् ॥**

**टिप्पणी -**

द्वयमिति मन्त्रे तमसस्परि रात्र्यन्धकारापगमानन्तरं उत्तरं ऊर्ध्वभागे विततं सौरं ज्योतिः पश्यन्तो वयं देवत्रादेवं उत्तमज्योतीरूपं सूर्यमगन्म सूर्योपस्थानं कृतवन्त इत्यन्यथाप्रतीतेर्व्याचिष्टे– **तमस इति** ॥ अज्ञानादित्यर्थः । तमेवेत्यनेन पूर्वोत्तरार्धयोर्भिन्नविषयत्वं उत्तरार्धस्य प्रसिद्धसूर्यपरत्वं च व्यवच्छिनत्ति । ननु यदि पूर्वार्धस्य प्रकाशपरत्वं उत्तरार्धस्य सूर्यपरत्वं इत्यनङ्गीकृत्योभयोर्भगवत्परत्वमुच्यते तर्हि पूर्वार्धे उत्तरं ज्योतिरुत्तरार्धेऽप्युत्तमं ज्योतिरिति पुनरुक्तं स्यादित्यत आह–**तदेवेति** ॥ उत्तरार्धगतस्योपयोगमाह– **तथैवेति** ॥ असौ भगवानुत्तमं ज्योतिरिति यत् तत् तथैवेत्यर्थः । इदं अस्मद्भजनम् । उत्तमज्योतीरूपब्रह्मप्राप्तिलक्षणफलस्यानुभवसिद्धत्वादविद्यमानोपासने फलानुपपत्तेः फलबलेनोपासनस्य याथार्थ्यं सिद्ध्यतीति ज्ञापयितुमित्यर्थः ॥

**उपनिषत्-**

**(नानाविधानि च दुर्निमित्तानि)**

अथापि यत्र च्छिद्र इवाऽदित्यो दृश्यते रथनाभिरिवाभिख्यायेत ॥ छिद्रां वा च्छायां पश्येत् तदप्येवमेव विद्यादथाप्यादर्शे वोदके वा जिह्मशिरसं वाऽशिरसं

वाऽत्मानं पश्येद् विपर्यस्ते वा कन्याके जिह्मे नवा दृश्येयातां तदप्येवमेव विद्यादथाप्यपिधायाक्षिणी उपेक्षेत तद् यथा बटरकाणि सम्पतन्तीव दृश्यन्ते ॥ तानि यदा न पश्येत् तदप्येवमेव विद्यादथाप्यपिधाय कर्णावुपशृणुयात् स एषोऽग्नेरिव प्रज्वलतो रथस्येवोपब्दिस्तं यदा न शृणुयात् तदप्येवमेव विद्यादथापि यत्र नील इवाग्निर्दृश्यते यथा मयूरग्रीवा ॥ मेघे वा विद्युतं पश्येन्मेघे वा विद्युतं न पश्येन्महामेघे वा मरीचीरिव पश्येत तदप्येवमेव विद्यादथापि यत्र भूमिं ज्वलन्तीमिव पश्येत तदप्येवमेव विद्यादिति प्रत्यक्षदर्शनानि ।

**भाष्यम्-**

'अर्चिषोंऽशा वर्तुलास्तु नाम्ना बटरकाः स्मृताः ॥' इति शब्दनिर्णये ॥

**टिप्पणी -**

अर्चिषोंऽशा वर्तुलास्त्विति ॥ उशब्दोऽवधारणे वर्तुला एव न त्वर्चिषो दीर्घाकारांशा इत्यर्थः ।

**उपनिषत्-**

**(मरणसूचकदुःस्वप्नाः-तत्परिहारोपायाः)**

अथ स्वप्नाः ॥ पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति वराह एनं हन्ति मर्कट एनमास्कन्दयत्याशु वायुरेनं प्रवहति सुवर्णं खादित्वाऽपगिरति मध्वश्नाति बिसानि भक्षयति पुण्डरीकं धारयति ॥ खरैर्वराहैर्युक्तैर्याति कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणामुखो व्राजयति ॥ स

यद्येतेषां किञ्चित् पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रिसूक्तेन प्रत्यृचं हुत्वा, अन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्रश्नीयात् ।

**(दुर्निमित्तदुःस्वप्नेषु विष्णोर्नानागुणोपासना कर्तव्या)**

स योऽतोऽश्रुतोऽगतोऽमतोऽनतोऽदृष्टोऽविज्ञातोऽनादिष्टः ॥ श्रोता मन्ता द्रष्टाऽदेष्टा घोष्टा विज्ञाता प्रज्ञाता सर्वेषां भूतानामन्तरपुरुषः सम आत्मेति विद्यात् ॥

॥ इति चतुर्थः खण्डः ॥

**भाष्यम्-**

'बृहत्तमं मधु यदि सहापूपं प्रभक्षयेत् ।
स्वप्ने तस्याचिरान्मृत्यू रक्ताब्जे वा शिरोधृते ॥' इति ब्रह्माण्डे ॥

'रात्र्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता ।
पायसेन हरेन्मृत्युं रात्रिसूक्तादकालिकम् ।
यदि कालिकमृत्युः स्यात् पदं सा परमं नयेत् ।
सहैव विष्णुना भक्तं विष्णोस्तद्वेदिनं तथा ।
रतिदत्वात् परो विष्णुर्मुख्यतो रात्रिरुच्यते ।
तदाश्रयत्वाद् दुर्गाऽपि रात्रिरित्यभिधीयते ।
स्त्रीरूपः स परो विष्णुः पायसेष्टो हि मोक्षदः ।
तस्मादुभौ सहैवेज्यौ भक्त्या दुःस्वप्नदर्शने ।

**टिप्पणी -**

मधुशब्दस्य मधुमात्रपरत्वप्रतीतेराह– **बृहत्तममिति** ॥ 'पुण्डरीकं सिताम्भोजम्' इत्यमरोक्तेः सितमब्जमित्यन्यथाप्रतीतेरर्थमाह– **रक्तेति** ॥ शिरोधृत इत्यनेन हस्तादौ

धारणमप्रयोजकमित्युक्तं भवति । 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' 'पुण्डरीकेक्षणो विष्णुः' इत्यादौ पुण्डरीकशब्दस्य श्वेताब्जपरत्वायोगाद् रक्ताब्जपरत्वस्य वक्तव्यत्वादत्रापि विशेषवाक्यबलेन रक्ताब्जपरत्वमिति भावः । रात्रीसूक्तं व्याख्यातुं अधिकारं फलं प्रतिपाद्यं चाऽऽह– **रात्र्या इति** ।। रात्र्या रात्रीसूक्तस्य विष्णुना सह दुर्गा देवतेत्यन्वयः । दुःस्वप्ने जाते सति विष्णोर्भक्तं तथा तद्भेदिनं स्वान्तर्गतरात्रिनामकभगवद्भेदिनम् । ननु रात्रिसूक्तस्य कथं विष्णुर्देवता? रात्रीशब्दस्य दुर्गायां प्रसिद्धत्वादिमं दुर्गास्तवमित्यन्ते नित्यं रात्रीसूक्तमिति श्रुतौ दुर्गा-देवताकत्वस्योक्तत्वाच्चेत्यतः रात्रीपदं व्याचष्टे–**रतिदत्वादिति** ।। रतं भावे क्तः रतं राति ददातीति रतशब्दाद्याकारस्य दीर्घः द्वितीयस्य लोपः स्त्रियामीकारः। तथाचोपनिषदि रात्रीति भवतीति भावः । 'ह्वयामि रात्रीं जगतो निवेशनीम्' इत्यत्र ऋग्भाष्यटीकायामित्थमेव व्याख्यातत्वाद् भगवत्परत्वे ङीबनुपपत्तिरित्यत उक्तम्– **स्त्रीरूप इति** ।। ततश्च किमित्यत आह–**तस्मादिति** ।।

**भाष्यम्-**

## (रात्रिसूक्ते प्रथमर्चो व्याख्यानम्)

**बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्श ह ।**
**आयन् सर्वेषु लोकेषु धृतास्तेनैव हि श्रियः ।**

## (रात्रिसूक्ते द्वितीयर्चो व्याख्यानम्)

**नीचानुच्चांश्च जीवान् स ब्रह्मादीनुर्वपूरयत् ।**
**ज्ञानेन बाधतेऽज्ञानं .............. ।**

## (रात्रिसूक्ते तृतीयर्चो व्याख्यानम्)

**................ स्वसारं स्वं तथाऽकरोत् ।**
**उपआख्यं शुक्लवर्णं प्रमदारूपमेव तु ।**
**तमश्चापाकरोत्येव [१]तदा सूर्यादिषु स्थितः ।**

---

१. सदा- ह.पा.

## (रात्रिसूक्ते चतुर्थर्चो व्याख्यानम्)

**स नः स्वामी यदुदरे यमनाद् यामनामके।**

**आविक्ष्म हि वयं सर्वे वृक्षे यद्वत् पतत्रिणः।**

**टिप्पणी -**

एवं देवतां निर्णीय सूक्तं व्याचष्टे—**बहुभिरिति** ।। पुरुत्रेत्यस्यार्थद्वयं बहुभिर्बहुधेति। विश्वा इत्यस्यार्थः— **इदं जगदिति** ।। विश्वा अधीत्यप्यन्वयमभिप्रेत्योक्तम्— **सर्वेषु लोकेष्विति** ।। श्रियोऽधितेत्यस्य तात्पर्यम्— **धृता इति** ।। निवत उद्वत इत्येतन्निर्गतानुद्गतानिति कैश्चिद् व्याख्यातं यथावद् व्याचष्टे— **नीचानिति** ।। 'उपसर्गाच्छन्दसि धात्वर्थः' इति सूत्रे धात्वर्थविशिष्टसाधने उपसर्गाद्वतिप्रत्ययो भवति स्वार्थ इति येन केनापि धात्वर्थेन विशिष्टसाधने विवक्षिते स्वार्थे वतिप्रत्ययविधानाद् वृत्तिकारेणापि निवत उद्वत इत्यनयोरेवोदाहृतत्वान्नि उदिति चोपसर्गाच्च य इति धात्वर्थे विवक्षिते स्वार्थे.वतिप्रत्यये नीचानुच्चानिति भवतीति भावः। अमर्त्येत्यस्यार्थः— **ब्रह्मादीनिति** ।। आ उ अप्रा इत्यस्य तात्पर्यम्— **उर्विति** ।। ज्योतिषा बाधते तम इत्यस्य तात्पयम्— **ज्ञानेनेति** ।। निरुस्वसारमित्यादेरर्थः— **स्वसारमिति** ।। स्वयमेव प्रमदारूपमित्यन्वयः। तेनोषःकालं तदभिमानिदेवतां च व्यवच्छिनत्ति। अप इत् उ हासते तम इत्यत्र तम इदित्यन्वयमभिप्रेत्याऽह— **तमश्चेति** ।। अपहासते उ इत्यस्यार्थः—**अपाकरोत्येवेति** ।। सा न इत्यस्यार्थः— **स नः स्वामीति** ।। यस्यास्ते यामन् इत्यस्यार्थः— **यदुदरे इति** ।। वृक्षे वसतिं न नीडमिवेत्यस्य तात्पर्यम्— **वृक्ष इति** ।।

**भाष्यम्-**

## (रात्रिसूक्ते पञ्चमर्चो व्यख्यानम्)

श्येनाख्यास्तु सुखीनत्वादा समन्तात् सुरोत्तमाः।

पद्वन्तो मानुषाश्चैव पादमात्रप्रयायिनः।

**ग्रामाख्या बहुलत्वात्तु दैत्या एव प्रकीर्तिताः ।**
**अर्थिनस्तु कृतार्थत्वान्मुक्ता एव श्रुताः श्रुतौ ।**

**(रात्रिसूक्ते षडर्चो व्याख्यानम्)**

**ऊरीकृतप्रमाणत्वादूर्म्यः स भगवान् हरिः ।**
**वृकास्तेनैव निर्याप्या वृकाः क्रूरत्वतोऽसुराः ।**
**तत्स्वभावाश्च वृक्याः स्युः स्तेनास्तत्र महासुराः ।**
**ब्रह्मस्तेना यतस्ते हि नित्यमैकात्म्यवेदिनः ।**
**विष्णुः सुखतरश्चैव भक्तानां भवति प्रभुः ।**

**टिप्पणी -**

श्येनासः श्येना इत्यत्र शी आ इन इत्यवयवे विभज्य शमस्यास्तीति शी सुखी विष्णुः स एव आसमन्तात् सर्वेषु देशेषु कालेषु च इनो येषां त इति विग्रहमभिप्रेत्य व्याचष्टे– **श्येनाख्या इति** ।। मानुषाश्चेति चशब्देनाश्व-गवादयः । पादवत्त्वस्य पक्ष्यादिसाधारण्यादुक्तम्– **पादमात्रेति** ।। ग्रामाः ग्राम्याः पशव इत्यन्यथाप्रतीतेर्व्याचष्टे– **ग्रामाख्या इति** ।। बहुलत्वाद् बहुलत्वादेव न तु ग्रामस्थत्वात् । दैत्या एव न तु ग्राम्याः पशवः । अर्था येषां सन्तीति अर्थिनः। भूमार्थे मतुप् । पूर्णार्था इत्यभिप्रेत्य कृतार्थत्वात् पूर्णार्थत्वादित्युक्तम् ।। **ऊरीकृतप्रमाणत्वादिति** ।। ऊरीकृतमङ्गीकृतं प्रमाणं येनेत्युरीकृतप्रमाणः । यद्वा ऊरीकृतमङ्गीकृतं प्रमाणं येन स ऊरीकृतप्रमाणः । इदं स्वप्रमापकं भवत्विति स्वाङ्गीकृत-प्रमाणत्वादित्यर्थः । वृकं वृक्यं च यवयस्तेनं च यवयेत्येतद् व्याचष्टे– **वृका इति** ।। निर्याप्या निष्कासनीयाः । वृकवत् क्रूरत्वादसुरा वृकाः । राक्षसाः तत्स्वभावाः असुरस्वभावाः पिशाचादयः । महासुराः मणिमदादयः । यतस्ते नित्यमनादिकालादारभ्यैकात्म्यवादिनोऽतः स्तेनाः ब्रह्मस्तेनाः । सुखतरेत्येतद् व्याचष्टे–**विष्णुरिति** ।। सुखतरः सुखप्रदः । 'तॄ प्लवनतरणयोः' इति धातुस्तरणं

च वितरणं दानमत्र विवक्षितम् । तथाच सुसुखं तरति वितरति ददातीति सुतरेति व्याख्यातं भवति ।

**भाष्यम्-**

**(रात्रिसूक्ते सप्तर्चो व्याख्यानम्)**

**कृष्णं व्यक्तं तमोऽज्ञानमज्ञानां पेशलं हि तत् ।**
**तद् यातयत्यृणमिव भगवान् पुरुषोत्तमः ।**
**स एव चोषाः कथितः प्रकाशत्वाज्जनार्दनः ।**

**(रात्रिसूक्ते अष्टर्चो व्याख्यानम्)**

**जयिनः स्तोममिव च ब्राह्मणाय यथा च गाः ।**
**उपाकरं तथा स्तोमं तवाहं तद् [1]गृणीष्व च ।**
**द्यौरिति ज्ञानमुद्दिष्टं तद्व्यङ्ग्यत्वाज्जनार्दनः ।**
**दुहिता दिव इत्युक्तः ................. ।**

**टिप्पणी -**

उपमा पेपिशदित्यादेरर्थः– **कृष्णमिति** ।। कृष्णं कृष्णवर्णं व्यक्तं अनुभव-सिद्धम् । तमो भावरूपमानम् । पेपिशत् अज्ञानामतिशयेन पेशलं भद्रमित्यर्थः । उष ऋणेव यातयेत्यस्य तात्पर्यम्– **तद् यातयतीति** ।। ननु रात्रिर्ह्यत्र देवता कथं उष ऋणे वेत्युषसः प्रार्थनमित्यत आह– **स एवेति** ।। रात्रिशब्दित एवेत्यर्थः । वश कान्ताविति धातोरिति भावः । उप ते गा इवाकरमित्यादि व्याचष्टे– **जयिन इति** ।। जिग्युषे जयिनोऽर्थे स्तोमं न स्तोममिव । ब्राह्मणायेत्यध्याहारः । गा इव ते तवाहं स्तोममुप । आ अकरम् । तं स्तोमं वृणीष्वेत्यर्थः । दुहितर्दिव इत्यस्यार्थः– **द्यौरिति** ।।

---

१. वृणीष्व- ह.पा.

**भाष्यम्-**

**(रात्रिसूक्तोपासनया मुक्तिप्राप्तिः)**

**..................... एवमर्थेन पूज्यते ।**

**रात्रिसूक्तेन भगवान् साक्षान्नारायणः प्रभुः ।**

**तत्सन्निधानाद् दुर्गाया एषोऽर्थ उपचारतः ।**

**एवं स्तुतस्तथैवेष्टो भगवान् मोक्षदो भवेत् ।**

**(सन्न्यासिभिरपि कर्तव्यो रात्रीसूक्तजपः)**

**यदन्तीत्याद्यृचः सर्वा अपि दुःस्वप्नदर्शने ।**

**जप्या एव विशेषोऽयं होमो दुःस्वप्नदर्शने ।**

**परोक्षज्ञानिनो विष्णोरापरोक्ष्यं व्रजेत् त्वरन् ।**

**अपरोक्षदृशः प्रीतः सुखाधिक्यं करोत्यजः ।**

**मुक्तस्य द्विविधैस्तस्माज्जपो यागश्च सर्वथा ।**

**कर्तव्यो न्यासिभी रात्रिसूक्तं जाप्यं त्रिशोऽञ्जसा ॥**

**इत्याद्यैतरेयसंहितायाम् ॥**

**टिप्पणी -**

सूक्तार्थमुक्त्वा रात्र्यास्तु देवता दुर्गेत्यादिकमुपसंहरति– **एवमर्थेनेति** ॥ साक्षान्मुख्यतः । एषोऽर्थः बहुभिर्नयनैर्विष्णुर्बहुधेदं ददर्शेत्याद्युक्तिः सर्वज्ञत्वादि-रूपोऽर्थः । एवं स्तुतः एवमर्थानुसन्धानपूर्वं स्तुतः । इष्टः पायसेन । स यद्येषां किञ्चित् पश्यद् रात्रिसूक्तेन प्रत्यृचं हुत्वेत्युक्त्या यदन्तीत्यादीनां दुःस्वप्नपरिहारकत्वं नास्तीति प्रतीयते । तां वारयति– **यदन्तीति** ॥ दुःस्वप्नदर्शने अयं पायसद्रव्यको रात्रिदेवताको रात्रिसूक्तेन होमविशेष इत्यर्थः । रात्रिसूक्तेन हुत इष्टश्च मोक्षद इत्युक्तम्, तदयुक्तम् । ज्ञानस्यैव मोक्षहेतुत्वाज्ज्ञानद्वारा चेद् विद्यान्तरस्यापि तुल्यम् । को विशेषोऽस्येत्यत आह– **परोक्षेति** ॥ त्वरयाऽ-

परोक्षादिहेतुत्वाद् विशेष इति भावः। द्विविधैः परोक्षापरोक्षज्ञानिभिः। सन्न्यासिनां दुःस्वप्नदर्शने किं कार्यमित्यत आह– **न्यासिभिरिति** ॥ ४ ॥

**खण्डार्थः -**

तद्वेदार्थज्ञानवैफल्यमेतत्कर्मवैफल्यं च ऋषिणोक्तं सचिविदं कर्म सञ्चयवेत्तारं सखायं शरीरे स्थित्वोपकारकं यस्तित्याजायोग्येभ्य उपदिशति। अयोग्यार्थं योग्येष्वप्याचार्यपित्रोरन्यार्थं वा महाव्रते शंसनादिकं च करोति। तस्य वेदवाचि भागः फलं नास्ति। सुकृतस्य पन्थानं च न प्रवेद न लभते हि। विद्लृ लाभ इति धातोः। तथा यो भगवन्तं तत्याजेश्वर एव नास्तीत्यादिरूपेण त्यजति। तथा यश्च रमाब्रह्मादितद्भक्ततारतम्यापरिज्ञानादिना तं त्यजति। स यदीं यदेव शृणोति तदलकमेवारतिरूपान्धतमःप्राप्तिकारणमेव शृणोति। तच्छ्रवणं तमःप्राप्तिकारणमेवेति यावत्। तया यो निषिद्धकर्माचरणेन विहितत्यागेन च भगवत्प्रियत्यागात् तत्पूजाया अकरणाच्च तं त्यजति। स यदेव शृणोति तदलकमेव शृणोति। नकारस्थाने अकारः रलयोरभेदः तथाच नरकसाधनमेव शृणोति कार्यकारणयोरभेदोपचारः। य आत्मानं परस्मै शंसति न तस्यानुक्ते भागोऽस्ति स न वेद सुकृतस्य पन्थानमित्युक्तार्थे उदाहृतमन्त्रे। यदीं शृणोत्यलकं शृणोतीत्ययोग्योपदेशतदर्थशंसनलक्षणं त्यागफलत्वेन यदीं शृणोत्यलकमिति तमसो वर्णनमयुक्तमित्यतस्तदीश्वरस्वरूपत्यागादित्यागान्तरफलमयोग्योपदेशादिप्रस्तुते त्यागे तु न तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थामिति प्रागुक्तं दोषद्वयमेव न तस्य वाच्यपि भागोऽस्ति नहि प्रवेद सुकृतस्य पन्थामित्यंशेनोच्यत इत्यवधार्यते– **न तस्येति** ॥ तत् तत्रायोग्योपदेशे तदर्थशंसनादौ च त्यागेन तस्यानूक्ते भागोऽस्ति न वेद सुकृतस्य पन्थामिति यद् दोषद्वयमुक्तं तदेव तदुक्तं तेनोक्तम्। न तस्य वाच्यपि भागोऽस्ति न वेद सुकृतस्य पन्थामिति मन्त्रखण्डेनोक्तं भवतीत्यर्थः। यन्निमित्तं दोषोत्कीर्तनं तदिदानीमुच्यते– **तस्मादिति** ॥ तस्मादनर्थप्राप्तेरेवं विद्वान् महाव्रते परस्मा अध्वर्युर्नाग्निं चिनुयाद् उद्गाता परस्मै महाव्रतेन स्तोत्रेण

न स्तुवीत होता च न परस्मै एतदहो बृहतीसहस्रं शंसेत् उक्तस्यापवाद उच्यते– **पित्रेवेति** ॥ अस्य पितुराचार्यस्य वाऽर्थे कृतं तच्छंसनमात्मन एव कृतं भवति फलसाधनं भवति परमात्मनश्च प्रियं भवति । परस्मै अयोग्याय तत्त्वोपदेशं च न कुर्यादित्यपि द्रष्टव्यम् । यदि प्रमादाद् दाक्षिण्यादर्थलोभाद्वा शंसेत् तदा प्रायश्चित्तार्थं बाध्वोक्तविद्यां शतवारमावर्तयीतेत्यपि द्रष्टव्यम् ॥

'स यश्चायमशरीरः' इति पूर्वखण्डोक्तं भगवद्रूपैक्यं युक्त्यन्तरेणोपपादयितुं परामृश्यते । 'स यश्चायम्' इति चशब्देन पूर्ववद् योऽक्षरे वासुदेवो यश्च वेदे सङ्कर्षण एकमेव तदित्यवोचाम तन्नारायणादिरूपजातं चैकमिति चावोचामेति योज्यम् । तत्र तावदुपलक्षणत्वेनानिरुद्धप्रद्युम्नयोः शरीरसूर्यगतयोरैक्ये युक्तिरुच्यते– **स यश्चायमिति** ॥ योऽसावादित्ये सूर्यमण्डले प्रद्युम्नः स एवायं पुरुषे देहे चक्षुषि स्थितः । योऽयं पुरुषे चक्षुषि स्थितः यश्च देहे हृदयेऽशरीरः प्रज्ञात्माऽनिरुद्धस्तद्रूपद्वयमेकमेव तस्माद् यः पुरुषे योऽनिरुद्धो यश्चासावादित्ये प्रद्युम्नः तत्स्वरूपद्वयमेकमित्यवोचामेति योजना । स्यादेतद्देहगतयोरनिरुद्धप्रद्युम्नयोरैक्ये, तदेव कुतः उभयोर्जीवलक्षणैककार्यकारित्वात् तदेव कुतस्तयोर्जीवशरीरप्रहाणप्रसक्ति-काल एव मृतिसूचकदुर्निमित्तदर्शनादिति भावेनोच्यते– **ताविति** ॥ तौ हृदये चक्षुषि च स्थितावनिरुद्धप्रद्युम्नौ यत्र यदा यस्माद् देहाद् विहीयेते जिगमिषतस्तदादित्यश्चन्द्रमा इव दृश्यते रश्मयो न प्रादुर्भवन्ति । द्यौर्लोहिनी रक्तवर्णा भवति । यथा मञ्जिष्ठा वैद्यशास्त्रप्रसिद्धा मूलिका । तथा लोहिनी पायुर्व्यस्तः विवृतो भवति । अस्य शिरः काकस्य कुलायं नीडं तस्य गन्धवद् गन्धोऽस्यास्तीति काककुलायगन्धिकं भवद्वायति वायते ज्ञायते घ्राणविषयो भवति । अस्याऽत्माऽन्तर्यामी परमात्मा सम्परेतः सन्निकृष्टनिर्गमः स पुरुषो चिरमिव न जीविष्यतीति विद्यात् क्लृप्तं वर्षशतमप्यल्पकालमेवेति सूचनाय चिरमिवेत्युक्तम् । स परलोकसाधनतया यत्करणीयं मन्यते तत्कुर्वीत । 'यदन्ति यच्च दूरके' इति सप्तर्चा जपेत् ।

## (‘यदन्ति’ इति सप्तर्चो व्याख्यानम्)

**‘यदन्ति यच्च दूरके भयं विन्दति मामिह।**
**पवमान वितज्जहि ॥ १ ॥**

पावनात् पवमान वायो। इह यदन्तिके भयं। यच्च दूरके दूरे भयं मां विन्दति प्राप्नोति तद्भयं विजहि विनाशय ॥ १ ॥

**पवमानः सो अद्य नः पवित्रेण विचर्षणिः।**
**यः पोता स पुनातु नः ॥ २ ॥**

विचर्षणिः विविधप्रजावान्। ‘प्रजाश्चर्षणयः प्रोक्ताः’ इति वचनात्। सः प्रसिद्धो यः पवमानः नः स्वामिना पवित्रेण पावयित्वा त्रातीति पवित्रनाम्ना हरिणा तत्प्रसादेन लोकानां पोता पावयिता स नोऽस्मानप्यद्य पुनातु ॥२॥

**यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा।**
**ब्रह्म तेन पुनीहि नः ॥ ३ ॥**

अग्ने अङ्गनेतृत्वादग्निनामक वायो अन्तरा पुरुषदेहमध्ये वितते अर्चिषि विततमर्चिष्मत्पवित्रं यद् ब्रह्म तेन नः पुनीहि ॥ ३ ॥

**यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः।**
**ब्रह्मसवैः पुनीहि नः ॥ ४ ॥**

अग्ने वायो ते स्वामिभूतमर्चिवदर्चिष्मत् यत्पवित्रं ब्रह्म तेन नः पुनीहि। तं प्रसादयित्वा तेन पुनीहीति यावत्। ब्रह्मणः परब्रह्मणः सवैर्ज्ञानाख्यप्रसूतिभिश्च स्वयं पुनीहि नः ज्ञानमुत्पाद्यापि पुनीहीत्यर्थः ॥ ४ ॥

**उभाभ्यां देव सवितः पवित्रेण सवेन च।**
**मां पुनीहि विश्वतः ॥ ५ ॥**

ज्ञानप्रसवात् सवितृनामक देव। क्रीडादिगुणविशिष्ट वायो पवित्रेण ब्रह्मणा

सवेन प्रसवेन चेत्युभाभ्यां मां विश्वतः सर्वस्मात् पुनीहि । न पुनः प्रसाद-मात्रेण । तस्य कर्मणाऽपि सम्भवान्नापि ज्ञानमात्रेण । प्रसादजनकज्ञानमात्रस्येतर-साधारणत्वादित्युभयनियमनायेयं ऋगित्यपौनरुक्त्यम् ।। ५ ।।

**त्रिभिष्ट्वं देवसवितर्वर्षिष्ठैः सोमधामभिः ।**

**अग्ने दक्षैः पुनीहि नः ।। ६ ।।**

अग्ने सवितर्देव सौम्यस्वरूपत्वात् सोमत्वं वर्षिष्ठैर्भक्ताभिलषितवर्षणशीलैर्दक्षैः त्रिभिर्धामभिः क्षीराब्ध्यादिधामत्रयगतैर्भगवद्रूपैर्नः पुनीहि । 'तेजःस्वरूपं च गृहं प्राज्ञैर्धामेति कथ्यते' इति वचनात् ।। ६ ।।

**पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।**

**विश्वेदेवाः पुनीत मा जातवेदः पुनीहि मा ।। ७ ।।**

हे जातवेदः जातं वेत्तीति जातवेदाः तस्य सम्बुद्धिर्जातवेदः सर्वज्ञ वोय धिया संविदा त्वदनुमत्या देवजनादयः मां धिया पुनन्तु ज्ञानं दत्वा पुनन्तु । ते यथा पुनन्ति तथा त्वं मां पुनीहीत्यर्थः ।। ७ ।।

### ('अदित्प्रत्नस्य रेतसः' इति मन्त्रव्याख्यानम्)

**'आदित्प्रत्नस्य रेतसः' इत्येका जप्या ।**

**आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ।।**

प्रत्नस्य पुरातनस्य रेतसो माहरतेर्विष्णोर्वासेन स्वसन्निधानेन रमयति सुखयतीति वासरम् । यज्ज्योतिर्दिवा दिवःपरः परस्ताद् वैकुण्ठलोके इध्यते दीप्यते । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति श्रुतेः । तज्ज्योतीरूपम् । आत् इत् अकारवाच्यभगवदनुग्रहादेव पश्यन्त्युपासका इत्यर्थः ।।

### ('यत्र पवमानः' इति षण्णां मन्त्राणां व्याख्यानम्)

**'यत्रः पवमान' इति षड् जपेत् ।**

**यत्र ब्रह्मा पवमानः छन्दस्यां३ वाचं वदन्।**
**ग्राव्णा सोमे महीयते सोमेनानन्दं जनयन्निन्द्रायेन्दो परिस्रव ॥ १ ॥**

इन्दो इष्टप्रद पवमानवायो ब्रह्मा मुक्तचतुर्मुखः यत्र यस्य विष्णोर्लोके छन्दस्यां छन्दःसम्बन्धिनीं वाचं वेदवाचं वदन् व्याकुर्वन् सोमे सौम्यस्वरूपत्वात् सोमनामकभगवद्विषये ग्राव्णा सुतेन सोमेनेष्ट्वा तत्प्रसादेन स्वस्याऽनन्दं जनयन् मुक्तनिकरैर्महीयते । तस्मा इन्द्राय विष्णवे मां परिस्रव स्रावय ॥ १ ॥

**यत्र ज्योतिरजस्रं यस्मिंल्लोके स्वर्हितम्।**
**तस्मिन् मां धेहि पवमानामृते लोके अक्षित इन्द्रायेन्दो परिस्रव ॥ २ ॥**

यत्र लोके अजस्रं निरन्तरं ज्योतिः प्रकाशः यस्मिन् लोके स्वरानन्दरूपं ब्रह्म हितं निहितम् । अमृते तद्गतानां मृत्यनापादके मोक्षलक्षणे वा अक्षिते स्वयं नाशरहिते तस्मिंल्लोके पवमान मां निधेहि निधाय च तद्गतायेन्द्राय गमयेत्यर्थः ॥ २ ॥

**यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः।**
**लोका यत्र ज्योतिष्मन्तस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥ ३ ॥**

अकं सुखं नाकं परमसुखं त्रिविधं नाकं त्रिनाकं त्रिविधे परमसुखसाधने त्रिदिवे त्रिदिवशब्दवाच्ये श्वेतद्वीपादौ यत्र लोके अनुकामं चरणं स्वेच्छयाऽनुसारेण गमनं भक्षणं च विद्यते यत्र लोके दिवः सरस्वत्या ज्योतिष्मतो लोका वर्तन्ते तत्र माममृतं मुक्तं कुर्वित्यादि ॥ ३ ॥

**यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपम्।**
**स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥ ४ ॥**

यत्र भोगार्थं कामा विषयाश्च निकामा यथेष्टं सन्ति । ब्रध्नस्य सूर्यस्य विष्टपं स्थानं स्वधा सुखं तृप्तिरलंबुद्धिश्च तदभिमानिदेवते च तत्र माममृतं कृधि ॥ ४ ॥

**यत्र राजा वैवस्वतो यत्रावरोधनं दिवः।**
**यत्रामूर्यह्वतीरापस्तत्र माममृतं कृधीन्द्रायेन्दो परिस्रव ॥ ५ ॥**

यत्र वैवस्वतो राजा मुक्तो यमः। दिवः सरस्वत्या अवरोधनं परिवारभूताः सर्वदेव्यः यह्वतीः स्यन्दमाना अमूरापः गङ्गाद्याः ॥ ५ ॥

**यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते।**
**ास्य यत्राऽप्ताः कामास्तत्र माममृतं कृधीन्दायेन्दो परिस्रव ॥ ६ ॥**

यत्र लोके आनन्दा अपरोक्षज्ञानव्यङ्ग्या विषयोपाधिरहिताः स्वसुखविशेषा वर्तन्ते। भोगनिमित्तकामोदाः मुदोऽल्पभोगनिमित्तकाः प्रमुदोऽतिप्रकृष्टविषयोत्थाः सुखविशेषाः आसते तिष्ठन्ति। यत्र कामस्येच्छायाः काम्यन्त इति कामाः विषयाः आप्ताः पूर्णाः तत्र माममृतं कृधि ॥ ६ ॥

## (‘उद्वयम्’ इति मन्त्रव्याख्यानम्)

**‘उद्वयं तमसस्परि’ इत्येका जप्या।**
**उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥**

तमसोऽज्ञानादुद्गता वयमुत्तमं सर्वोत्तमं विष्ण्वाख्यं ज्योतिः परिपश्यन्तः तमेव देवत्रा देवं देवविषयेऽपि देवं देवानामपि देवमित्यर्थः। सूरिप्राप्यत्वात् सूर्यनामकमुत्तमं ज्योतिरुत्तमज्योतीरूपमगन्म प्राप्ताः स्मः।

अथेति निमित्तान्तरम्। यत्र यदादित्योऽपि च्छिद्र इव दृश्यते तस्यैव विवरणम्– **रथेति** ॥ रथचक्रमिव मध्ये स रन्ध्रत्वेनाभिख्याते दृश्येत। अरा इव रथनाभावित्यत्र नाभिपदस्य चक्रे प्रयोगात्। आत्मनः छायां छिद्रां वा पश्येत्। तदप्येवमेव सन्निहितमरणद्योतकमेव विद्यात्। अथापि यदन्यदपि पश्येत् तत् किमादर्शे दर्पणे वोदके वाऽत्मानं जिह्मशिरसं वक्रशिरसम् अशिरसं शिरोहीनं वा पश्येत्। कन्याके कनीनिके विपर्यस्ते व्यत्यस्ते जिह्मेन वक्रत्वेन

वा दृश्ये या तां तदप्येवमेव विद्यात् । अथापि यदन्यदपि पश्येत् तत्किं अपिधायाक्षिणी अङ्गुल्या अक्षिमूलमवष्टभ्योपेक्षेतोप समीपे पश्येत् । तत् तदा यथा वटरकाणि वर्तुलास्तेजोंऽशा दृश्यन्ते तथाऽक्ष्णोरपि तेजोंऽशाः सम्पतन्तीव दृश्यन्ते तानि यदा न पश्येत् तदप्येवमेव विद्यात् । अथान्यदपि स्वस्थः पुरुषः हस्ताभ्यां कर्णावपिधाय शृणुयाच्छब्दश्रवणप्रयत्नं कुर्यात् । तदा स एष शब्दः ज्वलतोऽग्ने रथस्य वोपब्दिर्ध्वनिरिव भवति श्रूयत इति यावत् । तं शब्दं यदा शृणुयात् तदप्येवमेव विद्यात् । अथ यदन्यदपि यत्र यदा मयूरग्रीवा तथाऽग्निर्नील इव दृश्यते मेघे अन्यैरदृश्यमानां विद्युतं वा पश्येत् । यद्वा अमेघ इति पदच्छेदः मेघरहिते प्रदेशे विद्युतं पश्येदित्यर्थः । मेघे वाऽन्यैर्दृश्यमानां अविद्युतं पश्येद् विद्युतं न पश्येत् महामेघे वा महामरीचीः सूर्यरश्मीरिव पश्येत् तदप्येवमेव विद्यात् । अथान्यदपि यत्र यदा भूमिं ज्वलन्तीमिव पश्येत्तदप्येवमेव इति प्रत्यक्षदर्शनानि जाग्रदवस्थायां द्रष्टुं योग्यानि मरणनिदर्शनानि । अथ मरणसूचकाः स्वप्ना उच्यन्ते । 'पुरुषं वर्णतः कृष्णं कृष्णदन्तं च पश्यति । स एनं हन्ति हन्तीति पश्यति' अस्योत्तरत्र सम्बन्धः । वराह एनं हन्ति, मर्कट एनमास्कन्दयति उपर्यापतति । आशु वायुश्चक्रवायेरेनं प्रवहति ऊर्ध्वं नयति । सुवर्णं खादित्वाऽपगिरति उद्गिरति । सापूपं महामधु भक्षयति । बिसानि पद्ममूलानि भक्षयति । एकपुण्डरीकमेकं रक्ताब्जं शिरसि धारयति । खरैर्वा वराहैर्वा युक्तै रथादिभिर्याति । कृष्णवत्सां कृष्णां धेनुं नलदमाली रक्तकह्लारमाली दक्षिणामुखो व्राजयति गमयति । 'अभयं नलदं सेव्यममृणालं जलाशयम्' इत्यमरः । उक्तसर्वदर्शनमपेक्षितमिति न भ्रमितव्यमित्युच्यते—

**स यदीति** ॥ स प्रसक्तमरणो यदि एतेषां मध्ये किञ्चित् पश्येत् तर्ह्युपोष्य पायसं स्थालीपाकं श्रपयित्वा पक्त्वा रात्रिसूक्तेन प्रत्यृचं हुत्वा एकैकर्चा प्रत्येकं हुत्वा अन्येनान्नेन ब्राह्मणान् भोजयित्वा चरुं स्वयं प्राश्नीयात् ।

## (रात्रिसूक्तव्याख्यानम्)

**रात्रिव्यख्यदायती पुरुत्रा देव्या१क्षभिः ।**
**विश्वा अधिश्रियोऽधित ॥ १ ॥**

रतिं राति ददातीति रात्रिनाम्नी देवी स्त्रीरूपो विष्णुर्दुर्गादेवी चाऽयती आगच्छती सती पुरुत्रा बहुभिरक्षिभिर्नयनैः । पुरुत्रा बहुधा व्यख्यत् जगद्ददर्श विश्वाः अधि सर्वलोकेषु विश्वाः श्रियः अधित दधार ॥ १ ॥

**ओर्वप्रा अमर्त्या निवतो देव्यु१द्वतः ।**
**ज्योतिषा बाधते तमः ॥ २ ॥**

देवी निवतः नीचान् उद्वत उत्तमान् अमर्त्या अमर्त्यान् ब्रह्मादीन् आ उरु अप्राः उरुधा आसमन्तादपूरयत् । तेषां तमः अज्ञानं ज्योतिषा ज्ञानेन करणेन बाधते नाशयति ॥ २ ॥

**निरुस्वसारमस्कृतोषसं देव्यायती । अपेदुहासते तमः ॥ ३ ॥**

आयती देवी उषसं शुक्लवर्णमुषोनामकं प्रमदात्मकं स्वस्वरूपं उ एव स्वसारं निर्नितरामकृत । अस्कृतेत्यस्य अकृतेत्येव पदपाठः । सूर्यादिषु स्थितः अप इत् उ हासते तमः तम इत् तमश्च । अपहासत एव निराकरोत्येव ॥३॥

**सा नो अद्य यस्य वयं निते यामन्नविक्ष्महि ।**
**वृक्षेन वसतिं वयः ॥ ४ ॥**

सा रात्रिर्न स्वामीयस्यास्ते यामन् यमनान्नियमनात् प्रलये स्वान्तर्निवेशनेन संयमनाद्वा यामनामके उदरे अद्य स्थितिकाले वयः पक्षिणः वृक्षे वसन्ति न । नीडमिव न्यविक्ष्म हि प्रविष्टाः स्मः ॥ ४ ॥

**निग्रामासो अविक्षत निपद्वन्तो निपक्षिणः ।**
**निश्येनासश्चिदर्थिनः ॥ ५ ॥**

ग्रामासः बहुत्वाद् ग्रामनामका असुराः त्वयि नि अविक्षत न्यविशन् । पद्वन्तः पादमात्रप्रयायिनो मानुषाश्च न्यविशन् । पक्षिणश्च न्यविशन् । श्येनासः शमस्यास्तीति शी सुखी । विष्णुरासमन्तादिनः स्वामीति ज्ञानं येषां ते देवोत्तमा अपि न्यविशन् । अर्थिनश्चित् अर्थिनोऽपि प्राप्तपुरुषार्था मुक्ता अपि न्यविशन् । आवृत्यैवोपसर्गस्य क्रियावृत्तिर्भविष्यतीति वचनात् क्रियावृत्तिः ॥ ५ ॥

**या वया वृक्यं१ वृकं यवयस्तेन सूर्म्ये ।**
**अथानः सुतरा भव ॥ ६ ॥**

ऊर्म्ये ऊरीकृतप्रमाणे अङ्गीकृतप्रमाणे देवि क्रूरत्वाद् वृका असुराः तत्स्वभावो जनो वृक्यः तं वृक्यम् । यवयेति पदपाठः । निर्यापय । वृकमसुरं च यवय । स्तेनं ब्रह्मस्तेनं महासुरं च यवय । अथ तेषामस्मत्तो वियोजनानन्तरं नः सुतरा सुखतरासदा भव ॥ ६ ॥

**उपमापेपिशत्तमः कृष्णं व्यक्तमस्थित ।**
**उष ऋणेव यातय ॥ ७ ॥**

उषः प्रकाशरूपे देवि पेपिशत् अज्ञानां पेशलं मनोरमं कृष्णं कृष्णवर्णं व्यक्तं यत्तमोभावरूपाज्ञानम् । मा उप मत्समीपे । सम्यग्ज्ञानावरकतया अस्थित स्थितम् । तत् ऋणा इवेति पदपाठः । ऋणानीव । यथा सत्पुरुषो ऋणपरिहारेऽत्यन्तमवहितो भवति तथाऽवहिता सती यातय नियापयेति भावः ॥ ७ ॥

**उप ते गा इवाकरं वृणीष्व दुहितर्दिवः । रात्रिस्तोमं न जिग्युषे ॥ ८ ॥**

इव आ अकरमिति पदच्छेदः । दिवो दुहितः ज्ञानस्य सुते ज्ञानव्यञ्जचे हे रात्रि ब्राह्मणाय गा इव जिग्युषे जयिने स्तोमं न स्तवमिव । ते स्तोमं स्तुतिमुप त्वत्समीप एव । आ सम्यगकरं यथा निरुपाधिकं ब्राह्मणाय गा

दास्यन्ति यथा वा राष्ट्रस्थाः जिग्युषे राज्ञे प्रमोदभरेण स्तुतिं कुर्वन्ति तथा स्तुतिमकार्षं मत्कृतं स्तवं वृणीष्वाङ्गीकुर्विति सूक्तार्थः ॥ ८ ॥

नन्वपमृत्युश्चेदुक्तमन्त्रजपहोमाभ्यां निवर्तते कालमृत्युश्चेदनिवर्त्यत्वाज्जप-होमयोर्मोक्षहेतुत्वं वक्तव्यम्। कथं जपादिमात्रेण तदित्यतो मन्त्रार्थगुणज्ञानपूर्वं तद्ध्यानेनापरोक्षद्वारा भविष्यतीति भावेन मन्त्रार्थभूतगुणोपासना विधीयते– **स योऽत इति** ॥ स यः प्रकृतः परमात्मा अतः देशतः कालतो गुणतश्च व्याप्तः। अतिरेवातः सर्वोत्तमो वा। पूर्णत्वेन साकल्येन श्रोतुमयोग्यत्वादश्रुतः। अत एवागतः साकल्येनाज्ञातः। अमतो मननाविषयः। अनतः स्वतन्त्रत्वादनम्रः। अदृष्टः प्रत्यक्षेण अविज्ञातः विशेषेणाज्ञातः। अनादिष्टो नाज्ञप्तः अनुपदिष्टो वा। स्वयं सर्वस्य स्वातन्त्र्येण श्रोता मन्ता द्रष्टादेष्टा घोष्टा घोषकर्ता। वक्तेति यावत्। विज्ञाता प्राता सर्वेषां भूतानां जीवानां अन्तरपुरुषः। अन्तस्थः पूर्णत्वात् पुरुषश्च। सर्वेषु रूपेषु समः। आत्मान्तर्नियामकः इति विद्यादुपासीतेति खण्डार्थः ॥ ४ ॥

**उपनिषत्-**

**(सर्वशब्दोपासना)**

**अथ खल्वियं सर्वस्यै वाच उपनिषत् सर्वा ह्येवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवाऽचक्षते ॥ पृथिव्या रूपं स्पर्शा अन्तरिक्षस्योष्माणो दिवः स्वरा अग्ने रूपं स्पर्शा वायोरूष्माण आदित्यस्य स्वरा ऋग्वेदस्य रूपं स्पर्शा यजुर्वेदस्योष्माणः सामवेदस्य स्वराश्चक्षुषो रूपं स्पर्शाः ॥ श्रोत्रस्योष्माणो मनसः स्वराः प्राणस्य रूपं स्पर्शा अपानस्योष्माणो व्यानस्य स्वराः ॥**

**भाष्यम्-**

**अथ सर्ववाग्विषया विद्योच्यते। विष्णुशब्दार्थत्वात् सर्ववाचाम्। पूर्वोक्ता अपि सर्ववागुपनिषद एव। तथाऽपि [1]मुख्यत एव सर्ववाग्विषयत्वाद् वक्ष्यमाणमेव सर्वस्यै वाच उपनिषदिति सर्वेऽप्याचक्षते।**

**'पृथिव्यादिस्थितो विष्णुः पृथिव्याद्यभिधानवान्।**
**स्पर्शादीनां देवताऽसौ क्रमेणैव प्रकीर्तितः ॥**

**टिप्पणी -**

अथ खल्वियं सर्वस्यै वाच उपनिषदित्यत्र षष्ठ्यर्थः सम्बन्धः क इत्यतो विषयविषयिभाव इति भावेन व्याचष्टे– **अथेति** ॥ ननु सर्ववाग्विषयविद्याप्रतिपादनं प्रकृतासङ्गतं विष्णुनामविषयविद्याया एव प्रकृतसङ्गतत्वादित्यत आह– **विष्णु-नामार्थत्वादिति** ॥ सर्वा ह्येयवेमाः सर्वस्यै वाच उपनिषद इमां त्वेवेत्येतद् यद्यपि तथापीति पदद्वयाध्याहारपूर्वं व्याचष्टे– **विष्णुनामार्थत्वादित्यादिना** ॥ अपि यद्यपि। ननु पूर्वोक्तानां विष्णुनामविद्याविषयत्वात् कथं सर्ववागुपनिषत्त्वमित्यत उक्तम्–**विष्णुनामार्थत्वादिति** ॥ इमां त्वेवेति तुशब्दार्थः–**मुख्यत एवेति** ॥ सर्वेऽपि वैदिका ऋषयः। न तु प्रागिवात्र मतभेद इति भावः। प्राणो वंश इत्यादौ तस्यैतस्याऽत्मनः प्राण ऊष्मा रूपं इत्यादिविद्यानां मुख्यतो विष्णुनामविषयत्वं तद्व्याख्यानरूपत्वात् तद्द्वाराऽन्यविद्याविषयत्वम्। विष्णुनामाक्षरेष्वेवमन्येष्वपि तदर्थत इति भाष्येऽतिदेशात्। अस्मिन् खण्डे निरूपिता विद्यास्तु साक्षादपि सर्ववाग्विषयाः। उपनिषदि तथा विवक्षितत्वादत एवात्र भाष्ये स्पर्शाक्षरादयो विष्णुनामनिष्ठत्वेन नोक्ताः। वीणाविद्याया वाक्सार-विद्यायाश्च विद्याधिक्यनिमित्तकायाः सर्वविद्याविषयत्वान्मुख्यत्वं बोध्यम्। पृथिव्या रूपमित्यारभ्य व्यानस्य स्वरा इत्यन्तं व्याचष्टे– **पृथिव्यादीति** ॥

---

१. मुखतः- ह.पा.

उपनिषत्-

(इयं वाक् दैवी वीणा)

अथ खल्वियं दैवी वीणा भवति तदनुकृतिरसौ मानुषी वीणा भवति ॥ यथाऽस्याः शिर एवममुष्याः शिरो यथाऽस्या उदरमेवममुष्या अम्भणं यथाऽस्यै जिह्वैवममुष्यै वादनम् ॥ यथाऽस्यास्तन्त्रय एवममुष्याः स्पर्शाः यथा ह्येवेयं शब्दवती तर्द्मवत्येवमसौ शब्दवती तर्द्मवती ॥ यथा ह्येवेयं लोमशेन चर्मणा पिहिता भवत्येवमसौ लोमशेन चर्मणा पिहिता लोमशेन ह स्मवै चर्मणा पुरा वीणा अपिदधति स यो हैतां दैवीं वीणां वेद ॥ श्रुतवदनो भवति भूमिप्राऽस्य कीर्तिर्भवति यत्र क्व चाऽर्या वाचो भाषन्ते विदुरेनं तत्र ।

(वाक्सिद्ध्यै सिद्धमन्त्रः)

अथातो वाग्रसो यस्यां संसद्यधीयानो वा भाषमाणो वा न विरुरुचुषेत ॥ तत्रैतामृचं जपेत्- 'ओष्ठा पिधाना न कुली दन्तैः परि वृता पविः ॥ सर्वस्यै वाच ईशाना चारु मामिह वादयेत्' इति वाग्रसः ॥

॥ इति षष्ठं ब्राह्मणम् ॥

भाष्यम्-

तस्य विष्णोरयं देहो वीणा साक्षात् प्रकीर्तिता ।
दैवी वीणा ततः सेयं लोकसिद्धा तु मानुषी ।

ब्रह्मादिदेहान् यो वेद विष्णोर्वीणेति भक्तितः।

विद्यापूर्णमुखः स स्याद् भूमिपूरितकीर्तिमान्।

**टिप्पणी -**

अथ खल्वियं दैवी वीणेत्येतद् व्याचष्टे– **तस्येति** ।। अयं देहो विष्णोर्वीणा तत इयं देहाख्या साक्षान्मुख्यतः दैवी वीणा प्रकीर्तितेत्यन्वयः । इयमिति विशिष्योक्त्यभिप्रायमाह– **लोकसिद्धा लोकप्रसिद्धेति** ।। स यो हैतामित्येतद् व्याचष्टे– **ब्रह्मादीति** ।। श्रुतवदन इत्यस्यार्थः– **विद्येति** ।। भूमिप्रेत्यस्यार्थः– **भूमीति** ।। पॄ पालनपूरणयोरिति धातोरिति भावः ।

**भाष्यम्-**

विद्याधिक्यार्थमेवैतां वाक्सारामप्यृचं जपेत्।

ध्यात्वा नारायणं देवं स्त्रीरूपं वाचि संस्थितम्।

ओष्ठा पिधानेत्येषा ह्यृक् सारो वाचः प्रकीर्तितः।

विष्णोर्हि वाचि संस्थस्यैवोष्ठावेतौ पिधानवत्।

कुलीति चोक्तो भगवान् प्रलीनाशेषकुत्सितः।

पाति सर्वं विशिष्टश्च सर्वस्मादित्यतः पविः।

सर्ववागीश्वरो विष्णुः स्त्रीरूपो मां सुवादयेत्।।' इति च ।।

[१]नेत्युपमानार्थम् । ओष्ठावपिधानवदस्येति । नच विष्णोरन्या सर्वस्या वाच ईशाना । स हि मुख्यतः सर्वेश्वरः । तस्यैव प्रस्तुतत्वाद् वक्ष्यमाणत्वाच्च । 'श्रियःपतिर्यज्ञपतिर्जगत्पतिर्गिराम्पतिर्लोकपतिर्धरापतिः' (भाग. २.४.२०) इति च भागवते । 'यो वाचि तिष्ठन् वाचोऽन्तरो यं वाङ् न वेद' (बृह. ३.७.२७) इत्यादिश्रुतिश्च । स्त्रीलिङ्गत्वं देवतेत्यादिवदपि युज्यते । स्त्रीरूपत्वाच्च ।।

---

१. नेत्युपमार्थे- ह.पा.

**टिप्पणी -**

यस्यां संसद्यधीयानो भाषमाणो वा न विरुरुचिषेत तत्रैतामृचं जपेदित्यस्य तात्पर्यमाह– **विद्येति** ।। न केवलं विद्याधिक्यार्थं वीणाविद्यामुपासीत एतां चर्चं जपेदित्यर्थः। ओष्ठापिधानेत्यारभ्येति वाग्रस इत्यन्तस्यार्थमाह–**ओष्ठेति** ।। ऋचं व्याचष्टे– **विष्णोरिति** ।। विष्णोरेवेति सम्बन्धः । तेन सरस्वती स्तूयत इति निरस्तम् । अपिधाना नेत्यस्यार्थः– **पिधानवदिति** ।। कुत्सितं लीनमस्मिन्निति कुलीत्यर्थमभिप्रेत्य तात्पर्यमाह– **प्रलीनेति** ।। पविशब्दं व्याचष्टे– **पातीति** ।। सर्वस्यै वाच इत्यस्यार्थः– **सर्वेति** ।। नन्वोष्ठौ पिधानौ न भवत इति निषेधात् कथं पिधानवदिति व्याख्यानमित्यत आह– **नेत्युपमार्थ इति** ।। मृगं न भीममित्यादि-वदेवेति भावः । ततश्च किमित्यतो वाक्यार्थं विशदमाह– **ओष्ठाविति** ।। नन्वत्र सरस्वती प्रतिपाद्या किन्न स्यादित्यत आह– **नचेति** ।। अस्यामुपनिषदि एतद् ब्रह्मैतत् सत्यमिति ब्रह्मोपक्रमात् । एतस्यै संहितायै णकारो बलमिति विष्णुनामव्याख्यानेनोपसंहाराच्चात्र खण्डे उपात्ताया ऋचोऽन्यविषयत्वे च तद्विरोधा-पत्तेश्च भगवद्विषयेयं ऋगित्याह– **तस्यैवेति** ।। यद्वा ऋग्वेदखिलेषु ओष्ठा पिधानेत्यतः पूर्वं विष्णोः प्रस्तुतत्वादुत्तरत्र च वक्ष्यमाणत्वादित्यर्थः । भगवतो वागीश्वरत्वे स्मृतिं च पठति– **श्रियःपतिरिति** ।। अत्र गिरां पतिरिति गीष्पतित्वोक्तेः प्रकृतसिद्धिः । किञ्च वाजसनेये भगवत एव वाचिस्थत्वोक्तेस्तस्यैव ओष्ठा पिधाना इत्यत्र प्रतिपाद्यत्वमित्याह– **यो वाचीति** ।। तर्हि स्त्रीलिङ्गविरोध इत्यतो द्वेधा समाधानमाह– **स्त्रीलिङ्गत्वमिति** ।। देवतेत्यादिवच्छब्दस्वाभाव्यादित्यर्थः । स्त्रीलिङ्गत्वमपीत्यन्वयः ।। ५ ।।

**खण्डार्थः -**

**(श्रीहरिरेव वागूदेवता)**

सङ्गतिस्तु भाष्य एवास्य खण्डस्य स्पष्टा । अथानन्तरं सर्वस्यै सर्वस्या वाचः तत्सम्बन्धिनी तद्विषयिणी प्रसिद्धेयमुपनिषद्रहस्यविद्योच्यते । ननु पूर्वोक्त-

विद्यानामपि सर्ववाक्सम्बन्धित्वात् किं पुनर्विशिष्योच्यत इत्याशङ्क्य परिह्रियते– **सर्वा हीति** ।। यद्यपीमाः सर्वाः पूर्वोक्ताः सर्वस्यै वाचः उपनिषद एव हि प्रसिद्धास्तथाऽपि इमामेव तु विशेषेण सर्ववाग्विषयिणीमुपनिषदमाचक्षते वैदिकाः । विशेषश्च भाष्ये स्पष्टो भविष्यति । पृथिव्या सम्बन्धि तद्गतं तन्नामकं रूपं भगवद्रूपं स्पर्शाः स्पर्शाक्षरप्रतिपाद्यम् । अन्तरिक्षस्य रूपमित्यन्वेति । शिष्टं पूर्ववद् व्याख्येयम् । एवं स्पर्शादिप्रतिपाद्यस्य लोकाधिष्ठानत्वमुक्त्वा तत्साराद्यग्न्यधिष्ठानत्वमुच्यते– **अग्ने रूपमित्यादिना** ।। अग्न्यादिसारवेदाधिष्ठानत्वमप्युच्यते–**ऋग्वेदस्येत्यादिना** ।। तथाच श्रुतिः प्रजापतिर्लोकानभ्यतपत् तेषां तप्तानां रसान् प्रावहत् अग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिव एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानां रसात् प्राबृहद् अग्ने ऋचो वायोर्यजूंषि सामान्यादित्यादिति । एवं स्पर्शादिप्रतिपाद्यानामधिदैवमधिष्ठानमुक्त्वाऽध्यात्ममधिष्ठानद्वयमुच्यते– **चक्षुषो रूपमित्यादिना** ।। विद्याधिक्यसम्पादिका विद्योच्यते– **अथेति** ।। विद्यान्तरारम्भे अथशब्दः । इयं ब्रह्मादितनुर्दैवी देवस्य विष्णोर्वीणा भवति खलु प्रसिद्धम् । तद्गुणगानहेतुत्वात् । ननु दारुविशेषकृता मानुषी हि वीणा वीणेति प्रसिद्धा कथं ब्रह्मादितनुर्वीणेत्यतः शिरसि चमसशब्दवद् दैववीणासादृश्यान्मानुष्यां वीणायां वीणाशब्द इति भावेनोच्यते– **तदनुकृतिरिति** ।। असौ मानुषी वीणा तां दैवीं वीणामनुकरोतीति तदनुकृतिः तत्सादृश्यवतीत्युक्तं सादृश्यं विविच्योच्यते– **यथाऽस्या इत्यादिना** ।। अस्याः दैवीवीणायाः शिरो यथैवममुष्या मनुष्यवीणायाः शिरः शिखरं अम्भणं तु उदरतुल्यो मध्यभागः । वादनं शलाका । यथाङ्गुलयस्तथा तन्त्रयः । यद्वा, यथा तन्त्रयस्तथाङ्गुलय इति यथाश्रुतं योज्यम् । परस्परसाम्यमुपपादयितुं मानुषवीणाया दृष्टान्तत्वोक्तिः । यथा स्यादेव वीणायाः स्वरा अज्वर्णा उदात्तादयो वा एवममुष्या मनुष्यवीणाया अपि स्वराः षड्जमध्यमादिस्वरा अज्वर्णव्यञ्जका उदात्तादिव्यञ्जका वा स्वराध्वनि विशेषाश्चेत्यर्थः । यथा दैवीवीणायाः स्पर्शाः सम्बन्धा नोदनादिलक्षणाः स्पर्शसंज्ञिता वर्णा वा एवमस्या मानुषवीणाया

स्पर्शास्तन्त्रीषून्नमनावनमनादिहेतुभूता अङ्गुलिसम्बन्धाः स्पर्शाक्षरव्यञ्जकध्वनयो वा। यथा ह्येवेयं दैवी वीणा शब्दवती घोषवती तर्द्मवती नादवती एवमसौ शब्दवती तर्द्मवती यथा ह्येवेयं देहलक्षणा दैवी वीणा लोकशेन चर्मणा पिहिता भवति एवमसौ लोमशेन चर्मणा पिहिता अदृष्टिविरोधमाशङ्क्योच्यते– **लोमशेनेति** ॥ पुरा कृतयुगादौ। लोमशेन चर्मणा ह स्म वीणा अपि दधत्याच्छादयन्तीत्यर्थः। यो हैतां दैवीं वीणां वेद स श्रुतवदनः श्रूयत इति श्रुतं विद्या तत्पूरितवदनो भवति। अस्य कीर्तिर्भूमिप्रा भूमिपूर्णा भवति। आर्या यत्र क्व यत्र कुत्रचित् संसदि वाचो विद्या अधिकविषया भाषन्ते तत्र संसदि तेषु मध्ये एनं विदुर्भाषन्ते गणयेयुरिति यावत्। विद्याधिक्यार्थमेव जप्यान्या विद्योच्यते। अथ वाचां रसः सारभूता विद्योच्यते। तस्या विनियोग उच्यते– **यस्यामिति** ॥ यस्यां संसद्यधीयमानो भाषमाणो वा न विरुरुचिषेत रुरुचिषेत रोचितुमिच्छेत्। विरुरुचिषेत रोचितुं नेच्छत्। वीत्युपसर्गस्य वर्जनार्थत्वात् न विरुरुचिषेत। रोचितुं चेच्छेदिति न। अतिशयेन रोचितुमिच्छेदिति यावत्। द्वौ नञाविति न्यायात् तत्र सभायामेतां ऋचं जपेत्। अयं ऋगर्थः– वाचि संस्थिता या विष्ण्वाख्या या देवताया ओष्ठा ओष्ठौ पिधाना न पिधानाविव युग्मकवाटाविव या च कुली कुत्सितं लीनमस्मिन्निति कुलीप्रलीना शेषकुत्सितेति यावत्। दन्तैः दन्ताभिमानिदेवैः परिवृता पाति सर्वं सर्वस्माद्विशिष्टा चेति पविः सर्वस्यै सर्वस्या वाच ईशाना सा विष्ण्वाख्या स्त्रीरूपा देवता सह सभायां मां चारु वादयेदितीयं ऋग्वाग्रसः वाग्रसशब्दोक्तेत्यर्थः ॥ ५ ॥

**॥ इति पञ्चमः खण्डः ॥**

**उपनिषत्-**

**(वाग्देवतया शरीरपुष्टिः)**

**अथ हास्मा एतत् कृष्णहारीतो वाग् ब्राह्मणमिवोपोदाहरति ॥ प्रजापतिः प्रजाः सृष्ट्वा व्यस्त्रंसत संवत्सरः**

**स च्छन्दोभिरात्मानं समदधात् यच्छन्दोभिरात्मानं समदधात् तस्मात् संहिता ॥**

**भाष्यम्-**

**संवत्सर इति विशेषणाद् विरिञ्च एवात्र प्रजापतिः। 'ब्रह्मा विश्वः कतमः स्वयम्भूः प्रजापतिः संवत्सरः' इत्यादिश्रुतेः।**

**'श्रान्तो ब्रह्मा सर्ववेदैः स्तुत्वा नारायणं प्रभुम्।**
**तेनैव सम्यक् सन्धाय दार्ढ्यं देहस्य सोऽकरोत्।**
**सन्धानात् संहितेत्युक्तो विष्णुरेव सनातनः।**

**टिप्पणी -**

एष पन्था इत्यारभ्योक्तस्य सर्वस्यावारणार्थं द्विरुक्तिरिति खण्डार्थः। प्रजापतिः प्रजाः सृष्ट्वेत्यत्र प्रजापतिर्दक्षादिरित्यन्यथाप्रतीतेर्यथावद् व्याचष्टे– **संवत्सर इति** ॥ संवत्सरो वै प्रजापतिरिति श्रुतेरिति भावः। तत्रापि संवत्सरशब्दः कुतो ब्रह्मपर इत्यत उभयत्राभिधानमाह– **ब्रह्मेति** ॥ स छन्दोभिरात्मानं समदधादित्येतत् सः विस्रस्तः श्रान्तः प्रजापतिर्वेदैः परमात्मानं स्तुतवानित्यर्थतया व्याचष्टे– **श्रान्त इति** ॥ स्तुत्वेति समदधादित्यस्यानुवादपरं छन्दोभिर्भगवद्रूपैरात्मानं समदधात् सन्धितवानात्मनि सन्न्यधापयदित्यस्यार्थः– **तेनैव सम्यक् सन्धायेति** ॥ आत्मानं देहं समदधाद् दृढमकरोदित्यर्थान्तरमाह– **दार्ढ्यमिति** ॥ तस्मात् संहितेत्येतद् व्याचष्टे– **सन्धानादिति** ॥ स्तुत्या सन्धानाद् ब्रह्मणि सन्निधानाद् देहसमाधानाच्चेत्यर्थः।

**उपनिषत्-**

**(वर्णद्वयसमायोगे विष्णोरेव गुणगानम्)**

**तस्यै वा एतस्यै संहितायै णकारो बलं षकारः प्राण आत्मा स यो हैतौ णकारषकारावनुसंहितमृचो वेद ॥**

सबलां सप्राणां संहितां वेदाऽयुष्यमिति विद्यात् ।
स यदि विचिकित्सेत् सणकारं ब्रवाणी३ँ ।। अणकारा३ँ
इति सणकारमेव ब्रूयात् सषकारं ब्रवाणी३ँ अषकारा३ँ
इति ।। सषकारमेव ब्रूयात् ते यद् वयमनुसंहितमृचोऽधी-
महे ।। यच्च माण्डूकेयीयमध्यायं प्रब्रूमस्तेन नो णकार-
षकारावुपाप्ताविति ह स्माऽह स्थविरः शाकल्यः ।

भाष्यम्-

विष्णुनाम्नि णशब्देन विष्णोर्बलमुदीर्यते ।
ण इत्याक्रियमाणत्वाण्णकारोऽस्य बलं मतम् ।
विष्णुनाम्नि षकारेण रमाब्रह्मेशपूर्विणः ।
प्रणेतृताऽखिलस्यैव विष्णोरुक्ता तथाऽऽत्मता ।
आततत्वं सर्वगुणैर्देशतः कालतस्तथा ।
आत्मशब्दोदितं तच्च षशब्देनाभिधीयते ।
ष इत्याक्रियमाणत्वं प्रणेतृत्वं च पूर्णता ।
विष्णोः षकार इत्युक्ता वीत्युक्तस्य विशिष्टता ।
अन्त्यस्थित उकारस्तु ताच्छील्यादि हरेर्वदेत् ।
एवं विशिष्टप्राणत्वमाततत्वं च सर्वतः ।
विशिष्टं च बलं विष्णोः सर्वस्माच्छीलमित्यपि ।
उदितं विष्णुशब्देन तस्मादृक्संहितामनु ।
वर्णद्वयसमायोगे ष्णुशब्दस्यार्थमेव तु ।
विष्णोः प्राणत्वमात्मत्वं बलं चैवात्र वेत्ति यः ।
स एव विष्णोर्बलवित् तथा प्राणत्वविद् भवेत् ।
स एव मुक्तः संसारान्नित्यायुष्मान् भविष्यति ।

## (वेदपुराणानि संहिताप्रतिपादकानि)

संहितासहितत्वेन यद्दचोऽधीमहे वयम्।
वेदानन्यान् पुराणं वा तेन विष्णुपदोदितः।
अवाप्तो भगवान् स्यान्नस्तन्नामार्था यतोऽखिलाः।
इत्याहुर्ऋषयः सर्वे किमन्याध्ययनाद् भवेत्।
यज्ञैर्वेत्यृषयोऽप्यन्ये कावषेया वदन्ति हि।
मौनेन विष्णुशब्दार्थं ध्यायन्तो वाचमेव वा।
जुहुमो विष्णुनामाख्यां जपन्तो मन्त्रमेव वा।
नमस्कारसमायुक्तं जुहुमः प्राणमत्र हि।

**टिप्पणी -**

तस्यै एतस्यै संहितायै बलं णकार इत्यस्यार्थः – **विष्णुनाम्नीति** ।। कथं णकारो बलमिति सामानाधिकरण्यमित्यत आह – **ण इत्याक्रियमाणत्वादिति** ।। प्राणः षकार इत्यस्यार्थः– **विष्णुनाम्नीति** ।। आत्मा षकार इत्यस्यार्थः– **आत्मतेति** ।। आत्मता च षकारेणोक्तेत्यन्वयः। किं तदात्मत्वमित्यतस्तद्विवरणपूर्वकं वाक्यार्थमाह– **आततत्वमिति** ।। षकारः प्राण इति सामानाधिकरण्यं घटयति– **ष इति** ।। षणयोरेव पूर्वोत्तरवर्णत्वेन नामत्वे विकारोकारयोर्नामबहिर्भावमाशङ्क्य उपसर्गप्रत्ययमात्रे इतिनामार्थविशेषकत्वात् तदन्तर्भावो घटत इत्याह–**वीति** ।। उक्तस्य बलादेर्वीत्यनेनान्यगतबलादिभ्यो विशिष्टताऽभिधीयते। अन्त्यस्थित उकारो यद्युनोरूपं तदा ताच्छील्यं वदेद् यदि स्वतन्त्रो वर्णस्तदाऽऽदिपदोक्तमुच्चत्वं वदेदित्यर्थः। नच विशब्देन पौनरुक्त्यमिति वाच्यम्। 'उपसर्गमात्रं वीत्याहुः केचिन्नाम ष्णुमात्रकम्। षकारं च णकारं च वर्णौ पूर्वोत्तरावपि ।।' इति पक्षे अन्त्यस्थितोकारस्योच्चत्वार्थकत्वे पौनरुक्त्येऽपि वर्णद्वयं विकारं केचिदब्रुवन्नित्युक्ते विकारः पूर्वो वर्णः ष्णुरित्युत्तरो वर्ण इति पक्षे विकारस्योपसर्गमात्रत्वाभावेन षणोक्तार्थविशेषकत्वाभावेन वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्विति धातुनिष्पन्नत्वेन

पृथक् ज्ञानादिगुणवाचकत्वोपपत्तावुकारस्य मानप्रविष्टक्षरप्रतिपाद्यगुणोच्चपरत्वे पौनरुक्त्याभावात् । यद्वा विकारस्योपसर्गत्वपक्षत्वेऽपि न पौनरुक्त्यमुच्चत्वं गुणानां प्रत्येकशो निःसीमत्वं स्वातन्त्र्यं निदोषत्वं चेत्यङ्गीकाराद् विशिष्टत्वं तु अन्येभ्योऽधिकत्वमिति भेदः । तथाच कोऽर्थो विष्णुशब्दस्य सम्पन्न इत्यत आह– **एवमिति** ॥ एवमुक्तरीत्या स यो हैतौ षकारणकारावित्येतद् व्याचष्टे– **तस्मादित्यादिना** ॥ तस्माद् विष्णुशब्दस्यैवं महार्थत्वात् स एव बलप्राणविदेव संसारान्मुक्त इत्युत्तरेणान्वयः । ऋचोऽनुसंहितमित्यस्यार्थः– **ऋक्संहितामिति** ॥ ऋग्ग्रहणमुपलक्षणमिति भावेनोक्तम्– **वर्णद्वयेति** ॥ अत्र जिज्ञासुमध्ये स यो हैतौ णकारषकारावित्यत्र यः णकारषकारौ ऋगादीनामनुसंहितं वेद स एव सबलां सप्राणां संहितां वेदेत्यन्वयमुपेत्योक्तम्– **स एव विष्णोरिति** ॥ स इत्यस्य तस्येति विपरिणामेन तस्या युष्यमिति विद्यादित्यर्थमभिप्रेत्याऽह– **स एवमुक्त इति** ॥ अथ यद् वयमित्यादिवाक्यद्वयं व्याचष्टे– **संहितासहितत्वेनेत्यादिना** ॥ अनुसंहितं संहितामनुसंहितानामकभगवन्तमन्वित्यस्यार्थः– **संहितासहितत्वेनेति** ॥ साहित्यं च तत्प्रतिपादकत्वम् । ऋच इत्युपलक्षणमित्युपेत्योक्तम्– **वेदानिति** ॥ तेन नो णकारषकारावुपात्तावित्येतद् व्याचष्टे– **तेनेति** ॥ सर्वे ऋषय इत्युक्त्या माण्डूकेयशाकल्यग्रहणं तद्गणोपलक्षणमित्युक्तं भवति ।

**उपनिषत्-**

**(वेदादेर्विष्णुनामव्याख्यानपरतया तदध्ययनादेर्विधिः)**

**एतद्ध स्मवै तद् विद्वांस आहुर्ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे किमर्था वयं यक्ष्यामहे ॥ वाचि हि प्राणं जुहुमः । प्राणे वाचं यो ह्येव प्रभवः स एवाप्ययः ।**

**भाष्यम्-**

**किमन्यैर्बहुभिः कार्यैरेतस्यैवाधिकत्वतः ।**
**एतदर्थानुसन्धानपूर्वं वेदानथापि वा ।**
**अधीमहे यजामो वा नान्यथा तु कथञ्चन ।**
**एष एव हि सर्वेषां वेदानामर्थ ईरितः ।**
**विष्णुनामोदितो योऽर्थस्तद्व्याख्याऽन्यद् वचोऽखिलम् ।**
**एवं विशिष्टप्राणात्मबलाद्यखिलसद्गुणैः ।**
**पूर्णस्वभावः सर्वेषां वचसामर्थ ईरितः ।**

**टिप्पणी -**

एतद्ध स्म वैतद् विद्वांस इत्यादि व्याचष्टे– **किमन्यैरित्यादिना** ।। विष्णु-शब्दार्थानुसन्धानाभावेऽन्याध्ययनादिना किं प्रयोजनं भवेन्न किमपीत्यर्थः । विष्णुशब्दार्थपरिज्ञानपूर्वं तज्जपे तेन च होमे कृते किमन्यैर्बहुभिः कार्यमेतस्यैवाधिकत्वत इत्येवम्परतया च किमर्था वयमध्येष्यामह इत्यादि व्याचष्टे–**मौनेनेत्यादिना** ।। यदि विष्णुशब्दार्थमेव ध्यायन्तः मौनेनात्र प्राणे वाचमनूद्यार्थः नमस्कारसमायुक्तं विष्णुनामाख्यं मन्त्रं जुहुम इति । यदि वा विष्णुशब्दार्थं ध्यायन्तः नमस्कारसमायुक्तं विष्णुनामाख्यं मन्त्रं जपन्तोऽत्र वाचि प्राणं वा जुहुमस्तर्हि किमन्यैर्वेदादिभिरश्वमेधवाजपेयादिभिश्च किं कार्यं एतस्यैवाधिकफलत्वादित्यर्थः । नन्वेषामश्वमेधादिभिः कार्यविशेषोऽस्ति । वेदाध्ययनादिना च ऋषिऋणादिमोक्ष इत्यतोऽभिप्रायमाह–**एतदिति** ।। ननु वेदेषु तदर्थानुसन्धानं युक्तं न विष्णुनामार्थानुसन्धानमित्यत आह– **एष एव हीति** ।। एवमुक्तरीत्या । विष्णुनामोदितोऽर्थः एष एव हीत्यन्वयः । तदुपपादनम्– **तद्व्याख्येति** ।। ततश्च किमित्यत आह– **एवमिति** ।। एवमुक्तरीत्येत्यर्थः । यथा विष्णुनाम्न एवं सर्वेषां वचसामिति वा । विशिष्टेति सर्वविशेषणम् । आत्मेत्याततत्वम् । आदिपदेन योजनान्तरे वीत्यस्य गत्याद्यर्थस्य ज्ञानादिगुणपरत्वात्

तद्ग्रहणम् । सामान्यविशेषभावादात्मेत्यनेनापौनरुक्त्यम् ।। **अखिलेति** ।। प्रत्येकं निःसीमत्वं सदिति निर्दोषत्वं चोच्चतार्थस्योवर्णस्यार्थः । स्वभाव इत्युनुप्रत्ययोकारस्येति विवेकः ।

**उपनिषत्-**

**(कस्मै नोपदिशेत् ?)**

**ता एताः संहिता नानन्तेवासिने प्रब्रूयान्नासंवत्सरवासिने नाप्रवक्त्र इत्याचार्या आचार्याः ।।**

**।। इति षष्ठः खण्डः ।।**

**।। इति श्रीमन्महैतरेयोपनिषत्सु तृतीयप्रघट्टके द्वितीयोऽध्यायः ।।**

**।। तृतीयप्रघट्टकं सम्पूर्णम् ।।**

**।। समाप्ता चेयमुपनिषत् ।।**

**भाष्यम्-**

संहिताख्यानि विष्णोस्तु रूपाण्येतानि सर्वशः ।
अन्यविद्यास्वशिष्यस्य न ब्रूयात् प्रथमं क्वचित् ।
व्याख्यानशक्तिहीनाय नैव ब्रूयात् कथञ्चन ।
वैष्णवाय सुवृत्ताय मेधाश्रद्धायुताय च ।
गुरोः शुश्रूषकायैव ब्रूयादित्यनुशासनम् ।।' इत्यादि च ।।

**(सर्वशब्दा अपि विष्णुनामव्याख्यानरूपा एव)**

य एतेन ण इति शब्देनाऽक्रियमाणं विष्णोः पूर्णबलं षशब्देनाऽक्रियमाणं देशतः कालतो गुणतश्चाऽततत्वं च सर्वां संहितामनु तदर्थत्वेन वेद, अक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति स सम्पूर्णबलं सर्वप्रणेतृत्वशक्त्यादियुक्तं च विष्णुं

**वेद। अथेत्यादिका अपि संहितारूपा एव पदवर्णयोः पृथगनभिव्याहारात्। तस्मात् सर्वशब्दा विष्णुनामव्याख्यानरूपा एव।**

**टिप्पणी -**

ता एताः संहिता इत्यादि व्याचष्टे– **संहिताख्यानीति** ।। ननु यदोपदिशति तदोपदेश्योऽन्तेवास्येव कथं नानन्तेवासिन इत्युक्तिरित्यत आह– **अन्येति** ।। नाप्रवक्त्र इत्यस्यार्थः– **व्याख्यानेति** ।। नासंवत्सरवासिन इत्यस्यासंवत्सरवासिने न ब्रूयात् किन्तु संवत्सरवासेन ज्ञातशीलाय ब्रूयादित्यर्थः इति भावेन व्याचष्टे– **वैष्णवायेत्यादिना** ।। अध्यायान्ते आचार्या आचार्या इति द्विरुक्तेर्ग्रन्थोक्तस्य सर्वस्यावधारणेन सर्वस्यानुष्ठेयत्वं तात्पर्यमिति भावेनाऽह– **इत्यनुशासनमिति** ।। स यो हैतौ णकारषकारावनुसंहितमृच इत्यत्र ऋचः प्रतिसंहितं णकारषकारौ वर्णौ वेदेत्यन्यथाप्रतीतेः स्ववचनेन स्पष्टं व्याचष्टे– **य इत्यादिना** ।। योऽधिकार्येतेन विष्णुनामगतेन ण इति शब्देनाऽक्रियमाणमुच्यमानं विष्णोः पूर्णं बलं वेद षशब्देनाऽक्रियमाणं देशतः कालतो गुणतश्चाऽततत्वं चशब्दात् प्रणेतृत्वं ऋचां संहितामनु तदर्थत्वेन वेद न केवलमृचां संहितामनु किन्त्वक्षरद्वयसंयोगरूपया संहितयैतदेव सर्वत्रोच्यत इति वेद सः सबलां संहितां सम्पूर्णबलं विष्णुम् । सप्राणां संहितां सर्वप्रणेतृत्वशक्तिरादिपदेनातततत्वं तद्युक्तं वेदेत्यर्थः। नन्वथेत्यादेर्विश्लिष्टस्य कथं संहितात्वम्? येन विष्णुरिति विष्णुनामसंहिताव्याख्यानत्वं स्यादित्यत आह–**अथेत्यादिका अपीति** ।। पदवर्णयोः पदगतवर्णयोः पृथगनभिव्याहाराद् विरम्योच्चारणाभावाद् इत्यर्थः । ततश्च किम्? इत्यत आह– **तस्मादिति** ।। ते यद् वयमनुसंहितमृचोऽधीमहे ।

**भाष्यम्-**

**(विष्णुनाम्नि षणकारावेव मुख्यौ)**

**यद् वयं संहितायुक्तत्वेनर्चोऽधीमहे तेनास्माकं णशब्दषशब्दार्थरूपो विष्णुरुपात्तः। तद्व्याख्यानत्वात् सर्ववाचाम्। वीत्युपसर्गत्वादुकारस्य च ताच्छील्यार्थ-**

**त्वादुक्तार्थविशेषणरूपत्वेन प्रसिद्धत्वान्न पृथक् तयोर्व्याख्यानमत्र कृतम्। ऋच इति सर्ववाचामुपलक्षणम्। अतः सर्ववेदादिशब्दोदितः सर्वगुणपरिपूर्णो भगवान् नारायण इति सिद्धम् ॥**

**टिप्पणी -**

अथ यद् वयमिति वाक्यद्वयं व्याचष्टे– **यद् वयमिति** ॥ संहितायुक्तत्वेन संहितानामभगवद्वाचकत्वेन णकारषकारार्थरूपो विष्णुरिति। अनेन तेन विष्णु-पदोदितः। अवाप्तो भगवानिति प्रमाणवाक्यं विवृतं भवति। ननूपनिषदि विकारोकारयोः कुतो नार्थ उक्त इत्यत आह– **वीति** ॥ विशेषणरूपत्वेन विशेषणनिरूपकत्वेन। ननु ते यद् वयमनुसंहितमृचोऽधीमहे इत्यस्य वेदानन्यान् पुराणं वेति प्रमाणेन कथं व्याख्यातमित्यत आह– **ऋच इति** ॥ आरण्यक-द्वयोक्तस्यावधारणार्थमाचार्या आचार्या इति द्विरुक्तिरित्यभिप्रायेण फलितमाह– **अत इति** ॥ पूर्वारण्यके प्रथमाध्यायोपक्रमे एष पन्था इत्यत्र सकलगुणपूर्णत्वेन सर्वोत्तमत्वान्नारायणस्यैव मुमुक्षुभिरुपास्यत्वं प्रतिज्ञाय स एव सर्वोत्कृष्टोऽष्टभिः खण्डैरध्यायशेषेण प्रपञ्चितः। हेतुभूतं गुणपूर्णत्वं समन्वयमुखेन द्वितीयाध्याये प्राण ऋच इत्येव विद्यादित्यन्तेनोक्त्वा तत्रैवाऽख्यायिका विश्वामित्रमित्या-दिनाऽध्यायशेषेणोक्ता। तृतीयाध्याये च यो ह वात्मानमित्यादिना पूर्वाध्यायोक्त-बृहतीसहस्रप्रतिपाद्यत्वमत एव तद्व्याख्यानरूपसर्वशब्दवाच्यत्वं प्रपञ्चितम्। चतुर्थे चाऽत्मा वा इदमेक एवाग्र आसीदित्यादिना तस्यैव कारणत्वोक्त्या समन्वय उक्तः। पञ्चमे पुरुषो हवेत्यादिनाऽवान्तरसृष्टिपराणां पुरुषस्त्र्यादिशब्दानां समन्वय उक्तः। षष्ठे च कोऽयमात्मेत्यादिना गुणविशेषलाभाय यदेतद् हृदयं मन इत्यादिना समन्वय उक्तः। सप्तमे वाङ्मे मनसीत्यादिना स्पष्टं सर्ववाग्विषयत्वमुक्तम्। द्वितीये चाऽरण्यके सर्ववाग्व्याख्येयविष्णुनामसंहिताप्रतिपाद्यत्वोक्त्या सर्वशब्द-समन्वय एवाध्यायद्वयेनोक्तः। यत एवं सर्ववेदादिशब्दोदितोऽतः सर्वगुणपूर्णो भगवान् नारायणः सर्वोत्तमोऽतः स एवोपास्य इति यदुपक्रमे उक्तं तदुपपन्नमिति सिद्धमिति भावः ॥

**खण्डार्थः -**

यत् त्रयोविंशतिमखण्डे यदि वागादीनामेवाभिव्याहरणादिहेतुत्वं तर्ह्यथ कोऽहं स्यां विष्णुर्न स्यां विशिष्टबलचेष्टावत्त्वस्यैव विष्णुनामार्थत्वादित्युक्तम्। तदुपपादयितुं सर्वशब्दव्याख्येयविष्णुनामवाच्यत्वाच्च सर्वगुणपूर्णत्वमित्युपपादयितुं चेदमारण्यकमुपक्रान्तम्। तदुभयोपसंहाराय विष्णुनामाक्षरार्थकथनपूर्वं तद्व्याख्यानत्वं सर्ववेदानां ऋषिसम्मत्या प्रदर्श्यतेऽस्मिन् खण्डे । अथ तस्मादेव विष्णुनाम्नः सर्वगुणपूर्तिप्रतिपादकसर्ववाग्व्याख्येयत्वादेव । कृष्णनामा हारीतपुत्रः अस्मै स्वोपसत्तिं कुर्वते शिष्याय पुत्राय वा एतद् वक्ष्यमाणं वाग्ब्राह्मणमिव वाग्विषय-ब्राह्मणमिव विद्यमानं अष्टपञ्चकानन्तर्गतत्वेऽपि सर्ववाचा विष्णुनामव्याख्यानत्वेन विनियोजकत्वाद् विष्णुनाममन्त्रार्थकथनपरत्वाच्च। ब्राह्मणसदृशं विद्याविशेष-मेवोदाहरत्युपदिशति । यद्वा इवेत्यल्पार्थे । इव किञ्चित् सङ्ग्रहेणोपदिशती-त्यर्थः। 'उपमार्थे तथाऽल्पत्वेऽपीवशब्दः प्रयुज्यते' इति वचनात्। विष्णुनामसंहिते-त्येका। तत्र षकारणकारौ वर्तेते। तत्र संहिताशब्द आख्यानपूर्वं निरुच्यते– **प्रजापतिरिति**।। संवत्सरनामा ब्रह्मा प्रजाः सृष्ट्वा व्यस्रंसत स्रस्ताङ्गोऽभूत् । स स्रस्ताङ्गः सन् च्छन्दोभिः सर्वैर्वेदैरात्मानं परमात्मानं समदधात् सन्धित-वान्। ततश्च छन्दःप्रतिपाद्यत्वात् छन्दोनामकैः स्वस्तुतैर्भगवद्रूपैरात्मानं परमात्मानं समदधात् सन्धितवान् विशेषसन्निधानयुक्तमकरोत् । ततश्चायमात्मानं स्वदेहं समदधात् समाहितं स्वस्थं दृढमकरोत्। यद् यस्माच्छन्दोभिरात्मानं समदधात् तस्मात् सन्धानात् स्तुत्या सन्धानाच्चतुर्मुखे सन्निधानेन देहदार्ढ्यकरणाच्च सा मूर्तिः संहितानाम्नी । तस्यै वा एतस्यै संहितायै तस्या एतस्याः संहितायाः संहितानाम कस्य विष्णोर्बलं णकारः ण इत्यनेन वर्णेनाऽक्रियमाणः प्रतिपाद्यः। प्राणश्रेष्ठकत्वं आत्मा आततत्वं च ष इत्यनेनाऽक्रियमाणत्वात् प्रतिपाद्यत्वात् षकार इत्यर्थः । यतो णकारषकारौ ण इत्याक्रियमाणं बलं ष इत्याक्रियमाणं प्रणेतृत्वमाततत्वं च ष इत्यनेनाऽक्रियमाणत्वात् प्रतिपाद्यत्वात् षकार इत्यर्थः।

यतो णकारषकारौ ण इत्याक्रियमाणं बलं ष इत्याक्रियमाणं प्रणेतृत्वमाततत्वं च ऋचोऽनुसंहितं प्रति संहितमुपलक्षणमेतदन्यत्र चानुसंहितम् । यत्र यत्र वर्णद्वयसमायोगो भवति तत्र तत्र वेदप्रतिपाद्यं वेद स एवाधिकारी सबलां बलपूर्णां सप्राणां प्रणेतृत्वशक्तिपूर्णां देशतः कालतो गुणतश्चाऽततां संहितां संहितानामिकां विष्णवाख्यां देवतां वेद । तस्य सर्वशब्दप्रतिपाद्यत्वाज्ञाने तज्ज्ञानित्वायोगादिति भावः । एवंविदः फलमुच्यते– **आयुष्यमिति** ।। तस्य नित्यायुष्यं मुक्तो भविष्यतीति विद्यादित्यर्थः । नन्वग्निमीळ इत्यादौ अग्निमित्यादि-संहितासु णकारषकारार्थानुपलम्भाद् भवद्भिश्चोच्यमानत्वात् सन्दिह्यत इत्या-शङ्क्योच्यते– **स यदीति** ।। स उपासकः । स णकारं णकारवाच्यबलानुसन्धानपूर्वं वेदादिकं ब्रवाण्युताणकारं णकारवाच्यबलमत्र न प्रतिपाद्यत इति तदनुसन्धानं विना ब्रवाणीति अनुपलम्भोक्तिभ्यां सन्देहकारणाभ्यां यदि विचिकित्सेत् संशयं कुर्यात् तदोच्यते । किमिति ? स णकारं णकारार्थानुसन्धानपूर्वमेव ब्रूया-दिति । यदि षकारार्थानुसन्धानपूर्वं वेदादिकं ब्रवाण्युताषकारं तदननुसन्धानपूर्वं ब्रवाणीति विचिकित्सेत तदोच्यते । किमिति? स षकारं षकारार्थानुसन्धानपूर्वमेव ब्रूयादित्यर्थः । अनुपलब्धिस्तु व्युत्पत्त्यभावनिबन्धनेति भावः । व्युत्पन्नानां तु प्रतिसंहितं तदर्थानुसन्धानमस्तीत्यत्र वयमेव साक्षिण इति ऋषिभिरभिधीयत इत्युच्यते– **ते यद् द्वयमिति** ।। त एवं जानन्तो वयं यद् येन कारणेनानुसंहितं संहिताप्रतिपाद्यं विष्णुमनुसृत्य तद्युक्तत्वेन तदर्थत्वेन ऋचोऽन्यान् वेदादींश्चाधी-महे । यस्माच्च विष्णुनामार्थत्वं वेदादेः प्रदर्शयन्तं माण्डूकेयैरधीयमानमध्यायं प्रब्रूम उपदिशामः । तेन कारणेन नोऽस्माकं णकारषकारौ णवर्णषवर्णाभ्यां आक्रियमाणो वाच्यो बलादिगुणयुग् विष्णुर्नोऽस्माकं उपात्तोऽवयत इति ह स्माह ह्रस्वो माण्डूकेयः। अथान्यस्थविरः शाकल्योऽपीति हस्मेत्येवाहेति अन्वयः । किञ्च बहवोऽप्यृषयः ऐकमत्येनेदमेवाऽहुरित्युच्यते–**एतदिति** ।। विष्णुनाम्न एव सर्वोत्तमत्वमेतद् व्याख्यानत्वमन्यवचसामित्येतत् प्रमेयं विद्वांसः कावषेया ऋषयोऽ-

प्येतद् वक्ष्यमाणमाहुः स्म विष्णुशब्दार्थज्ञानं सर्वत्र तदनुसन्धानं विना वयं किमर्थाः किंप्रयोजनमनुसन्दधाना वेदादीनध्येष्यामहे विष्णुपूजारूपत्वानुसन्धानं विना किं प्रयोजनार्थमश्वमेधादीन् यक्ष्यामः । न किमपि प्रयोजनमुद्दिश्यैतद्-विद्याध्ययनयज्ञफलयोरभावादिति भावः । यदि विष्णुमन्त्राध्नं तेनैव होमं च निर्वर्तयामस्तदाऽपि किमन्यैरध्ययनादिभिरिति चोच्यते– **किमर्था इति** ।। यदि वाचि विष्णुषडक्षररूपायां जप्यमानायां प्राणं जुहुमः श्वासवृत्तिनिरोधेन तदभिमानिनं प्राणं जुहुमस्तत्र संश्लेषसम्पादनेन तस्य होमत्वं चिन्तयाम इति यावत् । यद्यत्रैतदधीते वा भाषते वाचि तदा प्राणो भवतीति बाध्वखण्डे उक्त-त्वात् । यदि वा प्राणे वाचं जुहुमः मौनेन विष्णुनामार्थं ध्यायन्तः प्राणे वाचः संश्लेषेण तस्य तत्र होमं चिन्तयाम इति यावत् । अथ यत्र तूर्ष्णी भवति वाक् प्राणे तदा भवतीत्युक्तत्वात् । तदेवं विष्णुनामाध्ययनहोमचिन्तनयोः करणे किमर्था वयमध्येष्यामहे वेदादीन् किमर्था वयमश्वमेधादीन् यक्ष्यामहे । एतस्याधिकत्वादत एव न्यासिनां विष्णुमन्त्रजपोक्तविधहोमाभ्यामधिकं फलमिति भावः । गृहस्थादेर्बाह्ययज्ञादिफलापेक्षाऽस्ति चेत् फलवैचित्र्यसिद्ध्यर्थं तदर्थानुसन्धान-पूर्वं वेदाध्ययनाश्वमेधादि कार्यमिति भावः । तयोरन्योन्यस्मिन् होम उपपाद्यते– **यो ह्येवेति** ।। यो यस्मादुत्पद्यते स तस्मिन् लीयत इति प्रसिद्धम् । प्रकृते च वाचो व्यञ्जकत्वेन मातृत्वात् प्राणस्य च वागुत्पादकत्वात् तयोः परस्परं संश्लेष इति भावः । एवं महिदासो भगवानाचार्यः मुनिमतभेदेन संहिताप्रतिपाद्य-रूपाण्युपदिश्यैतद्विद्याधिकारिनिरूपणमिषेणास्यातिगोप्यत्वमाहेत्युच्यते– **ता एता इति** ।। ता एताः संहिताः संहितानामकानि तानीमानि भगवद्रूपाणि अनन्तेवासिने अन्यविद्यास्वशिष्याय प्रथमं न ब्रूयात् । अन्यविद्यासु शिष्यत्वेऽपि नासंवत्सरवासिने ब्रूयात् । संवत्सरान्तः द्वित्रमासमध्ये विद्यान्तराध्ययनं न पूर्यते । किन्तु संवत्सरवासं कृत्वा परिज्ञातविष्णुभक्त्यादिशीलायान्यविद्यासुशिष्याय ब्रूयादिति भावः । वैष्णवत्वादि-गुणयुक्तत्वेऽपि अप्रवक्त्रे व्याख्यानशक्तिहीनाय न ब्रूयात् । किन्तु विशिष्ट-व्याख्यानादिगुणसम्पन्नाय ब्रूयादित्याचार्या महिदासप्रभृतय आचक्षते ।

**भाष्यम्-**

**(सर्वशब्दवाच्यो नारायणः सदा सन्तुष्यतु)**

**सर्वैश्च वैदिकपदैरपि लोकशब्दैर्मेघाग्निवारिधितळादिरवैश्च सर्वैः ।**
**एकोऽभिधेयपरिपूर्णगुणः प्रियोऽलं नारायणो मम सदैव सुतुष्टिमेतु ॥**

**(वायुदेवस्यावतारत्रयम्)**

**'यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः**
**मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ ॥**

**टिप्पणी -**

एवं समापितभाष्यः सर्वज्ञजनचूडामणिः भगवानाचार्यवर्योऽस्यामुपनिषदि समन्वयमुखेन यद्गुणविशिष्टतया परमेष्टश्रेष्ठवाय्वधिष्ठिततया भगवान् नारायण उपष्टुतस्तमेव तद्गुणविशिष्टतया श्रेष्ठवाय्ववतारश्रेष्ठतयोपश्लोकयन् प्रीणयति– **सर्वैरिति** ॥ वैदिकपदैर्वेदादिगतैरग्न्यादिपदैः लोकशब्दैः प्राकृतशब्दैः न केवलं वर्णात्मकैः किन्तु मेघाग्निवारिधितलताडनादिप्रभवैः सर्वैर्ध्वन्यात्मकैरपि शब्दैस्तद्व्यञ्जित-वर्णद्वारा एक एवाभिधेयपरिपूर्णगुणो ममालं प्रिय एव पुनरप्यलं सुतुष्टिमेत्वि-त्यर्थः । स्वस्य परमात्मत्वे च स्वकृतेः प्रामाण्यं बोधयन् स्वस्वरूपज्ञानस्यापि भगवज्ज्ञानवन्मोक्षान्तरं गत्वा स्वस्वरूपं निरूपयन् स्वकृतिं हरावर्पयति– **यस्येति** ॥ अस्य श्लोकस्य सुधारीत्याऽयमर्थः । यस्य वायोः देवस्य वेदवचने बळित्थेत्यादौ अलं दिव्यान्यद्भुतानि त्रीणि रूपाण्युदितानि तेन वायुनेदं भाष्यं प्रभौ प्रभुविषये कृतमित्यन्वयः । कीदृशं तस्य मूलरूपं कथंभूतानि च तानि त्रीणि रूपाणीत्यत उक्तम्– **बडित्यादि** ॥ यस्य तन्मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं च । दृशेरौणादिकोऽतच्प्रत्ययः। अनेन वायुशब्दो निरुक्तः।

वशब्दो बलवाची । अय् गत्यर्थः । गत्यर्थाश्चावगत्यर्थाः । तत उण्, वश्चासावायुश्चेति वायुरिति । किञ्च भर्गो भरणगमनयोः कर्तृ । डु भृञ् भरणे गम्लृ गतौ आभ्यामसुन्प्रत्ययो डिच्च । इदमपि वायुशब्दव्याख्यानम् । वा गतिगन्धनयोरित्यतः 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युण् । अनेकार्थत्वाद् धातूनां वातिर्भरणेऽपि वर्तते । अपिच महच्छ्रेष्ठम् । वय श्रेष्ठत्व इत्यस्मादुण् । न केवलं मूलरूपमेवैवं किन्तु यस्यावतारेषु निहितं रूपमित्थमेव । यस्य प्रथमकं प्रथमं रूपं रामविषयाणि वचांसि मूलरामायणादीनि रामवचांसि तेषां नयं नीयन्ते शिष्येषु प्रवर्त्यं तेऽनेनेति । एरजित्यच् । यस्य द्वितीयं वपुः पृक्षः पृच्छब्दः पृतनावाची प्रसिद्धः। तस्मिन् कर्मण्युपपदे क्षै क्षय इत्यस्माद् 'आतोऽनुपसर्गे कः' इति कः । उपपदतकारलोपश्छान्दसः, पुल्लिङ्गः श्रुत्यनुसारेण । असुन् वा प्रत्ययः किदिति नपुसंकमेवेदम् । रिपुपृतनाक्षयकारीत्यर्थः । यस्य यत् तृतीयं वपुः एतन्मध्वः मधुशब्दः सुखवाची । 'मधु द्यौरस्तु नः पिता' इति प्रयोगात् । वशब्दः शास्त्रापरपर्यायतीर्थवाची, वातेरवगत्यर्थात् करणे घञर्थे कविधानमिति कः । सुखसाधनं तीर्थमस्येति स्वरित्यत्रेवोकारलोप इति ।

**भाष्यम्-**

**(बळित्थासूक्तव्याख्यानम्)**

हनशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ।
रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि ।
भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः ।
ऋगाद्या इतिहासं च पुराणं पञ्चरात्रकम् ।
प्रोक्ताः सप्तशिवास्तत्र शयो भीमस्ततः स्मृतः ।
मध्वित्यानन्द उद्दिष्टो वेति तीर्थमुदाहृतम् ।
मध्व आनन्दतीर्थः स्यात् तृतीया मारुती तनुः ।

**इति सूक्तगतं रूपत्रयमेतन्महात्मनः।**

**यो वेद वेदवित् स स्यात् तत्त्ववित् तत्प्रसादतः ॥ इति च।**

**टिप्पणी -**

ननु यदुक्तं बलित्थेत्यादौ वायो रूपत्रयमुक्तमिति, तदयुक्तम्। त्रेताग्निपरतयाऽनुक्रमणिकायामुक्तत्वादित्यतः सत्यम्, प्राणाग्निपरमिदं सूक्तमिति भावेन प्रमाणेन रूपत्रयविषयतया व्याचष्टे– **हनशब्द इत्यादिना**॥ प्रथमायामृचि साधते मतिरिति मतिशब्दार्थमाह– **न हनशब्द इति** ॥ हन हिंसागत्योरिति धातोः 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' इत्युकारः। गत्यर्थानां ज्ञानार्थत्वात्। हनुशब्दो ज्ञानवाची। तद्वान् हनुमान्। स एव मतिशब्दितः। मनु अवबोधन इत्यतः कर्तरि क्तिन्प्रत्ययः। 'अकर्तरि च कारके सञ्ज्ञायाम्' इत्युक्तत्वेऽपि 'नञा निर्दिष्टमनित्यम्' इति न्यायात् कर्तर्युपपद्यते। ऋतस्य धेना अनयन्त इत्येतद् व्याचष्टे– **रामस्येति** ॥ ऋतस्य यथार्थज्ञानस्वरूपस्येत्यर्थः। 'ऋतं यथार्थविज्ञानम्' (तै.भा. १.१७) इति वचनात्। ऋ गतावित्यतो भावे क्तप्रत्ययः। यद्वा, सर्वदैकप्रकारेण ज्ञातस्येत्यर्थः। 'ऋ गताविति धातोस्तु पूर्वावगतवत् सदा। स्थिते ब्रह्मर्तमित्युक्तम्' इति वचनात् कर्तरि क्तः। धेना इत्यस्यार्थः–**वाच इति** ॥ धेट् पान्को धयन्ते पिबन्ति आसु मुमुक्षवो रामकथामृतमिति धेनाः रामस्य मूलरामायणादिवाचः शिष्याननयन्तेत्यर्थः। यद्वा धेट् शुद्धौ अपशब्दादिदोषरहिताः सन्देशरूपा वाचः सीतां प्रत्यनयन्तेत्यर्थः। द्वितीयायामृचि नित्य आशये द्वितीयमासप्तशिवासु मातृष्वित्येतद् भीम-शब्दार्थकथनमिति भावेन भीमशब्दार्थं तावदाह– **भृतम इति** ॥ भृता निभृता माः प्रमाणानि यस्मिन् स भीमः। भृञ् भरण इत्यस्मादौणादिक ईकारप्रत्यये भी भृताः मा प्रमाणानि यस्मिन्निति भवतीति भावः। माशब्दार्थमाह– **वाच इति** ॥ अस्त्वेवं भीमशब्दार्थः। ततश्च किमित्यत आह– **मातर इति** ॥ ता एव वाचः श्रुतौ मापकत्वात् ज्ञापकत्वात् ज्ञानकरणत्वात् मातरः

स्मृताः । माङ् मान इत्यतः करणे तृच् । सप्तशिवास्वित्येतद् विशदयति– **ऋगाद्या इति** ।। यतस्तत्र शयः तद्विचारनिष्णातः ततो भीमः स्मृतः । तृतीयायामृचि मध्वपदं व्याचष्टे– **मध्विति** ।। 'मधु द्यौरस्तु नः पिता' । कामानलं मधुलवैः शमयन् दुरापैरित्यादौ मध्वित्यनेनाऽनन्द उद्दिष्टः । वातेरवगत्यर्थत्वाद् ज्ञानकरणं तीर्थं शास्त्रं व इत्यनेनोदाहृतम् । तथाच मधुशब्दितानन्दकरं वं तीर्थं यस्मात् स मधुवः स एवोकारलोपेन मध्वः आनन्दतीर्थः । तीर्थं चेह शास्त्रं 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः । एतज्ज्ञानफलमाह– इतीति ।।

**भाष्यम्-**

**(बळित्थासूक्तव्याख्यानं -यजुःसंहितायाम्)**

साधको रामवाक्यानां तत्समीपगतः सदा ।
हनूमान् प्रथमो ज्ञेयो भीमस्तु बहुभुक् पितोः ।
पृतनाक्षयकारी च द्वितीयस्तु तृतीयकः ।
पूर्णप्रज्ञस्तथाऽऽनन्दतीर्थनामा प्रकीर्तितः ।
दशेति सर्वमुद्दिष्टं सर्वं पूर्णमिहोच्यते ।
प्रज्ञा प्रमतिरुद्दिष्टा पूर्णप्रज्ञस्ततः स्मृतः ।
आ समन्तात् पतित्वे तु गूढं कलियुगे हरिम् ।
असत्यमप्रतिष्ठं च जगदेतदनीश्वरम् ।
वदद्भिर्गूहितं सन्तं तृतीयोऽसुर्मथायति ।
येन विष्णोर्हि वपाख्यान् गुणानज्ञासिषुः परान् ।
ईशानासः सूरयश्च निगूढान् निर्गुणोक्तिभिः ।
त्रेतायां द्वापरे चैव कलौ चैते क्रमात् त्रयः ।
एतेषां परमो विष्णुर्नेता सर्वेश्वरेश्वरः ।
स्वयम्भुर्ब्रह्मसञ्ज्ञोऽसौ परस्मै ब्रह्मणे नमः ।।' इति च ।।

**टिप्पणी -**

एवं व्याख्याते तृचे उर्वरितानि कानिचित्पदानि प्रमाणान्तरेण व्याचष्टे– **साधक इत्यादिना** ।। प्रथमायामृचि उपह्वरते साधते मतिरित्येतद् व्याचष्टे– **साधक इति** ।। ऋतस्य धेना आज्ञारूपाः साधते आज्ञाकार्यकरणेन साधत इत्यस्य तात्पर्यं रामवाक्यानां साधक इति बृहद्भाष्यपाठः । अस्यां योजनायां धेना इति द्वितीयान्तमिति भावः । ऋतस्योप समीपे ह्वरते ह्वृ गतौ सदा तत्समीपे वर्तते इत्यभिप्रेत्योक्तम्– **तत्समीपगत इति** ।। द्वितीयायामृचि सप्तशिवासु मातृष्वित्यस्य तात्पर्यम्– **भीमस्त्विति** ।। पितुमानित्यस्यान्नं वै पितुरिति श्रुतेरन्नं पितुः पितुरस्यास्तीति पितुमान् भूमार्थे च मतुप् । अन्नवत्त्वं च तद्भोक्तृत्व-मित्यभिप्रेत्योक्तम्– **बहुभुक् पितोरिति** ।। पृक्षशब्दार्थः – **पृतनेति** ।। द्वितीयं वपुरित्यस्यार्थः– **द्वितीय इति** ।। दशप्रमतिशब्दार्थमाह– **तृतीयक इति** ।। मध्व इति नामान्तरमिति भावेन तदर्थोक्तिः– **तथानन्दतीर्थेति** ।। दशप्रमतिशब्दस्य पूर्णप्रज्ञ इति कथं व्याख्यानमित्यतो व्युत्पाद्य दर्शयति– **दशेति** ।। दशेति वै सर्वमित्यस्यामेवोपनिषदि दशेत्यनेन सर्वमुद्दिष्टम् । सर्वं चेह पूर्णमुच्यते । प्रमतिरिति प्रज्ञोद्दिष्टा । ततो दशप्रमतिशब्देन पूर्णप्रज्ञः स्मृत इत्यर्थः । निर्यदीं बुध्नामिति तृतीयामृचं व्याचष्टे– **आ समन्तादित्यादिना** ।। आधव इत्यत्र आ इत्यनुवादेन धव इति विषयसप्तमीति भावेनोक्तम्– **आ समन्तात् पतित्व इति** ।। पतित्वेनेति ग्रन्थान्तरपाठः । गुहासन्तमित्यत्र गुहू संवरण इति धातोः 'षिद्भिदादिभ्योऽञ्' इति स्त्रियां कर्मण्यञ् । तथाच गुह्यत इति गुहा गुहात्वेन गूहितत्वेन सन्तमित्यर्थमभिप्रेत्योक्तम्– **गूढमिति** ।। गूढत्वे निमित्तकथनपूर्वं विवृणोति– **कलियुग इत्यादिना** ।। एतज्जगदसत्यं सद्भावव्यापकशून्यम् । अप्रतिष्ठं प्रतिष्ठापकशून्यम् । अत एवेश्वररहितमिति वदद्भिरित्यर्थः । यद्वा जगदसत्यं, मिथ्याभूतं कुतः अप्रतिष्ठं ज्ञानबाध्यम् । अत एवेश्वररहितम् । सत्यस्य हीश्वरापेक्षेति वदद्भिः सत्यजगज्जन्मादिकारणत्वगुणविशिष्टतया गूहितमित्यर्थः । यदीं य

एव । तृतीयो मातरिश्वेत्यस्य तात्पर्यम्– **तृतीयोऽसुर्मुख्यप्राण इति** ।। निर्यदीं बुध्नान्महिषस्य वर्पस्य इत्यत्र यदीमित्यस्यार्थः– **येनेति** ।। महिषस्य महितषड्गुणस्य तात्पर्यम्– **विष्णोरिति** ।। वर्पस इत्यत्र ढ्चाभ्यां रूपस्वाङ्गयोर्युङ्चेति स्मरणाद् वृङ् वरण इति धातोः कर्मण्यसुन्प्रत्ययः पुगागमः धातोर्गुणश्च । तथाच वरणीयत्वाद् वर्पस इति भवति । योग्यतया गुणानिति लभ्यत इति भावेनोक्तम्– **वर्पाख्यानिति** ।। निराक्रन्तेत्यस्यार्थः– **अज्ञासिषुरिति** ।। क्रमेर्गत्यर्थस्य ज्ञानार्थत्वाद् ईशानासः बहुवचनमाद्यर्थे । ईशानप्रभृतयो देवा अन्ये सूरयश्चेत्यर्थमभिप्रेत्योक्तमीशानास इति द्वितीयं तृतीयमित्युक्त्या लब्धमवतारत्रयस्य कालभेदमाह– **त्रेतायामिति** ।। अत्रावतीर्णा इति शेषः । एतेषां परमो विष्णुर्नेतेत्यनेन प्रयत्पितुः परमान्नीयत इति चतुर्थ्या ऋचस्तात्पर्यमुक्तं भवति । उभा यदस्य जनुषं इतीत्युभयोर्नियमेन साम्यं प्रतीयतेऽत उक्तम्– **सर्वेश्वर इति** ।। हरेर्वायुनियामकत्वे ब्रह्म स्वयम्भु ब्रह्मणे नमः इति बृहदारण्यकोपनिषद्वाक्यं प्रमाणमिति भावेन तद् व्याचष्टे– **स्वयम्भुब्रह्मसञ्ज्ञ इति** ।।

## (बळित्थासूक्तार्थः)

**बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।**
**यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः ।**

सहसो देवस्य सह मर्षणे अरिवेगसहनवतो वायोर्देवस्य । तन्मूलरूपम् । बट् बलात्मकम् । दर्शतं ज्ञानरूपम् । 'भृमृदृशियजिपर्विपच्यमितमिनमिहर्यभ्योऽतच्' इत्युणादिसूत्रे दृशेरतच्प्रत्ययविधानात् । दर्शेन ज्ञानेन ततं व्याप्तं दर्शतमित्यप्याहुः । यतः स्वयमजनि यतश्च वपुषे अवतारायेत्थमेव बलाद्यात्मकत्वेनैव अधायि न्यधायि । तस्य देवस्य भर्गः भरणगमनयोः कर्तृ च यदीं यदेव मतिर्हनुमदाख्यं प्रथमं रूपम् । ऋतस्य यथार्थज्ञानस्वरूपस्यैकप्रकारेण शश्वदवगतस्य रामस्योप समीपे ह्वरते सर्वदा गतो वर्तते । तस्य सस्रुतोऽतिशयेनामृतस्राविणीर्धेनाः

वाचः साधते । किञ्च ऋतस्य प्रतिपादिकाः सस्नुतोऽमृतस्राविण्यो धेना रामायणादिवाचः तेन हनुमता शिष्यान् प्रत्यनयन्त । सन्देशरूपा वाचः सीतां वा प्रत्यनयन्तेत्यर्थः ।

**पृक्षो वपुः पितुमान्नित्य आशये द्वितीयमा सप्त शिवासु मातृषु ।**
**तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः ।**

अस्य वृषभस्य वृष सेचने च भक्तानां सर्वाभिलषितवर्षितुः । यद्वा वृष स्नेहे भक्तानुरागिणः । भगवद्भक्तप्रवरस्य वा । यद्वा, वृष शक्त्यतिशय इति धातोर्बहुशक्तिसम्पन्नस्य वायोर्द्वितीयं वपुः सप्तसङ्ख्याकासु आशिवासु परममङ्गलासु मातृषु ऋगादिप्रमाणेषु । नित्यः नित्यं शये शेते । लोपस्त आत्मनेपदेषु इति तकारलोपे अयादेशे च शय इति रूपम् । ततश्च भीमनामकमिति यावत् । किञ्च पृक्षः कुरुपृतनाक्षयकारी । पितुमान् बह्वन्नभोक्ता । अस्य वृषभस्य वर्षितुः दशप्रमतिं पूर्णप्रज्ञनामकम् । तृतीयं वपुर्दोहसे ज्ञानदोहाय योषणः स्त्रियः जनयन्त अजनयन्त । गुरुमातृत्वाद् बहुवचनम् ।

**निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रन्त सूरयः ।**
**यदीमनुप्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा मथायति ॥**

बुध्नात् बोधमतिव्याख्यातत्वात् । यदीं यस्मात् पूर्णप्रज्ञादेव महितषड्गुणस्य हरेर्वरणीयत्वाद् वर्पसो गुणान् ईशानादयो देवा अन्ये सूरयश्च शवसा सुखेन नितरां अक्रन्त ज्ञातवन्त इत्यर्थः । यद्यपि बन्धेर्ब्रधिबुधी चेत्युणादिसूत्रे बन्ध बन्धन इति धातोर्बुधादेशेन कुप्रत्यये च कृते बुध्नाद् ज्ञानोपदेशकाद् अबुध्ने राजेत्यत्र ऋग्भाष्यटीकायां अबुध्ने बुध अवगमने ततो नक् तत्प्रतिषेधो अबुध्नमिति निष्पन्न इत्युक्तम् । तथापीह प्रकृतविवक्षयाऽर्थान्तरं बोध्यम् । यद्वा धात्वर्थभूतो बन्धो भक्तिलक्षणो विवक्षितः। 'अनुबन्धश्च भक्तिः स्याद्' इति वचनात् । भगवद्भक्ताग्रेसरादिति यावत् । भक्तेर्ज्ञानरूपत्वाद् बोधात्मकत्वादिति वा ।

यदीं प्रदिवः प्रकाशादिरूपो मध्व आनन्दतीर्थाख्यो मातरिश्वा मातरि प्रमाणभूते ऋगादौ श्वयति गच्छतीति वायुः । कलियुगे दुर्वादिभिर्गुहासन्तं गूहितं सन्तं हरिं आधवे आसमन्तात् पतित्वे विषये मथायति मथ्नाति । शास्त्रेण विचार्य निश्चाययतीत्यर्थः ।

**प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ।**
**उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद् घृणा शुचिः ।।**

यद् रूपत्रयम् । परमात् पितुः प्रणीयते उत्तमत्वेन प्रेर्यते । पृक्षुधः प्रश्नान् वीरुध इव दंसु दन्तेषु पर्यारोहति शकलीकरोतीति यावत् । अस्य यज्जनुषं यज्जन्म उभा उभौ लक्ष्मीनारायणौ यद् यस्मादिन्वतः प्रेरयतः । आत् इत् अस्मादेव कारणात् आत् इत् आभ्यामेव घृणा दयया । शुचिः शुद्धोऽयं यविष्ठो वरोऽभवत् ।

**आदिन्मातॄराविशद् या स्वाशुचिरहिंस्यमान उर्विया विवावृधे ।**
**अनु यत्पूर्वा अरुहत्सनाजुवो निनव्यसीष्ववरासु धावते ।।**

आत् इत् आभ्यां लक्ष्मीनारायणाभ्यां तत्प्रसादादेव । मातॄः अञ्जनाकुन्तीमध्यगेहस्त्रिय आविशत् प्रविष्टो आसु मातृषु आ समन्ताच्छुचिः शुद्धः । अहिंस्यमानः गर्भपीडारहितः । उर्विया उरुत्वेन विववृधे । यद्वा श्रीमध्वदेवः आत् इत् लक्ष्मीनारायणप्रसादान्मातॄः ऋगादिविद्या आविशत् । यासु विद्यासु आशुचिर-ज्ञानादिदोषरहितः अहिंस्यमानः पूर्वपक्षिप्रयुक्तप्रमाणाभासैरपीड्यमान उरुत्वेन विववृधे । तत्र पूर्वा अनादिभूता सनाजुवः जु गतौ सनातनत्वेनाऽस्थिताः। यद्वा, सनातनं भगवन्तं जुषन्ते सेवन्ते प्रतिपादयन्तीति सनाजुवः । ऋगाद्या अपौरुषेयविद्या अन्वारुहद् उपक्रमादिकमनुसृत्यानुक्रमेण स्ववचनप्रमाणाभ्यां पदार्थतात्पर्यकथनपूर्वं कृतत्वात् । नव्यसीषु नवीनास्ववरासु पौरुषेयत्वेन जात्या नीचासु भारतभागवतादिविद्यासु निधावते । तात्पर्यतो व्याख्यातीति भावः।

**भाष्यम्-**

**(भाष्येऽन्तिममङ्गलाचरणम्)**

पूर्णागण्यगुणोदारधाम्ने नित्याय वेधसे ।
अमन्दानन्दसान्द्राय प्रेयसे विष्णवे नमः ॥

**॥ इति श्रीमदानन्दतीर्तभगवत्पादाचार्यविरचिते श्रीमन्महैतरेयोपनिषद्भाष्ये तृतीयप्रघट्टके द्वितीयोऽध्यायः ॥**

**टिप्पणी -**

भगवत्स्वरूपप्रतिपादनेनैव ग्रन्थोपसंहारः समुचित इत्याशयवान् नित्यापरोक्षं भगवन्तं सम्बोद्ध्य स्तौति– **पूर्णेति** ॥ पूर्णाः प्रत्येकमनवधिकाः अगण्यानन्ता गुणा एवोदारधामस्वरूपं यस्य तस्मै । अत एव नित्याय वेधसे सर्वज्ञाय सर्वकर्त्रेति वा । अमन्दः सङ्ख्यापरिमाणाभ्यामनवधिको य आनन्दस्तेन सान्द्राय प्रेयसेऽतिशयेन प्रियाय विष्णवे नम इत्यर्थः । गुणपूर्तिसम्भावनाय सर्वकर्तृत्वं तदुपपादनाय सार्वज्ञं चोक्तम् । गुणेष्वानन्दस्य फलरूपत्वात् सर्वगुणानामपि अनुकूलवेदनीयतया फलत्वाच्चाऽनन्दस्य पृथगुक्तिः । अनुभूयमानानन्दस्योच्चताहेतुत्वाद्वा ज्ञानस्य पृथगुक्तिरिति सर्वमवदातमित्यशेषमतिमङ्गलम् ॥

नारायणाचार्यमुखेन्दुबिम्बोद्गलत्सुतत्त्वामृतपानयुक्तम् ।
श्रीविट्ठलाचार्याभिधभूसुरेन्द्रं परं गुरुं मे पितरं नमामि ॥

श्रीमध्वहृत्पङ्कजमध्यसंस्थे कृष्णे रमालालितपादपद्मे ।
स्वानन्दसान्द्रे रचितां मयेमां रत्नावलीं मे गुरवोऽर्पयन्तु ॥

श्रीविट्ठलार्यपुत्रेण श्रीमत्तीर्थार्यसेविना ।
श्रीनिवासेन रचिता रत्नमालाऽतिनिर्मला ॥

**॥ इति श्रीमद्विट्ठलाचार्यपुत्रेण श्रीमत्तीर्थाचार्यचरणसेविना श्रीनिवासेन रचितायां श्रीमन्महैतरेयभाष्यार्थरत्नमालायां तृतीयप्रघट्टके द्वितीयोऽध्यायः ॥**